एकाज्झुत्तरपदत्वं भवत्येव । स्थानिवद्भावेन तु नैतल्लभ्यं अप्राधान्येनालाश्रयणात् । किं च एकादेशे वर्णयोरेव स्थानित्वं न समुदायस्येति भी ईभिय इत्यादावेकादेशविशिष्टे धातुत्वानापत्तिः । धातुत्वस्यैकादेशस्यानिधर्मत्वाभावात् आनुमानिकादेशकल्पकवाक्यमन्त्रादिघटितसमुदायस्यैकादेशघटित आदेश इत्येव न तु प्रत्येकं तयोः स्थानित्वबोधकं तथा सति स्वाश्वशब्दस्य स्थानिवत्त्वेन स्वशब्दतया तत ईरित्शब्दे वृद्ध्यापत्तेः । किं च भवत्संमतस्योभयत आश्रयणेनान्तादिवदित्यस्यासङ्गतौ भवत्संमताभीयादित्याद्यसिद्धिः । स्थानिवत्त्वं तूभयत आश्रयणे इष्यतएव अन्यथा ऽवः परस्मिन्नित्यस्याप्युभयत आश्रयणे ऽप्रवृत्त्यापत्तौ प्लायतइत्याद्यसिद्धिरिति दिक् । निर्देशादिति । न च कर्त्तरि चर्पीत्यादौ गुणस्य पदद्वयसंबन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गत्व द्रेफाभावेन न विसर्ग इति वाच्यम् । गुणस्येव पदद्वयसंबन्धिरेफस्वरात्मकवर्णद्वयाश्रित्वेन विसर्गस्यापि तत्त्वात् । परनिमित्तकत्वमप्युभयोः समम् । किं च कार्यकालपक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्यान्तरङ्गनिरूपितबहिरङ्गत्वाभावात्कथं तस्यासिद्धत्वप्रतिपादनम् । न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम् । एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्तौ विसर्गो दुर्वारः एवञ्च विरोधात्कार्यकालपक्षे ऽपि तदनुपस्थितिरेव त्रिपादीस्थे ऽन्तरङ्ग उचिता । अत एव विसर्जनीयसूत्रे भाष्ये इमामेव युक्तिमुक्त्वा अयुक्तो ऽयं परिहारो न वा बहिरङ्गलक्षणत्वादित्युक्तम् । एवञ्च तत्र तत्र वचनान्येव कार्याणि ज्ञापकानुसरणं वा कर्त्तव्यम् । अत एव निगाल्यतइत्यादौ लत्वाद्यर्थं तस्येलोप इत वचनमेवारब्धम् अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे चक्यत्र मारवपनीत्यादौ बहिरङ्गासिद्धत्वेन च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । यत्तु तत्स्यानुरोधात्कार्यकालपक्षे उपस्थितयान्तरङ्गपरिभाषयानुमानिक्या प्रत्यक्षसिद्धस्यापि पूर्वत्रेत्यस्य बाध इति । तन्न लक्षणैकचक्षुषामादरणीयमत एवोरण्रिति सूत्रे रेफस्य पूर्वान्तवत्त्वे विसर्जनीयप्रतिषेधो वक्तव्यो नार्कुटाद्यर्थमित्युक्तं भाष्ये इति दिक् । उपसर्गेणेवेति । तत्संज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः । यदर्थं क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वमिति भावः । प्रकृते च प्रत्यासत्त्या ऋकारादिनिमित्तोपसर्गग्रहणात्प्रगतः ऋद्धः प्रर्द्ध इत्यत्र न । पुनरिति । प्रकृतसूत्रे भाष्ये स्फुटमेतत् । सुब्धाताविति । सुबन्तप्रकृतिके धातावित्यर्थः । तुल्यास्यसूत्रे उपार्कारीयतीत्यादेरेतदुदाहरणत्वस्य भाष्ये उक्तत्वात् । शास्त्रे सुबन्तस्य धातुप्रकृतित्वेनोक्ततया तत्प्रकृतिके इति व्याख्यानमेवोचितम् । ऋषभस्य समीपमुपर्षभं तदिच्छति उपर्षभीयतीत्यत्र तु न वृद्धिः । उपेत्यस्या-

नुपसर्गत्वात् । अत्रापि धाताविन्यनुवर्त्य वाक्यभेदेन व्याख्येयं तेन सुध्याता- वपि न प्रकृतिभावः । प्रार्षभीयतीति । अत्र शरोचीत्यस्यानुपन्यासेन व्यञ्जना- त्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावेनाचो रहाभ्यामित्यस्य तन्निषेधस्य चानावश्यकता सूचिता । वाक्यभेदेनेति । इदं वृत्तौ स्पष्टं, भाष्ये तु न दृश्यते । एवे चेति वार्त्तिकं सूत्रे धाताविन्यनुवृत्तेरारब्धम् । अवधारणं नियमः । एवशब्दस्य द्योत्यमर्थद्वयमवधारणमसंभवरूपानवक्लृप्त्यादि च तयोरन्त्योऽनैव- शब्दार्थ इत्यभिप्रेत्याह,अनवक्लृप्तावेवेति । क्वेव भोक्ष्यसे इत्युक्तेः स्थलसङ्कीर्ण- त्वादिना नास्ति संभवस्तव भोजनस्येति गम्यते । अचो ऽन्त्या ॥ अच इति निर्धा- रणे षष्ठी । अन्ते भवो ऽन्त्यः । अन्त्यादीति गमकत्वाद्बहुव्रीहिः । मार्त्तण्ड इति । मृताण्डादागतो मार्त्तण्डः । अखिवषय एव पररूपम् । ननु मार्त्तशब्दा- न्त्याच् तकाराकारः स आदिर्यस्येत्यन्यपदार्थो दुर्लभ इति चेन्न । एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः । एतन्मूलकमेव व्यपदे- शिवदेकस्मिन्निति पठ्यते इत्यलम् । वस्तुत आरोपस्य नात्रोपयोगः । "शब्दज्ञा- नानुपाती वस्तुशून्यो विकल्प" इति पतञ्जल्युक्तेरर्थाभावे ऽपि विकल्पात्मकं ज्ञानमत्र तदपि लक्ष्यानुरोधाच्छास्त्रप्रवृत्त्युपयोगीति बोद्धम् । पतञ्जलिरिति तु अञ्जलेः पतित इति विग्रहे मयूरव्यंसकादित्वात्समासे तत्रैव निपात- नादितशब्दस्य लोपे पृषोदरादित्वाद्वा तल्लोपे साधु । गोनर्ददेशे कस्य चिदृषे- रञ्जलेः सन्ध्याकरणसमये पतित इत्यैतिह्यात् । ओत्वोष्ठयोः । अत्र समर्थप- रिभाषा नोपतिष्ठते समासे ऽङ्गुलेः सङ्ग इत्यादौ समासग्रहणेन पदविधिरिति सूत्रस्वरसेन भाष्यादिस्वारस्येन च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्दे- श्यता तत्रैवैतत्परिभाषाप्रवृत्तिस्वीकारात् ओत्वोष्ठादिमात्रस्य पदत्वाभावात् अवर्णादोत्वोष्ठयोरचि तद्घटितसमास इत्यर्थाद्बन्त्योष्ठौ वः स्मृत इति प्रयोगसिद्धिः । अन्यथा प्रत्यासत्त्यौष्ठाद्युत्तरपदकसमासएव प्रवृत्त्यापत्तौ तद- सङ्गतिः स्पष्टैव । ओतुर्बिडालः । ओमाङोः ॥ अत्रैङीति नानुवर्त्तते तेनैपदर्थ- काङा सह ऋषभशब्दस्य समासे ऽद्यऋर्षभ इत्यत्र पररूपे ऽद्यर्षभसिद्धिः । न चात्र परत्वाद्दीर्घप्रसङ्गः। प्रतिपदविधित्वञ्च निरवकाशत्वे सत्येव बाधकत्वे प्रयोजकमिदञ्च मध्येऽपवादन्यायेनावेहीत्यादौ वृद्धिरेव बाधकं स्यादिति वा- च्यम् । लक्ष्यानुरोधेनात्र बाध्यसामान्यचिन्ताश्रयणात् । अन्यत्र प्रतिपदविधि- त्वस्य बलवत्त्वे प्रयोजकतादर्शनेन परदीर्घात्पूर्वं पररूपप्रवृत्तेश्च । अव्यक्तशब्दा- र्थो ध्वनिरिति । अविद्यमानकत्वादिशब्दस्येत्यर्थः । तस्य चाच्छब्दो ऽनुकरणे एव सम्भवतीत्याह । अनुकरणस्येति । अत्रालोन्त्यस्येति न प्रवर्त्तते नानर्थ इति निषेधात् । आम्रेडितस्य वेति वक्तव्ये नाम्रेडितस्येत्यारम्भाद्वा । अत इति

किम् । वटगिति । नाम्रेडित अव्यक्तानुकरणस्येत्यत इति च वर्त्तते । अव्यक्तानुकरणावयवीभूताम्रेडितावयवाच्छब्दस्येत्यर्थः । नाम्रेडितस्य तस्तु वेति न सूचितं वैचित्र्यार्थं फलकल्पनाभिनिवेशस्तु न युक्तो भाष्यानुक्तेः । अत एव तदधीते तद्वेदेति सूत्रे द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्येति भाष्ये उक्तम् । लाघवानवधानलक्षणो ऽत्र प्रमाद इति कैयटः । क्व तदनवधानं क्व तदनवधानमिति तु भाष्यकृदुक्तप्रयोजने तदवधानमन्यत्रान्यदिति निर्णयम् । ननु डाचो ऽभावादेतदप्राप्तिरत आह । बहुलवचनादिति । तस्य परम् ॥ अवयववाचिपरशब्दयोगे ऽत एव ज्ञापकात् षष्ठी । तस्य ग्रहणं स्पष्टार्थं द्वे इत्यनुवर्त्य षष्ठ्या विपरिणामेन सिद्धेः । अन्यद्विरुक्तपरस्य तु न सञ्ज्ञा अष्टमे सर्वस्येत्येतत्प्रकरणे संज्ञाकरणात् । झलां ज ॥ अन्तग्रहणं झलीति निवृत्त्यर्थम् । सर्वोपकारकतया च प्रकरणान्ते ऽस्य लेखः । एतेन अदित्यत्रैव लेख उचित इत्यपास्तम् । अज्झलोः सावर्ण्यनिषेधादाह । अचि किमिति । अनिष्पत्तेरिति । नाज्झलाविति सूत्रविषयनिर्णये ऽपवादविषयपरिहारेण तत्तद्वर्णीयसवर्णपदवाच्यनिर्णयोत्तरं तावतां ग्रहणस्य ग्रहणकशास्त्रबोध्यतयैतद्बाधकाले ग्रहणकशास्त्रस्य तावद्ग्रहणबोधकत्वानिष्पत्तेरित्यर्थः । सूत्रस्यसवर्णपदानुवृत्तिमभिप्रेत्याह । ऋति सवर्णइति । तत्फलं दद्धकारादावेतदप्रवृत्तिः । एतद्विधेययोरइउण्सूत्रानन्तरं पाठादच्त्वं, तेन तयोः स्थाने प्लुतसिद्धिस्तयोश्च न रपरत्वम् । द्विमात्रमिति । अत एवाकः सवर्णइत्यनेनैव ऋकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण कदा चिद्रेफद्वयगर्भस्य विवृतत्वान्तर्येण कदा चिद्विवृतस्य ऌकारे लकारवत्तान्तर्येण कदा चिद्विलकारस्य कदा चिद्विवृतत्वसाम्येन रेफवत्तासाम्येन च तादृशस्य ॠकारस्य सिद्ध्या विकल्पफलसिद्धिमाश्रित्यैतद्वचनद्वयन्तुल्यास्येतिसूत्रे भाष्ये प्रत्याख्यातम् । द्वौ रेफाविति । अत्रापि तदेव भाष्यं मानं द्विरेफत्वे हि रेफद्वयवति स्यानित्ययं लकारवत्यपर इति व्यवस्था सिद्ध्यति । अभित इति । द्वौ रेफावित्यनुषज्यते तच्च द्वितीयान्तम् । अभितःपदयोगात् । एओङ्सूत्रे भाष्ये मातॄणामित्यादौ णत्वादिसिद्ध्यर्थमवश्यमङ्गीकर्त्तव्ये वर्णैकदेशा वर्णग्रहणेन गृह्यन्तइति पक्षे प्लूय खट्वाभिर्वाचा तरतीत्यादौ तुगेसङ्खञ्जलत्वणठानां शङ्कायां दीर्घादिति तुग्विधानसामर्थ्यतपरकरणसामर्थ्याभ्यां ञ्चेति सूत्रस्थनोग्रहणसामर्थ्यैर्भेदेनाप्रतिभासमानेषु वर्णावयवेषु अवयवसदृशस्वतन्त्रवर्णाश्रयकार्याभावज्ञापनरूपसमाधानस्य च करणवत् प्रातर्ॠतमित्यत्र रोरीत्यस्य तद्ऌकार इत्यादौ तोर्लीत्यस्य च शङ्कासमाधानाकरणेन यत्तद्रेफात्परं भक्तेरिति हयवरट्सूत्रस्थभाष्येण च ऋऌक्सूत्रस्ययोरर्धमात्राऽभागस्याभितः क्लृप्तत्वेन तयैवोचितत्वादिति भावः ।

द्वौ लकाराविति। हल्द्वयवत्पूर्वसाहचर्यादिति भावः। अत्र ह्रस्वऋकारद्वयस्यानिकैकादेशे एव पूर्वस्य साधुत्वं ह्रस्वऋकारल्कारस्यानिकैकादेशएवोत्तरस्य साधुत्वमत एव ल्रति न ऋकारो नाप्यृति ल्कारः। अत एव वार्त्तिके ऋतीति तपरकरणमुत्तरवार्त्तिके ल्रतीति च चरितार्थम्। तुल्यास्यसूत्रे भाष्ये यदेतद्गतीति एतद्गत इति वक्ष्यामीत्येतद्वचनाश्रयणेन ऋल्वर्णयोः सावर्ण्यं न कार्यमिति च सङ्गच्छते। उपस्थितरेफांयप्रयत्नत्यागे मानाभावादीषत्स्पृष्टाविमौ विवृतत्वे हि विवृतऋकारल्कारान्यामनयोरपि ग्रहणे ऽक सवर्णेइत्यनेनैव सिद्धे वार्त्तिकस्यैव वैयर्थ्यापत्तेः। एङः प॥ पदान्तात् किम्। भवति। सर्वत्र वि॥ प्रकृत्यान्त इति सूत्रात्प्रकृत्येत्यनुवर्त्तते। प्रकृतिशब्दोत्र स्वभाववाची दुस्त्यजा प्रकृतिरित्यादौ तथा दर्शनात्। प्रकृत्या स्वभावेनावस्थानमित्यर्थः। अत एव प्रकृतिभावेन पूर्वरूपं नाप्ययादय इति भावः। नान्तः पादमिति पाठे त्वनेन सूत्रेण गोशब्दस्य यत्प्राप्तं तत्रेति व्याख्यानेन नान्तः पादमित्यनेनैव पूर्वरूपत्वादिकं विकल्पेन निषिद्ध्यतइति बोद्ध्यम्। अवङ्॥ स्फोटो ऽयनं यस्य स स्फोटप्रतिपादक इत्यर्थः। स्फोटायनस्येतिपाठे नडादित्वं कल्प्यम्। स्फोटायनो ऽवङः स्मर्त्ता ऽन्यस्तु तदभावस्येति स्मृत्यन्तरानुसन्धानद्वारेणात्र विकल्पो बोद्धुः। नित्यमिति। अत एवेन्द्रे इति सामर्थ्यान्नित्यमिति भाष्यादावुक्तम्। गवाग्रमिति। सन्निपातपरिभाषाया अनित्यत्वाद्दीर्घ इति बोद्ध्यम्। व्यवस्थितेति। देवत्रातो गलो ग्राह इतियोगे च स द्विधिः। मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतस्तेन प्राण्यवयवेनेति शाश्वेरिति सूत्रे भाष्ये स्पष्टम्। अग्नीत्प्रेषणे इति सूत्रे अग्नीदग्नीन्विहरेत्यत्र एतद्वावृत्त्यर्थं वार्त्तिककृद्बहुलग्रहणघटितं न्यासं कृतवान्। तत्प्रत्याख्यानाय भाष्ये कृतेन विभाषेति योगविभागेन विभाषेत्यस्य व्यवस्थितविभाषात्वं ध्वनितं, तथा अजेर्व्यघञपोरिति च व्यवस्थितविभाषेति अजेर्वीतिसूत्रे भाष्ये स्पष्टम्। न च व्यवस्थितविभाषयेन्द्रे नित्यावङि सिद्धे इन्द्रे चेति व्यर्थमिति वाच्यम्। भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वादित्याहुः। इन्द्रे च॥ क्व चिद्भाष्यपुस्तके च शब्दरहितः पाठः। इन्द्रावयवे ऽचीत्यर्थस्तेन षष्ठीतत्पुरुषे उत्तरपदषष्ठीतत्पुरुषे गवेन्द्रयज्ञ इत्यादाववङ्सिद्धिः। अन्यथा वाक्ये गोशब्दस्येन्द्रपरत्वासंभवेन समासात्तेपादिन्द्रशब्दस्योत्तरपदत्वएव प्रवृत्तिः स्यात्। प्लुतप्रगृह्या इत्यस्य प्रकृत्येति पाठएव सामञ्जस्यं मत्वाह। अथ प्रकृतीति। न चैतद् घटकपदार्थज्ञानाय प्रगृह्यत्वादिकथनं पूर्वं युक्तमिति वाच्यम्। इन्द्रे चेत्यत्र प्राचीनपठितनित्यग्रहणस्य प्रामादिकत्वं बोधयितुं तदव्यवहितमेतत्सू-

न्नलेखनात् तत्र नित्यग्रहणे तद्व्यवहितोत्तरैतत्सूत्रे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाह । प्लुताः प्रगृह्याश्च वक्ष्यन्ते इति । अचीत्यनुवर्त्तमाने पुनरज्ग्रहणं प्रत्यासत्त्या यत्राचि अनयोः प्रकृतिभावस्तद्ज्निमित्तकार्यस्यैव तेनाभात्र इत्यर्थलाभार्थं तेन जान् उरुस्य हजति जानू अस्येत्यादौ सवर्णदीर्घरूपसन्धिर्भवत्येव । एहि कृष्णेति । दूराद्धूते चेति प्लुतः । अत्र प्लुतस्याश्रयात्सिद्धत्वं बोध्यम् । नित्यमिति किमिति । वा ग्रहणनिवृत्त्यैव तल्लाभ इति प्रश्नः । मा भूदिति । नित्यग्रहणसामर्थ्येन पुनर्विधानाद्बाधकविषये ऽप्ययमेवेति भावः । इको ऽसवर्णे । एङ इत्यतः पदान्तादित्यनुवृत्तं प्रथमया विपरिणम्यतइत्याह । पदान्ता इति । वेति ह्रस्वयणोर्विधानसामर्थ्यात्तु न विकल्पसिद्धिः । अपदान्तादौ यणश्चरितार्थत्वात् । सामर्थ्यादेवेति चेन्न प्रकृतिभावाकर्षणे ऽमिच्छत्यक इत्यत्र चानुकृष्टत्वेन तदसंबन्ध इति तदर्थं ह्रस्वविधानसामर्थ्यस्यावश्यकत्वेन च कारो व्यर्थ इति भावः । भाष्ये स्थितमिति । प्रकृतसूत्रे इति शेषः । एतेन ह्रस्वाभावे प्रकृतिभावार्थं चकार इति न्यासाद्युक्तमपास्तम् । चक्री अत्रेति तु संहिताया अविवक्षायां बोध्यम् । न समासे, सिति चेति वार्त्तिकम् । पार्श्वमिति । पर्शुणास्वकृत्य इति णस्सिति चेति पदत्वम् । ऋत्यकः ॥ सवर्णार्थमनिगर्थञ्चेदम् । होतृऋकारः । ब्रह्मऋषिः । आर्च्छदिति । आटो धात्ववयवत्वेनापदान्तत्वादिति भावः । एतेनाटश्चेति पुनर्वृद्धिविधानार्थेन चेनोस्यामाङ्न्तु पररूपबाधवत्प्रकृतिभावस्यापि बाधेनेष्टसिद्धिरित्यपास्तम् । समासे ऽपीति । व्याख्यानादिति भावः । सप्तऋषीणामिति । दिक्संख्ये इति समासः । प्रकरणशुद्धये प्रकृतिभावविधायकसूत्रद्वयमुपन्यस्य प्लुतप्रगृह्या इतिसूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तत्वात् प्लुतप्रकरणमारभते । वाक्यस्य टेः ॥ वाक्यस्येत्यभावे पदस्य टेरित्यर्थे ऽनन्त्यस्यापि पदस्य टेः प्लुतः स्यात् । तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव संभवतीति न दोषः । टिग्रहणाभावे प्लुतश्रुत्योपस्थिताच्परिभाषया ऽजन्तस्यैव स्यात् । टिग्रहणे तु सामर्थ्याट्टिनाचो विशेषणाद्व्यञ्जनान्तस्यापि भवति । प्रत्यभिवादे ॥ प्रणामादिभिराशिषं वाच्यमानो गुर्वादिर्यत्प्रतिसंभाषते तत्प्रत्यभिवादः । न त्वाशीर्वचनं शूद्रे आशीर्वादरूपप्रत्यभिवादाभावेनाशूद्र इत्यस्य वैयर्थ्यापत्तेः । अत एव भाष्ये ऽशूद्रे इति किं कुशल्यसि तुषजकेत्युक्तम् । अभिवादये इति । नमस्कारपूर्वमाशीरादि वाचयामीत्यर्थः । आयुष्मानित्यायुष्मत्त्वस्य विधेयत्वात्संबोधनविभक्त्यभावः । एधीति भवेत्यस्याप्युपलक्षणं प्रत्यभिवादे शर्मादिप्रयोगो न नियतः । एचो प्रगृह्यस्येति सूत्रे प्रत्य-

भिवादे ऽन्त्यस्यैचः प्लुतविधानात् । आयुष्मानेधि अग्निभूता इति भाष्ये तदुदाहरणाच्च । शर्मादिप्रयोगे तु तट्टेरेव प्लुतः । शर्मान्तं नाम ब्राह्मणस्येत्यादिस्मृत्या तस्य नामावयवत्वबोधनात् । स्त्रियां नेति । स्त्रिया अपि नाम्नाभिवादप्रत्यभिवादे इत्यर्थस्य भाष्यसंमतत्वादिति भावः । नामगोत्रं वेति । अभिवादप्रत्यभिवादे नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धे । तत्राधिकृतस्य पदस्येत्यस्य प्रत्यभिवादे इत्यनेन विशेषणात्प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकस्यैव प्लुत इति भावः । तत्र नामशब्देन द्वादशे ऽन्हि पित्रादिकृतं गृह्यते । अत एवायुष्मान्भव दण्डिन्नित्यादौ प्लुतो नेति स्पष्टं भाष्ये । भोराजन्येति । भोशब्दस्य राजन्यवैश्यवाचकनाम्नश्च टेः प्लुत इत्यर्थः । भोशब्दस्याप्राप्ते इतरयोस्तु नामत्वात्प्राप्ते विभाषेयम् । दूराद्धूते ॥ यावति देशे प्राकृतप्रयत्नोच्चारितं संबोध्यमानो न शृणोति किं त्वधिकं प्रयत्नमपेक्षते तावद् दूरम् । दूरादाह्वानञ्च दूराद्बोधनस्योपलक्षणं, न तु संबोधनविभक्तिनियामकस्याभिमुखीकृत्य बोधनरूपस्य संबोधनस्योपलक्षणम् । आगच्छतु भवान्देवदत्त इत्येवमाह्वानस्यापि संभवात् । अत एवाकडारसूत्रे नदीगुरुसंज्ञयोः समावेशे वात्सीबन्धुरित्यत्र गुरोरिति प्लुतो नदीबन्धुनीति पूर्वपदान्तोदात्तत्वञ्च फलमुक्तं भाष्ये ऽन्यथात्र संबोधनाभावेन गुरोरित्यस्याप्राप्त्या तदसङ्गतिः स्पष्टैव । उपलक्षणत्वादसत्यप्याह्वाने भवति तदाह सक्तूनित्यादि । अत्रापि दूराद्धूतइत्येतदनुवृत्तस्य पदस्येत्यस्य विशेषणं तेन हूयमानार्थवाचिनः पदस्यैव टेः प्लुतः । तच्च रूढं यौगिकं वेत्यन्यत् । हैहेप्र ॥ हैहयोः संबोधनद्योतकत्वेन केवलाभ्यामपि ताभ्यां संबोधनदर्शनेन च तयोरपि हूयमानार्थपरत्वाद् गुरोरनृत इत्येव सिद्धे नियमार्थमिदमित्याह । हैहयोरेवेति । हैहेन्त इत्येव सिद्धे प्रयोगग्रहणादनन्त्ययोरपि तदाह हे३ रामेति । के चित्तु एकं हैहेग्रहणमनन्त्यार्थम् । अन्यथा वाक्यस्य टेरित्यधिकारादन्त्ययोरेव तयोः स्यात्तदाह । हे३ रामेति । प्रयोगइति तु यत्र संबोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाभिमुख्यस्य द्योतितत्वेन द्योत्याभावादनर्थकयोरपि तयोः प्लुतार्थं तदाह । राम है३ इति । अन्यथा प्रयुक्तयोः प्लुतासंभवात्तद्वैयर्थ्यं स्पष्टमेव । हैहयोरिति तु तयोर्हूयमानार्थपदत्वाभावादप्राप्ते विध्यर्थं, नियमे तु न मानं, तेनात्र प्लुतसमावेश, एतत्सर्वं भाष्यकैयटयोः स्पष्टमित्याहुः । यत्तु अयं हूयमानार्थपदस्य टेः प्लुतस्य बाधकस्तक्रकौण्डिन्यन्यायादिति तन्न । शिव हे इत्यादौ तस्याप्राप्तेस्तन्न्यायविषयाभावात् । गुरोर ॥ दूराद्धूतइत्यनुवर्त्तते तेन दूराद् बोधन-

एव प्रवृत्तिस्तदाह । दूराद्धूतइति । दूरत्वञ्चात्राविवक्षितं तेन प्रत्यभिवादे भोराजन्येत्यस्य विषये ऽप्यस्य प्रवृत्तिः । तद्विषये ऽप्युपलक्ष्य बोधनसत्वात् । सर्वप्लुतप्रकरणस्य तु न शेषः । तथा हि सति वाक्यस्य टेरित्यनेन सहैवास्याप्यधिकारत्वमेव कुर्यात् । एतत्त्रयविषयमेवेदमिति प्रकृतसूत्रे ऽनुदात्तं प्रश्नान्तेति सूत्रे च वृत्तौ स्पष्टम् । अपिशब्दो यथाप्राप्तटिसमुच्चयार्थः । यदि तु गुरोः सन्निधानादन्त्यो गुरुरेव समुच्चीयते तदान्त्यलघुमति अनन्त्यगुरावेतस्यान्त्यलघौ दूराद्धूते चेत्यादीनां दुर्वारत्वेन प्लुतसमावेशापत्तिः । एकैकग्रहणं त्वेतद्विहितानामेव पर्यायार्थं स्यात् । तेन यत्रान्त्यो ऽपि गुरुरनन्त्यगुरुद्वयं वा तत्रैव पर्यायः स्याद्व्याख्यानाच्चैतदर्थलाभः । अनन्त्यस्यापीति । अपिनान्त्यस्य गुरोरगुरोश्चेत्यर्थः । पर्यायार्थमिति । अन्यथा समावेशः स्यादिति भावः । अनुदात्तं पदमिति तु त्रिशाद्यां न प्रवर्त्ततइति तत्रैव वक्ष्यते । प्राचामिति तु पक्षे सर्वेषां प्लुताभावार्थम् । विकल्पतइति । सा च व्यवस्थितविभाषा । तेनाग्नीदग्नीन्विहरेत्यादावग्नीत्प्रेषणइति न । भाष्ये तु विभाषा पृष्टेति सूत्रे विभाषेति योगविभागो दर्शितः । सा व्यवस्थितविभाषेति कैयटः । अत एव ओश्रावये परस्येति वक्तव्यमिति वचनस्याग्नीदग्नीन् इत्यादौ प्लुतनिवृत्तये कृतस्य विभाषेति योगविभागेन प्रत्याख्यानं भाष्योक्तं सङ्गच्छते । एवञ्च भाष्यसंमतैषा व्यवस्थितविभाषेत्याहुः । अप्लुतवदित्युक्त्या प्लुत इत्यध्याहारस्तदाह । प्लुतो ऽप्लुतवदिति । प्लुत एव निषिद्धोतेति । तत्स्थाने अप्लुतस्य विधानेन स एव निवर्त्ततेत्यर्थः । प्रसज्य प्रतिषेधेन व्याख्यानं तु न युक्तम्, गौरवात् । किं च । तथा सति प्लुतप्रकरणे एव नोपस्थितइति वदेत् । न च पर्युदासे ऽग्नी इतीत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे दीर्घादिकं स्यादिति वाच्यम् । शब्दत इति शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वात् । अप्लुतवदित्यस्य प्लुतकार्यं नेत्यर्थस्तु न शब्दमर्यादालभ्यः । प्लुते ऽप्लुतसादृश्यविधानस्यैव शब्दतो लाभात् । भाष्ये प्लुतकार्यप्रतिषेधार्थमित्युक्तिस्तु फलितार्थाभिप्रायेणैवेति बोद्धव्यम् । प्रगृह्याश्रये इति । प्लुते कृते ऽपि तस्यासिद्धत्वाद्दीर्घत्वबुद्धिवत् तद्गतं प्रगृह्यत्वमनुकार्ये सुलभमनुकरणे तु प्रकृतिवदनुकरणमित्यतिदेशात्तत्त्वमिति भावः । किं मया कर्त्तव्यमिति पृष्ट आह । चिनुहीश इदमिति । विभाषा पृष्टप्रतिवचने हेरिति प्लुतः । इदंशब्दो ऽत्र वाक्यान्तरस्य इति हेरिकारस्य वाक्यटित्वम् । उभयत्र विभाषे-

यमिति । उपस्थिते प्राप्ते ऽनुपस्थिते चाप्राप्ते इत्यर्थः । विभाष्यते विकल्प्यतेऽस्मिन्निति विभाषा गुरोश्च हल इत्यप्रत्यये टाप् । न वेति विभाषायामिति भाष्यप्रयोगात् । भाष्ये तु किमर्थमिदमुच्यते ऽनुपस्थितार्थं तत्र ईग्रहणेन नार्थः । अविशेषेण चाक्रवर्मणस्याप्लुतवदित्येवेदमपि सिद्धं वशा इयं वशेयमित्युक्तं तद्बलेनोपस्थिते पूर्वविप्रतिषेधेन ईग्रहणे ऽपि नित्याप्लुतवद्भाव एवेष्टः । प्रत्याख्याने नित्याप्लुतवद्भावस्य येननाप्राप्तिन्यायेन वैकल्पिकतद्बोधिताभावांशबाधकत्वात् । उपस्थितइत्यस्य निवृत्त्या परविप्रतिषेधादुभयत्र विभाषेयमिति कैयटस्य प्रमादः । मूलं तु इति शब्दभिन्ने वैदिकेतिशब्दे चेत्येवं परतया कथं चिद्व्याख्येयमित्यन्ये । उद्देश्यप्रतिनिर्देश्ययोरैक्यमादाय यत्सर्वनाम पर्यायेण तत्तल्लिङ्गभागितीयमिति निर्देशः । विशेषणेन तदन्तविधिमाश्रित्याह । ईदूदेदन्तमिति । द्विवचनमिति । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादिति भावः । तदन्तमिति व्याख्याने फलमाह पचेते इति । निपात ए ॥ निपात इति किम् । चकारात्र । प्रत्ययस्य शास्त्रकल्पितार्थवत्त्वात् । एकाजिति कर्मधारयोवर्त्तिपदार्थप्रधानत्वेनान्तरङ्गत्वाद्ब्राहरति मृग इत्यादिनिर्देशाच्च । तेन प्रेदमित्यादौ न दोषस्तदाहैको ऽजिति । आङ्वर्ज इति पर्युदासस्याचित्यात् । अत एवैकाज्नाङिति नासूत्रि । वा सुदेववाचकस्य अशब्दस्य आङा सहाव्ययीभावे आ आत् अमित्यादौ सत्यभिधाने स्वत आङ्भिन्नत्वेन पूर्वान्तवत्त्वेन निपातत्वे ऽपि प्रगृह्यत्वन्न । पूर्वान्तवत्त्वेनाङ्त्वातिदेशे ऽतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यनिवृत्तेरतिदेशस्वभावसिद्धत्वात् । ओदिति सूत्रे आ उ ओ इत्यत्रानाङिति प्रतिषिद्धार्थो ऽयमारम्भ इति भाष्यं तु पर्युदासे ऽपि गम्यस्य प्रतिषेधस्य सत्त्वाच्चानुपपन्नम् । अनाङिति पर्युदासादेव निपातैकाजूपत्वे लब्धे निपातैकाज्ग्रहणं स्पष्टार्थम् । स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदाये ऽच्त्वाभावादजित्येवाच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणार्थं तेन धिप्सतीत्यादिसिद्धिरिति भाष्ये स्पष्टम् । जातिग्रहणार्थमित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणार्थमित्यर्थस्तेन तितउशब्दैकदेशस्याऽउइत्यास्यानुकरणे अउ अकरोदित्यत्रानुकरणं चानितीति निपातत्वे ऽपि प्रगृह्यत्वाभाव एकग्रहणफलं बोद्ध्यम् । ननु ङकारस्य क्वाप्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह । वाक्यस्मरणयोरिति । वाक्यशब्देन स्वार्थगतमनभिमतत्वम् । स्मरणं विस्मृतस्य स्मृतिविषयता । एवं किल तदिति स्मृतार्थनिर्देशः । निपात इत्यनुवृत्तमोदित्यनेन विशेष्यतइत्याह । ओदन्त इति । निपातसञ्ज्ञा चादिपदोपस्थितचादीनां सति संभवे ऽर्थवतामेवेति सार्थकनिपा-

तानां निपातपदेन तत्तदर्थविशिष्टानामेवोपस्थितिरिति गौणमुख्यन्यायेन प्रकृतसूत्रस्थनिपातपदेन गौणार्थानां न ग्रहणमिति गोभवदित्यादौ चव्यन्ते नास्य प्रवृत्तिः । एवञ्च कार्यकालपक्षे ऽपि च्व्यन्ता निपाता इत्यस्यानुपस्थितिरेतत्परिभाषावशात् । अव्ययसञ्ज्ञादौ तु नैतत्परिभाषाप्रवृत्तिरनित्यत्वादत एवानर्थके ऽपि निपाते सा सञ्ज्ञा सिद्ध्यति । अपो इतीत्यादौ प्रगृह्यत्वायाह । संबुद्धिनिमित्तक इति । संबुद्धिपर इतिव्याख्याने तु सोर्लुकालुप्तत्वेन तत्परत्वाभावान्न स्यात् । न लुमतेति निषेधानित्यत्वं त्वगतिकगतिः । इताविति किम् । पटो ऽत्र । अनार्षे किम् । ब्रह्मबन्धवित्यब्रवीत् । संहितायां विवक्षायामप्यवादिरहितप्रयोगार्थमिदं तद्विवक्षा च वर्णोच्चारणे नियतेनार्धमात्राकालव्यवायेनोच्चारणेच्छा । तदधिकार्द्धमात्राकालव्यवायेनोच्चारणेच्छा च तदविवक्षेति बोध्यम् । उञः ॥ अत्रोञ्निपात एव उञ ऊं इत्येकसूत्रत्वे तु शाकल्यग्रहणाननुवृत्तौ ऊं इतीत्येकमेव स्यात् । प्रगृह्यसञ्ज्ञाप्रकरणेन प्रगृह्यत्वस्यादेशस्य च सह विधानात् । उ इति विवीति च न स्यात् । आदेशे प्रगृह्यत्वकार्यन्तु स्थानिवद्भावेन बोध्यम् । प्रगृह्यत्वस्य साक्षादुद्देश्यसंबन्धस्य क्लृप्ततयात्र विधेयविशेषणत्वे मानाभावात् । शाकल्यग्रहणानुवृत्तावपि प्रगृह्यत्वस्य ऊंआदेशस्य विकल्पे ऊं इति विवीति सिद्ध्यति न तु उ इतीति प्रगृह्यत्वविकल्पेन पक्षे तदभावे ऽपि अस्य तात्पर्यात् । एतदभावे निपात एकाजित्यस्याप्रवृत्तेः । तदुक्तं भाष्ये योगविभागं प्रदर्श्य किमर्थो योगविभागः । शाकल्यमते ऊं विभाषा यथा स्यात् । ऊं इति उ इति । अन्येषामाचार्याणां मतेन विवीति । अनेन हि योगविभागस्य उ इति इति रूपसिद्धिः फलमिति स्पष्टमेव लभ्यते, ऽतो योगविभागेन व्याचष्टे । उञ इति । उञो वाचकं प्रगृह्यपदमित्यर्थः । शाकल्यस्येतौ प्रगृह्यमित्यनुवर्त्तते तदाह । उञ इतौ वेत्यादि । विकल्पाननुवृत्तौ हि निपात एकेत्येव सिद्धे इदं व्यर्थमेव स्यादेवञ्च प्राप्तविभाषेयम् । ऊं इत्यत्र शाकल्यप्रगृह्यपदयोरसंबन्धे उञ इत्यर्थो धिकारादप्रगृह्यस्यैवादेशे तस्येको यणीति यणि ऊं इतीत्यस्यासिद्धिः । दीर्घोच्चारणवैयर्थापत्तिश्च । विकल्पमात्रसंबन्धे ऽपि ऊं इतीत्यस्यासिद्धिरिति विधानसामर्थ्यात्प्रगृह्यपदसंबन्धः प्रगृह्यपदमात्रसंबन्धे ऽर्थाधिकारादप्रगृह्यस्य नित्ये ऊं आदेशे ऊं इतीति प्रगृह्यस्य उइतीति सिद्धे ऽपि विवीति न सिद्ध्येत् तदाह । उञ इतौ दीर्घो ऽनुनासिक इत्यादि । अत्र विशिष्टस्य विधिरिति न वाक्यभेदः । न च प्रगृह्यत्वमादेशश्च शाकल्यमते इति तयोरेकप्रयोगएव प्रवृत्तिः स्यादिति वाच्यम् । योगविभागसामर्थ्येन शाकल्यमते एव भावाभावकल्पनात् । वस्तुत उञनु-

वादेन सञ्ज्ञादेशयोः सहविधानमेव न्याय्यमादेशे स्थानिवद्भावात्प्रगृह्यकार्यं भाष्ये प्रगृह्यसञ्ज्ञकश्चेत्यपि स्थानिवद्भावलभ्यार्थस्वरूपकथनमिति न्यायविदो विचारयन्तु । मय उञो ॥ व्याख्यानादत्र मय् प्रत्याहारः । अस्य त्रैपादिकत्वेनासिद्धत्वाच्च प्लुतप्रगृह्या इत्यनेन बाधः । नानुस्वार इति । किंवितीत्यादौ प्रगृह्यसञ्ज्ञाभावे ऽस्यासिद्धत्वादिको यणिति यणि अनुस्वारो भवत्येव । ननु यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन गौरीशब्दस्य सप्तम्यर्थवृत्तित्वे ऽपीकारस्य तत्त्वाभावो ऽत आह । ईदूदन्तमिति । शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिरिति भावः । मामकी तनू इति । प्रगृह्येष्विति-शब्दप्रयोगस्य पदकारैर्नियमितत्वात्पदपाठे प्रगृह्यत्वफलमत्र बोध्यम् । ईदूतौ किम् । अग्ना भवाति । सप्तम्या डादेशः । तपरत्वमसन्देहाय । सप्तमीति किम् । धीती, मती । ह्रस्वान्ताभ्यां तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः । अर्थग्रहणं किमिति । न च तदभावे ईदूदेदिति वदीदूदन्ता या सप्तमीत्यर्थापत्तिः । तथा च यथीत्यादावेव स्यात्, एकादेशस्य परादिवद्भावेन सप्तमीत्वाच्च तु गौरी॰ इत्यादाविति तत्सिद्ध्यर्थं तदावश्यकमिति वाच्यम् । ईदूतौ सप्तमी प्रगृह्यं, अदसः, एच्चद्विवचनमित्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणापेक्षया वैजात्यबोधनादूकारांशे ऽसंभवाच्च सञ्ज्ञाविधाविति तदन्तग्रहणनिषेधाप्रवृत्त्या ईदूदन्तं सप्तम्यन्तमित्यर्थेनेष्टसिद्धेरिति प्रश्नः । यथीत्यादेरनभिधानमेवेति परे । वृत्ताविति । अर्थग्रहणसामर्थ्यात्सप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थेनात्र तत्संसृष्टाधेयार्थे ऽपि वृत्तेर्न दोषः । सञ्ज्ञायामिति समासे जहत्स्वार्थायां वृत्तौ पूर्वपदस्यानर्थक्ये ऽपि सुप्सुपेति समासे अजहत्स्वार्थायां प्रसक्तदोषस्याक्तरीत्यैव वारणमिति भावः । गौरी अधिश्रित इत्यत्राधिश्रयणक्रियायामेव गौरीपदबोध्याधिकरणत्वान्वय इति गौर्यधिकरणके लक्षणायां मानाभाव इति न तत्र दोषः । वाप्यामश्व इति । सुप्सुपेति समासः । सञ्ज्ञायामिति वा । ननु सञ्ज्ञायामिति समासे वाक्येन सञ्ज्ञानवगमान्नित्यसमासत्वेन विग्रहो ऽनुचित इति चेन्न । तेषु समाससमानार्थकवाक्याभावेन नित्यसमाससदृशत्वे ऽपि नित्यसमासत्वाभावात् । विभाषाधिकारबाधे मानाभावात् । नित्यसमासे हि वृत्तिघटकपदानां पृथक् प्रयोगाभाव एव, अत्र तु पृथक्प्रयोगे ऽपि तद्बोध्यविशिष्टार्थाप्रतीतिमात्रमित्याहुः । अणो ऽप्र ॥ अण इति किम् । कर्त्तृ हर्त्तृ । अत्राणपूर्वणैव व्याख्यानात् । आगच्छतमग्नी इत्यादौ प्लुतस्यासिद्धत्वात्ततः प्रागेव यथोद्देशत्वात् जाते प्रगृह्यत्वे पश्चात्प्लुते तस्यापि अनुनासिकप्रतिबन्धार्थं पुनः सञ्ज्ञेति नानुनासिकः । सञ्ज्ञायाः कार्यार्थत्वात्पुनः प्रवृत्तौ कार्यमेव बीजम् । स्थानिवत्त्वन्तु न, प्लुतस्यान्य-

लवृत्तिधर्मत्वेनाल्विधित्वात् । पूर्वसवर्णे कृते द्विवचनत्वन्तु परादिवद्भावेन । तेन ताद्रूप्यानतिदेशे ऽप्येतद्धर्मातिदेशाङ्गीकारात् । अत एव रामावित्यादौ परादिवद्भावेन सुप्त्वात्पदत्वं साधितमन्तादिवदित्यत्र भाष्ये इति स्पष्टमाकरे । अचसंन्धिरिति । सिद्धमनचत्वादिति वार्त्तिकप्रयोगेण अल्याचतरमिति सौत्रप्रयोगेण कथमनचत्वमिति भाष्यप्रयोगेण च वृत्तिघटकाचपदे पदान्तकार्यस्य तत्सन्निधानेन श्चुत्वस्य चाभावो बोध्यते इति केचित् ॥ इति स्वरसन्धिः ॥

स्तोश्चु ॥ सिति शिति च लुप्तविभक्ते भिन्ने पदे । योगइति । संयोगइति तदर्थः । तेन चितमित्यादौ न दोषः । अत्र पदस्येत्यधिकृतमपि न संबध्यते । शादिति ज्ञापकात् । तेन याञ्चा सिद्धा । शात्परस्य स्तोः श्चुत्वनिषेधकात् शादिति लिङ्गादेव निमित्तकार्यिणोर्यथासंख्यं न । एवमुत्तरसूत्रे ऽपि तोः षीति ज्ञापकान्न तत् । शकारचवर्गौ स्त इति । यथासंख्यमिति शेषः । हरिश्शेतइति । वा शरीति विसर्गाभावे शः । सच्चिदिति । चुत्वस्यासिद्धत्वाज्जश्त्वेन दत्वे तस्य चुत्वेन जकारे चर्त्वमिति बोध्यम् । तयोरत्रालेखस्तु वैचित्र्यार्थः । विश्न इति । यजयाचयतविच्छप्रच्छरक्षो नङिति नङि छ्वोरिति शादेशे ङित्वाद् गुणाभावः । प्रश्ने चासन्नकालइति निर्देशात्संप्रसारणाभावः । न पदान्ता ॥ पदाट्टोरित्येव सिद्धे ऽन्तग्रहणं स्पष्टार्थम् । टोः किमिति । षकारस्यापि पदान्ते जश्त्वविधानात्प्रश्नः । ह्रस्वात्तादाविति षत्वस्यासिद्धत्वाज्जश्त्वाभाव इत्युत्तरम् । षण्णवतिरिति । षडधिका नवतिरिति विग्रहः । षण् णगर्य इति पृथक्पदे । यरो नु ॥ पदान्तस्येति किम् । वेद्मि । बध्नाति । स्पर्शे चरितार्थ इति । उपलक्षणमिदं वलयोरपि प्रवृत्तेः । एतच्च जातिपक्षे स्पष्टमेव । व्यक्तिपक्षे ऽपि तादृशव्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लव एव नेति बोध्यम् । स्पष्टञ्चेदमिको यणचीत्यत्र कैयटे । परे तु स्थाने ऽन्तरतमसूत्रे सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेनैतद्युक्तेरशक्तिसंभव एव न । तस्मादनुस्वारस्येति सूत्रात्सवर्णग्रहणमपकृष्य परः सवर्णो ऽनुनासिको भवतीत्यर्थान्न दोषः तदुक्तं भाष्ये, रेफे ऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यो न वक्तव्यो रेफोष्मणां सवर्णा न सन्तीति । चिन्मयमिति । स्वार्थिकस्तत्प्रकृतवचने इति मयट् । तत्र तदिति वा वाक्यभेदेन क्वचित्प्राचुर्यरूपप्रकृतवचनाभावे ऽपि मयडर्थमत एव चिन्मयं ब्रह्मेति सामानाधिकरण्यम् । चिन्मात्रमिति क्वाचित्को ऽपपाठः । मात्रचः प्रत्ययस्यात्रोपपत्त्यभावात् । मयूरव्यंसकादिष्वेवार्थमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात् । निपातनादिति । यवादिगणे ककुद्मानिति प्रकृतिप्रत्ययसमुदायः पठ्यतइति मतेनेदम् । उदः स्था ॥ तस्मादित्युत्तरस्येति परिभाषालभ्यमर्थमाह । उदः परयोरिति ।

अत्राघोषस्येति । समनियतत्वेनान्यतमाग्रहणे बाधकाभावेन श्वासविवारयो-स्त्यागे ऽपि न न्यूनतेति बोध्यम् । यस्यासिद्धत्वादिति । त्रिपाद्यां परत्वा-दिति भावः । हलो यमामिति सूत्रोक्तभाष्यसंमताष्टाध्यायीपाठे तु यस्यासि-द्धत्वाभावेन चर्त्वं भवत्येवात एवोत्पूर्वस्कन्दे रोगे उपसंख्यानम् उत्कन्दो रोगे इति भाष्यं सङ्गच्छते । मूलन्तु प्राचामनुरोधेनेति परे । न चेदं सूत्रं व्यर्थं झलो झलीत्यनेन सस्य लोपे उत्थानस्य सिद्धेरिति वाच्यम् । झलादौ प्रत्यये तेन लोप इत्यर्थस्यानेन ज्ञापनात् । उदस्यादित्यत्र तु निर्दिश्यमानपरिभा-षया निर्दिश्यमानादेरेव स्थानित्वाच्च दोषः । झय इति पञ्चमीत्याह । झयः परस्येति । पूर्वस्येत्यनुवर्त्तते । घोषवत इति । समनियतत्वे ऽपि विनिगम-नाविरहात्स्वरूपप्रतिपादनाय च त्रितयग्रहणम् । झय इति । पदान्तादित्यपि बोध्यम् । तेन विप्रश्नमित्यादौ छत्वं न । जकारे कृते इति छत्वमिति शेषः । पूर्वोक्तभाष्यसंमताष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यसिद्धत्वात् । मोनु ॥ पद-स्येत्यधिकृतं म इत्यनेन विशेष्यतइत्याह मान्तस्येति । हलि सर्वेषामित्यतो हलीत्यनुवर्त्तते । हलि किम् । राममाशय । नश्चा ॥ चेन मो ऽनुकृष्यते । अपदान्तस्य किम् । राजन्याहि यशांसीति । यशस्शब्दे जसः शौ नपुंसक-स्येति नुमि सान्तेति दीर्घः । आक्रंस्यतइति । क्रमेर्लृट् आङ् उद्गमनइति तङ् स्यः । अनुस्वारस्य ॥ परेति लुप्तषष्ठीकं पृथक्पदम् । अत एवोदः स्थेत्यादौ सवर्णग्रहणानुवृत्तिर्यरो ऽनुनासिके इत्यत्र तदपकर्षश्च सिद्धः । ययीति स्पष्टार्थम् । दंशनमित्यादौ तु न दोषः । शकारसवर्णाप्रसिद्धेः । प्रयत्नभेदेना-च्झलोः सावर्ण्याभावात् । अचि अनुस्वाराभावात् मो राजि ॥ नेति सिद्धे म इत्युक्तिर्हि मपरइत्यतद्विषये प्रशाम् स्नलयतीत्यादौ मो नो धातोरिति नत्वबाधनार्थो निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात् । ध्वनितञ्चेदमेतदो ऽनमो मशिति सूत्रयोर्भाष्ये । हे मपरे ॥ मपरे इति बहुव्रीहिः । न तु तत्पु-रुषो ऽसंभवात् । मो नुस्वार इत्य तो म इत्यनुवर्त्तते । यथासंख्य ॥ सम्यक् ख्यानं संख्या क्रमवैशिष्ट्येन ज्ञानम् । यत्सांख्यैः प्राप्यते स्थानमित्यत्र संख्याश ब्दस्य ज्ञानार्थतया दृष्टत्वात् तमनतिक्रम्य यथासंख्यं अनुदेशः पश्चादुद्भ-ववाक्यार्थबोधकालिकः संबन्धः साम्यं संख्यया योग्यत्वाद्व्याख्यानाच्च । एवञ्च समसंख्यानं संबन्धो येन क्रमेण पदज्ञानं पदादुपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधविषयः संबन्धस्तेषामित्यर्थः, फलितमाह । समसं-बन्धीति । यद्यपि स्थानाख्यलौकिकप्रमाणादेव सिद्धं तथापि परस्मैपदा नामेचो ऽयवायाव इत्यादौ शब्दतः सूत्रान्तरस्थक्रममादाय संबन्धबोधार्थ-माद्यन्तौ टकितावित्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्तक्रमव

न्वयबोधनार्थञ्चेदं एवञ्च तत्र यथासंख्येनान्वयबोधकवाक्यकल्पनैतत्प्रामाण्यात्ततश्च बोध इति बोद्धव्यम् । अत्र स्वरितेनेत्यपकृष्यतइति ख्यत्यादित्यादौ नातिप्रसङ्गः । तत्र प्रतिपत्तिकालिकमेव संख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति ञमङणनमिति सूत्रे भाष्ये स्पष्टम् । एते यवला निरनुनासिका एव । विधीयमानत्वेन सवर्णाग्राहकत्वात् जातिग्रहणप्राप्तस्येव गुणाभेदकत्वप्राप्तस्यापि अप्रत्यय इत्यनेन निषेधाच्च । एवं मय उञ इत्यत्रापि । अत एव मतोर्मस्य नानुनासिको वकारः । अन्यथा तद्वानासामित्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिरित्याहुः । चयो द्वितीया इति । नादिन्याक्रोशइत्यत्र भाष्ये इदं एतत्सामर्थ्यादेतत्कृतद्वितीयस्य न चर्त्वम् । ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजमितिप्रातिशाख्ये ऽपदान्तभाजमिति चर्त्वासिद्धत्वलब्धार्थानुवादः । पदान्ते जश्त्वप्रवृत्त्या चर्त्वं विना चयो ऽलाभात् । अत्र तु कृते न जश्त्वप्राप्तिरस्यासिद्धत्वात् । अफ्सरा वथ्सा इति भाष्योदाहृते छान्दसत्वाच्चर्त्वस्यासिद्धत्वं नैवञ्च प्रातिशाख्ये ऽपदान्तभाजमित्युत्सर्गः । यद्वा तयोरव्युत्पन्नत्वं न त्वप्पूर्वात् सर्त्तेरसिर्वेदेः सोवेत्यन्यत्र विस्तरः । डः सि । सीति सप्तमी षष्ठ्यर्थे व्याख्यानात् तदाह सस्येति । पदस्येत्यनुवर्त्तमानस्य वैयधिकरण्येनान्वयात्पदावयवस्य सस्येत्यर्थः । षट् त्सन्त इति । धुटि धस्य चर्त्वे लक्ष्यभेदात्पुनर्डस्य चर्त्वम् । नश्चा ॥ नकारान्तादिति । पदस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यतइति भावः । वैयधिकरण्येनैवान्वय इति ङमुट्सूत्रस्थभाष्यस्वरसः । नस्य पदान्तस्येति । अपदान्तनकारे ऽनुस्वारप्रवृत्त्या फलितार्थप्रदर्शनमिदम् । नान्तस्य पदस्येत्युचितम् । चतुष्टयमिति । वक्ष्यमाणविकल्पैरिति भावः । तेन तुकश्चुत्वे छत्वस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे चस्य छत्वेन छकारछकारशकारघटितरूपद्वयाधिक्ये ञशानुस्वारविसर्गणान्द्वित्वविकल्पेनाधिक्ये ऽपि न क्षतिः । ङमो ॥ पदस्येत्यनुवृत्तं सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यते इत्याह । तदन्तं यत्पदं तस्मादिति । तत्र ङम्स्वयं ह्रस्वादिति विशेषणसंबन्धमनुभूय पदविशेषणत्वेन तदन्तपर इति भावः । ङम इति पञ्चमी बलादचीति सप्तमी षष्ठ्यर्थे तदाह । अच इति । सप्तमीनिर्देशस्तु लाघवार्थः । ङम उत्तरस्याच इति तस्मिन्निति सूत्रस्थभाष्यात् । ङमन्तं यत्पदमिति किम् । अनितीत्यादौ ङमुण्मा भूदिति । भाष्ये तु विभक्तिव्यत्ययकल्पने गौरवात्पदावयङमः परस्येति वैयधिकरण्यमेवोक्तम् । दण्डिनेत्यत्र ङमुडभावो मण्डूकप्लुत्या उञि च पदे इत्यतः पदे इत्यनुवर्त्याजादेः पदस्य ङमुडित्यर्थेन बोद्ध्यः । पदस्येत्यस्यावृत्त्या संबन्धे ऽपि विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वएव तदादि-

विधिप्रवृत्त्या तदलाभः स्यात् । एतदर्थमेवाचीति सप्तमीनिर्देशः । ङमन्तं यत्पदमित्यर्थे ऽपि परमदण्डिनेत्यादावेतद्वारणाय पद इत्यनुवृत्तिरावश्यक्येवान्तर्वर्त्तिविभक्त्या दण्डिन्नित्यस्य पदत्वात् । उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधस्तु न । माषकुम्भवापेनेत्यादौ पदव्यवाये ऽपीति निषेधसिद्धये तस्य यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः । तेन निषेधेन सिद्धमित्येतत्सूत्रस्यभाष्योक्तिस्त्वेकदेशिन इति दिक् । इको यणचीति सौत्रो निर्देशः । रुप्रकरणइति । अत एव समः सुटीत्यादौ प्रश्लेषेण सविधानमिति भाष्ये उक्तम् । रोः पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य । एवमुत्तरत्र रोः पूर्वस्मादित्यपि । अयमधिकारः । तेनोत्तरसूत्रविषये एवास्य प्रवृत्तिः । न तु मतुवसोरित्यत्र तत्सूत्रस्यवार्त्तिकयोश्च । अत्रेति तु रुप्रकरणएवास्य संबन्धो न त्वग्रे ढो ढे लोप इत्यादावित्यर्थसूचनार्थं स्पष्टार्थमेव । तुशब्दः परस्य नित्यं रुत्वं पूर्वस्य वानुनासिक इति विशेषद्योतनार्थः । रोः पूर्वस्येत्यस्य च रुस्यानिनः पूर्वस्येत्यर्थो बोद्ध्यः । अनुनासिकात्पर इत्यत्रानुनासिकादिति ल्यब्लोपे पञ्चमी व्याख्यानात् । अयमागमो ऽनवयव एवावयवत्वे मानाभावात् । खरीति । विसर्गाक्षिप्तस्याप्यवसानस्य न संबन्धो व्याख्यानात् । सो वक्तव्य इति । समः सुटीत्यादिसूत्रत्रये स इत्युपसंख्याय समः सुटीत्यत्र सकारं प्रश्लिष्य वेतिः सकार एव विधेय इत्यर्थः । एवञ्चास्यासिद्धत्वाद्रुत्वाभावेन विसर्गाभावे तत्तद्विधीनामप्राप्तिरेवेति भावः । स्पष्टं चेदं भाष्ये । विसर्गस्यानेन सत्वविधाने तु गौरवं स्फुटम् । लोपस्यापीति । यत्तु "उपधारञ्जनङ्कुर्याच्चमो रुकरणे सति । लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम्" । उपधारञ्जनमनुनासिकानुस्वारागमरूपम् । नमोर्नकारमकारयोः । प्रकृतिभावोदाहरणं, नॄन्पाहीति । तत्तु प्रातिशाख्यत्वात्तच्छाखामात्रविषयमिति भावः । अत एव भाष्ये समादिषु सत्वं वक्तव्यमित्युक्तम् । रुत्वपक्षे चानुनासिकाद्यप्राप्तिर्दोषत्वेन नोक्ता । ननु लोपपक्षे एव द्वित्वेन द्विसकारस्य सिद्धत्वात्समः सुटीति व्यर्थमित्यत आह त्रिसकारकमपीति । स्कोरिति लोपस्तु नास्यासिद्धत्वात् । पुनर्द्वित्वेन त्रिसकारस्य सिद्धिरिति तु न युक्तं, लक्ष्ये लक्षणस्येति न्यायात् । एतेन समः सुटीत्यत्र वेति पाठेनैव पक्षे मो ऽनुस्वारेण सिद्धे ऽनुनासिकात्पर इति व्यर्थमित्यपास्तम् । ननु व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावो ऽत आह । अनुनासिकवतामिति । तत्रोच्चारणे विशेषाभावकल्पने इदं वचनं व्यर्थमेव स्यादिति भावः । हयवरट्सूत्रभाष्योक्तिशर्षूपसंख्याने फलमाह । अनुस्वारवतामिति । अपिना कस्य सङ्ग्रहः । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह । वचनान्तरेणेति । यणो मय इत्यनेन । एकस्यैव शास्त्रस्य

पुनः प्रवृत्तौ हि स न्याय इति भावः । पूर्वत्रासिद्धत्वेन पूर्वद्वित्वस्य पूर्वं प्रवृत्त्या तेन द्वितीयस्य साधुत्वे बोधिते तदनन्तरं परद्वित्वप्रवृत्त्या तयोर्मध्ये पुनरन्यस्य साधुत्वं बोध्यतइति त्रितयस्य निर्वाहो बोध्यः । अनचि चेत्यत्र यणो मय इत्यस्योपसंख्यानादचो रहाभ्यामित्यतस्तस्य परत्वं बोध्यम् । पुमः ख ॥ अम्परइति बहुव्रीहिः । ≍क≍पयोरिति । कुप्वोरिति सूत्रविधेययोरित्यर्थः । इदुपधस्येति सूत्रे ऽप्रत्ययस्येत्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः । अव्युत्पत्तीति । तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः । षत्वेति । इदमनुनासिकपक्षे । अनुस्वारपक्षे तु कुप्वोरित्यस्यैव प्राप्तिः । अनुस्वारव्यवधानेनेदुपधत्वाभावात् । पुंस्कोरमिति । चरधातोरुपधाया ईत्वे ऽटप्रत्यये चीरमिति भावः । नश्छवि ॥ अप्रशानिति पञ्चम्यर्थे प्रथमा । नॄन्पे ॥ नॄनिति द्वितीयान्तानुकरणम् । षष्ठ्याः सौत्रो लुक् । नलोपस्तु सौत्रत्वान्न । एवं कानित्यत्रापि । चाद्विसर्ग इति । शर्परे इति सूत्रात्तदनुकर्षश्च नेति भावः । येन नेति । येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक इति न्यायेनेत्यर्थः । येन नेत्यादिर्यत्कर्तृका ऽवश्यप्राप्ताविःयर्थः । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । प्राप्ते इति भावे क्तस्तदप्राप्तियोग्ये विषये ऽचारितार्थ्यं हि बाधकत्वे बीजम् । तदुक्तं शर्पूर्वा इति सूत्रे भाष्ये शपूर्वा इत्येतद्धलादिःशेषस्य बाधकम् । इदन्तावदयं प्रष्टव्यः, यदि तत्रोच्येत किमिह स्यात् हलादिः शेषश्चेन्नाप्राप्ते तस्मिन्नारम्भादिदन्तावद्बाधकं भविष्यतीति अजादेर्द्वितीयस्येति सूत्रे भाष्ये ऽपि स्फुटमेतत् । न तु शर्परइति । न चास्य विसर्गस्य ≍क≍पौ दुर्वारौ किं चास्यैव तौ स्यातां, खरवसानयोरिति विहितस्य तु एतयोरसिद्धत्वात्सत्त्वमेव स्यादिति वाच्यम् । शर्परे इति सूत्रं कुप्वोरित्यत्रानुवर्त्य शर्परयोः कुप्वोः ≍क≍पयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात्स्पष्टञ्चेदं भाष्ये । वार्त्तिके कान्ग्रहणं शक्यमकर्त्तुमित्याह । यद्वेति । एवं सम्ग्रहणमपि त्यक्तुं शक्यम् । पुम्ग्रहणं त्वावश्यकमेव । अनुनासिकपक्षे इणः परत्वेन षत्वापत्तेः । रुप्विणा इति । गणे कृतसत्वषत्वानामेव पाठादिति भावः । ≍क≍पयोरपवाद इति । तद्विहितविसर्गस्यापीत्यपि बोध्यम् । काँस्कानिति वीप्सायां द्वित्वम् । संहितायाम् ॥ संहिता च स्वारसिकार्धमात्राकालव्यवायेनोच्चारणम् । ततो ऽधिकार्धमात्राकालेनोच्चारणे अवग्रहे एतदधिकारोक्तकार्यव्यावृत्तये इदं, तदधिककालव्यवाये तु न साधुत्वं नापि बोध इष्यते इति वृद्धा इति तेषां शास्त्रविषयतैव नेति भावः । छे च ॥ छे इत्याकार उच्चारणार्थस्तेनाच्छिन्नमित्यत्र तुक् ह्रस्वस्य पितीत्यतो ह्रस्वस्येति तुगिति च वर्त्तते । जश्त्वेनेति । स्वशब्दे उपपदे छ्यतेः के स्वच्छशब्दो निर्मले रूढः । एवं नञ्पूर्वाच्छादय-

तेर्डे अच्छशब्द इति पदान्तत्वं बोद्ध्यम् । स्पष्टञ्चेदममरटिप्पणे । आङ्मा ॥ आङ्साहचर्यान्माङव्ययमेव । दीर्घस्यायमिति । वक्ष्यमाणज्ञापकाद्व्याख्यानाद्वा दीर्घादिति षष्ठ्यर्थे पञ्चमीति भावः । एओङ्सूत्रभाष्ये ध्वनितमेतत् । चेच्छिद्यते इति । तुको हलादिः शेषस्तु नाभ्याससञ्ज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा संहितानां हलामेव तेन निवृत्तेः । अत एव नुगत इत्यादि चरितार्थम् । दीर्घात्पदान्तादिति । पदान्तस्य दीर्घस्येत्यर्थः । योगविभागो ऽनयोरेओङिति सूत्रे भाष्ये स्पष्टः । दीर्घान्तस्य पदस्येत्यर्थेन सिद्धे ऽन्तग्रहणं पदान्तविधित्वमस्य न पदविधित्वमिति बोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थन्तेनासामर्थ्येप्यस्य प्रवृत्तिरिति समर्थसूत्रे कैयटः ॥ इति हल्सन्धिः ॥

विसर्जनीयस्य सः ॥ प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शनाय स्मारितम् । शर्परे इति बहुव्रीहिः । विशेष्यं चावद्धविधिमतोः साक्षात्याद्विसर्जनीयाक्षिप्तः खरेव । विसर्गस्य विसर्गविधै फलमाह । न त्वन्यदिति । अन्यदेव विवृणोति । इहेति । त्रैरूप्यमिति । विकल्पद्वयसामर्थ्यादिति भावः । सोप ॥ अपदाद्योरिति सूत्रे सौत्रत्वादेकवचनम् । अनव्ययस्येति । अत्राव्ययीभावातिरिक्ताव्ययस्यैव ग्रहणं व्याख्यानात् तेनोपयस्काम्यतीत्यादैा सत्वसिद्धिरिति स्पष्टमव्ययीभावश्चेत्यत्र भाष्ये । गीः काम्यतीति । वाः काम्यतीत्यस्याप्युपलक्षणमिदम् । इणः षः ॥ इदुदुपधस्येत्यस्यासिद्धत्वात्सर्पिष्पाशमित्यादैा सत्वनिवृत्त्यर्थङ्गीष्पाशन्दोष्कल्पमित्याद्यर्थञ्चेदम् । अत्रानव्ययस्येत्यपदादाविति काम्ये इति च संबद्ध्यते । तेनोच्चैः कल्पं. दोः पश्य, गीः काम्यती,त्यादैा षत्वं न । अत एवात्र प्रकरणे सर्वत्र सत्वमेव विधेयमिण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्वमिति भाष्योक्तपक्षान्तरं सङ्गच्छते । विसर्जनीयस्यानिकेत्युक्त्या पुंस्विव इत्यादैा न दोषः । तत्र हि सस्थानिकः सः । अत्र विसर्जनीयस्येत्यनुवृत्त्यैतदर्थलाभः । अनव्ययस्येत्यादि त्वत्र पक्षे ऽत्र न संबद्ध्यते तेन द्विष्कृतं दुष्काम्यतीत्यादैा षत्वसिद्धिः । गीः काम्यतीत्यादैा सकाराभावादेव न दोषः । अपादादाविति च न संबद्ध्यते तेन दुष्करोतीति षत्वसिद्धिः । परन्त्वयं पक्षो ऽसङ्गतः । उत्तरसत्वस्यासिद्धत्वेन निष्कृतमित्यादैा षत्वासिद्धेः । प्रकरणे प्रकरणमसिद्धं न योगो योगे इति पक्षस्तु नास्त्येव ज्ञापकासंभवादित्युपसर्गादसमासेपीत्यत्र निरूपयिष्यामः । विसर्जनीयस्यैव षत्वमिति । मूलोक्तपक्षे तु सकारषकारयोः स्वरितत्वे ऽपि यथायोगं संबन्धो मण्डूकप्लुत्येत्यन्यत्र विस्तरः । नमस्पु ॥ इत उत्तरमपदादाविति न संबद्ध्यते व्याख्यानात् । साक्षात्प्रभृतित्वादिति । ऊर्यादित्वाद्गतित्वं स्वरादिपठितस्य तु गतित्वाभावस्तेन साक्षात्प्रभृतिषु च्व्यर्थवचने ऽपि न क्षतिरित्यन्ये । इदुदु ॥ अप्रत्ययस्येति पर्युदासो लाघवात् ।

तत्र प्रत्ययपदं तत्संबन्धिपरं, तेन प्रत्ययसंबन्धिभिन्नस्येत्यर्थो ऽत एव कविभिः कृतमित्यादौ न षत्वं स्पष्टञ्चेदं भाष्ये इत्यन्यत्र विस्तरः । एकादेशशास्त्रेति । एकादेशशास्त्रसंपन्नरेफस्यानिकत्वेन विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोध्यम् । स्पष्टञ्चेदमत्र सूत्रे उरण् रपर इति सूत्रे च भाष्यइत्यन्यत्र विस्तरः । प्रत्ययभिन्नसंबन्धिन इति तु नार्थः । अग्निः करोतीत्यादावपि प्रत्ययभिन्नसमुदायसंबन्धित्वेन षत्वापत्तेः । तपरकरणं किम् । गीः करोति । उपधाग्रहणं व्यर्थम् । उपधाग्रहणं न करिष्यते इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम इति हयवरट्सूत्रभाष्योक्तेः । तिरसो ऽन्य ॥ अत्र गतिग्रहणं नानुवर्त्तते पराभवे तिरस्कारशब्दप्रयोगात् । अन्तर्धावेव तिरसो गतित्वात् । द्विस्त्रि ॥ कृत्वो ऽर्थइति न विसर्गविशेषणं चतुःशब्दे ऽसंभवात्, किं तु द्विरादीनामित्याह । वर्त्तमानानामेषामिति । इसुसोरिति सूत्रवत्प्रमाणरीत्या सुच इति सूत्रयितुमुचितम् । सुजन्तान्तस्य पदस्येत्यर्थात् । चतुष्कपाल इति । इदुदुपधस्येति नित्यं षः । चतुःशब्दो ऽव्युत्पन्न इति अप्रत्ययस्येति पर्युदासो न । अत एव चतुष्पाद्भ्यो ढञित्यादिनिर्देशाः सङ्गच्छन्ते । चतुष्कञ्चाशदित्यत्रापि षत्वं भवत्येव । न चेदुदुपधस्य सस्य यो विसर्ग इति हयवरट्सूत्रभाष्योक्तेः कथमत्र षत्वमिति वाच्यम् । विसर्गस्य पाठाभावेनोपधात्वासंभवात्तत्स्यानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात् । अत एव समः सुटीति सूत्रभाष्ये संपुङ्कानामित्यनेन रुविधिरेवास्त्विव्याशङ्क्य पुंस्कामित्यत्र षत्वापादनं सङ्गच्छते । न च कृत्वोर्थं इत्येव कृत्वोर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग इत्यर्थोऽत्र पञ्चकृत्वः करोतीत्यादौ दोषो नापि चतुष्करोतीत्यादावव्याप्तिरिति द्विस्त्रिश्चतुरिति व्यर्थमिति वाच्यम् । कृत्वोऽर्थे इत्यस्यासिद्धत्वेन चतुःशब्दे इदुदुपधस्येति नित्यषत्वापत्तेः प्रकरणे प्रकरणमसिद्धमिति पत्वस्तूपसर्गादसमासे ऽपीति सूत्रे कैयटे पूर्वपदादिति सूत्रे भाष्ये च दूषित एव । उपसर्गादिति सूत्रे चोपपादयिष्यते । किं च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणे ऽव्यवहितप्रकरणे एव त्रिपाद्यसिद्धत्वं स्याच्च संपूर्णसप्ताध्याय्याम् । किं चास्याधिकारत्वात्प्रतिसूत्रमुपस्थित्या प्रतियोगमसिद्धत्वं दुर्वारमित्यन्यत्र विस्तरः । इसुसोः ॥ अत्रेसुसोः प्रातिपदिकावयवयोर्ग्रहणमिति पाठः । तेन पेचुः काष्ठैः, सख्युः पाक इत्यादौ षत्वं न । नित्यं समासइति सूत्रोदाहरणविषये तयोरेव संभवेनार्थाधिकारानुरोधात्साहचर्याच्च इसुसन्तपदावयवविसर्गस्येत्यर्थः । पदस्येत्यधिकारात् । न च प्रत्ययग्रहणपरिभाषया परमसर्पिष्करोतीत्यादौ षत्वानापत्तिरवयवस्येसुसन्तत्वे ऽपि उत्तरपदत्वे चेति निषेधेनापदत्वादिति वाच्यम् । अनुत्तरपदस्थस्येति निषेधेन क्वचिदुपात्तविशे-

प्यसत्वे ऽपि शब्दरूपविशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपविशेष्यमादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतयेसुसन्तान्तस्येत्यर्थेनादोषात् । अत एव वनोरचेत्यादौ न दोषः । ब्राह्मणस्य सर्पिष्करोतीत्यादौ सापेक्षत्वेनासामर्थ्यं नाशङ्क्यं तस्यैकार्थीभावसामर्थ्यविषयत्वात् । अधात्वभिहितं समानाधिकरणमसमर्थवदित्युक्तेः सर्पिःकालकमित्यादौ न षत्वम् । अधात्वभिहितमित्युक्तेः सर्पिष्यीयतइत्यत्र षत्वसिद्धिः । धातुसहचरितप्रत्ययाभिहितार्थेन समानाधिकरणमसमर्थवन्नेति तदर्थः । यदा तु सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं पाणिनेरुणादिष्वव्युत्पत्तिपक्ष एवेति आयनेयीनीति सूत्रे भाष्ये स्पष्टमुक्तेः । तत्र हि शंख इत्यादावादेशानाशङ्काणादीनां प्रतिषेधो वक्तव्यः । प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमित्युक्तम्, अयामन्ताल्वाय्येत्न्विष्णुष्विति सूत्रं पाणिनेर्व्युत्पत्तिपक्षस्यापि स्वीकार इत्यस्य गमकं व्याकरणान्तररीत्यैव वा तत्सूत्रं, सर्वनामस्थानमिति महासञ्ज्ञावत् । अत एव भाष्ये व्युत्पन्नानीत्येवोक्तम् । न त्वनेकार्था अपि धातव इति वद्व्युत्पन्नानीत्यप्युक्तं, तदा इदुदुपधस्येति नित्ये षत्वे प्राप्ते ऽनेन विकल्प इति प्रत्ययग्रहणाभावात्तत्परिभाषानुपस्थितेः परमसर्पिष्करोतीत्यादौ षत्वविकल्पः सिद्धः । नित्यं समासे इति सूत्रमनुत्तरपदस्थस्येति प्रतिषेधार्थं नित्यग्रहणं तु न कर्त्तव्यमेव । समासे नित्यषत्वस्य इदुदुपधस्येत्येव सिद्धेः । सर्पिषेत्यादौ षत्वं त्वत्र पक्षे क्व चिदन्यदेवेत्यर्थकाद्बहुलग्रहणादिति स्पष्टं भाष्ये । व्यपेक्षेति । व्याख्यानात् । एकार्थीभावसामर्थ्यग्रहणे परमसर्पिः कुण्डिकेत्यादौ समासे विकल्पापत्तिः । अनुत्तरपदस्थस्येति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः । नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह । कस्कादिष्विति । एतेन तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्वमित्यपास्तम् । व्यपेक्षाविरहे ऽपीति । आनय सर्पिः कुण्डिका तिष्ठतीत्यादौ । व्यपेक्षायामिति । इदं सर्पिष्कुण्डिकाया इत्यत्र । प्रत्ययभिन्नविसर्गस्येत्यर्थमिदुदुपधस्येत्यत्र व्याचक्षाणानां व्याख्यादर्शकानां मते ऽव्यपेक्षायां तेन सिद्धेरिति भावः । एतेन कस्कादिपाठस्याव्यपेक्षायां चारितार्थ्येन व्यपेक्षायां तस्यासिद्धत्वाद्विकल्प एवोचित इत्यपास्तम् । प्रत्ययसंबन्धिभिन्नविसर्गस्येत्यर्थे तु तदप्राप्तिरेवेति व्यपेक्षायां विकल्प एवेति बोध्यम् । अतः कृ ॥ कृशब्देन तदादिग्रहणं समासाक्षिप्तोत्तरपदस्य विशेष्यत्वात् । विष्वग्देवयोरिति सूत्रे वप्रत्ययग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनात् । अयस्कुंभीत्यादौ लिङ्गविशिष्टपरिभाषया सत्वं बोध्यम् । भास्कर इति । तपरकरणादतः कृ इत्यस्याप्राप्तिः ॥ इतिविसर्गसन्धिः ॥

यत्तु स्वौजसित्यत्र रुरेव पाठः । सर्वत्र सुग्रहणे रुग्रहणमेवास्त्विति तन्न । यशोत्रेत्यादौ रोरसिद्धत्वादुत्वानापत्तेस्तो रोरित्यस्य प्रथमैकवचने चारितार्थ्यात्तद्गुनयन्नाह । स्वौजसेति । पदस्येत्यनुवृत्तं ससजूर्भ्यां विशेष्यते तेन तदन्तविधिरादेशस्त्वलोन्त्यस्येत्यन्त्यस्य तत्फलितमाह । पदान्तस्येत्यादिना । सजूरित्यत्र व्यपदेशिवद्भावेन सिद्धिः । व्यपदेशिवद्भावो ऽप्रातिपदिकेन ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति परिभाषाद्वयं प्रत्ययविधिविषयमित्यसमासे निष्कादिभ्य इत्यत्र भाष्ये स्पष्टम् । इदञ्जश्त्वापवादः । श्रेयानित्यादौ त्वस्यासिद्धत्वात्संयोगान्तलोप एवेति दिक् । यत्त्वस्यापवाद इति यदीदं न स्यात्तर्हि यत्वं प्राप्नोतीत्येतावता । कृते त्वस्मिन् यत्वस्यासिद्धत्वादुत्वगुणयोर्यत्वाप्राप्तिरेवेति भावः । प्रथमयोः ॥ व्याख्यानात्प्रथमयोरित्यनेन प्रथमाद्वितीयारूपसुब्विभक्त्योर्ग्रहणं तदाह । प्रथमाद्वितीययोरिति । पूर्वग्रहणं किम् । अग्नी इत्यत्र पत्ते परसवर्णो मा भूदिति । दीर्घग्रहणं तु त्रिमात्रस्य स्थानिनस्त्रिमात्रो मा भूदिति । सवर्णग्रहणं तु स्पष्टार्थम् । पूर्वस्यादीर्घत्वात्पूर्वजातीय इत्यर्थेनेष्टसिद्धेरिति स्पष्टं भाष्ये । आद्गुण इति । तौ सदिति निर्देशेन भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणादिति भावः । देवदत्तहन्तृहतन्यायस्य तु नात्र प्रवृत्तिः । देवदत्तहन्तृहनने हि नोज्जीवनं देवदत्तहननप्रसक्तहनने त्वस्त्येव देवदत्तजीवनं प्रकृते तु न हननस्थानीया वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य लक्ष्ये प्रवृत्तिः, किं तु हननोद्यमसजातीयं प्रसक्तिमात्रं प्रसक्तस्य निषेधे बाधोज्जीवने न बाधकमिति स्पष्टं चेदं स्वादिष्वितिसूत्रे कैयटे । सुस्रोत इति । सुस्रोतस् शब्दः कस्य वित्सञ्ज्ञा संबुद्धौ दूराद्धूते चेति प्लुतः । तत्सामर्थ्यादिति । प्रतियोगित्वेन तदाश्रयणसामर्थ्यादित्यर्थः । आश्रयात्सिद्ध इति भाष्योक्तेः । पयस्यटति पयो ददातीत्यर्थे आगच्छ हे पयो३ट् आगच्छ पयो३देत्यादावेकपदस्यवर्णद्वयसापेक्षमन्तरङ्गमुत्वं प्रति वाक्यसंपादकपदान्तरसापेक्षप्लुतस्यासिद्धत्वादुत्वे प्लुतसिद्धिरन्यथा प्लुतस्योत्वदृष्ट्या सिद्धत्वात्परत्वात्प्लुते आद्ये ऽप्लुतपरत्वाभावादन्त्ये ऽप्लुतात्परत्वाभावादुत्वं न स्यात् परिभाषादृष्ट्या बहिरङ्गासिद्धत्वे ऽपि न क्षतिः । स्वदृष्ट्या ऽसिद्धस्यापि परं प्रत्यसिद्धत्वप्रतिपादनसंभवात् स्वदृष्ट्या ऽविद्यमानस्य परं प्रत्यविद्यमानत्वप्रतिपादनात् । अन्तरङ्गस्यासिद्धत्वे तु प्रतिपाद्याभावे इव कं प्रत्यसिद्धत्वं प्रतिपाद्येत तत्राद्ये वाक्यस्य टेरित्यट् शब्दाकारः प्लुतो ऽन्त्य रेफटकारसंयोगपरत्वेनाकारस्य गुरुत्वात् गुरोरिति प्लुतः । आश्रयेण

तु येन नाप्राप्तिन्यायेन प्रत्यक्षत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते न त्विदम् । सुस्रोता इत्यादौ त्वेकवाक्यमात्रसापेक्षत्वात् प्लुतो ऽन्तरङ्गो भिन्नवाक्यस्याकारसापेक्षत्वादुत्वं बहिरङ्गमिति स्पष्टं भाष्ये । उकारानुबन्धेति । उकारेत्सञ्ज्ञकरेफस्येत्यर्थ इति भावस्तेन देव रुहीत्यादौ न दोषः । भो भगो ॥ रोः सुपीत्यतो रोरिति वर्त्तते न तु रोरीत्यतो र इति प्रातरत्रेत्यादावतिप्रसङ्गात् । अशब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह । एतत्पूर्वस्येति । नन्वेवं पूर्वरूपापत्तिरत आह, असन्धिरिति । भगोअघोशब्दौकारयोरकाराभ्यां प्राप्तपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः । इदं प्राचामनुरोधेन । वस्तुतः सूत्रे रान्तानामेवानुकरणमसन्धिर्न्याय्य एवेति बोध्यम् । न ह्ययमिति । इदमर्वाचामनुसारेण । भाष्ये तु रेफस्य विसर्गस्थानित्वेन तद्वृत्तित्वाश्रयमपीदमल्विधिरेव । स्थान्यलवृत्तिधर्माश्रयत्वात् । अयहीदित्यत्र च दीर्घे लोपे चेट्त्वेनैव निवेश इति विशेषो ऽतः पयःस्वित्यादौ दोषः । तत्र हि रोः सुपीति विसर्गः । नियमशास्त्राणि च विधायकान्येव वाच्यवृत्त्यार्थिकार्यमादाय तु निषेधकानीति तत्रापि रो रेफस्य विसर्ग इत्यर्थे त्वसग्रहणं व्यर्थमित्युक्तम् । नन्वेवं हे रामेत्यादौ संबुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्तिसुप्त्वस्याल्धर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरिति चेन्न । आनुमानिकादेशस्य रामेत्यस्य स्थानिवद्भावेन सुबन्तत्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन तत्सिद्धेः । प्रत्ययलक्षणेनापि न प्रत्ययवृत्तिधर्मलाभः । लक्षणापदोपादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वातिदेशात् । एवं दीर्घाहो निदाघेत्यादौ हल्ङ्यादिलोपे उक्तरीत्या स्थानिनि जायमानस्यासुपीति रत्वनिषेधस्यादेशे दीर्घाहन्शब्दे ऽतिदेशेन प्रवृत्त्या न रेफ इति दिक् । तेषां रोरिति । इदञ्च निपातानाख्याय विभाषा भवद्रिति वार्त्तिकं प्रत्याचक्षाणस्य वृत्तिकृतो मतेन, परे तु तेषामपि रोरित्यर्थः । अपिना विभाषा भवद्भगवदघवतामोच्चावस्येति वार्त्तिकनिष्पन्नसङ्ग्रहः । एवामन्त्यस्य रुः स्यादवस्य चोकारः । संबुद्धाविति तदर्थः । अवग्रहणसामर्थ्यादलोन्त्यस्येति नेति बोध्यम् । वार्त्तिकनिष्पन्नानान्त्रयाणां भोशब्दनिपातस्य चावश्यकत्वमन्यत्र स्पष्टमित्याहुः । व्योर्लघु ॥ यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् य्वोरित्युचितं तथापि लोपो व्योरिति लोपवारणाय सौत्रत्वमाश्रयणीयं स्यादतो व्योरित्युक्तम् । लघुतरः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नतरः । अन्यपदार्थसंबन्धोत्तरं वर्त्तिपदार्थप्रकर्षविवक्षया साधुः । प्रयत्ने लघुतरत्वं चैषां शैथिल्यजनकत्वमेव । लघूच्चारणाविति । लघुतरोच्चारणावित्यर्थः । सूत्रे सौत्रत्वादेक वचनम् । वकारोदाहरणमसावादित्य इति वृत्तिः । ओतो ॥

व्योरित्यत्र यकारसाहचर्याद्वकारोपधात्वमवयव एवात्राप्यर्थाधिकारात्तथैव तेन स्मृतो वच्युतेत्यादौ न दोषस्तदाह । यस्येति । तादृशवस्यासंभवादिति भावः । भोभगो इति तु नानुवर्त्तते विच्छेदात्तद् ध्वनयन्वक्ष्यति । पदान्तस्य किं तोयमिति । इदं लघुप्रयत्नयोर्न गार्ग्यश्रुतिस्तदाह, अलघुप्रयत्नस्येति । पूजार्थमिति । व्याख्यानादिति भावः । तादृशश्च भोसादिपूर्वक एवेत्याशयेनाह । भो अच्युतेति । भाष्यानुसारिणस्तु भो इत्याद्यनुवृत्तेः स्मृतोवित्यादौ न दोषः । तस्याऽनभिधानाच्च । अपूर्वस्येति त्वोत इत्यनेन विरोधान्न संबध्यते । लोपः शाकल्यस्येत्येव भो भगो इत्याद्यनुवृत्त्या सिद्धे नित्यत्वार्थमिदमित्याहुः । ओति च ॥ भोइत्यादिपूर्वस्य पूर्वेण सिद्धे आह, अवर्णपूर्वयोरिति । एतदपि नित्यमेव । अत्रापि गार्ग्यग्रहणानुवृत्त्या ऽलघुप्रत्ययस्यैव लोपः । एतेन भो इत्यादि पूर्वे लघुप्रयत्नलोपार्थमत्रापि तदनुवृत्तिरित्यपास्तम् । वकारोदाहरणन्त्वसाव एकाग्निरिति वृत्तिः । उत्तरार्थमिति । ङमो ह्रस्वादचीत्यर्थमित्यर्थः । एतत्तत्रैव निरूपितम् । हलि सर्वेषामित्यादौ तु न संबद्ध्यते । व्यवहिते ङम इत्यत्रैव प्रयोजनकथनपरभाष्यप्रामाण्यात् । अत एव लिट्त्सु इत्यादौ धुडादयः । अन्यथा सादौ पदे इत्यर्थाच्च स्युः । अत एव माभ्यामित्यादौ हलि सर्वेषामिति लोपसिद्धिरिति दिक् । हलिस ॥ भो भगो इत्याद्यनुवर्त्तते तत्रोकारात्परस्य लघूच्चारणस्यैवानेन लोपः । अलघूच्चारणस्य त्वोत इत्येव सिद्धं अपूर्वे तूभयोरपि । न चापूर्वालघुप्रयत्ने अस्यासिद्धत्वाल्लोपः शाकल्यस्येति प्राप्नोतीति वाच्यम् । लघुप्रयत्नस्यैवानेन लोपे व्योरिति सूत्रे ऽचीति करणेन हलि विधानाभावेनैव सिद्धावस्य सूत्रस्य वैयर्थ्यापत्त्या तद्बाधात् । न चालघुप्रयत्नयोरेव लोपः स्यात् । व्योरित्यर्थाधिकारादिति वाच्यम् । ऋषिमात्रग्रहणार्थस्य सर्वेषामित्यस्य वैयर्थ्यापत्तेः । विकल्पस्य विच्छिन्नत्वेन नित्यत्वसिद्धेः । अत्र च यकार एवानुवर्त्तते न वकारो वृत्तौ तथैवोक्तेः फलाभावाद् व्यपरे इत्यादिनिर्देशाच्च । अन्यथा तत्र सौत्रत्वाद्याश्रयणीयं स्यात्तदाह । लघ्वलघूच्चारणस्येति । न तु सपीति । पर्युदासे हि सुप्सदृशेन प्रत्ययएव स्यादेवञ्चाहभातीत्यत्र न स्यात् । यदि तु सुब्भिन्ने शब्दे स्यात् । दीर्घाहो निदाघेत्यत्रापि स्यात् । सुबन्तइति अर्थस्तु न । उत्तमैकाभ्यामित्यादिनिर्देशैः सप्तमीनिर्दिष्टे प्रत्यये तदन्तविध्यभावज्ञापनात् । लक्ष्यानुरोधेन क्व चित्प्रत्ययग्रहणे शब्दस्वरूपस्य विशेषणताया एवाश्रयणाच्च । अत एव रदाभ्यां निष्ठेत्यादौ न दोषः । अहरह इति । नित्यवीप्सयोरिति द्वित्वम् । न लुमतेति निषेधात्सुप्परत्वाभावः । गतमहो रात्रिरिति । केचित्तु भाष्ये आतिदेशिकस्याहोरात्रस्यैवोदाहरणात् नलोपः । प्रातिपदिकान्तस्येति सूत्रे न हि रूपरात्ररथन्तरेषु

षेधेन जरसिति भाष्योक्तं सङ्गच्छते, ऽन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ तदा सर्वनामस्थानत्वाभावान्नुमाविप्रतिषेधविचारासङ्गतिः स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरसः पूर्वं शिभावे प्रवृत्ते तत्सङ्गतिः स्पष्टैव अत एव टाङसीति सूत्रे कैयटेनोक्तं भाष्यकारः सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाष्यं न त्वतिजरसिनातिजरसादितीति गौरवमुद्भावितवानिति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपत्ते च तस्याप्राप्त्या सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नित्यस्यासङ्गतिः स्पष्टैव । वृत्तिकारोऽप्याह । अतिजरसिन अतिजरसादिति के चिदिच्छन्ति यथा तु भाष्यं तथा नैतदिष्यतइति लक्ष्यतइति नपुंसकद्वितीयैकवचने ऽपि लुक्बाधेनातोमित्यमि सन्निपातपरिभाषया जरसभावः । न च तत्र नाऽकारान्तसन्निपातकृत एवाजादिः किं तु तदभावे ऽपि । एवं तु सन्निपातलक्षणविधिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति अत्र भवत्येव जरसिति वाच्यम् । मानाभावात्, टाङसीति सूत्रस्थेनातिजरणेत्येतद्विषयकैयटेन विरोधाच्च । ध्वनितञ्चेदं जराया इति सूत्रे भाष्ये । तत्र हि पूर्वपक्षिणा अतिजरसं पश्येत्यत्र लुक् कस्मान्नेति पृष्टे परेण प्रथमैकवचनेप्यतिजरसन्तिष्ठतीत्यत्रापि कुतो लुक् न शक्यते इति पृष्टे पूर्वपक्षिणा प्रथमैकवचने ऽम्भावोत्तरमेव जरस् तत्र जरसि कृते सन्निपातपरिभाषया न लुक् इति विशेष उक्तः । यद्वा ऽम्भावे कृते सन्निपातपरिभाषया न जरसिति पाठभेदेन विशेष उक्तस्ततः परेण यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति जरसिति द्वितीयैकवचनादौ शङ्किते सिद्धान्तिना इष्टमेवैतदतिजरमतिजरैरिति भवितव्यमिति । अत्र विशेषोपादानेन्त्यपाठ एव युक्तः । अन्यथा लुकः प्रथमैकवचने तेनाभावे उपपादिते द्वितीयैकवचने ऽपि तेन न्यायेन लुको ऽप्राप्तौ विशेषोक्तिरसङ्गतेति बोद्धम् । एवं स्त्रियाञ्जरसादेशे कृते याडाप इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव तेषां परत्वात् । अतिखट्वशब्द तेषां वारणाय तु प्रश्लेष आवश्यक इत्याहुः । परे तु जरसादेशात् विभक्तिसंबन्धिकार्यमात्रं पूर्वविप्रतिषेधेन तेन जराणामित्यादावामि पूर्वं नुटि जरसो ऽभाव एव । एवं ह्रस्वनद्याप इत्यत्राकारप्रश्लेषे न फलं नापि मानम् । अत एव इ्याप्ग्रहणे ऽदीर्घ इति वत् जरसादेशस्य स्थानिवत्त्वप्रतिषेधो वार्त्तिककृता नारब्ध इत्याहुः । परिभाषाया अनित्यत्वमिति । इनातोरिकारदीर्घोच्चारणमेसि कर्त्तव्ये ऐस्करणञ्च तदनित्यत्वे मूलमिति तदभिमानः । षष्ठ्येकवचने इति । एकसूत्रोपात्तत्वात्स्यादेशविषये ऽपि पूर्वविप्रतिषेध इति तद्भावः । एतच्च भाष्येति । इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः । इष्टमेवैतत्सङ्गृहीतमतिजरमतिजरैरिति भवितव्य-

मिति जराया इति सूत्रस्थभाष्येऽपीति चार्थं इत्यन्यत्र विस्तरः ॥ पद्दन्नो ॥ आदेशैः स्वानुरूपाः स्थानिन आक्षिप्यन्ते इत्याह । पाददन्तेति । अनुदात्तस्य चर्दुपधस्येत्यतो ऽन्यतरस्यामित्यनुवर्त्तते । अत एव तुल्यास्यसूत्रादिभाष्ये आस्ये तुल्यः पादेनोपहृतं मासेन पूर्वायेत्यादिप्रयोगा हृदयस्य प्रिय इति सौत्रप्रयोगाश्चोपपन्ना भवन्ति । ये च तद्धिते इति सूत्रस्थे वा केशेष्विति वार्त्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणासंबन्धबोधकम् । यद्यपि निशाशब्दस्य निश्शब्दप्रकृतिकत्वेन भागुरिमतसिद्धतया वैकल्पिकत्वेन च वाक्वाचेत्युभयवन्निशिनिशयोः सूत्रे निशग्रहणं विनापि सिद्धिस्तथापि सुटि हलन्तस्यासाधुत्वबोधनायात्र ग्रहणमिति वृत्त्यनुसारिणः । परे तु अनुदात्तस्येति सूत्रे ऽन्यतरस्यामित्यस्य स्वरितत्वं नास्ति । अत एव शीर्षंश्छन्दसीति सूत्रे शीर्षन्निति प्रकृत्यन्तरन्द्रष्टव्यं आदेशत्वे हि छन्दसि शिरस्शब्दस्य प्रयोगो न स्यादित्युक्तं भाष्ये । अन्यथा विकल्पानुवृत्त्यादेशत्वेपि दोषाभावेन तदसङ्गतिः स्पष्टैव । ये च तद्धितइत्यत्र चादेशत्वाय शिरसोग्रहणं कर्त्तव्यमित्युक्तं, वा केशेष्विति च वक्तव्यमित्युक्तं, तस्माच्छसादिविषयाणि प्रकृत्यन्तराण्येव पदादयः । एवं मास्पृत्स्वपि । अत एव नस्पृतोः स्थानिवद्भावादाबन्तत्वमादाय नसां पृतामित्यादौ न नुडादिः । नासिकाया नस् यत्तस्क्षुद्रेष्विति वार्त्तिके आदेशत्वमेव । नासिकाया इत्युक्तेः । अत एव तद्विषये नासिकाक्षुद्र इत्यादि न । अत एव पदादिषु मांस्पृत्स्नूनामुपसंख्यानमिति वार्तिके स्थानिनिर्देशो न कृत इत्याहुः । प्रत्याहार इति । व्याख्यानादौटष्टकारेणेति भावः । अक्लीबस्येति । पर्युदासपरतया ऽप्यस्य भाष्ये व्याख्यानात् लघुत्वाच्चेति भावः । प्रसज्यप्रतिषेधेन व्याख्याने ऽत एव ज्ञापकात्केषां चिदसमर्थसमासानां साधुत्वं बोद्ध्यम् । स्वादिषु ॥ सुरत्र प्रथमैकवचनं आदिग्रहणेन कबन्तानाङ्ग्रहणं व्याख्यानात् तदाह । कप्प्रत्ययावधीति । तदन्तेष्वित्यर्थः । यचि भम् ॥ समाहारद्वन्द्वे सौत्रत्वाच्च टच् यचीत्यनेन स्वादेर्विशेषणात्तदादिविधिः । असर्वनामेति । तेन सुपादावित्यादौ पादः पत्त । भसञ्ज्ञा पदत्वकार्यप्रतिबन्धरूपे ऽशास्त्रीयेपि कार्ये भवति, न पदान्तसूत्रस्थभाष्यप्रामाण्यात् । आकडारा ॥ प्राक्कडारादिति नावधिः तत्पुरुषो द्विगुश्चेति लिङ्गात्समावेशार्थं हि तदित्याह । कडारा इत्यादि । व्याप्त्यर्थकाङा आचार्यादिति वक्तुं युक्तम् । एकैवेति । संख्यावाच्येकशब्दोपादानादवधारणं संपद्यतइति भावः । या परेति । द्वयोः सावकाशयोः परा निरवकाशत्वे तु सैवेत्यर्थः । आभ्यामेव बाधसिद्धिस्तु न, अन्यत्र तव्यदादौ कृत्कृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधाभावात् विप्रतिषेधाप्रवृत्तेः । लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषये ऽदर्शनेन शा-

स्येपि संज्ञाविषये ऽप्रवृत्तेश्च । तेनेति । अनवकाशत्वेनेत्यर्थः । परोदाहरणान्त्व-पादानमुत्तराणि कारकाणि बाधन्तइत्याद्याकरे स्पष्टम् । विरोधाद्यभावेन विप्रतिषेधसूत्राद्यप्रवृत्तावपि परत्वादेरन्यत्र बलवत्त्वेन दृष्टतयात्रापि तेन व्यवस्था । अपादानादिसञ्ज्ञानां समावेशे तु तत्कार्ययोः पर्यायापत्तिर्दोषः । भपदसञ्ज्ञयोः समावेशे तु राज्ञ इत्यादौ नलोपाद्यापत्तिर्बोध्या । न च राजन्य इत्यादौ सुप्तिङन्तमिति पदत्वन्दुर्वारं परया भसञ्ज्ञया तु न बाधस्तस्या अन्तरङ्गत्वादिति वाच्यम् । समानावधिकाया अन्तरङ्गाया अप्यनया बाह्यसामान्यचिन्तया ऽपवादत्वेनैव बाधादित्याहुः । आकडारस्यसञ्ज्ञासु च यथोद्देशपक्ष एवेत्यदङ्गशब्दे निरूपयिष्यते । भपदसञ्ज्ञाविधावङ्गप्रकरणे भस्येत्यस्य पाठेनाङ्गमित्यनुवर्त्याङ्गं सत्पदम्भवति भं भवतीत्यर्थेन ताभ्यान्तस्य समावेश एव न पर्याय इति बोध्यम् । पुरुषसञ्ज्ञापरस्मैपदसञ्ज्ञयोरपि णलुत्तमो वेति ज्ञापकात्समावेशः । गुरुलघुसञ्ज्ञे वर्णस्य नदीघिसञ्ज्ञे तदन्तस्येति भिन्नावधिकत्वात्समाविशत उभे अपि वर्णस्येति पक्ष आकरे उपलभ्यमानोप्येकदेशिन एव समावेशानुपपादनादिति दिक् । यलोपइति । हलि सर्वेषामित्यनेनेत्यर्थः । अल्लोपो ऽनः ॥ तपरकरणं किम् । अनितेः क्विप्यान इत्यादौ लोपाभावायान्त्वन्तत्रैकदेशविकृतन्यायेनेत्यन्यत्र विस्तरः । पूर्वस्मादिति । अचः परस्मिन्नित्यत्र पूर्वविधावित्यस्यावृत्त्या पञ्चमीसमासाश्रयणाद्द्यमर्थो लभ्यते इति भावः । तेन प्रत्यैपिपन्नित्यादिसिद्धिरन्यथा जुस् स्यात् । अत एवोभे अभ्यस्तमिति सूत्रे उभेग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसञ्ज्ञार्थं, ऐर्त्सन् इत्यत्राभ्यस्तलक्षणो जुस्माभूदिति उक्ते शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोप्राप्तेरसति प्रयोजने उभेग्रहणं सहार्थमित्युक्तन्तेन । उभे यत्र श्रूयेते इत्यर्थेपि प्रत्यैपिपन्निातिसिद्धये आवश्यकेन पञ्चमीसमासेन तत्सिद्धावुभेग्रहणं सहार्थमिति तद्भावः । इति पक्षे त्विति । तुनास्यानित्यत्वं सूचितं, प्रविगणय्येति भाष्योदाहरणमपि तदनित्यत्वे एव सङ्गच्छते । अत एव हे गौरित्यत्र वृद्धेः स्थानिवत्त्वाच्च संबुद्धिलोपः । पूर्वस्मान्निमित्तत्वेनाश्रितादिति व्याख्याने तु न मानम् । के चित्तु पूर्वस्मादव्यवहितपरस्य कार्यएव स्थानिवत्वं, प्रविगणय्येत्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोषः तदनित्यत्वे न मानमित्याहुः । पूर्वत्रासिद्धेनेति । अतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोयं तत्फलं त्वतिदेशान्तराणां वतिघटितानान्त्रिपाद्यां प्रवृत्तिबोधनम् । अत एवामीत्तीरपेणेत्यादौ मीत्वणत्वे भवतः । अत्रैकारस्यादस्सम्बन्धित्वं ये इत्यस्यैकाजुत्तरपदत्वस्यान्तवद्भावाधीनम् । तस्य दोष इति । इदं वाचनिकमेव न मुने इति सूत्रे नेति योग-

विभागस्तु भाष्ये न दृश्यते। अत एव सिद्धकाण्डं वार्त्तिककृतारब्धं न लोपः सुबिति सूत्रञ्च सूत्रकृता। प्रकारार्थमिति। प्रकारः सादृश्यं तच्च सुप्त्वेन मांस्पचनीत्यादावपि न लुमतेति निषेधानित्यत्वाच्छसादिपरत्वं बोद्धम्। शब्दत्वेन। सादृश्यमित्यन्ये। तन्न। वा शोकष्यञ्रोगेष्वित्यस्य वैयर्थ्यापत्तेः। नासिकाया यत्तस्तुद्रेषु नसिति भाष्यपठितवार्त्तिकस्य वैयर्थ्यापत्तेश्च। आसन्यं प्राणमूचुरित्यत्रापि तद्वदेव शसादिपरत्वम्। अत्र सुप्रभृतिष्विति वाच्ये शस्प्रभृतिष्वित्युक्त्याऽन्यत्र क्वचिदेव प्रवृत्तिर्बोध्यते। अत एव यत्कृचिशाङ्ग्रहणं चरितार्थं, तेषां द्विविधानामपि कोशसिद्धतया तत्र व्यवस्थार्थताया एव वक्तव्यतया सुप्प्रत्ययमात्रे प्रवृत्तौ तस्या असंभवेन तद्वैयर्थ्यं स्पष्टमेव। प्रकारार्थत्वे प्रमाणमाह। भाष्ये इति। तत्र हि शस्प्रभृतिष्वित्युच्यते शस्प्रभृतिष्वपि दृश्यते शलाकादोपणीककुद्वोपणीयाचते महादेव इत्युक्तं, आद्यस्याधिगुप्रेषे पठ्यमानस्य शलाकाकारे दोपणी इत्यर्थः। छान्दसः कादिलोपः। एतेन दोष इत्यकारान्तस्य दूषणवाचिनो दोषन्नादेश इत्यपास्तम्। तेन पदङ्घ्रिरिति। न च कोशस्थपदादीनां पादाद्यादेशत्वे पादादिभ्यः पृथक्पदादिवचनं तत्र व्यर्थं न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति स्थान्युपादानेनैव तदर्थाभिधानसमर्थादेशस्याप्यर्थबोधनात्। अत एव नसाद्यादेशानाङ्कोशेऽनुपन्यास इति वाच्यम्। पदादीनां भाष्यरीत्याऽनादेशत्वात्। तत्त्वेऽपि तृज्वत्क्रोष्टुरितिवद्व्यवस्थार्थमस्यावश्यकत्वेन सौ परतो हृदादीनां प्रयोगार्थं प्रकारार्थत्वस्यावश्यकत्वात्। स्पष्टं चेदं वा शोकेति सूत्रे मूले। कोशे शब्दा अर्थपरा एव। शक्तिग्रहस्तु पदत्वहेतुकानुमानेन सामान्यत एव। एवञ्च विष्णुर्नारायण इत्यादौ विष्णुपदार्थाभिन्नो नारायणपदार्थ इति क्रमेण बोध इत्यादि मञ्जूषायां नामार्थवादे विस्तरेण निरूपितम्। एतत्पदममुकवाचकमिति शक्तिग्रहस्तु स्वस्वप्रसिद्धिमादाय तत्तत्पुरुषस्यानियतः पश्चान्मनसैव। अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि ते ऽघ्न्ये नामानीत्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषामर्था इति बोधो, ऽत एव नामन्त्रिते समानाधिकरणे इति सूत्रभाष्ये सामान्यवचनमित्यस्येदं प्रत्युदाहरणं दत्त,मन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याप्यभावात्तदसङ्गतिः स्पष्टैव। एकशेषस्तु न। तथा सति तत्तच्छब्दस्वरूपस्य सम्यक्बोधानापत्तेः। अनेकशब्दानां स्वरूपबोधनपूर्वमेकार्थाबोधने कोशतात्पर्यात्। अत एव यत्तदेतेभ्य इत्यादौ पाणिनैकशेषो न कृतः। एतेन कोशे शब्दानां शब्दपरता। अत एवैकशेषो न। अर्थपरत्वन्तु न सम्भवति इतः पूर्वं शक्तिग्रहाभावात्। एते शब्दा एकार्था इति बोधः एवञ्चात्र प्रकारार्थ-

त्वाभावेऽपि न क्षतिरित्यपास्तमितिदिक् । संख्यावि ॥ सायेभ्य इति वक्तव्ये पूर्वग्रहणमुत्तरपदइत्यधिकृतस्य पञ्चम्यन्तत्वलाभाय । एतेन द्वाहप्रिय इत्येवैतदुदाहरणमित्यपास्तम् । विश्वपा इति । विश्वं पातीति विग्रहे आतोनुपसर्गेइति प्राप्ते वासरूपन्यायेनातो मनिन्क्वनिब्वनिपश्चेति चेन विच् । स चादन्तेभ्यो लोकेपि कीलालपआगतमिति विभाषा पूर्वाह्णेति सूत्रे भाष्यप्रयोगात् । क्विपस्त्वादन्तेभ्यो भाष्यानुक्तक्विब्भ्यो ऽनभिधानमेव । अत एव यू स्त्र्याख्यावित्यत्र विजुक्तो भाष्ये न तु क्विप् । अत एव शंस्या इत्यादिप्रयोगेषु भाष्यकृता ईत्वं न कृतमिति केचित् । अन्ये क्विपमेवाहुः । दीर्घाज्ज ॥ चेनेचीत्यनुकर्षः दीर्घाच्छस्येवेति नियमपरं दीर्घाच्छसीत्येव तु न सूत्रितं दीर्घादेव शसीति विपरीतनियमापत्तेः । प्रत्याहारेषु जातिपक्षाश्रयणादच्च प्राप्तिः । न्याय्यत्वादिति । जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः । धातोः किम् । हाहानिति । अव्युत्पन्नमिदम् । अस्य क्रियाशब्दत्वे तु सानिति प्रत्युदाहरणम् । परे तु क्त्वः श्नः इत्यादिसिद्ध्यर्थमातो ऽनाप इति वक्तव्यमित्युक्ते आत इति योगविभागेन तत्संसाध्य तत्प्रत्याख्यातं भाष्ये एवञ्च साशब्दादेर्यद्यभिधानं तदा योगविभागेन लोप इष्ट एव सूत्रे धातुग्रहणमाबन्तनिवृत्त्यर्थमेव । भाष्यवार्त्तिककृतोरज्ञानकल्पनापेक्षयेदृशार्थकल्पनस्यैवौचित्यात् । आबन्तादाचारक्विबेव न । तत् क्विबन्ताद्वा कर्त्तृक्विप्ानभिधानादिति न तत्र सूत्रवार्तिकयोर्विरोधः । अत एव प्रथमयोरिति सूत्रभाष्ये पररूपं बाधसामान्यचिन्तया दीर्घमात्रस्य बाधकमिति पक्षे रामानित्यादिसिद्ध्यर्थमतो दीर्घ इति सुपि चेति चानुवर्त्तमाने बहुवचने झल्येदिति सूत्रे बहुवचने इति योगविभागेन पररूपबाधकं दीर्घं विधाय रामाणामित्यादावनेन दीर्घे परत्वात्कृते ऽग्नीनामित्यादौ सावकाशस्य नुटो ऽप्राप्तिमाशङ्क्य ह्रस्वनद्याप इति सूत्रे आज्जसेरित्यत आद्ग्रहणानुवृत्त्या समाधाय कीलालपामित्यादौ नुड्विधायके आतो धातोरित्यनुवर्त्य लोपेन नुड्बाधकेन समाहितम् । नुड्विधायके आप्ग्रहणं न कार्यमिति तदाशयः । अधात्ववयवाकारान्तानां लोपाभावे तु तदसङ्गतिः स्पष्टैवेत्याहुः । क्त्वः श्नः इति । क्त्वाप्रत्ययस्येदित्याद्यर्थकं क्त्व इट् श्नः शस्येत्वमित्यादिप्रयोगस्यमत्रोदाहरणं, एतेनाचारक्विबन्तात् कर्त्तृक्विपैते प्रयोगा निर्वाह्या इत्यपास्तम् । आचारक्विबन्तप्रकृतिककर्त्तृक्विबन्तस्य भाष्ये क्वाप्यनुपन्यासेन तेभ्यः कर्त्तृक्विपो ऽनभिधानस्यैव लाभाच्च ॥ इत्यादन्ताः ॥

जसि च ॥ ह्रस्वस्य गुण इति वर्त्तते । ह्रस्वस्य ॥ संबुद्धौ चेत्यतः संबुद्धाविति वर्त्तते । शेषोघ्य ॥ यूस्त्र्याख्यावित्यतो यू इति ङिति ह्रस्वश्चेत्यतो ह्रस्व इति च वर्त्तते शेषपदार्थमाह, अनदीत्यादि । तदन्तमिति । अनुवृत्तयूभ्यां शेष-

पदार्थस्य विशेषणात्तदन्तलाभ इति भावः । ननु मत्यै इत्यत्रानवकाशत्वान्नदी-सञ्ज्ञैव भविष्यतीति शेषग्रहणं व्यर्थमत आह, एकसञ्ज्ञेति । अधिकारादिति । कडाराः कर्मधारये इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः । स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थमिति भावः । मात्रे इति । ऋतो ङीति तु यू इत्य-नुवृत्तावेव तात्पर्यग्राहकमिति भावः । आङो ना ॥ पुंसीति तु नोक्तम् । अमुना कुले-नेत्यत्र मुत्वस्यासिद्धत्वान्नुमनापत्तौ पुंस्त्वाभावेन नाभावस्याप्यनापत्तौ रूपा-सिद्धिः । न मु ने इति निषेधस्तु न नुमि नमुटादेश इति वार्त्तिकविरोधात् । अत एव सूत्रकृता त्वौति वन् नीति नोक्तम् । तथा सति तन्त्रेण नकारनिर्देशोपि संभाव्येत आगन्तुनाकारेण तस्यापि ने इति निर्देशेन तन्त्रस्वीकारे त्वत्यन्तं ज्ञा-नगौरवमिति न किंचिल्लाघवमिति स्पष्टं भाष्ये । आङितीति । ङकारविशिष्टा सञ्ज्ञा न त्वस्य ङस्येत्वम् । अत एव हरिणा मत्येत्यादौ न गुणः । एवमौङ आप इत्यत्रापि । अत एवासंभवे एवापवादत्वमिति वार्त्तिकमते ऽपि रमे इत्यादौ न याट् । घेर्ङिति ॥ सुपि चेत्यतः सुपीति वर्त्तते तेन पट्वीति सिद्धम् । न च घेर्ङीति सूत्रं कार्यं ङकारादावित्यर्थः प्रवाहवेत्यत्राङ्याजयारा-मुपसंख्यानमित्याङादेशस्तु ङीत्येव वक्तुं शक्य इति वाच्यम् । मत्यामित्यादावा-ण्नद्या इत्यस्यानापत्तेः । अल्विधित्वेन स्थानिवत्त्वाभावात् । इद्ग्रहणे त्वनुब-न्धकार्यत्वात्स्थानिवत्त्वं स्पष्टमिति दिक् । ङसि ङ ॥ एङो द्वित्वेपि अस्वरित त्वाद्यथासख्यं न । ङितश्चेति तु नासूत्रि, ऋत उदित्यत्र ऋदन्तान्ङितो ऽति परे पूर्वरूपमित्यर्थे जाग्रतीत्यादौ दोषः स्यादिति । ङसोरित्येव सिद्धे ङसिग्रहणं स्पष्टार्थम् । अच्च घेः ॥ इदुद्भ्यामितिकिं घेः परस्य ङेरौदच्चेति ङिप्रकृतेर्घेरौ-दच्चेति वा ऽर्थो मा भूदिति । अदौतोस्तपरत्वं मुखसुखार्थं इत्सञ्ज्ञायां च तस्य लोप इति तयोर्लोपः । न चौतो विभक्तित्वान्न विभक्ताविति निषेधात्कथ-मित्सञ्ज्ञेति वाच्यम् । मुखसुखार्थमित्यस्य तदेव प्रयोजनन्न तु कार्यान्तरं नापि प्रयोगे श्रवणमित्यर्थात्तत्त्वप्रतिज्ञयैव न विभक्ताविति तत्राप्रवृत्तेः । अत एवेद्वृद्धौ पत्यावैश्वर्ये इत्यादिनिर्देशाः सङ्गच्छन्ते । यदि तूच्चारणार्थानां विनैव शास्त्रमपगमः स्यात्तदेत्सञ्ज्ञकानामपि तद्वदेव निवृत्तिरस्तु किन्तस्य लोप इत्यनेन । स्वभावादस्योभयत्रापि समत्वात् । ध्वनितञ्चेदन्तस्य लोप इत्यत्र भाष्यइति दिव औत्सूत्रे निरूपयिष्यामः । न चैवमग्नावित्यत्रौतः स्वरितत्वापत्तिः । न च प्रत्ययाप्रत्यययोरित्येव सिद्धे पुनस्तितिप्रत्ययग्रहणं कर्त्तव्यमिति वार्त्तिकादौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्तिरिति वाच्यम् । तस्याः परिभाषाया लक्ष्यसिद्धये भाष्यकृता क्वाप्यनाश्रयणात् । स्पष्टञ्चेदं तित्स्वरितमित्यत्र कैयटे । अङ्गस्येति सूत्रे भाष्ये तु तत्प्रत्याख्यानायैकदेशिना

सोक्ता न तु सिद्धान्तिनेति स्पष्टं तद्विदां, श्नान्नलोप इति सूत्रे भाष्येपि ध्वनितस्तदभाव इति वाच्यम् । प्रत्ययग्रहणमित्यस्य विधानकालिकप्रत्यय-त्ववद्ग्रहणमित्यर्थात् । अत एवादेशेषु द्वित्वमाश्रित्य तत्प्रत्याख्यानेन फल-भेदो नेति दिक् । अनङ् सौ ॥ साविति प्रथमैकवचनमसंबुद्धाविति पर्युदा-सात् । नकाराकारस्तूच्चारणार्थ इत्सञ्ज्ञकः । अलो ऽन्त्यात् ॥ अवद्यावधिमतोः साजात्यादाह । पूर्वो वर्ण इति । अत एव शिष्ट इत्यादौ शा इति समुदा-यस्य शास इदितीत्वं न । पञ्चम्यन्ताल्ग्रहणाच्च शस्य न । सर्वनामस्थाने ॥ नोपधाया इति ढ्लोप इत्यतो दीर्घ इति चानुवर्त्तते । अपृक्त ॥ अपृक्त इति पुंस्त्वमविवक्षितम् । अत एवापृक्तं हलिति सङ्गच्छते अपृक्तपदेशेषु हल्ग्रह-णेनैव सिद्धे सञ्ज्ञाविधानमदृष्टार्थम् । हल्ङ्याप् ॥ सुतिसीति पृथक् पदम् । हलन्तादिति । सुतिसीनां प्रत्ययत्वेनोपस्थितस्य यस्मात्सविहितस्तदादेरि-त्यस्य विशेष्यत्वेन तदन्तलाभ इति भावः । एवं ङ्यावंशे द्वेधा तदुपस्थित्या ङ्यावन्तादित्यर्थो द्रष्टव्यः । हल्ङ्याब्भ्यः किमिति । राम इत्यादौ दीर्घान्तत्वाभावान्न दोष इति प्रश्नः । दीर्घात्किं निष्कौशाम्बिरतिखट्व इत्या-रभ्य संयोगान्तलोपस्यासिद्धत्वादित्यन्तो ऽपपाठः मनोरमायां दर्शनात् । सखे-ति । यद्यप्यत्रैव सख्युरसंबुद्धाविति लेख उचितस्तथापि नान्तलक्षणदीर्घेणैव सिद्धेरत उपधाया इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चात्र नोक्तम् । अचो ञ्णिति ॥ मृजेर्वृद्धिरित्यतो वृद्धिरित्यनुवर्त्तते ऽङ्गस्येति चाधिकृतन्तदाह, अङ्गस्य वृद्धिरिति। ख्यत्यादिति । उच्चारणार्थोकारेण कृतयणः प्रयोगस्यस्यानुकरणादविशेषेणो-भयोर्ग्रहणमित्याह । खितीत्यादि । ङसादिपरस्तादृशः खिखीतितीशब्द-प्रकृतिक एव संभवतीति भावः । सुसखेति । न पूजनादिति निषेधाद्राजाहः-सखिभ्य इति टज् न । समुदायस्येति । असखीत्यस्य सखिभिन्नावयवाविति वर्णसञ्ज्ञापत्ते ऽर्थः । अत्र पक्षे पर्युदासेन तद्भिन्नप्रातिपदिकान्त्यवर्णादेरेव ग्रहणात्कृतं सख्येति वाक्ये न दोषः । सिद्धान्तिसंमते तदन्तसञ्ज्ञापत्ते सखिभिन्नावित्यर्थः । पर्युदस्यमानसमर्पकसखिशब्दे ऽस्य तदन्तग्रहणन्तु न विशेष्यासंन्निधानादिति भावः । एतत्सर्वं हरदत्तानुरोधेन । यस्येति सूत्रभाष्यात्तु सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरित्यर्थः। यथा अत्वसन्तस्येति सूत्रे ऽधातोरित्येतद्घटकधातुपदस्य पिण्डग्र इत्यादि-सिद्ध्यर्थं धात्ववयवे लक्षणाकरे दृश्यते । तदन्तसञ्ज्ञापत्तेप्यसखीति घ्योरेव विशेषणान्ततस्तदन्तविधिः । उतश्च प्रत्ययादिति वत् । ततश्च सख्यवयव-भिन्नवर्णाद्यन्तमित्यर्थः । तदन्तविधिश्च शेषपदार्थविशेषणतया एवञ्च प्रकृते-नैव घिसञ्ज्ञेति लभ्यते । तत्र हि भाष्ये इवर्णस्य किमुदाहरणं अतिसखे-

रागच्छति यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वात् अतिदेशविषये प्रतिपदोक्तपरिभाषया अप्रवृत्त्योपसर्जनह्रस्वत्वे कृते ऽपि घिसञ्ज्ञा न स्यात् । लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोष इत्युक्तं, भवद्रीत्या हि विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैव । न च लोपेपि लिङ्गविशिष्टपरिभाषया दोषः सखिशब्दस्य तदवयवपरत्वेन प्रातिपदिकग्रहणाभावात् । प्रातिपदिकत्ववदुपस्थापकपदोपादानं हि प्रातिपदिकग्रहणं ख्यत्यात्सूत्रे किमर्थं विकृतनिर्देशो न सखिपतिभ्यामित्येवोच्येतातिसखिरित्यत्र मा भूदिति भाष्ये इन्तप्रकृतिक एवायं विहितविशेषणानाश्रयणेनैव प्रतिपदोक्तपरिभाषानाश्रयणेनैवैतत् भाष्यं प्रवृत्तमिति न तद्विरोध इत्यलम् । पतिः समा ॥ एवकार इष्टतो ऽवधारणार्थः । स्मृतिपुराणेषु पतये सखिनेत्यादिव्याकरणानिष्पन्नत्वेनासाध्वेव । त्रिशङ्क्वादियाज्ययाजनादाविव तपोमाहात्म्येनासाधुप्रयोगेपि ऋषीणां दोषाभावात् । याज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च । अस्माकमपि स्मृतिपुराणाद्ध्ययनविधिबलात्तेषान्तपोबलाच्च यज्ञमद्धेपि तदन्तर्गततत्पाठे दोषाभावः । स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव । अत एव नदीसञ्ज्ञासूत्रे भाष्ये छन्दोवत्कवयः कुर्वन्तीत्युक्त्वा न ह्येषेष्टिरस्तीत्युक्तम् । यू स्त्र्याख्याविति सूत्रे हरदत्तग्रन्थे स्पष्टतरञ्चैतत्समास इत्युक्तेर्बहुच्पूर्वे न घित्वम् । अत एव पतिवृत्तावेवेति नासूत्रि । वर्णसञ्ज्ञापत्ते पत्यवयवेकार इत्यर्थः । तदन्तसञ्ज्ञापत्ते पत्यवयवेकारान्त इत्यर्थः । सूत्रे पतिशब्दश्च तदवयवेकारे लाक्षणिकः । एतेन शेषोघ्यसखिपती, पतिसखी समासएवेति वा सूत्र्यतामित्यपास्तम् । यस्येतिचेति सूत्रस्थभाष्यरीत्या सुपतिना सुसख्येत्यादीष्टासिद्ध्या तथा न्यासस्य कर्त्तुमशक्यत्वादिति स्पष्टमेवेति दिक् । नित्यं बहुवचनान्त इति । किमः संख्यापरिमाण इत्यनेन किं शब्दाद्बहुत्वसंख्यावच्छिन्नसंख्येयविषयप्रश्नएव डतिरिति भाष्ये स्पष्टत्वादिति भावः । बहुगण ॥ संख्याप्रदेशेष्वेतत्सञ्ज्ञाकरणरूपप्रकरणसत्त्वेपि तन्मूलकृत्रिमाकृत्रिमन्यायस्य न प्रवृत्तिः कर्त्तरि कर्मेत्यादाविव । अत एव संख्याया अतिशदन्ताया इति शदन्तपर्युदासः सङ्गच्छते । न हि शदन्ता कृत्रिमा संख्यास्ति । तस्मात्संख्याप्रदेशेषूभयगतिः । किं च लोकप्रसिद्धमहासंज्ञाकरणेन प्रदेशेषु लोकप्रसिद्धार्थस्याप्यवगतिरिति स्पष्टं भाष्ये । अत एव पञ्चकृत्व इत्यादिसिद्धिः । एतन्न्यायोपयोगस्त्वभ्यासाम्रेडितादिसञ्ज्ञाविषये द्रष्टव्यः । सूत्रे बहुगणग्रहणन्तु तयोर्नियतविषयपरिच्छेदहेतुत्वाभावेनासंख्यात्वात् । बहुत्वादि हि त्र्यादिसंख्याव्यापको धर्मविशेषः । अत एव भाष्ये एतत्सूत्रमतिदेशार्थं यदयमसंख्या-

संख्येत्याहेत्युक्तम् । यत्तु भाष्ये एकादिकया चापि संख्यायते इत्युक्तं तस्याय-मर्थः । बह्वादिकयापि स्वव्याप्यत्रित्वादिसंख्यया संख्यायते । कतिशब्दोऽपि संख्यानकरणीभूतार्थविषयप्रश्नार्थकतया संख्यानकरणं एवं वत्वन्तेष्वूह्यम् । यद्वा चापिशब्दो वाक्यालङ्कारे एकादिकया संख्यायते साऽपि प्रदेशेषु यथा स्यादेतेति लोकप्रसिद्धमहासञ्ज्ञाकरणमिति तदर्थः । एतेनार्थान्तरवाचित्वे सति बहुत्ववाचिनश्चेत्संख्याकार्यन्तर्हि बहुगणयोरेवेति नियमार्थं तत् तेन भूर्यादीनां न तेषां वैपुल्याद्यर्थान्तरवाचित्वात् वैपुल्यं विशालता विशेष्यवि-शेषणदलाभ्यामबहुत्ववाचिन एकशब्दस्य बह्वर्थमात्रवाचिनाल्पादीनाञ्च न व्यावृत्तिः । यद्वा । अनियतसंख्यावाचिनाञ्चेद्बहुगणयोरेवेति नियमः । अनन्तशब्दवदनन्तवाचिशतशब्दस्य संख्याकार्याभाव इष्ट एवेत्यपास्तम् । संघवैपुल्यवाचकयोर्नेहग्रहणं परस्परसाहचर्येण त्र्यादिसंख्याव्यापकधर्मवाचि-नोरेव ग्रहणात् वतु इति सानुबन्धनिर्देशो ब्राह्मणवदित्यादिव्यावृत्त्यर्थः । डतिस्तद्धित एव वतुसाहचर्यादित्यलम् । ष्णान्तेत्यतः षडिति वर्त्तते संख्येति च प्रकृतं तदाह । इत्यन्तेति । अत एव षट्कतीति डडनुवादेन षुग्विहितः । अत एव सञ्ज्ञाविधावपि प्रत्ययग्रहणे तदन्तग्रहणम् । संख्येति किम् । पतयः । प्रत्ययस्य ॥ अनेकसञ्ज्ञाकरणात् आवृत्त्या विभक्तिविपरिणामेन च तद्भावितसञ्ज्ञाश्रयणमतो न सङ्करः । तेन हन्तीत्यादौ श्लाविति द्वित्वं न तदाह लुक्श्लुलुपशब्दैरिति । अदर्शनं लोप इत्यतोदर्शनमित्यनुवर्त्तते । प्रदेशेषु भाविसञ्ज्ञाविज्ञानाच्चान्योन्याश्रयः । एकसञ्ज्ञाप्रकरणादन्यदेशस्थत्वेन लोपसञ्ज्ञया आसां समावेशः । तेन प्रत्ययलक्षणसिद्धिः । षड्भ्यो ॥ जश्शसोः शिरित्यतो जश्शसोरिति वर्त्तते । षड्भ्य इति विहितविशेषणान्तेन गौणे न । परमपञ्चेत्यादौ तु विशिष्टस्यापि संख्याप्रकारकसंख्येयविशेष्यकबो-धजनकत्वेन संख्यावाचितया षट्त्वमस्त्येवेति न दोषः । स्पष्टञ्चेदं षट्प्र-धान एष समास इत्यादिना सर्वादिसूत्रे भाष्ये । कैयटस्य तु प्रमाद इत्यन्यत्र निरूपितम् । प्रत्ययलोपे प्रत्ययस्येत्यनुवृत्त्या सिद्धे आद्यप्रत्यय-ग्रहणमवयवलोपे मा भूत् । तेनाघ्नीयेत्यादौ नानुनासिकलोप इति स्पष्टं भाष्ये । इदमेव प्रत्ययग्रहणाज्ज्ञापकमवयवेऽपि प्रत्ययत्वव्यवहारस्य । एवञ्चादेशप्रत्यययोरिदुदुपधस्येत्यनयोर्लक्षणादि नाश्रयणीयं सात्पदाद्योरिति च चरितार्थम् । स्थानिवत्सूत्रेण सिद्धे इदं सूत्रं नियमार्थमिति भाष्यम् । प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैवेति । न चैवं दाधर्त्तीति सूत्रे तेतिक्ते इति किं निपात्यते आत्मनेपदं नैतदस्ति अनुदात्तङित इत्येव सिद्धं नियमार्थं तर्हि भविष्यत्यत्रैव यङ्लुगन्तस्य नान्यत्र बेभिदीतीत्युक्तम् । अस्य

नियमत्वे तेनात्मनेपदं दुर्लभं ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वादिति वाच्यम् । आत्मनेपदमित्यस्यैव सिद्धान्त्युक्तित्वात्ततो विद्ध्यर्थमिदमिति वार्त्तिकानुसारिणानुदात्तङित इत्येव सिद्धमिति शङ्किते तदनुसार्येकदेशिन एव तत्समाधानमित्यदोषादित्यन्यत्र विस्तरः । प्रत्ययलोपे प्रत्ययवदिति सिद्धे लक्षणग्रहणं प्रत्ययनिमित्तकमेव न तु प्रत्ययस्यानिकमित्यर्थलाभार्थं तेन नखभिन्न इत्यादावैसादिकं नेत्येके । अतिदेशेनाहार्यतद्बुद्धिसंपादनेप्युच्चारणाप्रसङ्गेरूपपष्ठ्यर्थाभावान्नैसादीति तद्व्यर्थमित्यपरे । कार्यमिति । प्राधान्यात् कार्यातिदेशोयमिति भावः । इहापि परिवीरिति शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यतीति भाष्येण तृज्वत्सूत्रे शास्त्रकार्यातिदेशयोरैक्यकथनेन चातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारात्परिवीरित्यत्र तुग्दीर्घौ पर्यायेण न । किं तु दीर्घ एव परत्वात् । अन्यथानेनैवोभयोर्विधानात्परत्वाभावेन पर्यायोदुर्वार इति बोद्ध्यं तदाह,जसि चेति गुणे प्राप्ते इति । जसि चेति विहितेऽनेन गुणे प्राप्तइत्यर्थः । न लुमता ॥ लुशब्दयुक्ता लुमन्तस्तदाह, लुगित्यादि । अङ्गकार्यमिति । लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसञ्ज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्ग वेत्यर्थः । तेन पञ्चेत्यादौ पदसञ्ज्ञा भवति । राजपुरुषादौ भसञ्ज्ञा च न । अङ्गसञ्ज्ञा तु यथोद्देशत्वात्प्रत्ययसत्ताकाले जाता तिष्ठत्येव । तत्काले कार्याभावादप्रवृत्तावपि प्रत्ययलक्षणेन सा । तस्या लब्धाङ्गसञ्ज्ञककार्यत्वाभावेन निषेधाप्रवृत्तेः स्पष्टञ्चेदं युवोरनाकौ इत्यत्र कैयटे । न लुमतेत्यस्यानित्यत्वादङ्गसञ्ज्ञायामप्रवृत्तिरिति तत्त्वमिति कश्चित् । अत एव पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमिति तद्धितार्थेति समासे ठको ऽध्यर्द्धेति लुकि लुक्तद्धितेति स्त्रीप्रत्ययलुकि पञ्चक्रोष्टृ इत्यत्र तृज्वत्त्वम् । तदुक्तं भाष्ये तृज्वदिति सूत्रे न चापरं निमित्तमाश्रीयते किं तर्ह्यङ्गस्य क्रोष्टुस्तृज्वदिति अङ्गसञ्ज्ञा च भवति प्रत्ययलक्षणेनेति । न चोदरत्ववत् तृज्वत्त्वेपि परनिमित्ताश्रयणमिति पञ्चक्रोष्टृ इत्यस्यासिद्धिरिति वाच्यम् । उरदित्यत्र शब्दतः परस्य निमित्तत्वानाश्रयणेपि अङ्गसञ्ज्ञाद्वारोरदत्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृत्तिरित्येव लिट्यभ्यासस्येति सूत्रस्थभाष्याशयात् । नियमतः परबुद्धेः पूर्ववृत्तितया परनिमितत्वात् । अत एव चर्करीत्यजर्घा इत्यादावप्रवृत्ति,रचि श्नु इत्यादावजादिप्रत्ययइत्यर्थस्तु अङ्गस्येति षष्ठ्या निमित्ते इत्यद्ध्याहारेण तस्य विशेषतया यथा कथञ्चिदुपपाद्यः । आकडाराधिकारस्थेषु कार्यकालत्वस्याभावाच्च । "एतेन कार्यकालपक्षेपि क्रोष्टुशब्दः प्रत्यये ऽङ्गसञ्ज्ञो भवत्यङ्गसञ्ज्ञकस्य च तस्य तृज्वत्त्वं स्त्रियामित्येवार्थः । उरदित्यादौ तु आवृत्त्या ऽत्वं प्रति निमित्ततापि वक्तव्येति लक्ष्यानुरोधाच्च तथा प्रकृते लक्ष्यानुरोधादेवेति तदा-

शयः । पदैकवाक्यतयान्वयस्तु सञ्ज्ञासूत्राणान्दुर्लभ इत्यन्यत्र निरूपितम् । चर्करीत्यजर्घा इत्यादौ तु न लुमतेति निषेधानित्यत्वादप्रवृत्तिस्त्रपो इत्यादौ गुणवत् । अङ्गाक्षिप्तप्रत्ययनिमित्तं लुकि भवत्येवेति तु भुवे हितं भूहितमित्यादावुवङापत्त्या चिन्त्यमित्यपास्तम्''* । त्रिपुसरूपा इति । ङे प्रथमयोरिति सूत्रे युष्मानित्यादौ तस्माच्छसो न इत्युपन्यासपरेण भाष्येण स्वमोर्नपुंसकादिति सूत्रे शिशीनुमादिभिर्युष्मदाद्यादेशानां विप्रतिषेधपरेण वार्त्तिकेन तद्भाष्येण च न षडिति निषेधेन च लिङ्गसत्ताबोधनेपि लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपे न विशेष इत्यर्थः । साम आकमिति सूत्रस्थस्यालिङ्गे युष्मदस्मदी इति भाष्यस्य पदान्तरसंनिधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयतइत्यर्थ इति दिक् । त्रेस्त्रयः ॥ अयं न सान्तो निजान्त्रयाणामिति निर्देशात् । त्रेरयङ् न कृतः । अयङ् यीत्यादाविवोच्चारणार्थत्वशङ्कावारणाय । केचिदिति । आमि सर्वनाम्न इतिसाहचर्यादिति भावः । वस्त्विति । साहचर्यस्यासार्वत्रिकत्वात्सूत्रान्तरस्यतदाश्रयणे दृढतरप्रमाणाभावाच्चेति भावः । न च गौणमुख्यन्यायेनात्र नेति वाच्यम् । अप्रसिद्धत्वगौणलाक्षणिकत्वान्यतररूपगौणत्वाभावात् । अत एवोपसर्जनानां सर्वनामत्वनिषेध आरब्धो वार्त्तिककृता इतरविशेषणतामात्रेण तत्त्वाभावात् । पदकार्यएव तत्प्रवृत्तेश्चेत्यन्यत्र विस्तरः । द्विशब्दो नित्यन्द्विवचनान्त इति । संख्यापरत्वेपीत्यर्थः । अत एव कस्य द्वित्वे इत्यर्थे कस्य द्वयोरिति भाष्ये बहुष्विति सूत्रे प्रयुक्तम् । त्यदादौ ॥ अष्टन इत्यतो विभक्तावित्यनुवर्त्तते तत्फलन्तत्कुलम् । सोर्लुक्यत्वं न । दृष्टिरिति । भाष्यकारस्येति भावः । द्विपर्यन्तानां किमिति । युष्मदस्मदोरात्वयत्वलोपैर्बाधात्किमः कादेशविधानाच्च प्रश्नः । भवान्भवन्तावित्यभ्युच्चयः । ङौ तु सवर्णदीर्घ इति । इदं संभावनामात्रेण । एषां ङौ ईदूतौ च सप्तम्यर्थे इति सूत्रस्यभाष्यप्रामाण्येनानभिधानात् । क्विबन्तवातेति । ईत्वमवकारादाविति वार्त्तिकस्य पावान इत्यादीनां वनिपा साधनरूपस्य तत्प्रत्याख्यानभाष्यस्य च फलैक्यायेदृशेभ्यः क्विपोऽनभिधानमावश्यकमिति धीवरीपीवरीत्यादि ह्वाप्योः संप्रसारणञ्च क्विप् क्वनिप् च नेत्यर्थकाज्जनसनखनां सञ् झ-

* वस्तुतस्तु कार्यकालपक्षेपि क्रोष्टुशब्दः प्रत्यये ऽङ्गसंज्ञो भवत्यङ्गसंज्ञकस्य च तस्य तृज्वत्वं स्त्रियामित्यर्थः इतितृज्वत्वमनैमित्तिकमेव उरदित्यादौ तु गतिरुक्तैव । पदैकवाक्यतयान्वयस्तु संज्ञासूत्राणां दुर्लभ इत्यन्यत्र निरूपितम् । एतेन उरदित्यादौ त्वावृत्त्यात्वं प्रतिनिमित्ततापि वक्ष्यश्चेति लक्ष्यानुरोधाच्च तथा प्रकृते लक्ष्यानुरोधादेवेति तदाशयः । चर्करीत्यजर्घा इत्यादौ तु न लुमतेति निषेधानित्यत्वादप्रवृत्तिस्त्रपो इत्यादौ गुणवत् । अङ्गाक्षिप्तप्रत्ययनिमित्तं लुकि भवत्येवेति च भुवे हितं भूहितमित्यादावुवङापत्त्या चिन्त्यमित्यपास्तम् । इति पाठान्तरम् २ पुस्तके ।

लोर्घुमास्यागापेति सूत्रभाष्यपर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धन्धीर्ध्यायतेर्द्धातेर्वेति क्विप्वचीति वार्त्तिकस्यभाष्ये दधातेर्वेत्युक्तिरेकदेशिनः। शंस्थो इत्यत्र विजेवेति न दोषः। मीङ् माने इतीकारान्तात् क्विबित्येके। वातप्रमीर्निःशङ्को मृगाकृतिर्जन्तुविशेषः। बहुश्रेयसीति। ईयसो बहुव्रीहेर्नेति निषेधाद्वोपसर्जनह्रस्वः। यू स्त्र्या॥ दीर्घयोरेवग्रहणं व्याख्यानात्। वा छन्दसीति पूर्वसवर्णदीर्घः। यूकिम्। मात्रे। आगनद्या इति न स्त्रियमाचष्टाते स्त्र्याख्यौ मूलविभुजादित्वात्कः। स्त्र्याख्याविन्युपस्थितस्त्रीवाचकशब्दस्य विशेष्यत्वात्तदन्तविधिरित्याह, ईदूदन्ताविति। आच्छीनद्योरित्यादौ नदीशब्दस्य तदवयवे लक्षणा बोद्ध्या। आख्याग्रहणान्नित्यत्वलाभस्तदाह नित्यस्त्रीलिङ्गाविति। तत्फलन्तु ग्रामण्यादेर्व्यावृत्तिः। नित्यस्त्रीत्वञ्च प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरविशिष्टार्थानभिधायकत्वं ड्यन्तकुमार्यादीनाङ्कुचि निर्वृत्तेन त्रिलिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय प्रवृत्तिनिमित्तैक्ये इति। नन्वेवं बहुश्रेयसीशब्दस्य नदीत्वं न स्यादत आह। प्रथमेति। अर्थान्तरसङ्क्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसंक्रमे ऽपि नदीत्वं वक्तव्यमित्यर्थः। यथोद्देशे पूर्वप्रवृत्तसंज्ञामादायैव कार्यं कार्यकालपक्षेपि कुमारीत्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसञ्ज्ञा। समासे तु स्पष्टैव तदवयवस्य तत्प्राप्तिः। तन्मात्रबोधकत्वनिवेशे प्राधान्येन तद्बोधकत्वनिवेशे वा न मानम्। तदुक्तं भाष्ये अवयवस्त्रीविषयत्वात्सिद्धमवयवो, ऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यतीति आकडारस्यसञ्ज्ञानां कार्यकालत्वाभावादन्यथा तत्तद्विद्ध्येकवाक्यत्वापत्त्योः कथं बाध्यबाधभावः स्यादिति बोद्ध्यमित्यपि केचित्। हे बहुश्रेयसीति। ह्रस्वे कृते गुणस्तु न। प्रक्रियालाघवायाम्बार्थेनां ह्रस्वः, ह्रस्वनद्योर्गुण, इत्येव वाच्ये ह्रस्वविधानसामर्थ्यात्। जसि चेत्यत्रैकदेशे स्वरितत्वप्रतिज्ञया ह्रस्वपदस्यैवानुवृत्तिरिति भाष्ये स्पष्टम्। अम्बार्थानामपि गुणस्तु वक्तुमशक्यः। अनः क्लीबञ्जले शोके मातृस्यन्दनयोरपीति रभसाद्युक्तानःशब्दस्याम्बार्थत्वेन गुणापत्तेः। ह्रस्वग्रहणे त्वच इत्युपस्थित्याजन्ताम्बार्थग्रहणाच्च दोषः तस्य नपुंसकत्वेपि हे वारे इति वत्पक्षे गुणः स्यादेव गुणश्रुत्यैकपरिभाषोपस्थितौ त्वम्बेत्यादावप्यनापत्तिः। अयं ह्रस्वानन्तरस्येतिन्यायाद्ध्रस्वस्य गुण इत्यस्यैव बाधकस्तेन मातरित्यत्रऋतो ङीति गुणो भवत्येवेति दिक्। आटश्च॥ न माङ्योगइति सूत्रस्यभाष्योक्ते ऽटश्चेति न्यासे तु वृद्धिरेचीति बोद्ध्यम्। अत्राट् तु वक्तुमशक्यः। अस्वपोहसचित्यत्र वृद्धिवारणायाटश्चेत्यत्र धाताविव्यपकर्षेण वृद्ध्यनापत्तेः। वृद्धिरेचीत्यस्य तु पररूपं बाधकमिति बोद्ध्यम्। ङेरिति सप्तम्येकवचनं व्याख्यानात्

इह परत्वादिति । सकृद्गतिन्यायाश्रयणादिति भावः । स्पष्टञ्चेदं ह्रस्वनद्याप इत्यत्र भाष्ये । यद्यपीहाऽपवादो नद्यां सर्वथानवकाशत्वात् । अपवादो नुग्दीर्घत्वस्येति दीर्घाकित इति सूत्रभाष्ये उक्तत्वेनागमादेशयोरपि तत्त्वसत्त्वात्, तथापि अनवकाशत्वेन बाधे ऽपवादप्रवृत्त्यनन्तरमुत्सर्गप्रवृत्तेर्न दोषः । अत एव न गणेरीत्वमपवादत्वाद्गुलादिःशेषं बाधते किं तर्ह्यनवकाशत्वादिति गुणोयङ्लुकोरिति सूत्रभाष्ये उक्तम् । पादः पदिति सूत्रस्थं शब्दान्तरप्राप्त्या ऽनित्ययोराडामोः परत्वादामिति भाष्यं त्वेकदेश्युक्तिरिति बोद्ध्यम् । अङ्गन्तत्वादिति ॥ लक्ष्मेर्मुट् चेत्यौणादिकप्रत्ययान्तत्वादिति भावः । कुमारीति । ह्रस्वविधायके शास्त्रीयोपसर्जनग्रहणाद् गोस्त्रियोरिति ह्रस्वो न । अचि श्नु ॥ भ्रूशब्दो ऽव्युत्पन्नं प्रातिपदिकं भ्रमेर्डूप्रत्ययान्तो वा । इह य्वोरिति धातोः समानाधिकरणं विशेषणान्तदाह । इवर्णोवर्णान्तधातोरिति । इत्यस्येति । इत्यन्तस्येत्यर्थस्तेन सुभ्रुवाविति सिद्धम् । आन्तरेति । स्थानत इति भावः । य्वोरिति किम् । वव्रे । अचिकिम् । युयात् । इतीयङीति । सुधीशब्दे यणिनषेधारम्भादत्रप्रकरणे धातोः स्वरूपग्रहणे इति परिभाषाया अप्रवृत्तिरिति भावः । एरनेकाचो ॥ धात्ववयवसंयोगपूर्वो न भवतीति । धात्ववयवसंयोगपूर्वभिन्न इत्यर्थः । तद्भिन्नश्च धात्ववयवपूर्व एवेति उन्नियावित्यादौ न दोषः । असंयोगाद्दित्येव धात्ववयवसंयोगभिन्नात्परस्येत्यर्थेन सिद्धे पूर्वग्रहणं स्पष्टार्थम् । एः किम् । असंयोगपूर्वग्रहणमिवर्णविशेषणं यथास्यादङ्गविशेषणं मा भूदिति । तेन यवक्रियावित्यादौ नातिप्रसङ्गः । लुलुवतुरित्यादौ तु नातिप्रसङ्ग ओः सुपीति नियमात्, विपरीतनियमस्तु न । सुधीशब्दे ऽचि सुपि यणिनषेधारम्भात् । कुमार्याविति । अन्तर्वर्तिविभक्त्या पदत्वा,च्छाकलं त्वत्र न । नः क्ये इति निषेधात् । प्रधीरिति । प्रकृष्टं ध्यायतीति विग्रहे नित्यस्त्रीत्वाभावान्न नदीत्वं प्रकृष्टा धीर्यस्येति विग्रहे तु नदीत्वम् । ग्रामणीरिति । अग्रग्रामाभ्यां नयतेरिति णत्वम् । गतिकारकपूर्वस्यैवेति भाष्ये पठ्यते स च नियमस्तेन गतिकारकपूर्वभिन्नस्य नेति फलति । तद्भिन्नञ्च तत्सदृशं सपूर्वपदमेव तेन निन्यतुरित्यादौ यण् तदाह । गतिकारकेतरेति । यत्त्वत्र गतिसमासो नित्याधिकारस्य एव प्रतिपदोक्तत्वाद्गृह्यते इति । तन्न । भाष्ये पूर्वपदग्रहणाभावेन समासोपस्थितेरभावेन विशिष्टरूपोपादानविषयप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः । अत एव नदीसञ्ज्ञासूत्रस्थः प्रकृष्टा धीर्यस्या इति विग्रहाभिप्रायेण प्रवृत्तः प्रध्यै ब्राह्मण्ये इति भाष्यप्रयोगः सङ्गच्छते । शुद्धधियाविति । शुद्धा धीर्यस्येति विग्रहः । शुद्धं ध्यायतीति विग्रहे यणेव । आद्ये सत्त्वभूतार्थविशेषणत्वात् शुद्धत्वस्य कथमपि न

कारकत्वमिति भावः । कथन्तर्हीति । दुर्ध्यायतीति दुष्टा धीर्ध्यानं येषामिति वृश्चिकाद्धीरिति विग्रहाभिप्रायेण प्रश्नः । दुस्थितेति । दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति भावः । प्रकृष्टा धीरित्यादौ प्रकर्षः प्रशब्दार्थो धीशब्दोपात्तधात्वर्थे विशेषणमिति यण् भवत्येव । यत्क्रियेति । या चासौ क्रियेत्यर्थः । तं प्रति । तद्भावकं प्रति । यद्वा यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः । नेहेति । ततश्च संबन्धसामान्यषष्ठ्येव समासः । भीत्रार्थाना मिति हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थं विभक्तिप्रकरणे तु न कृतं कारकत्वप्रयुक्तकार्यानापत्तेरिति भावः । किं च हेतुत्वाविवक्षायां संबन्धत्वेन विवक्षया सूत्रारम्भेपीति बोद्धुम् । अभ्युच्चयेनाह । वृश्चिकसंबन्धिनीति । अत्र पूर्वपदान्तर्गतोत्तरपदलोपः शाकपार्थिवादित्वात् । न भू ॥ अनन्तरस्येतिन्यायेनैरनेकाच, ओः सुपीत्यनयोरेव निषेधः । सुपीति चानुवर्त्तते तदाह सुपीति । लोपाविति । अतो लोप, लोपोव्योर्वलीति आभ्यामिति भावः । यलोपे निषेधादल्लोपो न स्थानिवत् । वेरपृक्तलोपात्पूर्वं वलिलोप इष्यते । स्थानिवत्त्वादिति । एवञ्च यणादेशे यलोपे सख इति स्यादिति भावः । अन्तर्वर्त्तिविभक्त्या पदत्वान्न पदान्तेति निषेधस्तु न । स्थानिवत्त्वस्य नः क्ये इति सामान्यापेक्षनियमेनास्यापदत्वात् । परपदस्याजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च । क्विबपेक्षक्यसंबन्धियलोपस्य यणि बहिरङ्गासिद्धत्वन्तु नानित्यत्वात् । क्वौ लुप्तमिति भावे क्तः । लोप इत्यर्थः । गोमत्यतेरप्रत्यये गोमानिति भाष्योक्तेरस्याप्यर्थस्य क्वचिदङ्गीकारः, क्वौ विधिं प्रति नेत्येव तु सार्वत्रिकमित्यन्यत्र विस्तरः । अनङिति । अभिव्यक्तपदार्था ये इति न्यायस्तु गौणमुख्यन्यायवत्पदकार्यविषयएवेति भावः । दीर्घस्यापीति । प्रयोगस्थऋकारान्तानुकरणं सूत्रे ऽकारश्चोच्चारणार्थ इति भावः । लूनीरित्यादि । ल्वादिभ्यः, क्षायो मः, प्रस्त्योन्यतरस्या, मिति नत्वमत्वे । शुषः कः, पचो व, इति कत्ववत्वे । व्याख्यानात् प्राधान्याच्च रूपातिदेशोयमित्याह । क्रोष्टृशब्द इति । तच्चोदात्तऋकारविशिष्टमतिदिश्यते तृज्वदिति चकारोच्चारणात् । तेन क्रोष्ट्रित्यादावुदात्तयण इति स्वरसिद्धिर्बोद्धा । पत्न्यादेस्तु नातिदेशः । अर्थत आन्तर्याभावात् । इदं सूत्रं स्त्रियाञ्चेति च प्रयोगनियमफलकमिति बोद्धुम् । अप्तृन् ॥ ननु व्युत्पत्तिपक्षे तृनन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थमत आह । नियमार्थमिति । अन्येषामुणादिव्युत्पन्नानां सञ्ज्ञाशब्दानां नेति । नेष्ट्रादयोप्युणादय एवेति भावः । तेषां तृन्तिसूत्रस्थवार्तिकेन व्युत्पादनाच्चप्त्रादीत्यादिग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणमित्यन्ये । अव्युत्पत्तिपक्षे तु विध्यर्थमेवेति बोद्धुम् । भाष्यप्रयोगादिति । एवञ्चोणादिष्वस्य

व्युत्पादनमप्रामाणिकमिति भावः । पङ्कजादिवद्योगरूढोऽयम् । ये त्वौणादिक-त्वमेवास्य स्वीकृत्य भाष्यप्रयोगादेव दीर्घत्वमिच्छन्ति ते मान्याः । भाष्यकृता-न्यप्रयोगस्योदाहरणत्वेन दानेप्यस्य भाष्यप्रयोगत्वाभावात् । ण्वुल्तृचाविति भाष्ये तु तृचश्चकारो व्यर्थः । न चाप्तृन्तृजित्यादौ विशेषणार्थः । तृ इत्येव सिद्धेः । न च तृ इत्युच्यमाने मातरौ पितराविन्यादौ प्राप्नोति तत्र हि तृप्रत्ययो निरनुबन्धक इति वाच्यम् । नप्तृग्रहणस्य योनिसंबन्धवाचिनाञ्चे-दस्यैव नान्येषां योनिसंबन्धवाचिनामिति नियमादित्युक्तम् । नेष्टृत्वष्टृक्षत्तृहोतृ-पोतृणान्तृन्नन्तत्वस्य प्रशास्तुस्तृजन्तत्वस्य तृन्निति सूत्रे भाष्यवार्त्तिकयोरुक्तत्वेन तेषां ग्रहणं प्रपञ्चार्थमेव । एवञ्च यथान्यासे नियमफलं विचिन्त्यम् । क्रोष्टेनि । अनङि सर्वनामस्थाने चेति दीर्घः । प्रथमोपस्थितत्वात् । क्रोष्टारावित्याद्यर्थन्तु तल्लेवः । यद्वा विशेषविहितत्वाच्छीघ्रोपस्थितिकत्वेन स एव न्याय्यः । विभाषा तृ ॥ अयमपि नियम एव । तृतीयादावच्येवोभयमिति । तेन भ्यामादौ शसि क्रोष्टुपुत्र इत्यादौ च न दोषः । सर्वत्र विशिष्टाभावस्य सुलभत्वात् । तृज्वत्क्रोष्टुः, स्त्रियाञ्चेत्याभ्यां सर्वनामस्थाने स्त्रियाञ्च तृजन्तरूपविधानेन तयोः प्रयोगनियमार्थत्वं फलति । एतेन तृज्वत्सर्वनाम-स्थानएवेति नियमादिदं विध्यर्थमिति परास्तम् । न चैवमपि क्रोष्टूनित्याद्य-सङ्गतमन्यत्र तृजन्तस्यैव प्रयोगेणाप्युक्तनियमस्य चारितार्थ्यादिति वाच्यम् । तृज्वत्क्रोष्टुरिति योगविभागस्यैवं सति वैयर्थ्यापत्तेः । न च तद्धितेष्वचामादे-रिको गुणवृद्धी इति सूत्रयोः क्रोष्ट्रः क्रोष्ट्रीया इति भाष्यप्रयोगासङ्गतिरिति वाच्यम् । ऋकारान्तस्यैव ऋषिवाचकत्वेनादोषात् । इदं सूत्रत्रयन्तु शृगालवाचिक्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्यवधेयम् । तदुक्तं भाष्ये तृज्व-द्भावविषये एतत् तृजन्तं मृगवाचीति तृतीयाद्यजादिविभक्तिषु तृजन्त-तुन्नन्तञ्च मृगवाचीति च । अनेन हि अन्यत्र तु नान्तमेवेत्यपि सूचितमिति दिक् । ऋत उत् ॥ तपरत्वं भाव्यमानस्यापि क्वचित्सवर्णग्राहकताज्ञापनद्वारा-न्तर्यतो द्विमात्रनिवृत्त्यर्थन्तेनामू इत्यादिसिद्धिरिति ढ्लोरिति सूत्रे कैयटः । यत्तु तपरत्वं ढ्रलोपइति दीर्घबाधनार्थमिति तन्न । "सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः । नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथे"ति रामा-यणप्रयोगविरोधात् । उरण्रपर इति सूत्रे ऽण्ग्रहणाभावे ऊपर इति भाष्य-प्रयोगविरोधाच्च । सस्येति । संयोगान्तलोपेन सिद्धे नियमार्थम् । तेनोर्गि-त्यादौ नेति भावः । विपरीतनियमस्तु न पुमान् स्त्रियेति निर्देशात् । एरनेका-च इति सूत्रमेरिति पदरहितं सानुवृत्ताचृत्तविशेषणं सवार्त्तिकञ्चानुवर्त्ततइत्याह धात्ववयवेत्यादि । गतीति च । सङ्कल्प्यावित्यत्र क्रियाविशेषणत्वेन कर्मत्वा-

वण् । न भूसुधियोरिति निषेधे प्राप्ते आह । वर्षाभ्वश्चेति । वर्षाभूर्दर्दुरे पुमान् । स्वार्थिक इति । स्वस्याः प्रकृतेरर्थः स्वार्थस्तत्र भव इत्यर्थे ऽध्यात्मादित्वाट्ठञ् । द्वारादिषु स्वग्रामस्वाध्याययोः पाठेन स्वशब्दाद्देश्चेद्दैतयोरेवेति नियमार्थकेनैजागमो न । पुनर्भूशब्दस्य रूढस्य नित्यस्त्रीत्वादाह । योगिक इति । इत्यूदन्ताः । वर्णैकदेशानां वर्णग्रहणे रेफाभावादाह ऋवर्णादिति । व्युत्पत्तिपक्ष इति । अव्युत्पत्तिपक्षे ऽवादिष्वपाठाद्दीर्घशङ्कैव नेति भावः । व्युत्पत्तिपक्षे निरनुबन्धकतृप्रत्ययान्ता एवेति एवुल्तृचावित्ति भाष्यस्वरसः । इत्यृदन्ताः । वैकल्पिकेति । यत्तदेतेभ्य इत्यत्र त्यदाद्यत्वकरणादतिदेशस्य छिय इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य च ज्ञापनादिति भावः । अनुकरणस्यानुकार्यशब्दस्वरूपमात्रमर्थ इति प्रातिपदिकत्वं अनुकार्यस्यानुकरणाद्भिन्नमेवेति मतौ छ इति सूत्रे भाष्ये स्पष्टम् । ईषदानुपूर्वीव्यत्ययेपि वाचकसादृश्यादर्थोपस्थापकत्वमित्यत्र कैयटे प्राग्दीव्यतोऽणित्यत्र भाष्ये च स्पष्टम् । अत एव किर इत्यादितः कृधातुरिति बोधः । भू सत्तायामित्यादौ त्वित एव निर्देशात्कदाचिदनुकरणाद्विभक्त्यभावोपि स च सूत्रेष्वेवेति प्रामाणिकाः । गवित्ययमाहेति वान्तस्यैवानुकरणमनुकार्यस्वरूपभङ्गभिया च न वलोपः । झलाञ्जशित्यादौ जश्त्वाभाववदित्याहुः । इत्वे इति । किरश्च पञ्चभ्य इति निर्देशादधातुप्रत्ययेपि तत्प्रवृत्तिरिति भावः । कीरिति । कृधातुरित्यर्थः । गुणो नेति । अत उदित्युत्वमप्यत एव नात एवघो यङीति सूत्रनिर्देशः सङ्गच्छते । इत्यृदन्ताः । अनहितिति । ऋलृवर्णयोः सावर्ण्यादिति भावः । गमॄनिति । लृवर्णस्य दीर्घाभावादृवर्ण एवेति भावः । ननु तुल्यास्यसूत्रे भाष्यकृता ऋति ऋ वेत्यादिविधेयो रेफद्वयगर्भलद्वयगर्भयोरच्त्वदीर्घत्वाङ्गीकारेणात्र द्विलकार ईषत्स्पृष्टो दुर्वारः । आमि च तथा धातॄणामित्यत्र रेफद्वयगर्भापीति चेन्न । अकः सवर्ण इति सूत्रे उक्तोत्तरत्वात् । गन्त्विति । यत्तु लणसूत्रे उरण्रपर इत्यत्राजिति वक्तव्ये ऽण्ग्रहणसामर्थ्येनाणपूर्वणैवेत्युक्तं भाष्ये लृकारस्य यणि हि तत्र लपरत्वार्थं परेणाण्ग्रहणं स्यादिति सामर्थ्यात्किरसङ्गता ऋकारस्य यणि तु रोरीति लोपेन विशेष इति तच, ऋकारांशे हल्रूपाणि रोरीति प्रवृत्त्या फलाभावेनाप्रवृत्त्या तत्साहचर्याद् लृकारांशेपि हल्रूपाण्यप्रवृत्तिरित्याशयात् । वस्तुत ईदृशानामभिधाने दृढं मानं चिन्त्यम् । स इति । इना सहेत्यर्थः । वोपसर्जनस्येति सत्वम् । एकादेशस्यपूर्वान्तत्वेपि लिङ्गाद्यन्वय्यर्थप्रतिपादकत्वादव्ययमिति महासञ्ज्ञयास्यानव्ययत्वान्न विभक्तिलुक् । सादेशात्पूर्वमानुणास्तु न । नेन्द्रस्येति ज्ञापके न पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाप्रवृत्तेः । न च नान्तः पादमिति सूत्रस्थेन न चेङः पदान्तात्परो ऽरस्तीति भाष्येण विरो

धात्साबीदृशानां प्रयोगो ऽनुचितः । सावपि पदत्वसत्त्वादिति वाच्यम् । योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनादोषात्साधुप्रयोग एवेत्यन्ये । सय इति । न चास्यान्तर्वर्त्तिविभक्त्या पदत्वादेङः पदान्तादित्यादि दुर्वारमिति वाच्यम् । भाष्ये स्वादिष्विति योगं विभज्य स्वादिषु पूर्वं पदमित्यर्थः । ततो ऽसर्वनामस्थाने ऽयचि सुबन्तमिति अनुवर्त्तते । अयचीति प्रसज्यप्रतिषेधः । तेन यजादौ सर्वनामस्थाने पूर्वं पदं न भस्मे चेत्सुबन्तन्तदपि पदं नेति व्याख्यानेनादोषात् । आतिदेशिकस्याप्ययं निषेध इति स्पष्टमेव । उत्तरपदत्वे चापदादिविधाविति प्रतिषेधाच्च । उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्त्तव्ये ऽन्तर्वर्त्तिविभक्तिः प्रत्ययलक्षणं नेति तदर्थो ऽतो न योगविभागमूलकप्रत्याख्यानेन फलभेद इति केचित् । इतोदित्यतो ऽनुवृत्तं सर्वनामस्थाने इति प्रथमया विपरिणम्यते णिदित्यनेन सामानाधिकरण्यादित्याह, सर्वनामस्थानमिति । तच्च णितः कार्यस्यासंभवात् णिति यत्कार्यन्तदतिदिश्यते । शसेति । अचीत्यधिकारात्तद्धितशसो न ग्रहणमिति भावः । गामिति । परत्वाच्च वृद्धिस्तु न । अनवकाशत्वेनात्वस्यापवादत्वात् । तदाह । ओतो णिदिति । सूत्रे तपरकरणेन गस्याविवक्षितत्वमिति भावः । तेन चित्रगुरित्यादौ न दोषः । अन्यथा ऽङ्गाधिकारे तदन्तविधेः सत्त्वेन स्थानिवत्त्वेन गोन्तत्वाद्दोषः स्यादेव । मम त्वोकारान्ताभावादल्विधौ स्थानिवत्त्वाभावाच्च न दोषः । परे तु गोतो णिदिति सूत्रे भाष्ये तपरत्वं प्रत्याख्यातम् । चित्रगुरित्यादौ तु न दोषः । गोः पूर्वत्वणित्वात्वस्वरेषु स्थानिवत्त्वप्रतिषेधात् । हे चित्रगो इत्यादौ तु लाक्षणिकत्वान्न दोष इति अत्रैव सूत्रे भाष्ये स्पष्टम् । द्योः सर्वनामस्थाने णित्वं वक्तव्यमिति औतो ऽमित्यत्र भाष्ये उक्तमित्याहुः । सुद्योरिति । केवलद्योशब्दस्य । स्त्रीत्वाद्बहुव्रीहिरुदाहृतः । विहितमिति । यदि तु वर्णग्रहणेपि प्रतिपदोक्तपरिभाषा प्रवर्तते तदा व्यर्थोयं यत्नः । स्मृतोरिति । स्मृत उर्येनेत्यर्थः । यत्त्वयवायावादिष्वेकादेश उदात्तेनोदात्त इत्यस्य सिद्धत्वं वक्तव्यं तत्स्यानिकायादीनामस्वरितत्वायेति वार्त्तिकव्याख्यावसरे ऽवादेशे नास्त्युदाहरणमिति स्वरितो वेति सूत्रस्थभाष्यविरोधः । प्रकृते पूर्वपदप्रकृतिस्वरेण स्मृतस्यान्तोदात्तत्वे शेषनिघातेन उशब्दस्यानुदात्तत्वात्तदंशस्यैकादेश उदात्तेनेत्युदात्तत्वे स्मृतवेत्यादौ तदुदाहरणसंभवादिति तन्न । तृतीयादिष्वनभिधानेपि अन्यत्र तत्सत्त्वे बाधकाभावात् । न च गोत इति सूत्रे द्योश्च वृद्धिर्वक्तव्येति वार्त्तिके द्योशब्दस्यैवोपादानादन्यौकारान्ताभाव इति वाच्यम् । उपलक्षणतया व्याख्यानेनादोषात् । परे त्वीदृशाना-

मनभिधानेपि न क्षतिरित्याहुः । रायो हलि ॥ अष्टन आ इत्यत आ विभक्तावित्यनुवर्त्तते ॥ श्रीः ॥ इत्यजन्ताः पुल्लिङ्गाः ॥ श्रीः ॥

श्रीः ॥ रमेति । रमयतेः पचाद्यच् टाप् । एकादेशस्य पूर्वान्तवत्त्वेन प्रातिपदिकत्वात्स्वादयः । वाचेत्यादौ तु लिङ्गविशिष्टपरिभाषया तत्त्वात्ते । आप इति पञ्चम्यन्तेन सामानाधिकरण्यादङ्गस्येति पञ्चम्या विपरिणम्यते विशेषणेन तदन्तविधिरित्याह । आबन्तादिति । जसः शीत्यतः शीति वर्त्तते । रमे इति । यस्येति लोपो नाभत्वात् । सम्बुद्धौ च ॥ बहुवचने झल्यत एदिति आङि चाप इत्यत आप इति चानुवर्त्तते । एङ्ह्रस्वादिति । संबुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ड्यादिलोपात् प्रथममेत्वे ऽनेन संबुद्धिलोप इति भावः । सन्निपातपरिभाषा त्वनित्यत्वान्नात्र प्रवर्त्तते । आङि चा ॥ चेन प्रकृतमोसि चेति परामृश्यते घेर्ङितीत्यतोनुवृत्तं ङितीत्याप इति पञ्चम्या षष्ठ्या विपरिणम्यतइत्याशयेनाह । ङिद्वचनस्येति ॥ सर्वनाम्नः स्या ॥ आबन्तात्परस्य सर्वनाम्नोविहितस्येत्यर्थस्तेन मासपूर्वायै इति सिद्धम् । अत्र ह्रस्वो न स्याटस्तस्य विधेयत्वेनोद्देश्यत्वासंभवात् । नापि ङिद्वचनस्य, व्याख्यानादत आपो ह्रस्व इत्याह, आपश्चेति । आबन्तस्य गणे पाठाभावेन सर्वनामत्वाभावादाह, एकादेशस्येति । ग्रहणादिति । सर्वनामशब्देनेत्यर्थः । न चैवमप्याबन्तत्वाभावः । एकादेशनिष्पन्नस्याप्याभावात् । अत एव खट्वेत्यादौ परादिवद्भावेनाम्त्वमाश्रित्याबन्तादिति सोर्लोप उक्तः । परादिवद्भावेन तत्त्वं तु न लभ्यमुभयत आश्रयणेन्तादिवत्त्वाभावादिति वाच्यम् । उभयत आश्रयणे तदभावस्य भाष्ये एकदेशयुक्तत्वे ऽपि सिद्धान्तिसम्मतत्वाभावात् । एतच्च तिङन्ते इणधातौ वक्ष्यामः । परे तु लिङ्गविशिष्टपरिभाषया ऽऽबन्तस्य सर्वनामत्वम् । आबन्तत्वन्तु परादिवद्भावेनेत्याहुः । सर्वस्यामिति । इह परत्वात्स्याटि कृते सकृद्गतिन्यायात्सुण्न ॥ प्रतिपदोक्तस्येति । दिक्शब्दमुच्चार्यविहितत्वादस्य तत्त्वम् । योत्तरेति । अनेकमन्यपदार्थे इति बहुव्रीहिः । सर्वनाम्नो वृत्तिमात्रेति मात्रग्रहणात्संप्रत्यसर्वनामत्वेपि पुंवत्त्वम् । योत्तरेति । यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थेनोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इत्यन्यत्र विस्तरः । स्पष्टार्थमिति । दिङ्नामानीत्यस्य बहुव्रीह्यधिकारे सत्त्वादिति भावः । अन्तरायै नगर्य्यै इति । अपुरीत्यस्य पूःशब्दार्थस्य विशेष्यत्वे इत्यर्थ इति भावः । अत्र मानमन्वेष्यम् । हे अम्बेति । ह्रस्वे कृते संबुद्धौ चेत्येत्वं न आआविति प्रश्लेषात् । द्व्यचरं यदीति पठितत्वाद् द्व्यच्काम्बार्थकस्यैव ह्रस्व इति नियममाश्रित्य डलकवतां ह्रस्वो नेत्यस्य भाष्ये प्रत्याख्यानात्फलाभेदाय सामान्यतोपि वार्त्तिकमसंयुक्तविषयमि-

त्याशयेनाह असंयुक्ता इति । खट्वरं यदीत्यस्याङ्गत्वाद् खट्वराम्बार्थकन्तास्य ह्रस्व इति नियमशरीराज्जगदम्बेत्यादौ ह्रस्वो भवत्येव । यद्यपि जरसादेशस्येति । एवञ्चेत्वशीनुड्याडामां नित्यत्वात्पूर्वमेषु क्व चिदजादित्वाभावात्क्व चित्सन्निपातपरिभाषया जरसो ऽनापत्तिरिति भावः । यद्यपि याडापोर्जरसपेक्षया परत्वात्तयोः कृतयोराद्ये ऽजादित्वविघातादन्त्ये सन्निपातपरिभाषया न जरसः प्राप्तिरेवमेत्वेपि तथापि तत्र प्रश्लेषफलं दर्शयितुमाह । एवमिति । अत्र यद्वक्तव्यन्तन्निर्जरशब्दे उक्तम् । स्वाश्रयमिति । स्वं श्रूयमाण आकारः । स्थानिवद्भावेनाप्राप्तमिति । न च ड्याप् ग्रहणे ऽदीर्घ आदेशो न स्थानिवदिति ह्रस्वे आप्त्वस्य विच्छेदात्कथं दीर्घे स्थानिवत्त्वे न तल्लाभः । ड्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदिति तदर्थ इति वाच्यम् । याडाप, औङ आप, आङि चापो, ङेराम्नद्याप्, हलड्याबि,त्येतेष्वाकारप्रश्लेषमाश्रित्य स्थानिवत्त्वनिषेधप्रत्याख्यानृभाष्यनये शङ्कासत्त्वेनादोषात् । अत्र यत्रोदाहरणे सूत्रभाष्यवार्त्तिकानां फलभेद आपतति तेषामनभिधानम् । यथा ऽतिखट्वस्य अः अतिखट्वा इत्यादेः वक्ष्यमाणरीत्या दीर्घात्पूर्वं फलाभावेन स्थानिवत्त्वाऽप्रवृत्तौ फलभेदस्यैवाभावाच्च । यत्त्वाकारान्तरं प्रश्लिष्याकाररूप एव यो न कदाचिद्रूपान्तरं प्राप्त इत्यर्थ इति तन्न । मानाभावात् । भाष्ये तस्यानुक्तेश्च । आबन्तं यदङ्गमिति । प्रत्ययग्रहणइति परिभाषया ऽतिखट्वस्य नाबन्तत्वं यच्चाबन्तं खट्वेति न तदङ्गमिति भावः । न चानया ऽबन्तग्रहणे तेनाङ्गविशेषणादाबन्तान्तं यदङ्गमित्यर्थादतिखट्वायेत्यादौ दोषस्तदवस्थ इति वाच्यम् । अङ्गस्य विशेषणत्वात् । एतेन श्रुतमाकारमादाय स्मृतमनुबन्धमादाय आप्त्वानुसन्धानात्स्याडेव याडित्यपास्तम् । तस्य लाक्षणिकत्वाच्च । ननु स्त्रीप्रत्यये वाचनिकस्तदादिविधिनिषेधो भाष्ये पठितस्तत्कथमस्य तत्र प्राप्तिरत आह, उपसर्जनेति । स्त्रीप्रत्यये चानुपसर्जनेनेति वचनस्यैव भाष्ये पाठादिति भावः । अत्रोपसर्ज्जनत्वं लौकिकमेव । स्त्रीप्रत्यये शास्त्रीयोपसर्जनत्वासंभवात् । यद्यपि स्त्रीप्रत्ययान्ते शास्त्रीयोपसर्जनत्वमस्ति तथापि न तेन प्रत्ययग्रहणे इति तदादिनियमप्रसक्तिः । एतत्सर्वं व्याख्यादर्शाद्यनुरोधेन । परे त्वस्याकारस्य लाक्षणिकत्वाचात्र याट् वर्णग्रहणेपि तत्प्रवृत्तेरादित्यादौ भाष्ये स्पष्टत्वात् । न च खट्वाये इत्यत्र याडनापत्तिः सूत्रन्तु निशाये इत्यादौ चरितार्थमिति वाच्यम् ॥ यस्य रूपस्य लक्षणप्रवृत्तिं विना न संभवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वात् । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वात् । पदाङ्गाधिकारे इति वार्त्तिकेनाङ्गस्य विशेष्यताया एवौचित्यबोधनाच्च । अत एवाबन्तान्तं यद-

ङ्गमित्यर्थाभिप्रायेणातिखट्वायेत्येतत्सिद्धये ऽतिखट्वाय इति स्थिते प्रवृत्तं ङ्याप्ग्रहणे ऽदीर्घ इति वार्त्तिकं व्याख्याय श्रुताकारस्मृतानुबन्धाभ्यामाब्विनाशङ्कां कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्याने एतत्परिहारायोपायान्तराकथनं भाष्ये । किं च अङ्गस्य विशेषणत्वे वार्त्तिकस्य तत्प्रत्याख्यानायाकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव । किं च खट्वाया अर्द्धं ऽर्द्धखट्वायामित्यादौ याडनापत्तिः । किं चाकारप्रश्लेषपक्षे ऽपि दीर्घोत्तरं स्वाश्रयाकारत्वं स्थानिवद्भावेनाप्त्वमिति शङ्का ऽयुक्तैव । दीर्घात्पूर्वं स्थानिवत्त्वस्य फलाभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तदाप्त्वस्य दुर्लभत्वात् । परंपरया कार्य्यमादाय स्थानिवत्त्वप्रवृत्तौ मानाभावात् । याडाप इति सूत्रे भाष्ये ऽपि अतिखट्वायेत्यत्र स्थानिवत्त्वात्प्राप्तस्य याटः प्रतिषेधो वक्तव्यः न वक्तव्यो ङ्याप्ग्रहणे ऽदीर्घ इति स्थानिवत्त्वनिषेधात् । न च दीर्घत्वे आबसौ भूतपूर्व इति याट् प्राप्नोति लाक्षणिकत्वात् । स्थानिवत्त्वे तु तत्सामर्थ्यान्नैतत्परिभाषाप्रवृत्तिरित्युक्तम् । यद्यपि स्थानिवत्सूत्रयाडापसूत्रस्थभाष्याभ्यां हल्ङ्याप्सूत्रयाडापसूत्रयोरेव प्रश्लेषो लभ्यते तथापि भाष्यमुपलक्षणमितरसूत्रविषयोदाहरणानभिधानं वेत्यनयोर्युक्तं सुधीभिर्विचार्य्यमित्याहुः । व्रश्च ॥ अत्र राजिसाहचर्याद्भ्राजिः फणादिरेव तेनान्यस्य विभ्राडित्येवेत्याहुः । छशौ वर्णौ ताभ्यां शब्दरूपं विशेष्यमादाय तदन्तग्रहणमित्याह, छशान्तयोरिति । छशयोरित्युक्तेऽपि न क्षतिरिति चिन्त्यम् । पदस्येति तु पृष्टमित्यादिसिद्धये व्यधिकरणमेव । अन्तादेश इति । अलोन्त्यस्येति वचनात् । अत्र झलो झलीत्यतो झलीति पदस्येति स्कोरित्यतो ऽन्ते इति चानुवर्त्तते । छ्वोः शूडित्यत्र क्ङितीत्यनुवृत्तेः प्रष्टेत्यादौ शादेशाभावात् अशान्तत्वेन षत्वाप्राप्तौ च्छग्रहणम् । अत्रापि सतुङ्निर्देशो बोध्यः । तस्यासिद्धत्वादिति । चयो द्वितीया इत्यस्य नादिन्येति सूत्रे भाष्ये पाठादिति भावः । ढतयोरिति । धुडभावे टस्य धुडितस्येत्यर्थः । न भवतीति । जश्त्वात्प्राक् षस्य नेत्यर्थः । जश्त्वे तु प्राप्तिरेव नेति बोध्यम् । केचित्त्विति । एकाच इत्युत्तरसूत्रे ऽनुवृत्त्या मद्धेऽपि संबन्ध एवोचित इति भावः । जश्त्वेनेति । यत्तु जश् झशीति निर्देशात् शस्य न जश्त्वमिति तन्न । अविकृतस्वरूपप्रतिपादने तात्पर्याद्यस्मयादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायसिद्धायां ज्ञापकत्वायोगात् । उपदेशेजित्यादिनिर्देशैः कुत्वाद्यनापत्तेश्च । अत्र मते भाष्यानुग्रहो विचार्यः । मांसपृतनेत्यस्य पद्दन्न इति सूत्रे उपसंख्यातत्वादाह । शसादौ वेति । स्त्रीत्वादिति । पुंस्त्वाभावादित्यर्थः । नात्वं नेति । स्त्रीत्वादित्यनुकृष्यते । अत एव पुंस्त्वाभावान्नत्वाभाव इति नोक्तम् । न हि

पुंस्त्वाभावो नाभावे प्रतिबन्धकः । नपुंसकेपि तदङ्गीकारात् । ङिति ह्र ॥ अत्र वाक्यद्वयमाद्ये यू इति स्त्र्याख्यावित्यस्त्रीति इयङुवङ्स्थानाविति नेति चानुवर्त्तते । अन्त्ये यू इति वेति स्त्रीवाचकावित्येतन्मात्रार्थकस्त्र्याख्याविति च। तत्र ह्रस्वयोरप्राप्ते दीर्घयोस्तु नेयङिति निषेधादप्राप्ते विभाषा । इष्वादिष्वप्राप्तिमाशङ्क्य ङिति ह्रस्वश्चेत्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयतइति कैयटस्तु ह्रस्वांशमात्रविषय इत्याशयेनाह । नित्यस्त्रीलिङ्गाविति । अत एवास्य दीर्घांशे निषेधविकल्पत्वं भाष्ये उक्तं यू स्त्र्याख्याविति सूत्रे तत्फलं कटप्रुवे ब्राह्मण्यै इति । लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन तत्त्वाभावात् । परे त्वत्र विकल्पो भवत्येव आख्याग्रहणरहितस्यैवात्र संबन्धात् । यद्वा स्त्र्याख्यावित्येतदेव स्त्रीवाचकावित्येतन्मात्रार्थकमत्र शब्दाधिकारात् । तच्च ङिदाक्षिप्ताङ्गस्य विशेषणम् । अत एव प्रथमलिङ्गग्रहणं चेत्यस्यात्राप्रवृत्त्यन्वाख्यायके ह्रस्वौ चेयङुवङ्स्थानौ च प्राक् च प्रवृत्तौ स्त्रीवचनावेव नदी सञ्ज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यमिति वार्त्तिके शकट्यै ब्राह्मण्यै क्व मा भूत् अतिशकटये ब्राह्मणाय अतिश्रियै ब्राह्मण्यै श्रियै ब्राह्मण्यै क्व माभूत् अतिश्रियै ब्राह्मणाय श्रियै ब्राह्मणायेति यूस्त्र्याख्याविति सूत्रशेषे भाष्ये उक्तम् । एवञ्चास्य निषेधविकल्पत्वमसंभवि । समुदायस्य केनापि प्राप्त्यभावात् । अवयवस्य प्राप्तावपि तस्यानेन विकल्पाभावात् । ङिदाक्षिप्ताङ्गस्यैवानेन विकल्पात् । एतच्च प्रवृत्तौ स्त्रीवचनाविव्यनेन सूचितम् । अत एवात्र वाक्यद्वयेपि विधिविकल्प एव दर्शितः । एवञ्चात्र नियमो नाश्रीयत इति कैयटो वाक्यद्वयपर एवोचितः । उपक्रमे निषेधपरतया व्याख्यानन्तु स्त्र्याख्यावित्यस्य नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिनो यू इति ह्रस्वयोर्ग्रहणमिति पक्षोपपादने युक्तिभूतमिति तन्नादरणीयम्। यत्तु दीर्घवाक्ये स्त्र्याख्याविति ईदूतोस्तदन्तस्य वा विशेषणं पुनरङ्गेन तदन्तविधिः । अङ्गस्य च केवलस्त्रीत्वं विशेषणमेवं ह्रस्वघटितवाक्येपि स्त्रियामित्येतन्मात्रमुभयोर्विशेषणमिति तत्तु चिन्त्यम् । भाष्यात्तदलाभात् । नेयङुवङित्यत्र तु नेयङाद्याक्षिप्ताङ्गविशेषणं स्त्रीत्वम् । तदाक्षिप्तस्येयङादिविशेषणतायाएवौचित्यात् । यस्याङ्गस्येयुवाविति भाष्योक्तेः स्त्र्याख्यावित्यस्य नित्यस्त्रीलिङ्गावित्यर्थकस्य यू इत्यनेनैव क्लृप्तसंबन्धत्वाच्च । अत एवातिश्रियै ब्राह्मणायेत्यत्रानेन निषेधादवयवनदीत्वप्रयुक्तमपि नदीकार्य्यं न । ननु यथा खरकुट्यै ब्राह्मणायेत्यादौ लुबन्तस्य त्रिलिङ्गत्वेपि प्रथमलिङ्गग्रहणाच्चिन्त्यनदीत्वं भवतीति भाष्ये उक्तम् । यञ्चात्राह्मणात्यश्येत्यादौ युक्तवद्भावेन स्वलिङ्गप्रयुक्त कार्यातिदेशेन तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिः । स्पष्टञ्चेदं स्त्रियामिति सूत्रे

भाष्ये । युक्तवद्भावादिप्रत्याख्यानेपि यथा दारादिशब्दैः पुंस्त्वेन स्त्रीरूपार्थस्य भानं तथा प्रकृते स्त्रीत्वेन पुंसो भानमिति न नत्वम् । पुंस्त्वे वाच्ये नत्वमित्यर्थात् । नन्वेवं खरकुट्यै इत्यत्रापि युक्तवद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्यम् । स्त्र्याख्यावित्यस्य स्त्रीत्वविशिष्टमेव य आहेत्यर्थात् । न चायं तथा । स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याभिधानात् । यद्यपि पदार्थमात्रे शास्त्रीयलिङ्गत्रयमस्ति तथापि व्यक्तिवस्तुपदार्थादिबोद्धृत्वकाले तत्तल्लिङ्गोपजननेपि स्त्रीपदादिबोद्धृत्वदशायान्तत्सत्त्वे मानाभावात् । प्रकृते तु ब्राह्मणायेत्यादिविशेषदर्शनेन तत्सत्तानुमानात् । स्पष्टं चेदं भाष्यकैयटयोरेवं श्रीशब्दात्क्विनि लुपि श्रिये ब्राह्मणायेत्यादौ विकल्पापत्तिः, युक्तवद्भावेन स्त्रियामङ्गस्य वर्त्तनात् । अत्र सूत्रे नित्यस्त्रीत्वानिवेशाच्चेति चेन्न । सत्यभिधाने इष्टापत्तेः । भाष्ये दृश्यमान श्रिये ब्राह्मणायेत्यादि तु क्यजन्तात्क्विपि बोध्यम् । विपरीतनित्यस्त्रीत्वनिवेशवादिनो लुवन्तश्रिये ब्राह्मणायेत्यादौ तदनापत्तिर्दोष इत्याहुः । यू किम् । मात्रे । यद्यपि यू इति दीर्घपरं तथापि विभक्तिविपरिणामेन य्वोर्ह्रस्वावित्यन्वयो बोध्यः । एतत्सर्वं वामीत्यत्रापि बोध्यम् । इदुद्भ्यामौदच्चघेरिति सूत्रं योगविभागेन व्याचष्टे, इदुद्भ्यामिति । अनदीसंज्ञकेषु अच्चघेरौदित्याभ्यां बाधात् । ङेराम्निति सूत्रान्नद्याग्रहणानुवृत्तस्त्वाह । नदीसञ्ज्ञकाभ्यामिति । मत्यामिति । सन्निपातपरिभाषया अनित्यत्वाद्यण् । त्रिचतुरोः ॥ अष्टन आ इत्यतो विभक्ताविति वर्त्तते । तत्फलन्त्रिभार्यः । तृतीयान्तेन समासः भार्या भरणीयः । अचिर ॥ अलोन्त्यपरिभाषयैव सिद्धे ऋत इति अनुवर्त्तमानतिसृचतसृ इत्यस्य षष्ठ्यन्तत्वकल्पनायान्यथा त्रिचतुरोरित्यस्यैवानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्बाधापत्तिरिति दिक् । नुमचिरेति । अत्राचिरांशे न तिसृचतसृ इति निषेधो मूलम् । एतेन स्त्रीत्वरूपार्थविशेषविभक्तिसञ्ज्ञानिमित्ततिस्राद्यपेक्षया नुडन्तरङ्ग इत्यपास्तम् । अतो निषेधादेवार्थसंज्ञाकृतबहिरङ्गत्वानाश्रयणादन्यथामिति प्रत्ययविशेषापेक्षत्वेपि संज्ञार्थविशेषानपेक्षत्वेनान्तरङ्गत्वात्त्रयादेशे तदसङ्गतिः स्पष्टैव । वस्तुतः स्वरूपेणोपादाने न बहिरङ्गत्वं किं तु केनचिद्विशेषधर्मेणोपादानएवेति विशेषापेक्षस्य बहिरङ्गत्वमेव नेति च रुदधातौ निरूपयिष्यामः । तृज्वत्सूत्रे भाष्ये तु न तिसृचतसृ इति ज्ञापकाद्रादेशो नुड्विषयेन, पूर्वविप्रतिषेधेन तु न सिद्ध्यति । अपवादविषये विप्रतिषेधाप्रवृत्तेः । रादेशस्य सर्वापवादत्वादित्युक्तम् । त्रिचतुरोर्विशेषणादिति । स्त्रीनिष्ठसंख्यायां वर्त्तमानयोरित्यर्थ इति भावः । नेहेति । त्रिशब्दस्य पुंनपुंसकवृत्तित्वेपि समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वे आदेशः स्यादिति

भावः। आमित्विति। तत्राम् षष्ठीबहुवचनमेव। योऽधिकारादतो न ङेरामि त्रयादेश इति बोध्यम्। प्रियतिसेति। ङङ्गविशेषणत्वेऽत्राव्याप्तिः स्यादिति भावः। प्रिया जस् त्रिजसिति स्थिते ऽन्तरङ्गानपीतिन्यायेन विभक्तिलुकि पुनः सुपि तदन्तविधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः ततो नऋत-श्चेति कप्तु न। समासार्थालौकिकवाक्ये ऋकारान्तोत्तरपदत्वाभावात्। ऋदु-शनेत्यनङ्। प्रियतिस्रणी इत्यादि। अत्र नुमः परत्वात्तिस्रादेशे पुनः प्रसङ्गवि-ज्ञानेन नुम्नतिसृचेति ज्ञापकेन सामान्यत आगमविषये रादेशो नेति ज्ञाप्यते। प्रत्ययोत्तरेति सूत्रे चेमौ भाष्ये प्रयोगौ। द्वित्वे इति। बहिरङ्गासिद्धत्वन्तु न यासयोरिति निर्देशेनानित्यत्वान्न प्रवर्त्तते। विभक्ताविति। युष्मेरनाका-वित्यत्र भाष्ये पाठात्। ङ्याप्सूत्रे तत्परिभाषादोषेषु पाठाच्च। सख्यशि-श्वीति ङीप्। यस्येतिचेतीकारलोपः। लक्ष्मीरिति। कृदिकारादिति ङीपि लक्ष्मीत्यपि। स्त्यायतीस्यां शुक्रशोणिते इति स्त्री स्त्यायतेर्ड्रट् टिलोपयलोपौ टित्वान्ङीप्। इयङिति। स्त्रीशब्दस्येकारान्तत्वादियङेवानुवर्तते इति भावः। गुणेनेति। जसि चेति गुणः। आङो ना, अच्च घेर्ह्रस्वनद्याप इत्येतैरि-त्यर्थः। बाध्यते इति। स्त्रीशब्दस्येयङित्यनेनान्वयः। नुमिकोचीति। पूर्व-कारिकोक्तरोधे सति यत्फलितं तदाह। औत्याविति। अजादौ य इया-देशो विहितः स उपसर्जने पुंसि विद्यमानस्य स्त्रियाः स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव न त्वन्यत्र गुणादिभिर्बाधादिति भावः। पुंवद्भावादिति। तृतीया-दिषु भाषितपुंस्कमित्यनेनेति भावः। ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य संबन्धेन स्त्रीशब्दावयवभिन्नह्रस्वेवर्णान्तादित्यर्थेन कथमत्र प्राप्तिरत आह। स्त्रीति तत्र बीजमाह। तत्संबद्धस्येवेति। प्रसज्यप्रतिषेधस्तु न वाक्यभेदाद्यापत्तेः। नन्वियङुवङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधः किं नेत्यत आह। दीर्घस्याय मिति। तत्र ह्रस्वपदाभावादिति भावः। अयन्त्यनामिति श्रीः। क्विब्वची-त्यादिना वागित्यत्रेव कर्मणि क्विप्दीर्घौ अड्यन्तत्वाच्च सुलोपः। नेयङ्॥ ङ्वुयोच्चारणं स्पष्टार्थम्। स्थानशब्दो भावल्युडन्तः। इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः। सा च बाधकाविषये एव। तेन प्रकृष्टा धीः प्रधीः प्रध्यै इत्यादौ न निषेधः। सा चोपलक्षणं व्याख्यानात्। तेन हे श्रीरित्यादौ-निषेधसिद्धिः श्रियावित्यादौ तत्स्थितिसत्त्वात्। यत्र नदीकार्याश्रये ऽङ्गे बाध काबाधितेयङादिस्थितिः क्वचित् दृष्टा तस्य तदवयवस्य च निषेध इति फलि-तमत एव प्रकृष्टाधीर्यस्या यस्य वा प्रधीरित्यत्रावयवधीशब्दस्य नदीत्वं भव-त्येव। तदुक्तं भाष्ये अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे यण् स्थानयोरपि प्वोः प्रतिषेधः प्राप्नोति अवयवस्येयङुवङ्स्थानत्वात्। आद्यै

प्रद्यै सिद्धन्त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम् । न चैतस्याङ्गस्येयङुवङौ भवत इति । श्रियै इति । ङिति ह्रस्वश्चेति विकल्पः । वामि ॥ ग्रामीति च्छेदः । प्रधीशब्दस्येति । प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः । वृत्तिकारादीनामिति । अयं भावः । भाष्ये आध्यै प्रध्यै इत्यादावियङ्स्थानत्वान्निषेधमाशङ्क्य यत्र नदीकार्याश्रयेऽङ्गइत्युक्तरीत्या समाहितं तत्र न बहुव्रीहिः कवापत्तेः । किं तु प्रकृष्टं ध्यायतीत्याद्यर्थकं तत् । तच्च कैयटोक्तनित्यस्त्रीत्वाभावेन नदीत्वाप्राप्त्या भाष्यासङ्गतिरतः स्त्रीविषयावेव यौ यू नित्यमित्यत्र भाष्ये एवकारो भिन्नक्रमः । नित्यमेव यौ स्त्रीविषयावित्यर्थः । नित्यमेवेत्यस्य पदान्तरं विनापीत्यर्थः । खलपूकटप्रूग्रामणीनां क्रियाशब्दतया पुंसि मुख्या वृत्तिः पुंसः खल्वयमुचितो धर्मः शक्तत्वाद्भयरहितत्वाच्च । अतस्तेषां न पदान्तरं विना स्त्रीवृत्तित्वम् । ध्यानादि तु स्त्रीपुंससाधारणमिति । अत्राहुश्चिर्वीजन्तु सूत्रभाष्याद्युत्तरैरीदृशनित्यस्त्रीत्वालाभः । भाष्योदाहरणे बहुव्रीहिरेव । कप्तु न ऋकारसाहचर्येण यस्य वृत्तेः प्रागनदीत्वं तदुत्तरपदके एव तत्प्रवृत्तिः । धीशब्दस्येयङ्स्थानत्वेन प्राङ्नदीत्वनिषेधात् । गतिपूर्वकत्वाद्यणपि सुलभः । आध्यै इति चिन्त्यमेतत् क्रियाशब्दत्वेन नित्यस्त्रीत्वाभावादिति कैयटस्तु चिन्त्य एवेति दिक् । लक्ष्मीवदिति । स्त्रियामिति शेषः । पुंवद्रूपमिति । उक्तविग्रहे नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामप्यनदीत्वादिति भावः । प्रकृष्टा धीरिति विग्रहे इति । ईदृशपदघटितविग्रहे इत्यर्थः । तेन कर्मधारये बहुव्रीहौ च सर्वलिङ्गेऽपि मतद्वये ऽपि लक्ष्मीवत् प्रथमलिङ्गग्रहणाच्चेत्यवयवधीशब्दस्य नदीत्वात् । नेयङिति निषेधस्योक्तरीत्या प्राप्त्यभावादिति भावः । विशेष इति । लक्ष्मीशब्दापेक्षयेत्यर्थः । श्रीवदिति । स्त्रियामिति शेषः । विशिष्टस्येयङ्स्थानत्वेन ङिदामोर्विकल्पस्यान्यत्र निषेधस्य च प्राप्तेरिति भावः । पुंसि त्वीदृशबहुव्रीहावपि न नदीत्वं नेयङित्यवयवस्य निषेधात्समुदायस्याप्राप्तेश्च । पुंवदिति । सुष्ठु ध्यायतीति विग्रहे इति शेषस्तस्य नित्यस्त्रीत्वाभावेन पुंसीव स्त्रियामप्यनदीत्वादिति भावः । इतिविग्रहे त्विति । ईदृशपदघटितविग्रहके स्त्रीलिङ्गबहुव्रीहौ कर्मधारये चेत्यर्थः । तत्र बहुव्रीहावयवस्य नेयङिति निषेधः । ङिति तु समुदायस्य विकल्प इति बोद्ध्यम् । स्त्रियाञ्च ॥ अत्रासंबुद्धौ सर्वनामस्थानइति न संबद्ध्यते आरम्भसामर्थ्यात् । ऋचेभ्य इति । तदन्तशब्दानां बहुत्वाद् बहुवचनं प्रातिपदिकविशेषणत्वात्तदन्तविधिः । स्त्रियामिति चाधिकारः क्वासि हे सुभ्रु इति रावणेन सीतापहारोत्तरं रामविलापोयं विधिना त्वया हापितस्त्याजितः स हे सुभ्रु क्वासीत्येवं बहु विललापेत्यर्थः । नेयङित्यनेनावयवस्य समुदायस्य च

नदीत्वनिषेधात्प्रश्नः । प्रमाद इति । विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः स च विरहपोषकत्वात्काव्ये गुणः । एकाजुत्तर ॥ एकोच् यस्मिन् तादृशमुत्तरपदं यस्येति सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः । उत्तरपदे इत्यनेनास्य वाक्यस्य समासपदघटितवाक्यैकदेशत्वानुमानात्समासे विशेष्य इत्याह । तस्मिन्समासे इति । आरम्भेति । प्रातिपदिकान्तेत्यनेन विकल्पेन णत्वे सिद्धे इत्यर्थः । पुनरिति । णग्रहणे ऽनुवर्त्तमाने इत्यर्थः । यणमिति । दृन्करेति यणमित्यर्थः । भेकजाताविति । शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिरित्यमरादस्य बह्वादित्वेन वा ङीषिति भावः । अन्ये त्वस्य गौरादिपाठान्नित्यमेव ङीष् । भेक्यां पुनर्नवायां स्त्रीति यादवस्य सुतः पुत्रः स्त्रियान्त्वमी आहुर्दुहितरमिति वन्नित्यङ्यन्तत्वेप्युपपत्तेरित्याहुः । गौरादिकल्पने मानाभावात् । अमरे वर्षाभूः कमठी डुलिरित्येव पाठ इति सुबोधिनीकार इति माधवस्तदनुसारेण मूलं बोध्यम् । टाप्ङीपौ न स्त इति । स्त्रियां यत्प्राप्नोति तन्नेति व्याख्यानादिति भावः । स्वस्रादिषु मातृशब्दस्य ननान्द्रादिसाहचर्यात्प्रसिद्धत्वाच्च ससंबन्धिकजननीवाचकस्यैव ग्रहणम् । सन्निपातपरिभाषयैव तिसृचतसॄोर्ङीबभावे सिद्धे तदनित्यत्वज्ञापनार्थन्तयोर्ग्रहणमिति केचित् । स्वस्रादिषु तिसृचतस्रोः पाठो ऽनार्ष इति छन्मेजन्तसूत्रस्थभाष्यस्वरसः ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥ श्रीः ॥

अतोम् ॥ अत इत्येतदधिकृतस्याङ्गस्य विशेषणम् । स्वमोर्नपुंसकादिति चानुवर्त्तते । अम् लुग्बाधको येननाप्राप्तइति न्यायात् । अमिति च्छेदो न तु मिति । ज्ञानमित्यादौ सुपि चेति दीर्घापत्तेः । सन्निपातपरिभाषया दीर्घवारणे तु हेज्ञानेत्यादौ संबुद्धिलोपस्यानापत्तिः । मनिमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात् । अत एवेङ्ह्रस्वादिति सूत्रे ज्ञानेत्यादौ मलोपाय कतरदित्यादौ लोपाभावाय चाङ्गात्तेपव्यधिकरणान्वयहल्पदानुवृत्तय आस्थिता भाष्ये न तु मिति च्छेद उक्त इत्यलं भाष्यविरुद्धकल्पनयेति दिक् । जसः शी औङ आप इत्याभ्यां शी औङ इति चानुवर्त्तते तदाह क्लीबादित्यादि । यस्येति च ॥ इश्चाश्चयन्तस्येत्यर्थो व्याख्यानात् । भस्येत्यधिकारश्चेन नस्तद्धितइत्यतस्तद्धितानुकृष्यते तदाह । भस्येत्यादि । भस्येति किम् । गर्गरूप्यम् । औङः श्यामिति । इत एव निर्देशादस्य नित्यस्त्रीत्वं बोध्यम् । औङ इति स्वरूपकथनं सर्वे इत्यस्य भाधिकारेण सिद्धेः । जश्शसोः ॥ शसत्र सुबेव व्याख्यानात् । नपुंसकस्य ॥ इदितो नुमिति सर्वनामस्थानइति चानुवर्त्तते । अङ्गस्येति च प्रकृतम् । तच्च झलचभ्यां विशेष्यते । नपुंसकस्येति गृह्यमाणस्याभावादङ्गस्यैव विशेषणम् । अस्थिदधीत्यादौ तु गृह्यमाणस्यैव प्रकरणात् अत-

बलवत्त्वात् । अत एव त्रिचतुरोरित्यत्र स्त्रियामिति तयोरेव विशेषणमित्याकरः । उपधादीर्घ इति । सर्वनामस्थाने चासंबुद्धावित्यनेनेति भावः । शेषमिति कर्मणि घञ् । घञजपः पुंसीति प्रायोवादः । अडु । ड्डेति पाठः । दस्य ष्टुत्वं डस्य संयोगान्तलोपश्चादेशस्वरूपभङ्गभिया न कृत इति कैयटः । पञ्चम्य इति । अधिकव्यवच्छेदाय अस्य सर्वाद्यन्तर्गणत्वात् । परे तु डतरादिभ्य इति विरुद्धविभक्तिपञ्चम्यन्तत्वादङ्गस्येत्यनेनान्वयानर्हमिति डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थ इति भाष्ये सर्वादिसूत्रे स्पष्टम् । एवञ्च परमकतरं कुलमित्यादौ नादड् । यत्तु कैयटेनार्थद्वारकं विधानमाश्रयितव्यम् । तेन परमकतरदित्युक्तं तन्न । तस्य यदि डतराद्यर्थगतसंख्याभिधायिन इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थप्रतीत्यसंभवः । यदि षष्ठ्यर्थे पञ्चमी तदा विरुद्धविभक्तित्वादिति भाष्यासङ्गतिर्विधानस्य सर्वथानाश्रयणेनार्थद्वारकं विधानमिति तद्भन्यासङ्गतिश्च । न चैतदर्थं उपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति वाच्यम् । तत्प्रत्याख्यानायैवैतद्भाष्यप्रवृत्तेः । परमकतरादिव्यावृत्तये ऽवश्याश्रयणीयविहितविशेषणेनैवातिकतरादिव्यावृत्तौ स व्यर्थ इति तदाशयः । त्यदादीनाम इत्यत्र षष्ठ्यन्तत्वात्त्यदादीनामित्यर्थद्वारकं विभक्तिविशेषणं अस्थिदधि इत्यादावङ्गं तथा तद्विशेषणं व्याख्यानादित्यपि तत्रैव भाष्ये स्पष्टमित्याहुः । डित्त्वफलमाह । टेः ॥ त्रिविंशतेरित्यतो डितीति वर्त्तते भस्येति चाधिकृतम् । पञ्चम इति । डटो मटि भत्वाभाव इति भावः । अन्यतमस्येति । डतरादिष्वपाठादिति भावः । एकतरमिति । एकाच्च प्राचामिति डतरच् । एकतमस्य त्वेकतममित्येव । परत्वादिति । नुमपेक्षयेति शेषः । शब्दान्तरप्राप्त्या झलन्ताजन्तलक्षणभेदाच्च नुमप्यनित्य इति भावः । केचित्तु शिभावात्परत्वाज्जरसि ततः शौ झलन्तत्वान्नुमित्यर्थमाहुः । अत्र यद्वक्तव्यं तन्निर्जरशब्दे उक्तम् । सान्तमहतः ॥ सान्तेति लुप्तषष्ठीकं पृथक् पदम् । संयोगस्येत्यनेन समानाधिकरणम् । नोपधायाः, सर्वनामस्थाने चासंबुद्धावित्यनुवर्त्तते तदाह । सान्तसंयोगस्येत्यादि । उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणम् । पारिभाषिकार्थस्येहासंभवात् । सर्वनामस्थानइति सान्तसंयोगस्य विशेषणम् । अत एव हंसशिरांसीत्यादौ न दोषः । यद्वा ऽनन्त्यविकारे ऽन्त्यसदेशस्येति न दोषः । मांस्पचन्या इति । मांसस्य पचनीत्यर्थः । मांसस्य पचियुड्घञोरित्यप्येतत्सिद्धार्थानुवाद एव । शब्दत्वेन च सादृश्यं नलुमते त्यस्य च नित्यत्वमित्यभिमानः । वृत्ताविति । भाष्यस्वरसत्वननुवृत्ताविति भावः । मासश्छन्दसीति । मासस्तकारः स्यांद्वादौ प्रत्यये छन्दसीत्यर्थः । माद्भिशरद्भिर्दुरोदरं तव इत्युदाहरणम् । ह्रस्वो नपुंसके ॥ क्लीबवदर्थे वर्त्तमानस्या-

न्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे प्रातिपदिकस्येत्येतत्सत्त्वप्रधानस्येत्यर्थकम्। तेन काण्डे इत्यादौ अन्तवद्भावेन प्रातिपदिकत्वेपि न ह्रस्वः। विभक्त्यर्थस्य संसर्गत्वेपि प्रकृत्यर्थापेक्षया प्राधान्यमस्त्येव। प्रथमाया अपि अन्याभिहितशक्तिरर्थ इति तत्रापि तत्संसर्गको बोध इति तस्याः प्राधान्यम्। काण्डे तिष्ठत इत्यादावाख्यातार्थकर्तुः कर्तृक्रियाभावेन क्रियायामन्वये तदभिन्नप्रथमान्तार्थस्यापि तेन संबन्धेनान्वयात्तस्य प्राधान्यं स्पष्टञ्चेदं भाष्ये। ज्ञानवदिति। दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः। श्रीपाणीत्यादावेकाजुत्तरपदेति णत्वं भवत्येवेति बोध्यम्। इकोचि॥ सुपीतिवक्तव्ये विभक्ताविति चिन्त्यप्रयोजनम्। विभक्तौ किम्। मधुन इदं माधवम्। हेत्रारे हेवारीति। अत एवेकोचीति सूत्रस्थमिह किंचित्तपो इति एङ्ह्रस्वादिति सूत्रस्थं हेत्रपु इति च भाष्यं सङ्गच्छते। वृद्ध्यौत्वेति। वृद्ध्यादीनां क्रमेण गावौ हरौ क्रोष्टा हरये इत्यवकाशः नुमो वारिणी इति। तृतीयादिषु॥ भाषितः पुमान्येन शब्देनेत्यर्थं पीलुशब्दे ऽतिप्रसङ्गस्तस्माद्भाषितः पुमान्यस्मिन्प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः। भाषणक्रियया स्वकरणतयाक्षिप्तशब्दश्च क्लीबेन समानानुपूर्वीकः समानार्थश्च गृह्यते प्रत्यासत्तेः ततो ऽर्थाक्षेपाच्च तत्फलितमाह। प्रवृत्तिनिमित्तैक्ये इति। इकोचीति नपुंसकस्येति चानुवर्त्तते। तेन तत्र पक्षान्ते अत्र यौत्प्रथमान्ते। इक इति किम्। श्रीपेण टादौ किम्। अनादिनी। अयञ्च ह्रस्वनुमोरभावातिदेशः क्लीबत्वविशिष्टार्थवाचकस्य पुंविशिष्टार्थवाचकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्वकार्याप्रवृत्तेरित्यन्यत्र विस्तरः। अस्थिदधि॥ नकारादकार उच्चारणार्थः। अनङ् उदात्तस्योच्चारणेन सिद्धावुदात्तग्रहणं असति यत्ने उदात्तादि शब्दैरनुपात्तो गुणो ऽविवक्षितइति ज्ञापनार्थम्। त्रिचतुरोरिति सूत्रे तिसृचतसृत्यत्र द्वन्द्वप्रयुक्तेन्तोदात्ते कर्त्तव्ये आद्युदात्तनिपातनं विवक्षार्थम्। निपातनं नामान्यादृशे प्रयोगे प्राप्ते ऽन्यादृशप्रयोगकरणम्। वध देशे,पि हन्त्यनुरूपेन्तोदात्ते ऽनुदात्तेवोच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थं तदुक्तमसति यत्ने इति। परमास्थिशब्दादावन्तोदात्त उदात्त गुणस्यापि स्थानित्वेनात्र तद्विवक्षायां न मानमिति भाष्ये स्पष्टम्। उदात्तत्व फलं दध्नेत्यादावल्लोपे उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वम्। दधनीत्यादौ श्रवणञ्च ज्ञापनफलन्तु तृन्तृजन्तानां भिन्नस्वरकान्तानां क्रुदुशनेत्यनेन तत्स्वर कानङ्सिद्धिरिति दिक्। तदन्तेति। आङ्गत्वादितिभावः। अत्रापि नपुंसकस्येतिसंबध्यते। तेन धाञ आदृगमहनेतिकिप्रत्यये दधिनेत्यादौ न। एतच्च गृह्यमाणस्यैव विशेषणम्। तेनातिदध्ना ब्राह्मणेनेत्यादि सिद्धम्। सुधियेति। शोभनज्ञानवत्त्वरूपैकप्रवृत्तिनिमित्तत्वात्पुंवत्। प्रधीशब्दे प्रकृष्टं

ज्ञानवत्त्वमेकं तत् । मध्विति । मकरन्दमद्यमाक्षिकवाचिनः पुंनपुंसकयोः सत्त्वात्पुंवत्त्वम् । मृद्वीकाविकारवाचिनो नित्यनपुंसकस्य तु न ॥ स च माध्वीकं मधु न द्वयोरित्यमरेणोक्तः । भाष्ये मधोस्तृप्ता इत्यस्य लिङ्गव्यत्ययोदाहरणत्वन्तु मध्वीर्गावो भवन्तु न इति लिङ्गसिद्धक्षीरवाचिनपुंसकमधुशब्दाभिप्रायेणेति दिक् । स्त्विति । मांसपृत्स्नूनां पदादिष्वुपसंख्यानमिति वार्त्तिकेनेति-स्नुभावः । पूर्वविप्रतिषेधेनेति । नच नित्यत्वादेव नुम्सिद्धः किं पूर्वविप्रतिषेधेनेति वाच्यम् । तदन्ते नुमि कृते ऽपि अङ्गाधिकारे तदन्तविधेः सत्त्वेन यदागमा इति न्यायेन नुम्विशिष्टस्य तद्ग्रहणेन ग्रहणात् सूत्रे षष्ठीनिर्देशाभावाच्चिर्द्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेन तृज्वत्त्वप्राप्तेः सकृद्गतिन्यायाच्च पुनस्तृज्वत्त्वम् । नन्वयं क्रुशक्रोष्टुने यस्येव भाष्ये उदाहरणात्तृतीयादिष्वचीत्येतद्विषयक एव अन्यथा प्रथमोपस्थित सर्वनामस्थानोदाहरणत्यागे बीजानाप त्तिरिति चेच । उदाहरणस्य संकोचकत्वे मानाभावात् । तदुक्तं न चोदाहरणमादरणीयमिति । उदाहृतातिरिक्तोदाहरणाभाव इत्येवंपरतया नादरणीयमिति तदर्थ इत्याहुः । सुल्वेति । अत्र शोभनलवनकर्त्तृत्वं प्रवृत्तिनिमित्तम् । पुंवत्त्वे ह्रस्वाभावेनाघित्वान्नाभावो न । नुमभावाच्च यण् । धात्रिति । अनङ् न । नलुमतेति निषेधात् धारणादिकर्त्तृत्वं चास्यैकं प्रवृत्ति निमित्तम् । हेधातरिति । ह्रस्वस्य गुण इति गुणः । एच इक् ॥ आदेश इति कर्मणि घञ् । ह्रस्वपदेन कर्मधारयः निर्द्धारणे सप्तमी सौत्रमेकवचनं तदाह । आदिश्येत्यादि । मद्ये इत्यपपाठः । तद्योगे षष्ठ्या एवौचित्यात् । एषां पूर्वभागो ऽवर्णसदृशः उत्तरस्तु इवर्णोवर्णसदृशस्तत्रोभयान्तरतमह्रस्वाभावात्पर्यायेणावर्णादेः प्राप्ताववर्णाभावायेदन्तदाह इगेवेति । यथाप्राप्तमेव नियम्यतइति न यथासंख्यं ह्रस्व एचतु नास्त्येव । एओङित्यादौ दीर्घनिर्देशादिति स्पष्टं भाष्ये । न चार्द्धमात्रावर्णस्याध्यर्द्धमात्रेवर्णोवर्णयोरिति । उत्तरभूयास्त्वात्तत्सदृश इगेव भविष्यतीति नार्थः सूत्रेणेति वाच्यम् । अध्यर्द्धमात्रावर्णस्यार्द्धमात्रेवर्णावर्णयोरित्यस्यापि पक्षस्य प्लुतावैच इति सूत्रे विनिगमनाविरहाश्रयेण भाष्ये उक्ततया समप्रविभागपक्षस्यैव भाष्यकृत्संमतत्वादित्याहुः ॥ प्रदीणामिति । न च रायो हलीति विषयसप्तमीति प्रागेवात्वम् । निर्द्दिष्टपरिभाषाबाधे मानाभावात् । आत्वे कृते नुडनापत्त्या हलादिविषयाभावेन पूर्वमात्वाप्रवृत्तेश्च । के चित्तु नुटो निमित्तस्य सन्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव न । नामीति दीर्घस्तु सुपि चेति दीर्घं नित्यत्वाद्बाधते इति माधवाशयमाहुः । ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वे ह्रस्वस्य पितीति तुग्न । समुदितप्रातिपदिकापेक्षह्रस्वस्य बहिरङ्गत्वेन वर्णमा-

त्राश्रये ऽन्तरङ्गे तुकि असिद्धत्वात् । ये तु षत्वतुकोरसिद्ध इति वचनान्न लोप इति सूत्रे इति तुग्ग्रहणाच्च ह्रस्वस्य पितीति सूत्रे ऽन्तरङ्गपरिभाषाया अप्रवृत्तिं वदन्ति तेषामुपजीव्यविरोधान्न तुक् । अजन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः । न चैवं सन्निपातपरिभाषा व्यर्था तस्या अप्युपजीव्यविरोधमूलकत्वात् । किं च तस्या अपि स एवार्थः । अत एव सन्निपातपरिभाषादोषनिरूपणावसरे वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादित्युक्तम् । न च न प्रत्ययः सन्निपातलक्षणः अङ्गसञ्ज्ञा तद्धनिमित्तं स्यादित्ययमभाष्यविरोध इति वाच्यम् । तस्यैकदेशयुक्तित्वात् । अन्यथा शैव इत्यादावपि सा लोपनिमित्तं न स्यादित्यन्यत्र निरूपितम् । ग्रामणिपुत्रो ग्रामणिकुलमित्यादौ पूर्वोत्तरपदनिमित्ते ह्रस्वे बहिरङ्गपरिभाषयापि सिद्ध्यतीत्याशयेन ङमो ह्रस्वादचि ङमुण्नित्यमिति अजन्त इति सूत्रे ह्रस्वस्य पितीत्यादौ तदुपन्यास एकदेशिन इति न तद्विरोध इत्यलम् ॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

हो ढः ॥ झलो झलीत्यतो झलीति पदस्येति स्कोरित्यतो ऽन्तइत्यनुवर्त्तते झलि परे पूर्वस्य पदान्ते विद्यमानस्य हस्येत्यर्थः । डस्तु न विहितः, धुडित्याद्यसिद्धेः । दादेर्धो ॥ दादिग्रहणमौपदेशिकदादित्ववल्लक्षकं व्याख्यानादित्यभिप्रेत्य फलितार्थमाह । उपदेशे इति । एतच्च प्रकृतसूत्रे भाष्ये ध्वनितम् । तत्र हि घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोतीत्याशङ्कापवादत्वेन समाधाय अथवा एवं वक्ष्यामि होढो ऽदादेरिति ततो धातोरिति दादेरिति वर्त्तते नेति-निवृत्तमित्युक्तम् । द्रुहेस्तु वा द्रुहेत्यनेन ढत्वस्यापि विधानात्तत्र न दोष इति तदाशयः । तत्र धातोरिति सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्तराभावेन तदुपदेशवद्दादिलक्षकं सामर्थ्यात् । अर्थाधिकारानुरोधाच्च पूर्वत्र निषेधसमर्पकेप्येवं, अत एव नामधातुविषये दामलिडित्यादौ ढत्वघत्वाभावौ सिद्धौ । एवञ्च तदेकवाक्यतया ऽपवादत्वपक्षे ऽपि दादिपदस्योपदेशकालिकदादित्ववल्लक्षकतोचिता । तदनन्तरं दादेरिति वर्त्तते इति भाष्यस्योक्ताशयमजानतो घोदादेरित्युच्यते कथमधोगिति शङ्कायामेकाच इति सूत्रार्थमपि प्रसङ्गान्निर्णेतुं धातोरवयवो यो दादिरित्यर्थमुक्त्वा गर्दभयतेरप्रत्यये गर्द्भवित्यादौ भष् भावायोत्तरसूत्रे आवश्यकं वैयधिकरण्यमुक्त्वा दोग्धेति व्यपदेशिवद्भावात्सिद्धमिति भाष्ये उक्तम् । तत्रोत्तरार्थं वैयधिकरण्यमावश्यकमिति वदता तस्येहानावश्यकत्वं सूचितं तेन च दादेरित्यस्योक्तार्थकत्वं सूचितमित्यन्यत्र विस्तरः । धुगित्यादिसिद्धये गो नोक्तः । औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमिति परिभाषा तु तत्र तत्रोपदेशग्रहणं कुर्वत्सूत्रविरोधेन तरप्तमपौघो ऽत्वसन्तस्येत्यादिसूत्रस्थभाष्यविरोधेन चाप्रामाणिकी । तत्र हि भाष्ये इदमुक्तम् ।

इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते को सावुपदेशो नामेति । अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तम् । न्यायस्यान्यत्रापि तुल्यत्वादिति बोद्धम् । एकाचो ॥ झष् झषन्तस्येति वक्तुं युक्तम् । भषपदाशक्तिकल्पनेन लाघवात् । निवृत्तमिति । धुग्भ्यामित्यादौ पदान्तत्वादेव सिद्धिरिति भावः । सामर्थ्यादिति । स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाभाव इति भावः । धातोः किम् तद्गाडित्यादि । ननु द्रुहेर्घत्वे धात्ववयवमेकाज्रूपं द्रुहति उर्घाति च तत्राद्यो न झषन्तो ऽन्त्ये न बश् दुघिति तु नावयव इति कथं भषभावो ऽतआह व्यपदेशिवद्भावादिति । विशिष्टोपदेशो मुख्यव्यवहारः सोस्यास्तीति व्यपदेशी तेन तुल्यमित्यर्थः । इदमाद्यन्तवत्सूत्रे भाष्ये स्पष्टम् । एकाचः किम् । दामलिट् । बशः किम् । क्रोत्स्यति । झषन्तस्य किम् । दास्यति । धुगिति । अत्वसन्तस्येति सूत्रे ऽधातोरिति निषेधेन कारकं प्रत्यप्रधानभूतक्रियावाचकस्यापि धातुत्वादिति भावः । नच धातोरुच्यमानङ्कार्यन्तत्प्रत्यये भवतीति परिभाषया कथमत्र घत्वादि तत्प्रत्ययो धातु संशब्दनेन विहितः प्रत्यय इति वाच्यम् । अस्य पदान्त निमित्तत्वेन प्रत्यय निमित्तत्वा भावात् । अत एवाप्रशानिति चरितार्थम् । अन्यथा मो नो धातोरित्यत्रापि तत्प्रवृत्तौ नत्वानापत्त्या तदसङ्गतिः स्पष्टैव । वा द्रुह ॥ द्रुहेः प्राप्तेरन्येषामप्राप्तेरुभयत्र विभाषेयम् । इग्यणः ॥ यणः स्थाने इति । नन्वेवमदुर्हितरामित्यादौ लस्योत्तमैकवचने इटि तस्य संप्रसारणत्वाद्धल इति दीर्घापत्तिः । न च यथासंख्यसंबन्धाददोषः ऋल्क्सूत्रे लृकारोपदेशः किमर्थं इत्यादि भाष्यविरोधादिति चेन्न । विधिप्रदेशेषु यण इगित्येव सिद्धे सञ्ज्ञाविधानसामर्थ्येन तद्भावितपक्षाश्रयणाच्च दोषः । वाक्यस्य सञ्ज्ञेति पक्षे भाष्ये संप्रसारणस्येत्यादौ संप्रसारणजातस्य संप्रसारणग्रहणेन ग्रहणमित्युक्ततया तदेकवाक्यतया ऽत्र पक्षे तद्भावितस्य संज्ञेति भाष्ये सूचितम् । तेन द्युभ्यामित्यादावपि न दीर्घ प्राप्तिः । अत एव अक्षद्यूश्चासावरुणश्च अक्षद्व्ररुण इत्यादौ पूर्वरूपं न, समानाङ्गग्रहणंतु भाष्ये प्रत्याख्यातम् । तथाच भाष्यं शकहूर्यमित्यादौ पूर्वरूपाभावाय समानाङ्गग्रहणं कार्यं न कार्यमसंप्रसारणत्वादन्योयं संप्रसारणासंप्रसारणयोः स्थाने एक आदिश्यते यदि नेदं संप्रसारणं हल इति दीर्घत्वं न प्राप्नोति वचनप्रामाण्याद्भविष्यतीति नसंप्रसारणइति निषेधोऽपि वचनप्रामामाण्यात्पूर्वरूपोत्तरम् । नच यु उ अन् अस् इति स्थिते तरङ्गत्वाद्दीर्घे पूर्वरूपं न स्यादिति वाच्यम् । अन्तरङ्गपरिभाषाया अनित्यत्वेनेहाप्रवृत्तेः ।

न चैवं तत्र सवर्णदीर्घोत्तरं न संप्रसारणइति निषेधो न स्यादिति वाच्यम् । अचः परस्मिन्निति स्थानिवत्त्वादिति दिक् । वाह ऊठ् ॥ भस्येत्यधिकारः वसोः संप्रसारणमित्यतः संप्रसारणमित्यनुवर्त्तते तच्चोठो विशेषणम् । तेनालोऽन्त्यस्येति न तदाह । भस्येत्यादि । ह्रस्व उठ् न कृतः वृद्ध्यनापत्तेः । वृद्धिविधावपि ह्रस्वग्रहणे जनैरित्याद्यसिद्धिः । च्छ्वोः शूडित्यत्रापि ह्रस्वकरणे ऽक्षद्यूरित्याद्यसिद्धिः । अतद्भावितत्वेन तस्यासंप्रसारणत्वाद्धल इति दीर्घाप्राप्तेः । संप्रसा ॥ अमि पूर्व इत्यतः पूर्व इति इको यणित्यतो अचीति एकः पूर्वपरयोरिति चानुवर्त्तते तदाह । संप्रसारणादचीत्यादि । ऊठष्ठित्त्वमेत्येधतीत्यत्र विशेषणार्थम् । छन्दस्येवेति । छन्दसीत्यनुवर्त्तमाने वहश्चेत्यनेनेति भावः । णिजन्ताद्विजिति । अनेन लोके विश्ववाट्शब्दस्य साधुत्वमात्रमुच्यते । न त्वस्योठ्णिलोपस्य स्थानिवत्त्वात् अङ्गभसंज्ञानिमित्तप्रत्ययेन वाहो विशेषणात् । विज्ग्रहणं क्विपोप्युपलक्षणम् । वच्यादिभ्यो विहिते क्तीति व्याख्यानस्याचः परस्मिन्नित्यत्र काम्यच्सूत्रे च भाष्ये उक्तत्वेन ण्यन्तात्क्वौ संप्रसारणाप्राप्तेः । प्रतिपदोक्ततया क्विशब्दमुच्चार्य विहितविधेरेव क्वौ विधिं प्रति न स्थानिवदित्यत्र ग्रहणेन णिलोपस्य स्थानिवत्वाच्च । तेन काम्यच्सूत्रोक्तविहितविशेषणपक्षतदितरपक्षयोर्न फलभेदः । वस्तुतो विभाषा पूर्वाह्णापराह्णाभ्यामितिसूत्रे प्रष्ठौह आगतं प्रष्ठवाड्रूप्यमिति भाष्ये लौकिकविग्रहवाक्ये प्रष्ठौह इति प्रयोगादन्यत्रापि ण्विः । तदुक्तमिति पक्ष इति । चतुरनडु ॥ इतोत्सर्वनामस्थाने इत्यतः सर्वनामस्थाने इति वर्त्तते । सावन ॥ आच्छीनद्योरित्यतो नुमनुवर्त्तते आदिति च तदाह । आदित्यधीति । विशेषविहिते नेति । यासुटा सीयुडिवेत्यर्थः । न बाध्यते इति । उपजीव्यत्वादिति भावः । अमा चेति । अम्संबुद्धाविति विशेषविहितेनामित्यर्थः । नुम उपजीवकत्वेन विरोधाभावात्ततः प्राक् तस्याप्राप्तेश्चेति भावः । क्वचित्तु आमा च नुम्न बाध्यत इति पाठः । तत्रायमर्थः । बहुनड्वांहीत्यादौ नपुंसकस्येति नुम् परत्वादामा बाध्येत पुनः प्रसङ्गविज्ञानात्तु न बाध्यतइति । दत्वं नेति । अनड्वांस्तत्रेत्यत्र रुत्वं भवत्येव । तत्रोपदेशवैयर्थ्याभावात् । संयोगान्तलोपस्येति । हस्यानिकस्येत्यर्थः । एवञ्च नस्य प्रातिपदिकान्तत्वाभाव इति भावः । अनड्वानिति । अनः शकटं वहतीत्यर्थे वहेः क्विबनसि अनसो डश्च यजादित्वात्संप्रसारणम् । ननु हे ऽनड्वन् इत्यत्र संबुद्धिलोपे ऽवश्यंप्राप्ते अम आरम्भादमोपवादत्वेन तद्विषये संबुद्धिलोपानापत्तिः । विषयभेदेप्यचि रादेशस्य नुडपवादत्वमाशङ्कितं सप्तमे भाष्यइति चेन्न । प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनापवादत्वस्यैवासंभवात् ।

ध्वनितञ्चेदं प्रत्ययलक्षणसूत्रे भाष्य कैयटयोः। एवमेवातृणेडनडुचित्यादेस्तत्सूत्रोदाहरणत्वमुपपद्यते इति दिक्। सहेः सा॥ अपदान्तस्य मूर्द्धन्य इत्यधिक्रियते लोके त्विति । एतेन तुराषाण्मेघवाहन इति व्याख्यातम् । नहि वृतीत्यनेन क्विबन्तसहावेव दीर्घविधानादाह । अन्येषामपीति । दिव औत् ॥ ननु विधेयविषये उच्चारणार्थानामपीत्संज्ञोचिता । अन्यथा तान्तस्य विधानमित्यस्याप्यापत्तेः । ध्वनितञ्चेदमदड्सूत्रे भाष्ये । तत्र हि डित्त्वाभावे ऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितम् । न तूच्चारणार्थत्वादिति। किंच । द्वितीयवर्णोच्चारणे सहायसंपादनेन चरितार्थेषु तत्र तत्र विशेषणार्थेष्विव हलन्त्यसूत्राप्रवृत्तौ मानाभावः । अत एव तस्य लोप इतिसूत्रे ऽनुबन्धानामेकान्तत्वपक्षे दिव औदित्यादीनां सर्वादेशत्वापादनं भाष्ये कृतं तित्स्वरितमिति सूत्रे च भाष्ये तिति प्रत्ययग्रहणं कर्त्तव्यमिति वार्त्तिकस्य द्युभ्यामित्यादौ तदभावः फलमित्युक्तम् । दित्वमाश्रित्य च प्रत्याख्यातन्तदित्यन्यत्। किंचादेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनेत्संज्ञकत्वाभावात्तिति प्रत्ययग्रहणं व्यर्थमेव स्यात् । तथा विधेयविषये उच्चारणार्थानामप्यनुनासिकत्वेनेत्संज्ञा । अत एव वेरपृक्तस्येत्यत्रापृक्तग्रहणाभावे दर्विरित्यत्र लोपमाशङ्क्यानुनासिकपरस्य वेर्ग्रहणमिति भाष्ये उक्तम् । अत एवेदितो नुमिति सूत्रे भाष्ये धातोरित्यस्याभावे सिच इदित्वादभैत्सीदित्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितम् न तु सिच इकारस्योच्चारणार्थत्वादित्त्वाभावेन ल्युडादावुकारस्यानकाभ्यामेव निवृत्तिरिति न तस्येत्संज्ञा अनुनासिकत्वाभावात् । अत एव नन्द्यादिभ्यो ल्युप्रत्यये नन्दनेति टाबन्तप्रयोगो गाङ् लिटीति सूत्रे भाष्ये । ल्युः कर्त्तरि पुंसीति त्वमरस्य प्रमादः । अनुवादविषये तु हलन्त्यसूत्रभाष्योक्तरीत्या तेषां व्यवसितान्त्यत्वाभावेन फलाभावेन चेत्संज्ञा शास्त्राप्रवृत्तेरुच्चारणार्थवर्णसहितसमुदायस्य तद्रहिते लक्षणा । विधौ तु नोचितासा। न विधौ परः शब्दार्थ इति न्यायात्। णौ गमित्यदीनां नुम् तु न स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वङ्गृहीत्वेकः सत्त्वात् । गमेरिडितिवच्च नोपधालोपः अत एव सुबुत्पत्तिरन्यथा हनो वधलिङीति वत्सा न स्यात् । अस्तेर्भूरित्यत्रापि निर्विसर्ग एव पाठ इति केचित्। एवञ्चात्र तित् स्वरितमिति स्वरितापत्तिरिति चेन्न । दिव इकारस्योदात्तत्वेन स्रंसनधर्म्मिणो हलः स्थाने जायमानौकारस्यानुदात्तत्वेनेकारस्य यणुदात्तस्वरितयोर्यण इति स्वरितसिद्ध्या फलाभावात् । तिति प्रत्ययग्रहणं कर्त्तव्यमिति वार्त्तिकेन तदप्राप्तेश्च अन्तोदात्तं द्यौरिति तु द्योशब्दस्य बोद्धम् । अल्विधित्वेनेति । अनल्विधावित्यत्र पञ्चमी समासस्याप्याश्रयणादिति भावः । पदान्तइति । पदान्ता-

दित्यनुवृत्तस्य विभक्ति विपरिणाम इति भावः । अयमुकारो ऽन्तोदात्तो निपात्यते तेन द्युभिरत्तुभिरित्यादौ पठ्यमानमन्तोदात्तत्वं सिद्धम् । अत्र यथा हल इति दीर्घो न तथोक्तम् । उतस्तपरत्वन्तु भाव्यमानोऽप्युकारः सवर्णग्राहक इत्यर्थज्ञापनार्थमिति तित्स्वरितमिति सूत्रे भाष्ये उक्तम् । द्युभ्यामित्यत्रोठ् न क्ङितीत्यनुवृत्तेः । यत्त्वस्मात्तपरत्वात्कुरुत इत्यादावुदिति तपरत्वाद्गुणाभावो यथा स्थानिवत्सूत्रे भाष्ये उक्तस्तथा प्रकृते दीर्घाभाव इति कैयटस्तदेतेन परास्तम् । दीर्घस्य बहिरङ्गतया तेन व्यावृत्तेरशक्यत्वाच्च । अत एव ऋत इदिति तपरत्वेन चिकीर्षतीत्यादौ हलि चेति दीर्घस्य न व्यावृत्तिः । अत एव दूच इत्यादौ चाविति दीर्घसिद्धिः । षट्चतु ॥ रेफान्तस्य षट्संज्ञैव तु न कृता । चत्वार इत्यत्र लुगापत्तेः । तत्र रो नेत्युक्तौ तु पदलाघवा भावः । केचित्तु षडित्यादि षडाद्यर्थपरम् । अर्थात्परत्वञ्चाम: शब्दद्वारकं स चार्थः प्रधान एवेति न गौणे ऽतिप्रसङ्ग इति तन्न । शब्दद्वारकमित्यस्य शब्दनिष्ठपरत्वाद्यवधित्वस्य परत्वस्य वा अर्थे आरोप इत्यर्थः । एवञ्च गौणत्वात्तत्र संबन्धे तन्निरूपितसंबन्धे च न विभक्तिः । परंपरासंबन्धेनान्वय इत्यपि न । प्रकृतिप्रत्ययार्थयोः साक्षात्संबन्धेन कॢप्तस्यान्वयस्य भङ्गापत्तेः । अत एव गङ्गायां घोष इत्यादौ गौणाधारादावधिकरणत्वादिनिमित्ता विभक्तिः स्वरितत्वप्रतिज्ञादिना भाष्ये साधिता अत एवेदृशस्थले षष्ठ्यपि न । अत एव स्त्रियाः पुंवदिति सूत्रे स्त्रिया इत्यर्थग्रहणमिति पक्षे भाष्यकृतोक्तं भाषितपुंस्कानुपपत्तिश्च न ह्यर्थेन पौर्वापर्यमस्तीति । दिक्शब्दयोगे इत्यस्य दिक्शब्दार्थान्वयभूते ऽवधित्वादौ संबन्धे पञ्चमीत्यर्थः । स च संबन्धो मुख्य एव साक्षात्संबन्ध एव च ग्रहीतुमुचित इति दिक् । णत्वाद्धित्वमिति । ननु पूर्वत्रासिद्धीयमद्वित्वे इति णत्वात्पूर्वमेव द्वित्वं युक्तम् । वाक् वाक्क् इति भाष्ये दाहरणसिद्धये वर्णद्वित्वे ऽपि तत्प्रवृत्तेरावश्यकत्वात् । अन्यथा चर्त्वस्यासिद्धत्वात् गस्यैव द्वित्वे ऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणापत्तिः । अवसाने चर्त्वस्यासिद्धत्वात् खर्परत्वाभावेन तस्य चर्त्वसंभावनापि न । न च कस्य द्वित्वे ऽपि अवसाने चर्त्वस्यासिद्धत्वाद्गकारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्रवणं दुर्वारमिति वाच्यम् । न मु ने इतिवत्पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कृते ऽपि प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये कर्त्तव्ये ऽसिद्धत्वं नेत्यर्थे इति न दोषः । एतेन द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यम् । संय्यन्तेत्यत्र त्रियकारकत्वार्थमिति वचनसामर्थ्येन वर्णद्वित्वे तदप्रवृत्तिरित्यपास्तम् । एतदवयुत्या ऽनुवादरूपत्वादिति चेन्न । पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कर्त्तव्ये ऽन्यदसिद्धं नेत्येवार्थो न तु द्वित्वस्याप्यसिद्धत्वं नेति तदर्थे इति णत्वोत्तर-

मेव द्वित्वमिति भावः । रोः सुपि ॥ अत्र खरीत्यनुवर्त्तते । तेन सप्तमी बहुवचनमेवात्र सुप् । एवञ्च खरवसानयोरिति सिद्धे इतरनिवृत्तिफलक एवैष विधिरित्याह रोरेवेति । विपरीतनियमस्तु न । हलो ऽनन्तराः संयोग इति निर्देशात् । द्वित्वे इति । अचोरहाभ्यामित्यनेन । अचो रहेत्यतो द्वे इति नादिनीत्यतो नेति च वर्त्तते तदाह । न द्वे स्त इति । झरो झरीति लोपस्तु वैकल्पिकः । प्रियचत्वार इति । आङ्गत्वात्तदन्तस्यापि चतुरनडुहोरित्याम् । गौणत्वे त्विति । अत्र यद्वक्तव्यं तन्नामीत्यत्रोक्तम् । यत्तु ष्णान्तेत्यत्र संख्यापदानुवृत्तेः तस्य च संख्याबोधकशब्दपरत्वात्प्रधानन्यायेन संख्यारूपार्थस्यानुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव न संख्यापदेन च संख्येयमुच्यते ऽतः संख्येयपरमपञ्चादौ तस्य प्राधान्यात् संज्ञा सिद्धा । यद्वा षडित्यन्वर्थसंज्ञेति न गौणे सेति । तन्न । प्रियपञ्चा द्रौपदीत्यत्र न षडिति डाप्निषेधानापत्तेः । आकडारसूत्रे भाष्ये ऽस्या डुसञ्ज्ञया व्यवहाराच्च । सर्वनामसंज्ञावदत्रोपसर्जनप्रतिषेधानारम्भाच्च । सर्वनामसंज्ञासूत्रस्थेन षड्भ्य इति सूत्रविषयभाष्येण विरोधापत्तेश्चेत्यलम् । कमलिति । तदाचष्टइति णिचीष्ठवद्भावाट्टिलोपे कर्त्तरि क्विपि णेरनिटीति णिलोपः । वस्तुतो लण्सूत्रे न हि पदान्ताः परे ऽणः सन्ति नन्वयमस्ति कर्तृ हर्तृ इति भाष्यात्, भोभगो इतिसूत्रे वृत्तव् करोति इति भाष्यस्यैकदेश्युक्तित्वात्, कमल् वृत्तवित्यादेरनभिधानमेवोचितम् । यान्तास्तु नैव सन्ति । क्विपि लोपोव्योरिति यलोपात् । णिलोपस्य स्थानिवत्त्वन्तु न, यलोपे तन्निषेधात् । प्रशानिति । शाम्यतेः क्विप् अनुनासिकस्येति दीर्घः । अयंशान्तिसामान्यतरवाचकः सत्त्ववाची । स्वरादिपाठेप्यस्य नाव्ययत्वम् । साम्यवाचिन्यसत्त्वार्थके तु स पाठः सार्थक इति दिक् । विभक्ताविति । अष्टन आ इत्यतो ऽनुवृत्तेरिति भावः । अकच्सहितस्यापीति । तन्मध्यपतितन्यायेन तस्यापि किंशब्दत्वात् । अङ्गनिमित्तत्वेनान्तरङ्गत्वादादेशात्पूर्वमकच् । यद्यपि निर्द्दिश्यमानपरिभाषया न प्राप्नोति । अत एव भिन्धकीत्यत्राकचि धित्वचप्राप्नोतीति भाष्ये पूर्वपक्षं कृत्वान्तरङ्गत्वाद्धित्वे ऽकजित्याद्युक्तम् । तथापि आवृत्त्याश्रयणेन साकच्कस्यादेश इति कैयटः । इदमो मः ॥ तदोः सस्सावित्यतो ऽनुवृत्तेराह साविति । इदोय् ॥ यः सावित्यतः साविति वर्त्तते । दश्च ॥ इहाष्टन इत्यतो विभक्तावित्यनुवर्त्तते साविदमोदस्यासंभवात् तदाह । विभक्ताविति । हलादाविति । आपीति वर्त्तते । हल्यशिति वक्तुं युक्तम् । अक इति पर्युसादिदं गौणे न प्रवर्त्तते इत्याहुः । नन्विदोन्त्यस्य लोपः स्यादत आह नानर्थके इति । इयमुपधासंज्ञा सूत्रे भाष्ये स्पष्टा, फलानामन्यथोपपादनेन भाष्ये प्रत्याख्या-

ता च। प्रत्याख्याने ऽनापीत्यतो ऽनित्यनुवर्त्त्य हलीति सप्तम्या षष्ठीं प्रकल्प्यान एवालोन्त्यस्येति लोपे पररूपे चेष्टसिद्धिर्बोध्या। ननु दीर्घापेक्षया लोपस्य नित्यत्वात्पूर्वं लोपे अभ्यामिति स्थिते ऽङ्गस्याकाररूपत्वेनादन्तत्वाभावाद्दीर्घो न स्यादित्यत आह। आद्यन्तवदिति। आदिरन्त्येनेति सूत्रोक्तरीत्याद्यन्तशब्दयोर्विशिष्टशक्त तया तत्प्रयुक्तकार्य्याण्यसहाये न स्यु रित्ययमारम्भः। एकस्मिन्निति। असहाये इत्यर्थः। तदादितदन्तयोः क्रियमाणं कार्यन्तदादौ तदन्तइवासहाये ऽपि स्यादित्यन्वयः। उपमेये सप्तमी दर्शनात्सप्तम्यन्तादिवार्थेवतिस्तदाह। आदाविवेति। एकस्मिन्नित्युक्तेर्दरिद्रातेरविर्णान्तलक्षणोञ्न। आदिवत्त्वफलमौपगवे ऽण आद्युदात्तत्वम्। कार्यस्य प्राधान्यादयमपि कार्यातिदेश एव तदाह। कार्यमिति। नन्विद ए इतिस्थिते स्मै भावात्परत्वादनादेशे सकृद्गताविति न्यायेन स्मै न स्यादत आह नित्यत्वादिति। स्मै आदेशे तु न अनादेशो हलि लोपेन बाधात्। लक्ष्यानुरोधेन बाधकाबाधितकृताकृतप्रसङ्गस्यैवात्र ग्रहणात्। अकोरित्यनयोः फलमाह। ककारयोगे त्विति। अव्ययसर्वनाम्नामित्यकचीति भावः। अस्यानवयवत्वे ऽपि तन्मध्यपतितन्यायात्तद्विशिष्टे प्राप्तिरिति बोध्यम्। इदमोन्वा॥ अनुदात्तत्वन्त्वाभ्यामित्यादावूडिदमिति सावेकाच इति वा विभक्त्युदात्तत्वाभावायोभयत्राप्यनुवृत्त्यपकर्षाभ्यामन्तोदात्तादित्यस्य संबन्धात्। एवञ्चाभ्यामित्यादि सर्वानुदात्ते एभिरग्ने प्रेणान्तदेषामित्यादौ तथा श्रवणात्। नन्वेवमप्यत्वे हलि लोपेनाभ्यामित्यादेरनुदात्तत्वेनैव सिद्धावशविधानं व्यर्थमत आह। साकच्चार्थमिति। शित्त्वात्सर्वादेश इति भावः। संज्ञोपसर्जनयोस्तु नेदम्। एतदस्त्रतसोरित्युत्तरसूत्रसाहचर्यात्। न च त्यदाद्यत्वेन सिद्धे ऽकारविधानमेव साकचि सर्वादेशार्थं भविष्यति किं शित्त्वेनेति वाच्यम्। अन्यार्थता पत्तेः। द्वितीयाटौ॥ पूर्वसूत्रादिदम इति एतदस्त्रतसोरित्यत एतद इति चानुवर्त्तते अनुदात्त इति च। विधातुमिति। विधानमत्राज्ञातज्ञापनमेव न तु प्रवर्त्तनाविषयत्वं तच्चेदम एवेति नाग्रहः स्पष्टञ्चेदं भाष्ये॥ सुगणट्स्विति। ङ्णोरिति टुक् तस्यासिद्धत्वाच्च जश्त्वम्। लोप इति। नकारलोप इत्यर्थः। न चात्र प्रत्ययान्तत्वादप्रत्यय इति निषेधेन प्रातिपदिकत्वाभावात्कथं नलोप इति वाच्यम्। पर्युदासे यथोद्देशेन सिद्धेः। न च कार्यकालपक्षे दोषः। व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषप्रदानस्य क्वाप्यदृष्टत्वात्। ध्वनितञ्चेदं प्रगृह्यसंज्ञाप्रकरणे भाष्ये। न च प्रसज्य प्रतिषेधे दोषः। तत्पक्षे लोपेनेव जातनिवृत्तेरपि तेन वक्तुं शक्यत्वादिति वाच्यम्। न ङि संबुद्धो-

रिति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय निषेधाप्रवृत्त्या दोषाभावात् । स्पष्टञ्चेदमर्थवत्सूत्रे भाष्ये । न ङि ॥ ङौ तु च्छन्दसीति । राज्ञनीत्यादौ भत्वान्नलोपाप्राप्तेः । राजनीवाचरतीत्यर्थे ऽधिकरणाच्चेति क्यच् तु लोके नास्त्येव । अनभिधानात् । अत एव परमे व्योमन्नित्यादावयस्मयादित्वाद्भत्वेन सूत्रस्थङिग्रहणप्रत्याख्यानं भाष्योक्तं सङ्गच्छते इति भावः । सामर्थ्यादिति । न लुमतेति निषेधानित्यत्वप्रतिपादनद्वारेत्यर्थः । एतदनित्यत्वबललब्धमेव वा नपुंसकानामिति बोद्धम् । न च परमेव्योमन्नित्यत्र घोषत्वाल्पप्राणत्वादिसादृश्येन पूर्वसवर्णे दकारे स्वादिष्विति पूर्वस्यपदत्वात्प्राप्तनलोपनिषेधेनेदं चरितार्थमिति वाच्यम् । अन्तरङ्गानपीति न्यायेन संयोगान्तलोपस्यासिद्धत्वेन च पूर्वसवर्णे ऽपि लुक एव प्राप्त्या प्रक्रियालाघवाय लुक एवौचित्यमित्याशयात् स्पष्टञ्चेदं भाष्ये । ङावुत्तरपदे इति । एतद्बललब्धमेव ङौतु छन्दस्युदाहरणमित्युक्तम् । न चेति । पञ्चमीसमासेन प्राप्तिः । षाष्ठीमिति । बाह ऊडित्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः । कार्यकालपक्षे ऽपि त्रिपाद्यान्तदप्रवृत्तिः प्रागुक्ता । जञोर्ज्ञ इति । जञयोगे लोकवेदसिद्धताद्दृशध्वनेर्लिपिविशेषस्य चानुवादकमभियुक्तवचनं न त्विदं वर्णान्तरं शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाभावात् । अत एव तज्ज्ञानमित्यादौ श्चुत्वसिद्धिः । सुब्विधाविति । सर्वविभक्त्यन्तावयवकः समास इति भाष्ये स्पष्टम् । विधिशब्दो भावसाधनः कर्मसाधनश्च । तत्र स्वरादिविषये भावसाधनः । सुब्विषये कर्मसाधनः कृतीत्येतत्सामर्थ्यात्तुक एव विशेषणमित्याह कृति तुगिति । पूर्वत्रासिद्धमित्येव सिद्धे ऽन्यनिवृत्तिफलकोऽयं तदाह । नान्यत्रेति । अन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव नियमत्वम् । अत एव पस्पशायां भाष्ये पञ्च पञ्चनखा भक्ष्या इत्यत्र भक्ष्यनियमे ऽभक्ष्य प्रतिषेधो गम्यत इत्युक्तं तदाह । इत्यसिद्धत्वादिति । इत्यन्यत्र विस्तरः । सुब्विधिशब्देन सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यकविधेर्ग्रहणम् । एतेन दण्डिष्वित्यादौ षत्वरूपसुप्विधौ अप्राप्तासिद्धत्वविधानार्थमिदमित्यपास्तम् । वैरूप्यापत्तेश्च । संज्ञाविधौ दण्डिदत्तौ दत्तदण्डिनौ अत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः । दृश्यते त्वनियमः । असिद्धत्वे तु अघित्वात्सिद्धमिति । न च पूर्वनिपाते नलोपो नलोपेवा घित्वे पूर्वनिपात इत्युक्तम् । यस्य पूर्वपदत्वे घित्वं भवति तत्पूर्वमेव प्रयोक्तव्यमिति सूत्रार्थान्न दोषः । न च घित्वे बहिरङ्गतया नलोपो ऽसिद्ध इति वाच्यम् । संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् । कृतितुग्विधौ वृत्रहभिः । कृतीति किम् । वृत्रहच्छत्रम् । अस्मादेव संज्ञाकृतं बहिर्भूतनिमित्तकसंज्ञाकृतञ्च बहिरङ्गत्वं

परिभाषायां नाश्रीयते । अन्यथा वृत्रहभिरित्यादौ बहिर्भूतभिन्निमित्तकप-दत्वनिमित्तो नलोपोसिद्धः स्यादिति तद्वैयर्थ्यं स्यात् । भाष्ये तु सन्निपातप-रिभाषया वृत्रहभिरित्यादौ तुकं व्यावर्त्येदं प्रत्याख्यातम् । पदत्वद्वारा लोपस्य भिस्सन्निपातनिमित्तकत्वात् । सन्निपातनिमित्तकनलोपविषयाणां वृत्रहधन-मित्यादीनामनभिधानमिति तदाशयः । तदभावे कृतीत्यपि व्यर्थमेव । न च सन्निपातपरिभाषया तुग्मात्रव्यावृत्तौ प्राप्तायां नियमार्थं कृतीति कृति तुगेव नान्यस्तु भवत्येवेति वाच्यम् । वृत्रहच्छत्रमित्यत्र नलोपस्य सन्निपातलक्षणत्वा-भावात् इति दिक् । राजनीति । विभाषा ङिश्योरित्यल्लोपविकल्पः । प्रतिदिवेति । कनिनन्तम् । हलि च ॥ र्वोरुपधाया इति सूत्रं सिपि धातो-रित्यतो धातोरिति चानुवर्त्तते । र्वोरिति च धातोर्विशेषणम् । पदस्येति संब-ध्यमानमपीक एव व्यधिकरणं विशेषणं तद्ध्वनयन्नाह । प्रतिदीव्न इति । अत्र वा-न्तस्य भत्वाभावाच्च भकुर्च्छुरामिति निषेधो न । धतोः किं । अग्निः करोति । न संयोगा ॥ अन्तग्रहणं स्पष्टार्थम् । संयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात् । सर्वनामस्थाने चासंबुद्धावित्येव सिद्धे नियमोयमित्याह । शार्ङ्गेवेति । उपधाया इति । तेनानुनासिकस्येत्यस्यापि नियम इति भावः । अत्र सर्वनामस्थानग्रहणं न संबध्यते । तेन वृत्रहणी वृत्रघ्नः वृत्रघ्नीत्यादौ नानुना-सिकस्येति दीर्घः । इति निषेधे इति । एतत्फलभूते निषेधे इत्यर्थः । शिस्योरिति वक्तव्ये सौ चेति योगविभाग उत्तरार्थः । हो हन्ते ॥ ञ्णित्र-कारा हस्यैव विशेषणम् । तत्र ञ्णिद्विषये येननाव्यवधानन्यायेन द्वाभ्यां व्यवाये घातक इत्यादावेव न तु हननीयते शर्वुन्यनेकव्यवधाने । इदं धातोः कार्यमुच्यमानमिति परिभाषया धातु संशब्दनेन विहित प्रत्ययएव । तेन वृत्रहणमाचष्टे वृत्रहयतीत्यादौ न । नतु परे वृत्रघ्नइत्यादावेव स्थानिव-त्त्वकृतव्यवधानेपि श्रौताव्यवधानसत्वात् । न तु हननमित्यादौ श्रौतव्यव-धाने इति स्पष्टं भाष्ये । वृत्रघ्न इत्यादौ णत्ववारणाय हन्तेरत्पूर्वस्येति विभज्य व्याचष्टे । हन्तेरिति । उपसर्गादसमासेपीत्यतउपसर्गादिति वर्त्तते रषाभ्यामिति च तात्स्थ्यात्ताच्छब्द्यम् इत्याह । उपसर्गस्यादिति । प्रकृ-तोपयुक्तमाह । अत्पूर्वस्येति । अत इति सिद्धे पूर्वग्रहणं स्पष्टार्थम् । अत्रो-पसर्गादित्यस्य निवृत्त्या णत्वमात्रस्यायं नियम इत्याह । एकाजुत्तरेति । णत्वमपीति । अपिना प्रातिपदिकान्तेत्यस्य कुमति चेत्यस्य च सङ्ग्रहः । बाह्यसामान्यचिन्ताश्रयणात्सर्वबाधः । इदमत्पूर्वग्रहणं हस्यानिककवर्गा-भाववद्धन्तेरुपलक्षणम् । अतो बहुवृत्रहाणीत्यत्र प्राघानि प्रघनाघन इत्यत्र च

नदोष इत्यन्यत्र विस्तरः । यत्तु कार्यकालपक्षे बहिरङ्गदीर्घासिद्धत्वाद्बहुवृत्रहाणीत्यादौ न दोषः प्राघानीत्यादौ यथोद्देश एव लक्ष्यानुरोधात् इति तन्न । तत्पक्षेपि त्रिपाद्यान्तत्परिभाषाया अप्रवृत्तेरुक्तत्वात् । प्रघनाघन इत्यत्र दोषाच्च । माधवेनोक्तमिति । वृत्रघ्नो वृत्रघ्ण इति रूपद्वयन्तेनोक्तम् । तद्भाष्येति । कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः । वृत्रघ्नः सुघ्नः प्राघानि हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्त्तव्यं भवतीति भाष्ये इत्यर्थः । अत्पूर्वग्रहणस्य तादृशोपलक्षितार्थत्वे मानाभाव इति तदाशयः । अनिनिति । एतच्च येन विधिरिति सूत्रे भाष्ये स्पष्टम् । अन्यत्र तु अलैवानर्थकेन तदन्तविधिर्न तत्समुदायेनेति हन्ग्रहणे प्लीहन् ग्रहणं न । मघवा ब ॥ षष्ठ्यर्थे प्रथमा तृ इति च वर्त्तते । ऋदिदिति । तेनानेकाल्त्वाभावान्न सर्वादेशः । उगिदचाम् ॥ अचामित्यञ्चुधातोर्ग्रहणं व्याख्यानात् । नलोपिन इति । अकारलोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वादिति भावः । अत्रोगित् झलन्त एव व्याख्यानात् । तेन शमी शमिनावित्यादौ नातिप्रसङ्ग इति युवोरनाकौ इत्यत्र भाष्ये स्पष्टम् । उपधादीर्घ इति । सर्वनामस्थाने चेत्यनेन । असिद्धत्वाभावकल्पने मानमाह । तथा चेति । निपातनादिति । वनो र चेति सूत्रेभाष्ये तु मघवन्शब्दो ऽव्युत्पन्नं प्रातिपदिकमित्युक्तम् । मघशब्दादिति । धनार्थादित्यर्थः । भाषायामपीति । अपिना छन्दसि मघवानमीमहइति मद्योदात्तं च नेति बोद्धम् । आकरे इति । केशाद्व इति सूत्रे कैयटे इत्यर्थः । एवञ्च मतुप्त्वसन्तस्येति दीर्घसत्वेन त्रादेशे तदभावे फलभेदे प्रत्याख्यानासंभव इति भावः। नन्वेवमप्यन्तोदात्तस्य त्रादेशे वकाराकारस्योदात्तत्वं मतुपि तु ह्रस्वनुड्भ्यामिति प्राप्तस्य मतुबुदात्तत्वस्य नगोश्वचिति प्रतिषेधेन पित्त्वादनुदात्तत्वे घकाराकारस्योदात्तत्वमिति फलभेदोस्त्येवेति चेन्न । त्रादेशपक्षे दीर्घवत् बहुलग्रहणेन घकारोदात्तत्वस्याप्यङ्गीकारात् । तत्रैव मानान्तरमाह । हविरिति । मघवानृजीषीत्यस्याप्युपलक्षणमिदम् । अर्वणस्तृ मघोनश्च न शिष्यञ्छान्दसं हि तत् । मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनादित्यत्र वार्त्तिकरीत्या मघवन्शब्दस्य लोके ऽसाधुत्वं लभ्यते । तथा च तृज्वत्सूत्रे भाष्यम् । अविशेषविहिता अपि शब्दा नियत विषया दृश्यन्तइत्यन्यत्र विस्तरः । छन्दस्येवेति । न च वनिबन्तस्य संप्रसारणे यस्येति लोपे मघोन इत्यसिद्धिः । व्याश्रयत्वान्नाभीयासिद्धत्वं लोपे संप्रसारणस्य नापि बहिरङ्गासिद्धत्वम् । तस्या वाह ऊठसूत्रस्थतयाभीयत्वेनाभीयान्तरङ्गस्य तद्दृष्ट्या ऽसिद्धत्वेनात्र तस्या अप्रवृत्तेः । अन्तरङ्गशास्त्राश्रय एव तदाश्रय इति समानाश्रयत्वमव्याहतमिति वाच्यम् । निपातितान्तोदात्तमघवन् शब्दमादाय सिद्धेः । एकादेश उदात्तेना-

दात्त इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाभावात् । छन्दस्यापाद्यरूपाभावान्नानिष्टापादनम् । आन्तोदात्तं त्विति । कन्यन्तत्वादव्युत्पन्नत्वाद्वा तत्त्वम् । श्वन्नन्तानामिति । अल्लोपो न इत्यपकृष्यते तत्र नकारं प्रश्लिष्य नान्तान्नन्तानामित्यर्थः । तेन मघवन् इत्यादौ नाल्लोपसंप्रसारणे । धीवरीत्यादौ च नाल्लोपः । स्पष्टञ्चेदं कल्कसूत्रे भाष्ये । परे तु नकारप्रश्लेषाभावे ऽपि न दोषः । अलो ऽन्त्यस्येत्यस्य सत्त्वेनानः स्थानित्वाभावेन स्थानिवत्सूत्रेणान्नन्तत्वालाभात् । सर्वं सर्वपदादेशा इत्यनेनापि मघवन्शब्दस्यैव स्थानित्वं नानः । अर्द्धविकारे प्रत्यभिज्ञाभावान्नैकदेशविकृतन्यायावसरो ध्वनितञ्चेदं श्वयुवेत्यत्र भाष्ये इत्याहुः । मघवतीति । पुंयोगेन स्त्रियां वृत्तावुगितश्चेति ङीप् । विभक्तौ लिङ्गविशिष्टाग्रहणाच्चुम्न । शुन इति । ननु संप्रसारणे वार्णादाङ्गस्य बलीयस्त्वेन पूर्वत्वं बाधित्वाल्लोपेन इति लोपे शुनेति सर्वानुदात्तः स्यात् । उदात्तनिर्वृत्तिस्वरेणान्तोदात्तं वा स्यात् । पूर्वरूपेणाद्युदात्तमिष्यते । तत्र हि वकारस्थानिकोकारस्य स्रंसनधर्महल्स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततया ऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यैकादेशस्योदात्तत्वात् । किं च लोपे स्थानिवत्त्वेन यणप्रसङ्गः । अतः शुन इत्यादिनिर्देशैस्तद्वारणे तु बहुश्वा बहुमघवा बहुयुवेत्यत्रान उपधालोपिन इति ङीप्विकल्पापत्तिः । मघोन इत्यादावन्तोदात्तप्रकृतिके उदात्तनिर्वृत्तिस्वरापत्तिश्चेति चेन्न । वार्णपरिभाषाया अनित्यत्वेन क्व चिदप्रवृत्त्या ऽदोषात् । श्वन्शब्दे आभीयतया संप्रसारणासिद्धत्वेन न संयोगादिति निषेधाच्च । न संप्रसारणे ॥ अनुवृत्त्यैव निषेद्धसमर्पके लब्धे पुनः संप्रसारणग्रहणसामर्थ्यात्तन्मात्रनिषेध इति दूरस्थस्यास्य व्यथो लिटीत्यस्य च निषेधः । न च व्यथिव्यद्यादावस्य चारितार्थ्येन यून इत्यादौ पूर्वं सवर्णदीर्घरूपैकादेशे तस्याचः परस्मिन्निति स्थानिवत्त्वेन संप्रसारणत्वे ऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात्कथं निषेध इति वाच्यम् । व्यथ इति सूत्रे यग्रहणेनैव सिद्धौ संप्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वेन व्यवहिते ऽपि प्रवृत्तेर्यूनस्तिरिति निर्देशाच्चेत्याशयेनाह इति यकारस्येति । न च कार्यकालपक्ष इग्यण इत्युपस्थितस्य पदैकवाक्यतयान्वये निमित्तस्य यणान्वयेन येननाव्यधानन्यायेन पूर्वस्य संप्रसारणप्राप्तेरिदं सूत्रं व्यर्थमिति वाच्यं । तत्पक्षे ऽपि सञ्ज्ञासूत्राणां वाक्यभेदेनैव संबन्धस्योक्ततया विधायकेषु यण इत्यस्याभावात् । अत्र चेदमपि ज्ञापकं बोद्धव्यम् । ननु सकृत्प्रवृत्त्यैवोभयोः संप्रसारणे जाते निषेधो व्यर्थो निमित्तत्वानुपपत्तिश्चेत्यत आह । अत एव ज्ञापकादिति । तदुक्तं भाष्ये इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभि-

प्रायो गम्यते । एतदेव ज्ञापयति परस्य पूर्वं भविष्यतीति । लक्ष्ये लक्षण स्येति न्यायस्य तु नायं विषयः । कार्याश्रयवर्णभेदेन लक्ष्यभेदात् । अर्व-णस्तृ ॥ न तु साविति । पर्युदास एव तूचितः प्रत्ययत्वेन च सादृश्यम् । अनञ इति बहुव्रीहिर्वाजमर्वेत्स्विति प्रयोगात् । तत्पुरुषे ह्यनञः परस्यार्वण इत्यर्थे ऽत्र न स्यात् । सुरत्र प्रथमैकवचनम् । अनञः किमिति । अनञ इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः । उत्तरमनर्वेति । यज्वन्शब्दसदृशो ऽनर्वन्शब्दो व्यावर्त्य इत्यर्थः । नन्विह निरनुनासिकोच्चारणे ऽपि तपरसूत्रस्यानणीव विधीयमाने ऽपि विद्यर्थत्वात्तस्यान्तरतम्यादनुनासिकः स्यात् तपर सूत्रे ऽप्रत्ययग्रहणानुवृत्तौ च मानाभावादत आह । आआदिति । विशेष्यविशेषण-भावेनान्वयात्र सर्वादेश इति भावः । भाष्ये त्वनुनासिकविधाने प्रतिपत्ति-लाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणात् शुद्धस्यैव विधानमित्युक्तम् । के चित्तु इदं सर्वं गुणाभेदका इति पक्षे वृद्धिरादैच्सूत्रभाष्यसंमते सिद्धान्त-भूते गुणा अभेदका इति पक्षे जातिपक्षे च तत्प्राप्तस्यापि सवर्णग्रहण-स्याप्रत्ययग्रहणेन निषेधेनादोषात् । अत एव भाष्ये तपरस्तत्कालस्येति प्राप्नोतीत्युक्तम् । अप्रत्यय इति वाक्यभेदेन सर्वं प्रतिषेधकम् । अण् ग्रहणस्य च तत्रासंबन्ध इति तदाशयः । अत एव भाष्ये भाव्यमानेन सवर्णानाङ्ग्र हणं नेत्येव पठितं न त्वणेति । एतदेवाभिप्रेत्याणुदित्सूत्रे ऽनया परिभा-षयाऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्याप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम् । तेन च तस्यावश्यकत्वं सूचितम् । अप्रत्ययग्रहणस्य मदुक्तरीत्या व्याख्यानञ्च सूचितम् । तेन जातिग्रहणप्राप्तस्य गुणाभेदकत्वपक्षप्राप्तस्यानया ऽनणसा-धारण्येन निषेध इति सूचितम् । वस्तुतो ऽणुदित्सूत्रस्याप्रत्ययग्रहणज्ञापक-त्वपरभाष्यस्यैकदेशानुमतिद्वारा परिभाषा बोध्यतइत्यर्थः । प्रतीयतइत्यस्य विधीयतइत्यर्थाप्रसिद्धया कैयटोक्तव्याख्या चिन्त्या । परिभाषायां सवर्णपदेन समानजातीयो भिन्नधर्मा उच्यते । तेन जशादिविधौ जत्वादिजात्याश्रयसर्वज-कारादिग्रहणसिद्धिरित्याहुः । एतेन पथीयतेः क्विपि पन्था इत्यादीत्यपा-स्तम् । अत्र शुद्धार्थन्तदनुच्चारणस्यावश्यकत्वेन भाष्यासङ्गतेः । तस्मात्तदन-भिधानमेवोचितम् । न च अदित्येवास्तु नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धिः पररूपन्तु न । पथिमथ्यृभुक्षां लोपः, भस्य टेः, इतोत्सर्वनाम-स्थाने, इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्यादिति वाच्यम् । ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारोच्चारणात् । इतोत् ॥ आदित्यनुवृत्त्यैव सिद्धे ऽद्वचनं ऋभुक्षणामित्यादौ वा षपूर्वस्येति दीर्घविकल्पे पक्षे ह्रस्वश्रवणा-र्थम् । इत इत्यदिति च तपरत्वं मुखसुखार्थम् । एरदित्युक्तौ ततो लाघवाभा-

वात् । अन्यथा विधेयेपि तपरकरणात्कुरुतइत्यादौ गुणाभाववत्पन्यानावित्यादौ दीर्घाभावापत्तिरित्यन्यत्र विस्तरः । थो न्थः ॥ थो नुडिति नोक्तम् । इत्संज्ञाया आद्यन्तावित्यस्य चानुसन्धाने प्रक्रियागौरवात् । भस्य टेः ॥ भस्य किम् । पथिभ्याम् । संबुद्धौ नपुंसकानामिति । इदं न लुमतेति निषेधानित्यत्वमूलकमित्युक्तम् । यद्यपि भाष्ये वा नपुंसकनामित्येव पठितं तथापि सूत्रे ङिग्रहणस्य प्रत्याख्यातत्वेन हे चर्मन् हे चर्मेति संबुद्धावेवोदाहरणत्वेन तावन्मात्रविषयतास्येति भावः । ष्णान्ता ॥ विशेष्यसाकाङ्क्षात् स्त्रीलिङ्गनिर्देशात् प्रकृतं संख्येत्याकृष्यते । संख्याशब्देन च संख्याप्रकारकबोधजनकाः पञ्चादयो गृह्यन्ते । संख्येतिशब्दे बहुगणडतिषु च तदन्तत्वासंभवात्तदाह । संख्येति । सन्निपातेति । बहिरङ्गासिद्धत्वं न । संज्ञायाः कार्यापेक्षत्वेन समत्वात् । स्पष्टञ्चेदं भाष्ये । नोपधा ॥ नलोपस्यासिद्धत्वान्नामीति दीर्घाप्राप्तेरयमारम्भः । नामीत्यस्याङ्गविशेषणतैव न्याय्या । नामः प्रत्ययत्वादेवञ्च पञ्चानामित्यादौ पकाराकारस्य दीर्घवारणायोपधाग्रहणम् । नेति किम् । चतुर्णाम् । नामि किम् । चर्मणाम् । नलोप इति । ब्रुवः पञ्चानामिति लिङ्गान्न सन्निपातपरिभाषाविरोधः । अष्टन आ ॥ अनणत्वाचानुनासिक इति भाष्ये स्पष्टम् । जातिग्रहणेन गुणाभेदकत्वेन तु न सः । भाव्यमानत्वात् । शुद्धोच्चारणादिति तु नात्र वक्तुं शक्यम् । रायो हलीत्युत्तरार्थन्तस्य चारितार्थ्यात् । प्रश्लेषेणापि न निर्वाहः । वाच्यवृत्त्यानुनासिकव्यावृत्तेस्तेनालाभात् । प्रत्युत तत्रापि गुणाभेदकत्वादेर्दुर्वारत्वेनान्तरतम्यादनुनासिकस्यैव प्राप्तेः प्रश्लेषस्य पर्यायेण सकलाकारविधानार्थत्वं स्यात् । एवमन्यत्रापि बोद्ध्यम् । रायो हलि इत्यतो हलीत्यपकृष्यते । अष्टाभ्य औश् ॥ उडिति तु नोक्तम् । सकारस्योकारे अष्टा अ उ इति स्थिते इणङिशीनामाद्गुणः सवर्णदीर्घत्वादिति न्यायेनान्तरङ्गत्वात्सवर्णदीर्घे तत आद्गुणे ऽष्टावित्यस्यासिद्ध्यापत्तेः । हलीत्यपकर्षे कृताकारादित्यनुपपन्नमत आह । कृतात्वेति । कृतात्वानुकरणमित्यर्थः । लक्षणवशसंपन्नत्वे हि तस्य वैकल्पिकतया लाघवादष्टभ्य इत्येव वदेत् इति भावः । ज्ञापयतीति । अयं भावः । हलीत्यपकृष्यमाणं वाक्यभेदेन पुनर्विधानार्थम् । तेनाष्टन इत्यस्य क्वचिदत्त्वपि प्रवृत्तिरिति । आत्वमिति । आत्वमात्रमित्यर्थः । सूत्रे इति । दीर्घान्तादष्टनः परा ऽसर्वनामस्थानविभक्तिरुदात्तेति तदर्थः । ज्ञापकादिति । तद्धि अष्टभिरिति ह्रस्वे ऽन्तोदात्तव्यावृत्त्यर्थम् । एवञ्च ह्रस्वव्यावृत्त्यर्थङ्क्रियमाणं दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम् । न चाष्टाभिरित्यत्र सावकाशस्याष्टन इति सूत्रस्याष्टभिरित्यत्र परत्वात् झल्युपोत्तममित्यनेन बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तौ

व्यर्थमेतत् न ह्यष्टाभिरित्यत्र झल्युपोत्तममिति प्राप्नोति । कार्यकालपक्षे ऽनान्तत्वेन षट्त्वाभावात् । अल्विधित्वेन स्थानिवत्त्वाभावाच्चेति वाच्यम् । पुनः प्रसङ्गविज्ञानबोधनद्वारैतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारा वा तद्विकल्पे ज्ञापकत्वमित्याशयादित्यन्यत्र विस्तरः । अष्टानामिति । हलीत्युक्तेरादौ नुट् तत आत्वम् । यत्तु सन्निपातपरिभाषया ऽत्र नात्वं किन्तु नोपधाया इति दीर्घे नलोपः । अन्तोदात्तत्वन्तु षट्त्रीत्येव सिद्धम् । नलोपे तु न सन्निपातपरिभाषा नलोपस्यासिद्धत्वादिति । तन्न । पूर्वत्र कर्त्तव्ये नलोपासिद्धत्वेपि तत्र कृते ऽसिद्धत्वे मानाभावात् । सन्निपातस्याशास्त्रीयत्वेन तस्य नलोपासिद्धत्वेनालाभाच्च । आरोपितासिद्धत्वेपि वस्तुतो नलोपे तद्विघातस्याजायमानत्वेन नलोपे ऽपि तस्या दुर्वारत्वाच्च । अत एव गव्यिता नाव्यितेत्यादौ सन्निपातपरिभाषया यलोपो न । अन्यथा यस्य हल इति यलोपस्य बहिर्भूतवृज्निमित्तकत्वेन बहिरङ्गतयान्तरङ्गावादेशं प्रत्यसिद्धतया निमित्तविघाताभावः स्पष्ट एव । तस्मान्नलोपस्यापि परिभाषानित्यत्वेनैव साधुतया तस्यासिद्धत्वादात्वमेव युक्तन्तदनित्यत्वेन । किं च षट्सन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वम् । स्थानिवद्भावेन कृतात्वेपि षट्त्वसत्त्वात् । कार्यकालपक्षे तत्तद्विध्येकवाक्यतापन्नषट्त्वस्य बहिरङ्गतयात्वे कृते ऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादिति हलीत्यपकर्षः । दीर्घग्रहणाज्ज्ञापकादाकारान्तस्य षट्संज्ञाश्रयणे ऽत्र यथोद्देशस्यैवाश्रयणेनान्तरङ्गत्वात्पूर्वं षट्त्वे नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यलधर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे च प्रतिपत्तिगौरवमिति बोध्यम् । वृत्याद्यनुसारेणाह । गौणत्वे त्वित्यादि । स्थानिवद्भावादिति । पूर्वत्रासिद्धे इति तु तस्य दोष इत्यनेन निषिद्धमिति भावः । कार्यकालपक्ष इत्यादि तु प्राचामनुरोधेनेत्युक्तम् । प्राधान्यएवेति । बहुवचननिर्देशात् । एवञ्च गौणे आदेशाप्रवृत्तौ तज्ज्ञाप्यात्वमपि नेति भावः । परे तु ष्णान्तेति सूत्रे भाष्ये अष्टानामित्येतत्सिद्धये हलीत्यपकर्षमुक्त्वा तत्र पक्षे प्रियाष्टौ प्रियाष्टा इति न सिद्ध्यति प्रियाष्टानौ प्रियाष्टान इति प्राप्नोति इति शङ्किते यथालक्षणमप्रयुक्ते इति समाहितं तत्र यथालक्षणमिति प्रतीकमुपादाय यस्य विशिष्टप्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिस्तद्यथालक्षणमनुगन्तव्यन्तदत्र मा भूदात्वमित्यर्थं इत्येकमर्थमुक्त्वा नैव वा लक्षणमप्रयुक्ते वर्त्तते । प्रयुक्तानामेव लक्षणेनान्वाख्यानादिति व्याख्यान्तरमुक्तम् । तत्रान्त्यव्याख्यानमेव न्यायः । अप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणाप्रवृत्तेरित्यर्थसङ्गतेः । आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषासङ्गतिः प्रयुक्तेपि लक्षणानतिक्रमात् ।

प्रयुक्तानामिदमन्वाख्यानमित्यन्यत्र भाष्योक्तेश्च । किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इत्थमेव व्याख्योचिता । एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्याच्च । न वेति सूत्रे भाष्ये पक्षभेदेनैकस्यैव साधुत्वासाधुत्वयोस्तिरस्काराच्च । अत एव हल्ङ्यादिसूत्रादात्वस्याप्रयुक्ते लक्षणाभाव इत्येव व्याख्यादृता कैयटेन नाम्रेडितस्येति सूत्रेपि कैयटः प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावेनप्रवृत्तिरिति । एवञ्चैषामनभिधानमेवोचितम् । अत एवाष्टाभ्य औशिति सूत्रे भाष्ये विभाषा आत्वं यदयमात्वभूतस्य ग्रहणङ्करोति अष्टाभ्य इति अन्यथा अष्टन इत्येव ब्रूयादित्युक्तम् । कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव । एवञ्च तत्प्रयोगविचारः सर्वोपि निष्फल एवेत्याहुः । निरुपपदादिति । नुमोऽसमासएव विधानेन सोपपदे चोः कुरिति कुत्वेनैव सिद्धत्वेन क्विनि क्विपि च विशेषाभावादिति भावः । ककाराविति । इदमुपलक्षणं उच्चारणार्थकारस्यापि । ककारो गुणप्रतिषेधार्थः । नकारः क्विन्प्रत्ययस्येत्यत्र विशेषणार्थ इति भाष्ये स्पष्टम् । सन्निहिते इति । तत्फलन्तु णिजादीनां संज्ञाभावः । अतिङ् किम् । रुरुदिवेत्यादौ नेड्वशि कृतीति निषेधो मा भूत् इति । ज्ञापकेन निर्वाहस्तु व्याख्यानादुरं करणमिति न्यायाननुगृहीत इति सूत्राशयः । युजेर ॥ उगिदचामित्यतः सर्वनामस्थानद्दितो नुमित्यतो नुमिति चानुवर्त्तते । क्विन्प्रत्यय ॥ प्रत्ययग्रहणसामर्थ्यादतद्गुणसंविज्ञानो बहुव्रीहिः । न च तदभावे वस्य कुत्वापत्तिः । तथा सति क्विनो घ इत्येव वदेत् । नशेर्वेत्यत्र घानुवृत्तावप्यदोषादिति बोद्ध्यम् । चोः कुः ॥ स्कोरित्यतोन्तइति झलो झलीत्यतो झलीति चानुवर्त्तते पदस्येति चाधिकारः । कुत्वस्यासिद्धत्वादिति । अतद्गुणबहुव्रीह्याश्रयणात्प्राप्तिः । सुयुगिति । सत्सूद्विषेति क्विप् । धातुपाठेति । व्याख्यानादिति भावः । युगिति । क्विप् चेति क्विप् । इहेति । सृजिदृशोरिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात्काम्यच्सूत्रे भाष्ये उपयट्काम्यतीति प्रयोगात्क्विन्प्रत्ययस्येति कुत्वं नेत्यर्थः । परिमृडिति । धातोरुच्यमानं कार्य्यन्तत्प्रये इति परिभाषया ऽत्र सुप्निमित्तिका मृजेर्वृद्धिर्न । क्विन्निमित्तिका तु क्ङितिचेति निषेधाच्च । परौ व्रजेः । क्विब्वचीत्युणादिपठितमिति मते ततः क्विप्दीर्घावनुवर्त्तेते व्याख्यानाच्च ताभ्यां पदान्तइत्यस्यासंबन्धः किन्तुषेणैवेत्याह । क्विबित्यादि । विश्वस्य ॥ ढ्रलोपइत्यतो दीर्घ इति वर्त्तते । ननु षत्वादीनामसिद्धत्वेन राट्शब्दपरत्वाभावो ऽत आह । पदान्तेति । तेन विश्वराजावित्यादौ न विश्वाराड्भ्यामित्यत्र च भवति । आदित्यविश्ववसव इत्यत्र तु न दीर्घः । नरे संज्ञायामित्यतः संज्ञापदापकर्षणात् । स्कोः सं ॥ झलो लोपः संयोगान्तलोप इति

भाष्योक्तेरत्र झल इत्यस्यासंबन्धः । तेन झल्परयोः स्कोर्लोप इति नार्थ इत्यन्यत्र प्रपञ्चितम् । झलीत्यनुवर्त्तमानं झलादिप्रत्ययपरं झलो झलीत्यत्रोदः स्यादित्यादेशेष तदर्थकतयार्थाधिकारात् । तेन पृथक्स्याता पयःस्थितिरित्यादौ न दोषः । सडीति वार्तिकाच्च सनस्सकारमारभ्यामहिङो ङकारात्सडिति प्रत्याहारः । भूयास्तामित्यादौ न व्यञ्जनपरस्येति न्यायेन लोपाभावेपि न क्षतिः । के चित्त्वप्रत्यये संयोगादिलोपप्राप्तियोग्योदाहरणानामनभिधानमेवोचितम् सडीति वक्तव्यं काष्ठशक्स्यातेति वार्त्तिकस्य प्रत्याख्यानपरेण काष्ठशगेव नास्ति कुतः काष्ठशक्स्यातेति भाष्येण तथैव बोधनादित्याहुः । प्रत्याख्यानमेकदेश्युक्तिः सडीति वक्तव्यमेवेति परे । चोः कुरित्येतत्पत्वेनापवादत्वाद्बाध्यते क्विन्प्रत्ययस्येत्यस्य तु क्विन्विधानसामर्थ्यादेव न बाध इत्याह । क्विन्नन्तत्वादिति । ऋत्विक्शब्दो यज्ञसंबन्धिपुरुषविशेषे रूढः । त्यदादीनामित्यनुवृत्तेराह । त्यदादीनामिति । तेनातप इत्यादौ न । तदोः किम् । या । तारिति तु नोक्तम् । अनेपेत्यादौ नस्याप्यापत्तेः । न च लुटो बहिरङ्गत्वेनासिद्धत्वम् । बहिर्भूतसुनिमित्तकत्वेनास्यैव बहिरङ्गत्वात् । इदञ्च तस्माल्लुङ्चीति सूत्रे भाष्ये ध्वनितम् । सौ किम् । तौ । अत्वसत्वे नेति । गणकार्यत्वादिति भावः । ङे प्रथम ॥ युष्मदस्मद्भ्यां ङसोशित्यतो युष्मदस्मद्भ्यामिति वर्त्तते । ङे इति पृथक्पदम् । अत एव प्रथमयोरित्युच्यते कयोः प्रथमयोः विभक्त्यो,र्वचनयोस्तु न ग्रहणं शसोनेति लिङ्गादिति भाष्यं सङ्गच्छते । त्वाहौ ॥ यद्यपि युष्मदस्त्वादेशस्त्वमावेकवचनइति सिद्धः तथापि युष्मानतिक्रान्तोऽतित्वमित्यर्थमत्र विधानम् । न चैवं तत्रास्य चारितार्थ्यात्केवले परत्वात्त्वमाभ्यां भाव्यमिति वाच्यम् । त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधत इत्यस्य वक्ष्यमाणत्वात् । युष्मदस्मदोरनादेशइत्यतो युष्मदस्मदोरिति वर्त्तते । शेषे आत्वयत्वयोः प्रागुक्तत्वेन तद्विषयातिरिक्तविभक्तिरिह शेषशब्दार्थस्तदाह । आत्वयत्वेत्यादि । स्पष्टञ्चेदं युष्मदस्मद्भ्यां ङस इत्यत्र प्रकृतसूत्रे च भाष्ये । अत एव साम आकमिति ससुट्कनिर्देशः सङ्गच्छते । एवञ्च शेषग्रहणं स्पष्टार्थम् । विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसंभवात् । अन्त्यस्येति । अलोन्त्यपरिभाषयेति भावः । त्वाहादयो ऽकारान्ता इति वृत्त्याद्यनुसारेणाह । अतो गुणे इति । त्यदादीनाम इति सूत्रभाष्यकैयटाभ्यां हलन्ता एवादेशा इति लभ्यते तदा पररूपस्य प्राप्तिरेव न । यद्यप्युच्चारणार्थानामपीत्संज्ञालोपाभ्यां निवृत्तिः कार्या तथाप्यतो गुणे इत्यस्याप्रवर्त्तनेन प्रक्रियालाघवमत्र पक्षे इत्संज्ञालोपयोस्तु सूत्रएव प्रवृत्तिरिति न प्रयोगसाधुत्वज्ञाने गौरवम् । त्वाहौ साविति गुरुनिर्देशस्तु श्वेतवहोक्थशसिति वचनार्थसाधकः । णिज-

# १२९ पृष्ठे ९ पङ्क्त्यग्रे अयं ग्रन्थः ।

कैयटेनात्रैवोक्तत्वेनादोषात् । शेषइत्यस्य सामर्थ्यात्तन्न्यायाप्रवृत्तिरत्रेत्यन्ये । तन्न । युष्मभ्यं युष्मत् युष्माकमित्यादौ टान्निवृत्त्या चारितार्थ्यात् तस्माद-नित्यत्वात्तदप्रवृत्तिरित्येके तदाह । अतो गुणे कृते इति । अत्र वदन्ति । तत्तद्भाष्यप्रामाण्याच्छेषग्रहणससुद्धनिर्देशाभ्याञ्चास्य सूत्रस्यावृत्त्यार्थद्वये तात्प-र्यम् । तच्च लक्ष्यानुरोधाद् व्यवस्थितन्त्रेन भ्यमि टिलोपे युष्मभ्यमिति न । अत एव भ्यसोभ्यमिति सूत्रे यदि भ्यमादेशः शेषेलोपोन्त्यलोप इति एत्वं प्राप्नोति । अथाभ्यमादेशः शेषे लोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोतीति यथेच्छसि तथास्तु इत्येवोक्तं न तु भ्यमादेशे टिलोपमादाय फलभेद उक्तः । वस्तुतस्तु टिलोपो व्यर्थः । अत एव लिङ्गाभावाट्टिलोपवचना-नार्थक्यमिति साम आकमित्यत्र भाष्ये उक्तम् । अत्र लिङ्गाभावादित्युपलक्ष-णम् । शिशीलुङ्नुम्विधिभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेनेति नेत-राच्छन्दसीति सूत्रस्थभाष्यवार्त्तिकबलेन लिङ्गवत्त्वेपि सन्निपातपरिभाषया टाबभावस्योपपादयितुं शक्यत्वम् । अत एव सन्निपातपरिभाषया बुद्धावित्यत्र टाबभावः क्रमेजन्तसूत्रे भाष्ये उक्तः । शेषग्रहणन्तु भाष्ये प्रत्याख्यातमेव । त्यदादीनाम इति सूत्रस्थं टिलोपष्टाबभावार्थ इति तु वार्त्तिकैकदेशिवच-नमिति न दोषः । एतच्च भाष्यप्रदीपोद्द्योते निरूपितम् । अभ्यम्सूत्रे यथेच्छसि तथास्त्विति प्रौढोक्त्या भ्यमिति च्छेदस्य प्रौढिवादत्वं भगवतैव सूचितं त्वं यथेच्छसि तथास्तु तत्र दोषोद्धारो मया सुकर इति तत्तात्पर्यात् । अभ्यमित्ये-व तु च्छेदो न्याय्यः । अत एव युष्मदस्मदोरनादेशइति सूत्रे न चादेशो हला-

दिरस्तीति भाष्योक्तिः सङ्गच्छतइति ॥ परमत्वमिति ॥ आङ्गत्वात्तदन्तवि-
धिरिति भावः गौणेऽप्रवृत्तौ बीजाभावाद्ग्राहातित्वमिति । युवावौ ॥
द्विवचनशब्दोत्र यौगिको व्याख्यानात् । द्वयोर्वचनं बोधनं तत्र समर्थयोर्यु-
ष्मदस्मदोरित्यर्थो भाष्यप्रामाण्याच्च तद्गृह्यमाणयुष्मदस्मदोरेव विशेषणं न
तदन्तस्याङ्गाधिकाराद्धि तदन्तग्रहणमित्याशयेनाह । द्वयोरुक्ताविति । एत-
त्फलङ्गौणोदाहरणेषु मूलएवस्फुटम् ॥ मपर्यन्तस्य किमिति । अधिकारसूत्रं
किमर्थमिति प्रश्नः । ननु समुदायादेशत्वेप्योकारसकारभकारादौ सुपि सर्व-
नाम्नष्टेः प्रागकजन्यत्र तु सुबन्तस्यटेः प्रागिति व्यवस्थाया युष्मदस्मद्विषये त्व
यकेत्यादिसिद्धये वक्ष्यमाणत्वादन्तरङ्गत्वाद्युवामित्येतत्सिद्धुत्तरमकजिति
युवकामित्यत्र न दोषो ऽतआह । त्वयेति । नन्वत्राप्यच्ये इति न्यासेनैका-
रादेशे च सिद्धेराह । युवकाभ्यामिति । हलन्ता आदेशा इति पक्षे तु त्वयेत्या-
देरसिद्धिरेवमादेशस्य सर्वादेशत्वञ्च न स्यादिति बोध्यम् । नन्वेवमपि
मान्तस्येत्येवोच्यतां किं परिग्रहणेनेति चेन्न । युष्मयत्यादेः क्विपि सुप्यादेशा
भावापत्तेस्तात्पर्यन्तशब्देन मान्तापेतया शेषस्य लाभात् । कटिपर्यन्तं
वास इत्युक्ते ऽग्रे किञ्चिदस्तीति नियमेन प्रतीतेः । एवञ्च मान्ताद्ग्रत्राग्रे
किञ्चिदवशिष्टन्तत्रैव युष्मदस्मदोरादेशाः । अत एव भाष्ये ऽवधिद्योतनार्थं
परिग्रहणं कर्त्तव्यं मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः
स्युः क्व च मान्ते युष्मयतेरस्मयतेश्चाप्रत्यये इति उक्तम् । अवधिद्योतनार्थ-
मित्यस्यान्तशब्दस्यावधिवाचकताद्योतनार्थमित्यर्थः । पर्यन्तशब्दस्य लोके
तथैव प्रयोगात् । अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोकेद-
र्शनाच्च । तत्रैवेत्यस्यानिष्टएवेत्यर्थः । परिग्रहणाभावे तु यतः पूर्वास्ति पर-

श्च नास्ति सोऽन्त्य इति भाष्योक्तेर्मान्तपदस्य मुख्यार्थत्वलाभायात्रैव स्यात् । क्वौ लुप्तमित्यस्य प्रवृत्तिश्च स्यात् । अभिव्यक्तपदार्था इति न्यायश्च पदकार्यविषय इति तदाशयः । अत एव भाष्ये प्रयोगदर्शनं न कृतम् । यत्तु परिग्रहणाभावे मान्ते यत्र ते तत्रैव स्यात्सामानाधिकरण्येनान्वयस्यौचित्या-त्सति तु तस्मिन्सामर्थ्याद्युष्मदस्मदोर्यौ मपर्यन्ताविति व्याख्यानात् दान्ते व्यप-देशिवद्भावेन युष्मयत्यादेः क्विपि च सिद्ध्यति । व्यपदेशिवद्भावोऽप्रातिपदि-केनेति तु प्रत्ययविधिविषयमिति तत्र परिग्रहणस्य वैयधिकरण्यान्वये मणि-मन्त्रादिन्यायेन नियामकत्वकल्पनानपेक्षयोक्तस्यैव न्याय्यत्वात् । तत्र हि सामानाधिकरण्यासम्भवाद्वैयधिकरण्यान्वय इत्यन्यत् । किं चात्र व्याख्याने ऽवधिद्योतनार्थमिति भाष्याक्षरास्वारस्यम् । मपर्यन्तस्येति च तद्गुणसंविज्ञानो बहुव्रीहिरिति दिक् । अङ्गकार्ये इति । अङ्गाधिकारस्थे इत्यर्थः । मकारा-न्तरमिति । शसोनेत्यनेन संहितया पाठे इति शेषः ॥ परे तु शेषविभक्तिभू-तामादियुष्मदादिसन्निपातेन जातस्य लोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषयैव श्याद्यभावः ॥ सुटस्त्वाकमवयवत्वाच्च तेन सन्नि-पातविघात इति सकारनिर्देशः साम आकमित्यत्र । अत एव ङमोजन्तसूत्रे ह्रस्वत्वन्तुग्विधेयोंमणिकुलमिति सन्निपातपरिभाषाप्रयोजनव्याख्यावसरे यदा ह्रस्वमात्रस्य तुगागमो न तदन्तस्य तदेदं प्रयोजनमिति व्याख्यातं कैय-टेन । मूलोक्तं तु न युक्तं भाष्यानुक्तेः ॥ अत एव नेतराच्छन्दसीति सूत्रे नपुं-सकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेनेति वार्त्तिकं व्याख्याय तेषु पुनः प्रसङ्गाच्छिष्टलुग्विधयः कस्माच्च भवन्ति सकृद्गतिन्यायादित्युक्तम् । त्वद्रीत्या पुनः प्रसक्तस्यैवाभावेन तदसङ्गतिः स्पष्टैव । अत एव च तत्र युष्म-

दादेर्विभक्त्यादेशस्य यूयं आह्नया इत्याद्यवकाशप्रदर्शनं कृतम् । अन्यथा तत्रापि जसः शीप्राप्त्या तदसङ्गतिः । यूयमित्यादिप्रयोगकरणेन तत्र श्यादि-शङ्कासमाधानाकरणेन च भाष्यकृतात्र सन्निपातपरिभाषाविषयत्वं सूचितम् । अङ्गवृत्तपरिभाषया वारणमपि चिन्त्यम् । तस्या अङ्गसंबन्धिकार्यविषय-त्वात् सूत्रभाष्यस्वरसोऽप्येवमेव । वस्तुतो नैषा लक्ष्यसंस्कारिका । द्वयोरित्या-दिनिर्देशासङ्गतेः । अत एव भाष्ये किमेतस्या ज्ञापने प्रयोजनमिति प्रश्ने पिबेर्गुणप्रतिषेधो वक्तव्य इत्येव प्रयोजनमुक्तं न तु प्रयोगसिद्धिः प्रयोज-नमुक्तमित्याहुः । त्वमाविति । अत्रापि विभक्ताविति संबध्यते । अन्यथा प्रत्ययोत्तरपदयोश्चेति व्यर्थं स्यात् । तत्फलन्तु त्वं सुन्दरः पुत्रो यस्य युष्मत्सुन्दरपुत्र इति त्रिपदबहुव्रीहौ नादेश इति । अत्रैकवचनशब्दो यौगिको व्याख्यानात् । तदाहैकस्येति । अविभक्तिकमिति । व्याख्यानात् । यो ऽचि ॥ अनादेशइति किम् । त्वत् मत् । पञ्चम्या अदित्यदादेशः । आत्वविधायके च भ्यम् व्यावर्त्यः । वस्तुत उत्तरार्थमेव तदभ्यमित्येव च्छे-दादिति भाष्ये स्पष्टम् । हलादाविति परिशेषलब्धं हलीत्यनुवृत्तौ तु योचीत्यन्यग्रहणं मास्तु । भ्यसोभ्य ॥ अत्र यद्वक्तव्यं तदुक्तम् । पक्षद्वयेपीति । तत्रान्त्यलोपे द्वयोरकारयोः पररूपे एकादेश उदात्तेनेत्यभ्यम आद्याकार उ-दात्तः । टिलोपेपि यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्य-र्थकेनानुदात्तस्य च यत्रेत्यनेन स उदात्त एवेति न विशेष इति भावः । नन्वा-कमः पूर्वं लोपाभावेनादन्तत्वाभावात्सुडागमाप्रसक्तेः ससुट्कनिर्देशो व्यर्थः सूत्रासङ्गतिश्चेत्यत आह । भाविन इति । आकमि शेषे लोपे कृते प्राप्तस्ये-त्यर्थः । अयं भावः । सामः प्रसङ्गे आकमित्यनेन सुडामोरत्र विषयेत्यन्तमप्रयोगो

त्वात्क्वापि युष्मदस्मिति प्रातिपदिकयोरादेशा एव नेति तदाशयो मपर्यन्तस्येति भाष्यसंमतश्चायमर्थ इत्यनुपदं स्फुटीभविष्यति । अन्तरङ्गत्वादिति । परनिमित्तानपेक्षत्वेन तत्त्वमिति भावः । अलिङ्गे इति । एवञ्च स्त्रियामनयोरवृत्तेर्न टाबिति भावः । इदं साम आकमित्यत्र भाष्ये स्पष्टम् । यद्वेति । इदन्त्यदादीनाम इति सूत्रे भाष्ये स्पष्टं सामआकमित्यत्र च । मपर्यन्ताच्छेषस्येति । इदमुपलक्षणान्तेन त्वमित्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाभावेऽपि न क्षतिः । ननु अदन्तत्वे आदेशानां वार्णादाङ्गमिति परिभाषया परत्वात्पूर्वमेव टिलोपे टाबभाव उपपादयितुमशक्यः अकारस्य कार्यद्वयेऽपि स्थानित्वेन समानस्थानिकत्वमस्तीति चेन्न । हलन्ता एवादेशा इति बोध्यते । स्थान्यादेशभावविषये सर्वत्रैवमेव यथार्द्धधातुकविषये ऽस्तेरप्रयोगो भूप्रयोगश्चास्तेर्भूरित्यनेन प्रतिपाद्यते न तु सतो निवृत्तिः । शब्दानित्यत्वप्रसङ्गात् । किं तु प्रसक्तबुद्धेरेव निवृत्तिः सकारबुद्धिप्रसक्तेश्च प्रकृते सांप्रतिक्या असंभवाद्भाविन्या ग्रहणं सकारोच्चारणसामर्थ्यादिति प्रथमप्रवृत्त्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति भाष्ये स्पष्टम् । तन्निवृत्तिश्चामोभावात् । अत्र सामः स्थानित्वोक्त्या स्थानिवत्त्वेन साम्त्वमेव न त्वाम्त्वं उक्तरीत्या च न स्थानिवद्भावप्रसक्तिः सैवाप्रसक्तिः ससुट्कनिर्देशेन बोध्यते इति बोध्यम् । अत एवातित्वाकमित्यादौ प्रत्ययोत्तरपदयोरिति भाष्योदाहृते आकन्नुडभावौ सिद्धौ । आम्येव साम्त्वस्याहार्यारोपेणादेशः । आदेशस्याम्त्वाभावाच्चात्र न नुट् । न च यत्र साम्भावी तत्रैवाद्यं सामो भावित्वस्य सर्वथा दुरुपपादत्वात्साम्त्वस्याशास्त्रीयत्वेनातिदेशालभ्यत्वादिति भाष्यविरुद्धकल्पना व्यर्थेति दिक् । ह्रस्वादिकन्तु न कृतः । अन्त्यलोपे प्यकारस्यैत्वनिवृत्त्या चारितार्थ्येन परत्वापत्तौ युष्माकमित्यसिद्ध्यापत्तेः द्विवचनैकवचनशब्दयोरर्थपरतया व्याख्याने फलं दर्शयति । द्व्येकत्वेति । द्वित्वैकत्वविशिष्टवाचिनी इत्यर्थः । समासार्थौ । मुख्यविशेष्यम् । अन्यसंख्यः । युष्मदाद्यर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थः । स्त्व इति । अर्थपरत्वाश्रयणादिति भावः । एते इति कर्तृपदम् । युवावाविति कर्मपदम् । एवन्त्वमावित्यपि । पूर्वविप्रतिषेधत इति । विप्रतिषेधे पूर्वमिति सुप्सुपेति समासः । अत एव प्रत्ययोत्तरपदयोश्चेति सूत्रभाष्ये त्वमाविति सूत्रे शेषइत्यनुवर्त्य सुजस्ङेङस्व्यतिरिक्तविभक्तावेताविति व्याख्यातम् ॥ त्वमौ न चेति । अर्थपरत्वाश्रयणादेवेति भावः ॥ इति विग्रहे इति । एवं विग्रहे यादृग्रूपाणि तानि वक्ष्यन्तइति शेषः । अतित्वाकमिति । अत्र यथाक्रमन्नुडभावौ तयोक्तम् । पदस्य ॥ अपदान्तस्य मूर्द्धन्य इत्यतः प्रागयमधिकारः तत्फलन्तु राजानावित्यादौ न लोपाभावः । इयं क्व चित्स्थानषष्ठी

क्व चिदवषष्ठी होढ इत्यादावाद्या मादुपधाया इत्यादावन्त्या तेन वृत्तवन्तावित्यादौ वत्वसिद्धिः । अन्यथा मत्वन्तपदत्वाभावान्न स्यात् । अत एव नलोप इति सूत्रे ऽन्तग्रहणं चरितार्थमिति स्पष्टं भाष्ये । नः संख्याया इत्यत्र नलोपाभावस्तु झलाञ्जश् झशीत्यत्र जश्त्वाभाववद्बोध्यः । पदा ॥ कुत्सने च सुपीत्यतः प्रागयमधिकारः । अनुदात्तं सर्वमित्यादिपदत्रयमापादसमाप्तेः सर्वग्रहणान्तु तिङ्ङतिङ इत्यादौ सर्वानुदात्तत्वस्य विनिगमनाविरहाल्लाभेऽपि स्पष्टतया तल्लाभार्थमित्याकरे स्पष्टम् । आदेः परस्यालोन्त्यस्येत्यनयोस्तु न प्राप्तिः । पदस्येत्यस्यानुदात्तन्तिङित्यादिश्रुतप्रथमान्तानुरोधेन प्रथमया विपरिणामेन स्थानषष्ठ्यभावात् तत्र पादशब्देन ऋक्पादः श्लोकपादश्चाविशेषात् गृह्यते अपदादिशब्देन पादान्तपादमध्यस्थवत् छन्दोहीनवाक्यस्यापि ग्रहणाङ्ग्रामे कम्बलो मे स्वमिति भाष्यात् । षष्ठ्यादीति । सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादिदं लभ्यतइत्यन्यत्र विस्तरः ॥ तौ चानुदात्ताविति । अनुदात्तत्वगुणविशिष्टयोर्विधानादिति भावः । उक्तविधयोरिति । पदात्परयोरपादादौ स्थितयोरित्यर्थः । द्वितीयायान्त्वामयोरपवादत्वादाह । षष्ठीचतुर्थ्येकेति ॥ विभक्तिक्रमक्लृप्तद्वितीयादिक्रमेणोदाहरति । श्रीश इति । दत्तादित्यनेन चतुर्थ्यन्तत्वं स्फुटीकृतम् । संवेद्योऽस्मानिति । नन्वत्र सन्ध्यभावे न वान्तरत्वेनानुष्टुप्पादत्वानापत्तिः सन्धौ तु उभयत आश्रयणे ऽन्तादिवत्त्वाभावेन कथमादेशप्राप्तिरिति चेन्न । संवेद्यो इत्येकादेशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात् । स्मानित्यस्य चैकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्दत्वेन तत्प्राप्तिरित्याशयात् । सन्धिश्चान्तरङ्गत्वादादेशात्पूर्वमेव । आदेशे सति नः कृष्णः सर्वदा ऽवत्विति पादादित्वापत्त्योपजीव्यविरोधाच्चादेश इत्यन्ये । उभयत आश्रयणेऽपि तस्य स्वीकार इति इण्धातौ निरूपयिष्याम इति परे । ननूक्तरीत्या षष्ठ्याद्यन्तानामेवादेशा भविष्यन्ति किं स्यग्रहणेनात आह । स्येति । अहानौ स्यशब्द इति भावः । युष्मत्पुत्र इति । युवयोर्युष्माकं वा पुत्र इत्यर्थः । यद्यपि वृत्तौ संख्याविशेषानवगम इति भाष्ये स्पष्टं तथापि संबोध्यत्वेनैवानेकव्यक्त्यवगतिर्न तु द्वित्वादेर्भानं नाप्येकत्वस्येति त्वमौ न कृतौ विग्रहे तु संख्याविशेषभानात् द्विवचनादि भवत्येव । तस्य लुक्यपि प्रत्ययलक्षणेन द्विवचनाद्यन्तत्वम् अत एव वध्वोरगारं वध्वगारमिति प्रगृह्यसञ्ज्ञासूत्रे भाष्ये प्रयुक्तम् । वचनद्वयविषयसूत्रप्रत्युदाहरणलाभायेति त्वत्पुत्र इति न प्रत्युदाहृतम् । समानवाक्ये इति । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थकं समानवाक्ये इति सप्तम्यविधेया इत्यर्थः । निघातो नामानुदात्तः । एकतिङिति । बहुव्रीहिरेकतिङन्तघटितमित्यर्थः । तेन पचतीत्येतन्मात्रस्य न वाक्यत्वं

इदं स्वशास्त्रकार्यापयोग्येकवाक्यत्वलक्षणान्तेन पश्य मृगो धावतीत्यादौ लौकिकैकवाक्यत्ववत्यपि नाव्याप्तिः । समर्थसूत्रे भाष्ये स्पष्टमेतत् । अत एव तिङ्ङतिङ इत्यत्रैतदाश्रित्यातिङ इति प्रत्याख्यातं भाष्ये । लौकिकवाक्यत्वञ्च सुप्तिङन्तचयो वाक्यं क्रियावाकारकान्वितेत्यमरेणोक्तं वाशब्दश्चेदर्थे कारकान्वितक्रियाचेद्बोध्येति शेषः । तेन निरर्थकशब्दसमुदायव्यावृत्तिः । सुप् च तिङन्तञ्च सुप्तिङन्ते सुब्विशिष्टन्तिङन्तं सुप्तिङन्तं तेषामेकशेषस्तेन कारकान्वितक्रियाबोधकसुबन्तचयतिङन्तचयसुप्तिङन्तचयानान्त्रयाणामपि वाक्यत्वलाभः । तत्र सुबन्तचयो देवदत्तेन शयितव्यं द्वितीयं पचति भवतीत्यादि । तृतीयस्त्वेत्रः पचतीत्यादि । ओदनं पचेत्यादि । समर्थपरिभाषा त्वत्र न प्रवर्त्तते एकार्थीभावविषये एव तत्प्रवृत्तेरिति भावः । एते वांनावादय इति । इदञ्च सपूर्वाया इत्यत्र भाष्ये स्पष्टम् । न चवा ॥ चादयः समुच्चयविकल्पाद्भुतखेदावधारणार्थास्तेषामन्यतमेन योगइत्यर्थः । ननु तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह । युक्तग्रहणादिति । साक्षादिति । युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः । परंपरेति । स्वार्थाश्रयान्वय्यन्वयित्वादिरूपे इत्यर्थः । चेतसेति । अनालोचनार्थैरित्येव पर्युदासेन सिद्धे पश्यार्थैरित्येतदिन्द्रियजन्यसकलज्ञानसङ्ग्रहार्थमिति भावः । परंपरेति । स्वान्वितान्वयित्वादिरूपे इत्यर्थः । तदुक्तं भाष्ये पश्यार्थैश्च प्रतिषेधः समानवाक्यइति प्रकृत्य वक्तव्यः इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं तत्र प्रतिषेधः स्यात् । ग्रामस्त्वां संप्रेक्ष्य गत इति । इह न स्यात् ग्रामस्तव स्वं संप्रेक्ष्य गत इति । समानवाक्ये इति करणेन समानवाक्ये पश्यार्थयुक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध इति कैयटः । एवञ्च न चवेति सूत्रे युक्तग्रहणं स्पष्टार्थमेव तदभावेपि प्रकृतसूत्रस्येव तस्यापि साक्षात्संबन्धएव प्रवृत्तिः स्यात् । समानवाक्ये इत्येत्संबन्धात्तु अस्य युक्तयुक्तेपि प्रवृत्तिरित्यन्यत् । अत एव देवदत्तस्य पुत्रात् यज्ञदत्तः पृथगित्यादौ देवदत्तशब्दान्न पञ्चमीत्याहुः । भक्तस्तवेति । इह तवेत्यस्य रूपेण संबन्धो न तु साक्षाद्ध्यायतिनेति भावः । सपूर्वा ॥ सहशब्दो विद्यमानवाची । अवधेरपि संबन्धित्वेन विवक्षायां षष्ठ्यर्थेन्यपदार्थेनेकमिति समासो वोपसर्जनस्येति सः तदाह । विद्यमानपूर्वादिति । प्रत्ययग्रहणे तदन्तग्रहणमित्याह । प्रथमान्तादिति । नन्वेते वांनावादय इत्यनेनैव विकल्पसिद्धेः किमेतेनेत्यत आह । अन्वादेशेपीति । अत्र नेति निवृत्तं तदाह । आदेशावेति । तेनेति । भक्तत्वेनेत्यर्थः । प्रक्रान्तार्थत्वाच्च यच्छब्दोपादानापेक्षेति भावः । स्पष्टञ्चेदं सप्तमोल्लासे काव्यप्रकाशादौ । यत्र हरिस्त्वामित्येकमुदाहरणं समामित्यपरन्त्वायते इत्यस्य च मद्ध्य-

मथिन्यायेन तन्त्रेणोभयत्रान्वयः। तेन स इत्यस्यापि समानवाक्यस्थेन विद्यमानपूर्वत्वं बोद्ध्यम् । सामन्त्रितम् ॥ संबोधने चेत्यतः संबोधने इति वर्त्तते। सेत्यनेन प्रथमा परामृश्यते । आमन्त्रणमामन्त्रितमिति महासञ्ज्ञाबलात्तदन्तविधिरित्याह । तदन्तमिति। अत एव हैहेभो इत्यादीनामपि संज्ञासिद्धिः । अन्यथान्तरङ्गानपीति न्यायेन पूर्वं विभक्तिलुकि प्रथमाया अभावेन नखनिर्भिन्न इत्यत्रेसभाववदत्र संज्ञा न स्यात् । यद्यप्येषां संबोधने शक्तिः प्रातिपदिकार्थसूत्रेणैव प्रथमा तथापि संबोधविषयप्रथमासत्त्वान्न दोषः । एतदर्थमेव प्रथमेत्यनुवर्त्तमाने सेति पदम् । अन्ये तु संबोधने चेत्यस्य तत्र वर्त्तमानादित्यर्थं अन्यत्रेवात्रापि संबोधने चेत्येव प्रथमा प्रातिपदिकोक्तत्वस्याव्यावर्त्तकत्वेन विभक्त्यप्रतिबन्धकत्वात् । तिङ्कृत्तद्धितसमासैरिति परिगणनाच्च । सेति तु विधेयसमर्पिकाया अनुवाद्यत्वाय स्पष्टार्थमित्याहुः । अविद्यमानवदिति । गोतोणिदितिवत्सिद्धे वत्करणमतिदिश्यमानविरुद्धस्वाश्रयस्यापि लाभार्थन्तेनाम्भो देवदत्तेत्यादावाम एकान्तरमामन्त्रितमनन्तिकइति एकान्तरत्वप्रयुक्तामन्त्रितनिघातनिषेधसिद्धिरिति स्पष्टं भाष्ये। न चात्र नामन्त्रिते समानाधिकरणे इत्यनेन निषेधादविद्यमानवत्त्वमेव नेति वाच्यम् । अस्य संबोधनमात्रद्योतकत्वेन विशेष्यवचनत्वाभावात् । देवदत्तस्यैव विशेष्यत्वाच्च ॥ इहेति। अग्ने तव देवास्मानित्यत्रादेशा, अग्ने नयेत्यत्र तिङ्ङतिङ इतिनिघातः अग्नइन्द्रेत्यत्रामन्त्रितस्य चेति निघात इति विवेकः । अत्र पूर्वमित्यनेन परस्यात्तेपात् पूर्वं परस्य कार्ये ऽविद्यमानवदित्यर्थस्तेन देवास्मानित्यत्र देवेत्यस्यामन्त्रिताद्युदात्तत्वं भवत्येव । पूर्वं किम् । पाहि देवात्रामन्त्रितनिघातो भवत्येव । प्राचीनमिति। एवमेव लक्ष्मीपते ते ऽङ्घ्रियुगं स्मरामीत्यादिसिद्धिः । नृसिंहाश्रम ते ख्यातिरित्यादौ, गेये केन विनीतौ वामित्यादाविव विभक्त्यन्तप्रतिरूपकनिपाताङ्गीकारेणादोषः । अयं समाधिः प्रक्रतेऽपि । न इत्यस्य विभक्तिप्रतिरूपकत्वात्। अन्यार्थन्तु मूलोक्तकल्पनावश्यकत्वन्तदाह। एवमिति। सर्वेषां निघात इति । अस्य प्राप्त इति शेषस्तत्र यमुने सरस्वतीत्यनयोर्बाधकाभावाद्भवति शुतुद्रीत्यस्य तु न पादादिस्थत्वात् । एतेनादिभ्यः सर्वेषामिति बहुवचनमसङ्गतमित्यपास्तम् । अग्ने तेजस्विन्निति। अनुदात्तं सर्वमित्यनयोः संबन्धानर्हत्वेन निवृत्त्या तत्साहचर्येणापदादावित्यस्याप्यविद्यमानवत्सूत्रे निवृत्तिरिति भावः । आमन्त्रिते किम् । देव करोषि । सामान्यवचनं किम् । अघ्न्ये देवि सरस्वति इडे काव्ये इत्यादौ पर्यायेषु परेषु निषेधो मा भूत्सामानाधिकरण्यस्यैकार्थविशेष्यकबोधजनकत्वमेव न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् ॥ सुपादिति । शोभनौ पादावस्येति बहुव्रीहिः । संख्यासुपूर्वस्येत्यकारलोपः

समासान्तः अञ्चेः सुपीति निपातनैः साहचर्यादिति भावः । अनिदिताम् ॥ इत्संज्ञकारवद्भिन्नानामित्यर्थः । अङ्गस्येत्यधिकारः । अञ्चतेर्भस्येति । अल्लोपेन इतिवदस्यापि प्रत्यञ्चमञ्चति तेन प्रत्यञ्चेत्यादौ पूर्वाकारे न प्रवृत्तिः । अच इत्यञ्चतेर्लुप्तनस्य ग्रहणं व्याख्यानात् । भस्य किम् । प्रत्यञ्चौ । लुप्तनस्येति किम् । पूजायां प्रत्यञ्चा । चौ ॥ नेदं वर्णग्रहणं व्याख्यानात् । तदाह लुप्तेत्यादि । अण इति । कर्त्तृच इत्यादीनामनभिधानमिति भावः । एवञ्चाणग्रहणमुत्तरत्र संप्रसारणस्येत्यत्र तृतीय इत्येतन्निवृत्त्यर्थमावश्यकमिहापि संबद्ध्यते न त्वत्रास्य व्यावर्त्यमस्ति इत्याकारे स्पष्टम् । अङ्गेति । तत्परिभाषाभावे तु चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्य इति वचनमेव भाष्योक्तं शरणम् । त्रिष्वग्दे ॥ चादासर्वनाम्न इत्यतः सर्वनाम्न इत्याकृष्यते । सामर्थ्यादुपसर्जने प्रवृत्तिः । अप्रत्यये इति पाठे ऽविद्यमानः प्रत्ययः क्विबादिरित्यर्थः । वप्रत्ययइति पाठेप्यकारस्याविवक्षितत्वात्स एवार्थः । अद्र्यादेशसध्र्यादेशावन्तोदात्तौ निपातनादिति स्पष्टं भाष्ये । अदसो ॥ असेरितीकार उच्चारणार्थः । अदस इत्यवयवषष्ठी सग्रहणं तत्स्थानिकौकाररेफयोरप्युपलक्षणन्तेनादस्यति अदोत्राद इत्यादौ न दोषः । दादिति किम् । अमुयोरित्यत्रान्त्यस्य मा भूदिति । समाहारद्वन्द्व इति । इदमर्वाचामनुरोधेन । वस्तुतो ऽयुक्तमेतत् । उस्ऊस्इति द्वन्द्वे सुलोपे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्या ऽनित्यत्वेन नित्यत्वादपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घउ इति रूपासिद्धेरत एवोकाल इत्यत्र काल इति न कृतन्तस्मादिव उत् ऊत उदिति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वात्सिद्धमिति बोद्ध्यम् । ष्यङः संप्रसारणमिति सूत्रे भाष्ये ऽनन्त्यविकारेन्त्यसदेशस्येति परिभाषापठितान्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत् प्राप्तावन्त्यसदेशस्यैवेति तदर्थः । अनन्त्यविकारइति लिङ्गं तामर्थतः पठति । अन्त्यबाधे इति । अन्त्यस्य बाधे कार्याप्राप्तावर्थादनेकानन्त्यस्य प्राप्तावित्यर्थः । अन्यथा णो न इत्यादि नेतेत्यादावेव स्यान्नतु नमतीत्यादाविति भाष्ये स्पष्टम् । अल्लोपोनोचः सान्तेत्यादावनेकक्लिष्टकल्पनापेक्षयेयं न्याय्या । किं च भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यम् । परत्वेन पदसंज्ञाबाधकत्वानुपपत्तेः । राज्ञ इत्यादौ नलोपस्यासिद्धत्वात्पूर्वमल्लोपेन इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधायोगान्नलोपापत्तेश्च । तस्मादाकडारस्थसंज्ञासु यथोद्देशाश्रयणमेवावश्यकमिति यजादिस्वादिपरो योनित्यर्थस्य न तत्र लाभः । ष्यङः संप्रसारणमिति सूत्रस्थं कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युप-

स्थितमिदं भवति । यचि भमिति तत्र यजादिपरतया ऽनकारं विशेषयिष्यामः अनाकारमिति भाष्यन्त्वेकदेश्युक्तिः । यजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तेनानो विशेषणायोगाच्च । अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि तस्माद्वान्यतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्येति उपसंहृतं भाष्ये इति भावः । अन्त्यसदेशस्येति । अन्त्येन समानो देशो यस्येत्यर्थः तत्त्वञ्चान्त्यवर्णतद्वर्णयोरितराव्यवधाने भवति चलीक्लृप्यत इत्यादौ ऋकारान्तर्गतरेफस्योत्तराज्भागेन व्यवधानान्नान्त्यसदेशसंभव इति न तत्रैतत्परिभाषाप्रवृत्तिरत एव न संप्रसारणइत्युदाहरणीभूतस्य विद्ध इत्यादेर्नैनयासिद्धिः । अत एव न संप्रासारणइति सूत्रं सार्थकम् । नैतस्याः परिभाषायाः प्रयोजनानीति तत्सूत्रस्थभाष्यस्य त्वयमर्थः । एतत्सूत्रसाध्यानि विद्ध इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति अन्त्यसदेशत्वाभावादिति च तद्भावः ॥ परस्यैवेति । द्रशब्दस्यैवेत्यर्थः । अः सेरिति । अत्र अकारेण आकारस्यापि ग्रहणात्तेनाम्नद्रीगित्यादिसिद्धिः । तत्रह्यासर्वनाम्न इति पूर्वपदान्तस्यात्वम् । त्यदाद्यत्वेति । त्यदादीनामत्वविषयइत्यर्थः । पक्ष इति । अत्र तल्लक्षणार्थद्वयेऽपि सूत्रतात्पर्यन्तत्र लक्ष्यानुरोधाद्व्यवस्था अत्र प्रमाणमुपन्यस्यति । उक्तञ्चेति । लत्ववदिति । चलीक्लृप्यते इत्यत्र यथा लत्वं रीगृकारयोर्भवति तथेत्यर्थः । अत्रादमुयङिति रूपवादिमतं न्याययुतम् । लत्वे उक्तरीत्येतच्छायाप्रवृत्तावपि अत्रैतदप्रवृत्तौ मानाभावात् । अत एव भाष्ये ऽदसोनोसेरिति वार्त्तिकप्रत्याख्यानायायवा ऽसेरिति पक्षमुक्त्वा यद्येवममुमुयङिति न सिद्ध्यति । अदद्र्यङिति प्राप्नोति अदमुयङिति भवितव्यम् अनन्त्यविकारइति उक्तम् । अत्रेति प्राप्नोतीत्युक्त्या च तत्रासंमतिरुक्ता इति भवितव्यमित्यनेन पृथङ्मुत्वमिति पक्षसंमत्यभावो दर्शितः । इति भवितव्यमित्युक्त्या च तत्र शब्दे ऽप्रयुक्तत्वं सूचितमित्याहुः । विष्वग्देवयोः किमिति । चस्याप्युपलक्षणमिदम् । ननूत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद्विष्वगञ्चनमित्यादव्याप्तौ व्यर्थमप्रत्ययग्रहणमत आह । अप्रत्ययेति । तेनेति । अन्यथातः क्त इत्यत्र नित्यं समास इत्यतोनुवृत्तसमासग्रहणेनोत्तरपदाक्षेपेपि क्तधातुरूपे उत्तरपदे इत्यर्थापत्तावयस्कादित्यादावेव स्यादिति भावः । उद ईत् ॥ अत्राच इत्यनुवर्त्तते । समः स ॥ समेर्मिङिति सम इगिति वा न कृतम् । परिभाषाज्ञानकृतगौरवापत्तेः । तिरसस्ति ॥ अलोपइत्यत्र शकन्ध्वादित्वात्पररूपेणाकारः प्रश्लिष्यते । अस्य अलोपो लोपाभावो यस्मिन्नञ्चतावित्यर्थस्तदाह । अलुप्ताकारेति । तिरश्चेति । श्चुत्वे ऽलोपस्य स्थानिवत्त्वन्तुन पूर्वत्रासिद्धीये तन्निषेधात् । पूजार्थस्येति । पूजारूपार्थस्य गम्यत्वे इत्यर्थः । अत एवाव्याकुलं गच्छतीत्यर्थकेञ्चितं गच्छ-

तीत्यादौ नलोपो न । अञ्च्याकुलगमनेन च पूजा गम्यते न त्वञ्चतेरेव सोऽर्थ इति स्पष्टमञ्चोऽनपादाने इति सूत्रे भाष्यकैयटयोः । प्राव इत्यादि चिरन्तनादिरूढस्येति बोध्यम् । एतेनाञ्चेर्गताविति नियमेनैव सिद्धौ नाञ्चेः पूजायामिति व्यर्थमित्यपास्तम् । नलोपाभाव इति । ज्ञापकत्वबोधनद्वारेत्यर्थः । स्पष्टञ्चेदं परेश्च घेति सूत्रे भाष्ये । अपिना च समवधाने चोः कुरिति कुत्वाभावो निरुपपदात्क्विन्निति च निपात्यतइति बोध्यम् । सङ्गीति वचनाद्वा कुत्वाभावः । षत्वं स्कोरितीति । सलोपे षत्वस्यासिद्धत्वात्सलोपे कृते षत्वम् । व्रश्चेः क्विपि ग्रहिज्येति संप्रसारणे पूर्वत्वे श्चुत्वस्यासिद्धत्वात्सलोपः । सुवृट्स्विति । चर्त्वस्यासिद्धत्वाद् डः सीति वा धुट् । निपात्यन्ते इति । अतिप्रत्ययान्ता इति शेषः । तत्र पृषद्बृहतोर्गुणाभावश्च गमेर्जगादेशश्च महेः कर्मणि प्रत्ययश्च निपातनात् । शतृवदिति । प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः । शतुरनुम इति सूत्रे बृहन्महतोरुपसंख्यानमिति तु पृषदादिव्यावृत्तये नियमार्थमिति बोध्यम् । अत्वसन्त ॥ चस्त्वर्थे अतु इति लुप्तषष्ठीकं पृथक् पदं अधातोरित्यसन्तस्यैव विशेषणन्तुशब्दात्तदाह । धातुभिन्नेति । अत एवोगिदचामिति सूत्रे गोमत्यतेरप्रत्यये गोमानिति प्रयोगो भाष्ये सङ्गच्छते । अङ्गविशेषणतया ऽर्थसिद्धतदन्तविधेरेवानुवादकमन्तग्रहणम् । परमिति । वचनसामर्थ्यादुपधापदासंबन्धेन चारितार्थ्यादित्यभिमानः । अयमभ्युच्चय इत्याह । नित्यमिति । कृताकृतप्रसङ्गित्वमात्रेणेत्यर्थः । सामर्थ्यादिति । वाक्यार्थबोधकाले विरोधाभावेनोपधासंबन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यतइति भावः । धीमानिति । न चैकानुबन्धकपरिभाषया मतुपो ऽत्राग्रहणं सूत्रन्तु सर्वादिपठिते ऽनुनासिकोकारविशिष्टे भवतुशब्दे चारितार्थमिति वाच्यम् । पकारादेः समुदायानुबन्धत्वे ऽप्यतोऽननुबन्धकत्वाभावात् । अवयवानां नान्तरीयकतया समुदायोपदेशएव ऋषितात्पर्यमित्यर्थस्यादेच उपदेश इति सूत्रस्थभाष्यसंमतत्वेन यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धताया एव स्वीकारात् । न चोकारलोपे ऽत्वन्तत्वस्याप्यभावः । उकारस्याश्रयणेन तदंशे भूतपूर्वगतिस्वीकारात् । एतेन तदाश्रयणे ऽतुबन्तमेतच्चात्वन्तमित्यपास्तम् । तदाश्रयणाभावात् । तस्मादनुनासिकोकारविशिष्टो य उपदेशे ऽत् तदन्तस्य प्रयोगस्य दीर्घ इति सूत्रार्थ इति न दोषः । नियमार्थमिति । धातोश्चेदुगित्कार्यन्तर्हि नलोपिनोऽञ्चतेरेवेति नियम इति भावः । तेनोखास्रत् ब्रास्रणीत्यादौ नुम्ङीपौ न न्यायप्राप्तात्लोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वमित्याशयः । यद्यपि अञ्चतेश्चेन्नलोपिन एवेति नियमेऽप्यञ्चतिग्रहणं चरितार्थं तथापि भाष्यप्रामाण्येन सामान्यापेक्ष उक्तनियमो

युक्त इति बोद्धयम् । नन्वत्र धातुत्वात्कथं नुमत आह । धातोरिति । न चौपदेशिकधातुविषयक एव नियमोऽस्तु किमनेनेति वाच्यम् । औपदेशिकत्वानन्तर्भावेण सामान्यापेक्षनियमज्ञापनार्थत्वात्तत्फलं पर्यध्वदित्यादाविव गोमानित्यादि नामधातावुगितश्चेति ङीबभाव इति दिक् । क्यच्पक्षे ऽल्लोपो न स्थानिवत् क्वौ लुप्तत्वात् । अत्राचार्यक्विबर्वाचीनमतेन । वस्तुतो हलन्तेभ्यस्तदभाव इति ह्रस्वनद्याप इत्यत्र भाष्ये स्पष्टम् । उभे अभ्य ॥ लक्ष्यानुसारेण गर्गदण्डनन्यायादत्र समुदाये वाक्यसमाप्तिरित्याह । उभे समुदिते इति । द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं स्पष्टार्थम् । यत्तूभेग्रहणं सामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टार्थकन्तेन समुदिते इत्यर्थलाभ इति तन्न । अशब्दार्थत्वात् । शब्दाधिक्यादर्थाधिक्यस्य बहुशो भाष्यकृतोपहसितत्वाच्च । ध्वनितञ्चेदन्तदसति प्रयोजने उभे ग्रहणं सहार्थं विज्ञास्यते इति यत्नेन भाष्ये । अत एव सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनैतदर्थसिद्धिमाश्रित्य सहग्रहणं कर्त्तव्यमिति वार्तिकं प्रत्याख्यातन्तुल्यन्यायात्तदर्थकत्वेन पराभिमतमुभे ग्रहणञ्च प्रत्याख्यातमेवेति सुधियो विभावयन्तु । तत्र द्व्यादिशब्दानामेकापाये ऽप्रवृत्तेरैन्सेचित्यादावभ्यासलोपे कार्यकालपक्षे न संज्ञेति न जुस् । एकादेशात्पूर्वमायचादिपूपदेशिवद्वचनेनान्तरङ्गत्वादन्तादेशेऽपि सर्वे सर्वपदादेशा इति न्यायेन स्थानिवद्भावात् झित्वेन जुसापत्तिः । किं चैकादेशे जुसोऽपवादविषयस्य जायमानत्वेन प्रकल्प्य चापवादविषयमिति न्यायेन पूर्वमन्तिभावाप्रवृत्तौ एकादेशे जुसापत्तिः । यथोद्देशे पूर्वं समुदाये प्रवृत्तसञ्ज्ञायाः स्थानिवद्भावेनाभ्यासलोपे सत्त्वेऽपि पञ्चमीसमासेनैकादेशस्य स्थानिवत्वाच्च तत्प्रवृत्तिरत एव प्रत्यैपिषचित्यादौ न दोष इत्यलम् । नाभ्यस्ता ॥ बहुयोगव्यवच्छिन्नोऽपि नुमिहानुवर्त्तते सामर्थ्यात्तदाहनुम्नेति । दायः शतरि शपः श्लौ श्लाविति द्वित्वे ऽभ्यासह्रस्वत्वे श्नाभ्यस्तयोरित्यालोपे ददद्विति । त्यदादिषु ॥ आलोचनमिहज्ञानमात्रम् । आस ॥ दृग्दृशवतुष्विति सूत्रमनुवर्त्तते । षत्वापवादत्वादिति । कुः क्विन्यत इति न्यासेन दृष्ट इत्यध्याहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनान्यपदार्थांशे वीप्सागर्भबहुव्रीहिणा लब्धन्तादृशादिक्विनन्तविषयं लक्षणमचरितार्थमिति भावः । खकार इति । अघोषमहाप्राणतुल्यत्वादिति भावः । कैयटेति । क्विन्प्रत्ययस्येति सूत्रस्येत्यादिः । असिद्धत्वादिति । यद्यपि जश्त्वापवादोऽपि कुत्वं तथापि शस्थानिकजश्त्वस्यैव न तु खस्थानिकस्यापीति भावः । वस्तुत इदं चिन्त्यं प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव भाष्यकृतोक्तेः । तस्माद्दृक्स्रग्युजिक्रुङ्पु अस्य चारितार्थ्येन जश्त्वषत्वापवादता न युक्तेति तन्मतद्दति

वदता सूचितमिति दिक् । नगिति । षड्गकाः प्राग्वत् । नड्भ्यामिति । मस्जिनशोरिति नुम्तु न धातुप्रत्यये तद्विधानात् । स्पृशो ऽनु ॥ अनुदके किम् । उदकस्पर्शः । अन्ते।दात्तत्वमिति । नित्त्वादाद्युदात्तत्व प्राप्तम् । कुत्वस्य जश्त्वं प्रत्यसिद्धत्वादाह । कुत्वात्पूर्वमिति । वौरु ॥ क्विपि धातो-रित्यतो धातोरिति वर्त्तते तच्च वोभ्यां विशेष्यते पिपठिषतेः क्विपि अतो लोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वाद्रुः । रुत्वे ऽल्लोपो न स्थानिवत् पूर्वत्रासिद्धे तन्निषेधात् । नुम्वि ॥ इण्कोरिति वर्त्तते व्यवधाने ऽप्राप्तेरिदम् । अयमप्यधिकारः अत एव निंस्स्वेत्यत्र धातोः सस्य नानेन षत्वम् । व्यवायशब्दस्य प्रत्येकं संबन्धो व्याख्यानात्तदाह । प्रत्येकमिति । अपिना ऽव्यवधानेपि । नुम्स्थानिकेति । प्रकृतसूत्रस्य हयवरट्-सूत्रस्थञ्च भाष्यमत्र मानम् ॥ व्रश्चेति ष इति । सपादसप्ताध्यायीस्थकार्यप्र-वृत्तियोग्यतायान्त्रिपादीस्थस्याप्रवृत्तेर्हल्ङ्यादिलोपोत्तरं विवश्स् इत्यवस्थायां षत्वस्यासिद्धत्वात्संयोगान्तलोपे ष इत्यर्थः । कलोप इति । पदान्तसंयोगा-दिलोपस्य संयोगान्तलोपापवादत्वादिति भावः । तडिति । तक्ष्णोतेः क्विप् । ण्यन्ताभ्यामिति । णिलोपस्य स्थानित्वात्तक्ष्यातेत्यादौ संयोगादिलोपाप्राप्तेः काष्ठशगेव नास्ति कुतः काष्ठशक्स्यातेति परेश्च घाङ्कयोरिति सूत्रस्थभाष्येण न विरोधः। तत्र झलपरसंयोगादिलोपमाशङ्क्य तथोक्तम् । तस्य दोष इति । क्वौ लु-प्तमिति तु न सार्वत्रिकमिति भाव इत्यन्यत्र विस्तरः । कुत्वस्यासिद्धत्वादिति । पिपच्स्इत्यवस्थायाङ्कुत्वस्यासिद्धत्वात्तदभावे स्कोरित्यस्याप्राप्तेः संयोगान्त-लोप इति भावः। दिधगिति । दादेरिति घः । एकाच इति भष्भावः। विद्वा-निति। विदेः शतुर्वसावदादित्वाच्छपो लुकि शतुर्ङित्वाद्गुणाभावे उगित्वान्नुम्। सान्तेति दीर्घे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न । वसोः ॥ प्रत्ययग्रहणे तदन्तग्रहणं भस्येत्यधिकारस्तदाह । वस्वन्तस्येत्यादि । न च विदेः शतुर्व-सोरेकानुबन्धकत्त्वात्तस्यैवात्र ग्रहणं स्यान्न लिडादेशक्वसोरिति वाच्यम् । वसुसा-देशेन तस्यापि द्व्यनुबन्धत्वात् इति भाष्ये स्पष्टम् । विदुष इति । संप्रसार-णपूर्वत्वस्य षत्वतुकोरित्यसिद्धत्वन्तु न। पदान्तपदाद्योरेकादेशस्यैव तेनासिद्ध-त्वात्। सेदिवानिति । षद्लृधातोर्भाषायां सदेति लिटः क्वसौ द्वित्वे ऽत एके-त्यत्वाभ्यासलोपयोर्वस्वेकाजादितीट् । अक्रुतेति । परे तु पदावधिकेन्वाख्याने सेद्वस्त्रसिति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थि-तिकत्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति सेदुष इत्यादि-सिद्धिरित्यकृतव्यूहपरिभाषा निष्फला लक्ष्यानुरोधादत्र पदावधिकमेवान्वा-

ख्यानमित्याहुः । साहचर्यादिति । न च महत्यतेः क्विपि महतोपि धातुत्वसंभव इति वाच्यम् । औपदेशिकधातुत्वासंभवेन तत्साहचर्यैणोपदेशिकधातुभिन्नसान्तसंयोगस्य ग्रहणमित्याशयात् । सुहिनिति नान्तलक्षणादीर्घस्तु संयोगान्तलोपस्यासिद्धत्वान्न । हिसीत्यस्येदित्त्वादनितामिति लोपो न । ध्वदिति । स्रंसु ध्वंसु अवस्रंसने क्विप् । अनिदित्वान्नलोपः । वस्विति दत्वम् । विवक्षितइति । भाष्ये असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादित्युक्तेरिति भावः । वस्तुतो वचनमेव ज्यायः विवक्षितसङ्ख्यायामपि विभक्तिनिमित्तकत्वेन बहिरङ्गत्वात्ततः पूर्वं परमपुमानित्यादौ स्वरप्रवृत्तौ दोषात् । बहुपुंसीति । विभक्तौ लिङ्गविशिष्टाग्रहणान्नासुङ् । विभक्तिविवक्षाया लिङ्गकार्योत्तरमेव सत्त्वेन न ङीपः प्रागसुङिति भावः । पूञ इति । पातेरिति पाठान्तरम् । स्त्रियामिति सूत्रे भाष्ये तु सूतेः सस्य पः ह्रस्वः म्सुन्प्रत्ययइत्युक्तम् । वस्तुत उच्चारणार्थानामपीत्सञ्ज्ञावश्यकत्वादियमुक्तिर्निष्फला । पुमानिति । सान्तेति दीर्घः । उशनेति । वशेः कनसि ग्रहिज्येति संप्रसारणम् । अस्य संबुद्धाविति । एतच्च वृत्तौ वार्तिकं पठितं वशधातौ माधवस्तु "संबोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्त"मिति श्लोकवार्त्तिकमित्याह । भाष्यानुक्तत्वादिदमप्रमाणमेवेति प्रमाणिकाः । उशना शुक्रः अनेहा कालः । नञि हन एहचेत्यसुन्हन एहादेशश्च । सुव इति । अधातोरित्यस्य धात्ववयवभिन्नासन्तस्येत्यर्थ इति भावः अन्यथा समुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोध्यम् । अदसऔ ॥ अदस इति षष्ठी । तदोः स इत्यतः साविति वर्त्तते । औत्वं पदाद्यत्वापवादः । न नु सोडौ इत्येवास्तु इति चेन्न असावित्यत्र टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वे सावित्यसिद्धेः । असुक इति । अमुक इत्यादौ त्वव्युत्पन्नोऽदःशब्दपर्यायो ऽमुकशब्द इत्याहुः । एतदेत् ॥ बहुवचनशब्दो यौगिक इत्याह । बह्वर्थेति । तेनामी इति सिद्धम् । पश्चादुत्वेति । उत्वेन्युपलक्षणमीत्वस्यापि । ननु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह । नमुने इति । कर्त्तव्ये कृते चेति । एवञ्च न इति विषयसप्तमीति भावः । भाष्ये तु नेयत्कार्यं तत्रासिद्धत्वं नेत्यर्थनैव नाभावोप्याक्षिप्त इति व्याख्यातम् । मु इति समाहारद्वन्द्वः कृते चेत्युक्तेर्मुत्वे सुपि चेति दीर्घो न । अमीभिरिति । नेदमदसोरित्यस्य ॥ इति हलन्ताः पुल्लिङ्गाः ॥

नहो धः ॥ झलो झलीति पदस्येति स्कोरित्यतोन्त इति चानुवर्त्तते झलि परे पदान्ते विद्यमानस्येत्यर्थः । अलोन्त्यस्येत्येतल्लब्धं हस्येति उपपूर्वोणाहबन्धनइत्यतः क्विप् । नहिवृतीति पूर्वपदस्य दीर्घः । सोर्हल्ङ्यादिलोपे धत्वजश्त्वचर्त्वादि । दलोपपत्वे इति । पूर्वपदान्तस्य लोपो धातोः सस्य

षत्वम् । आदेशप्रत्यययोरिति तु न षत्वं पदादादिरिति पक्षे सात्पदाद्योरिति निषेधात् । हस्य घ इति कैयटादिमते षत्वस्येव ढत्वस्यापि कुत्वेन बाधादिति भावः । उष्णिगञ्चिवति निर्देशात्कुत्वस्य जश्त्वेनासिद्धत्वं स्वरीत्या तु ढडगका इति बोध्यम् । द्योरिति । दिव औदित्यौत्वं यण् । चतस्र इति । परत्वादामं बाधित्वा चतस्रादेशे सकृद्गतिन्यायात्पुनरान्नेति स्थानिवत्सूत्रे भाष्ये । चतसृणामिति । नतिसृचतसृदीर्घनिषेधः । सर्वाशब्दवदित्यर्थः । अत एव सर्वनाम्नो वृत्तिमात्रइति न पुंवत्त्वम् । शब्दपरस्य कदापि सर्वनामत्वाभावादिति भावः । यः सौ ॥ पुंस्यपवाधात् क्लीबे सोर्लुका लोपात्स्त्रियामिदम् ॥ वागिति । वचेः क्विब्वचीत्यादिना क्विप् दीर्घोऽसंप्रसारणञ्च । अपोभि ॥ अच उपसर्गात्त इत्यनुवर्त्तते । अभिति न प्रत्ययो व्याख्यानात् । दिगिति । दिश अतिसर्जने क्विप् । षडगकाः प्राग्वत् । त्विषगतावस्मात् क्विप् जश्त्वचर्त्वे । जुषीप्रीतीत्यतः क्विप् । सहस्य सभावे सजूः । अमूभिरिति । अदन्तत्वाभावादेत्वाभावेनेत ईदित्यस्याभावे मुत्वमेव ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

दत्वमिति । वसुस्रंस्वित्यस्य पदाधिकारस्यत्वात्तदन्तेऽपि दत्वमेवमाद्गुत्वादामपि । पूर्वपदस्येवेति । प्रत्ययलक्षणेति भावः । अत एव राजपुरुषादौ नलोपादिसिद्धिः । उत्तरपदत्वे चेति । उत्तरशब्देनोत्तरपदं लक्ष्यते उत्तरपदशब्दश्च समासचरमावयवे रूढः । तेन तस्य पदत्वे तत्प्रयुक्तकार्ये कर्त्तव्ये लुमता लुप्ते प्रत्ययलक्षणं न पदादिविधौ त्वयं निषेधो नेत्यर्थः । तेन परमवाचेत्यादौ न कुत्वं दधिसेचावित्यादौ सात्पदाद्योरिति षत्वनिषेधश्च निरुपपदादेव विचि षष्ठीसमासो ऽत्र सोपपदाद्विचो ऽनभिधानमिति कैयटः । सेचयतेः क्विबित्यन्ये । पदादिविधिश्च प्रतिपदोक्तत्वात्सात्पदाद्योरित्येव । तेन परमबुधावित्यादौ भष्भावो न । उत्तरपदादिः कर्णावर्णलक्षणादित्यादौ तूत्तरपदशब्दस्य समाचरमावयवमात्रे रूढेर्न दोषः । अयञ्च निषेध उत्तरपदस्य कार्यित्व एवेति ङमुट्सूत्रे उक्तम् । बहुच्पूर्वश्चे बहुवाचौ बहुसेवावित्यादावपि न दोषः । बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षणमिति वचनान्तरात् पूर्ववार्त्तिकमपि उत्तरपदत्वे च पदादिविधावित्येव पठितम् । एतत्प्रत्याख्यानप्रकारस्तु गुरुतर इति न युक्त इति भाष्ये ध्वनितं प्रत्याख्यानोत्तरं पुनर्नञ्घटिते तद्वचनपाठेनेति न स लिखितः । उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणं व्याख्यानात् । तेन पूर्वदपिडप्रिय इत्यादाववान्तरतत्पुरुषोत्तरपदेपि नलोपादिसिद्धिः । कादेशेनेति । इदम्शब्दे यः साविति च नेत्यपि बोध्यम् । वक्तव्य इति । द्वितीयाटौस्स्विति अत्र संबध्यते । अयञ्च सामर्थ्या-

ल्लुकालुप्तेपि भवति । एनादेशोपि एनदित्यादिसिद्ध्यर्थं वक्तव्यः येननाप्राप्तिन्यायेनैतदस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्तेरत एव भाष्ये नपुंसकैकवचने एनद्वक्तव्यः कुण्डमानय प्रक्षालयैनदित्युक्तम् । अत्र नपुंसकैकवचने इत्युक्त्या ऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता सिद्धान्तिना । अपवादत्वमजानत एकदेशिनो यद्येनदित्यादिरुक्तिर्यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात् । भाष्यकृता तु फलुत्वात्तत्रोत्तरमुक्तं सिद्धान्ती तु किमुच्यते नपुंसकैकवचनइति सर्वत्र एनदेव वक्तव्य इत्येवंशब्दैः प्रत्याख्यानं कुर्यात् । अनयोरप्यादेशयोरेतदस्त्रतसोरित्येतत्साहचर्येणोपसर्जने न प्रवृत्तिः त्यदाद्यत्वेन सिद्धमिति भाष्यासङ्गतिश्च । एनतमादायैनादेशप्रत्याख्यानपरं यद्येनत्क्रियतइत्यादि भाष्यं त्वेकदेश्युक्तिरिति भाष्यप्रदीपोद्योते निरूपितम् । अन्वादेशविषयेदमेतदोः समासस्यानभिधानमेव । यद्येनत्क्रियते एनो न वक्तव्यः कथमेनमित्यादि त्यदाद्यत्वेन सिद्धं यद्येवमेतच्छ्रितको न सिद्ध्यति । एनच्छ्रितक इति प्राप्नोति । यथालक्षणमप्रयुक्ते इति भाष्यात् । ब्रह्मणी इति । न संयोगादिति निषेधादल्लोपो न । रोसुप्यहर्भातीति । अहश्चिति रुत्वे ऽहो भातीति स्यादिति भावः । नलोपे प्राप्तइति । न च नलोपे ऽकारस्य रौ रेवाविशेषाभावेनान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यम् । संबुद्धौ नलोपनिषेधेनाहर्गच्छेत्यादावुत्वाभावेन दीर्घाहो निदाघेत्यादावुत्वसंपादनेन चारितार्थ्यात् । न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्तानुकरणेन नान्तस्याहन्शब्दस्येति व्याख्यानाचलोपो नेति वाच्यम् । दीर्घाहो निदाघेत्यादौ संबुद्धौ प्रवृत्त्या भ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाभावादिति भावः । आवर्त्येति । आवृत्तौ मानं च रूपरात्रीति वार्त्तिकमेवान्यथा नलोपे ऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । भाष्यप्रामाण्याच्च तस्य संबुद्धावप्रवृत्तिः । तज्ज्ञापकसिद्धवचनकल्पनापेक्षया आवृत्तिर्लघीयसीति भावः । आवृत्तस्य पदान्ते ऽहनिति निपात्यतइत्यर्थः । इदमसंभवएवापवादत्वमिति वार्त्तिकमते ऽहनित्यस्य नलोपोत्तरञ्चरितार्थ्याभिमानेन । वस्तुतः सत्यपि संभवे बाधनं भवतीति भाष्यसिद्धान्तात् रुत्वरत्वे नलोपापवादभूते एव निषेधविषयेपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वाच्चिषेधेनापि तस्य बाध इत्यन्यत् । एतेन संबुद्धौ चारितार्थ्यमित्यपास्तम् । ध्वनितश्चेदमपवादो रुर्नलोपं बाधिष्यतइत्यर्थकभाष्येण । एतदये नलोपे कृतेकारेसावकाशत्वशङ्का तत्समाधानादि वार्त्तिकानुसारिणोरित्यलम् । तदन्तस्यापीति । पदाधिकारस्यात्वात् । यहणवतेति निषेधस्तु प्रत्ययविधिविषय इत्यसमासे निष्कादिभ्य इति

सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः । तस्यासिद्धत्वादिति । अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तिः स्यादित्यभिमानेनेदम् । दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वमेव बोध्यः । संबुद्धौ त्विति । सुपोऽत्र हल्ङ्यादिलोपादसंबुद्धावित्युक्तेर्दीर्घाभावे रुत्वे हशि चेत्युत्वे आद्गुणः । स्रग्वीणीति । इन्ग्रहणेनर्थकस्यापि ग्रहणाद्दीर्घ इति भावः । बहुवृत्रहाणीति । अत्र यद्वक्तव्यन्तदुक्तम् । पदान्ते कुत्वमिति । क्विन्प्रत्ययस्येत्यसिद्धत्वाद्व्रश्चेति षत्वे कुत्वमित्यर्थः षत्वन्तु सृष्टमित्यादौ सावकाशमिति भावः । भाष्यप्रयोगादिति । अनेन भाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोध्यते तेनासृगित्यत्र न दोषः कुत्वापवाद इति । सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेपि विशिष्य षत्वबोधनेन तत्सामर्थ्यात्कुत्वबाध इति भावः । अत एवोपयट्काम्यतीति काम्यचसूत्रस्थोभाष्यप्रयोगः सङ्गच्छते । निपातनादेवेति । निपातनेन त्वनयोरपवादाप्रवृत्तिमात्रबोधनं कुत्वन्तु शास्त्रेणैव । एतेन निपातनादपदान्तेपि कुत्वापत्तिरिति निरस्तम् । असृक्शब्दस्त्विति । इदमेव न्याय्यम् । ऊर्गिति । अयं पुंलिङ्गोपि नपुंसकस्येति सूत्रे बहुवचने ऊर्ज्ज इति कैयटात् । नरजानामिति । बहूर्जिनुम्प्रतिषेध इति वार्त्तिकरीत्येदम् । अचः परो यो झल् तदन्तस्य नुमिति तत्प्रत्याख्यातृभाष्यमते तु नुमोऽत्र प्राप्तिरेव नेति बोध्यम् । न चैवं कुण्डानीत्यसिद्धिः । इकोऽचीति सूत्रे ऽचः सर्वनामस्थाने इत्यनुवृत्त्या ऽनुवृत्तिसामर्थ्यादिक इत्येतत्साहचर्याच्च सर्वनामस्थानइति सप्तम्या षष्ठीं प्रकल्प्य वाक्यभेदेनाजन्तस्य क्लीबस्य तत्र नुम्विधानाददोष इति भाष्ये स्पष्टं काष्ठतक्षीत्यादौ दिवऔदिति सूत्रभाष्योदाहृतेऽचः परझल्त्वजातेराश्रयणाच्च दोषः । अन्त्यादिति । इदं वाचनिकमेव बहूर्जशब्दमात्रविषयकम् । बहूर्ञ्जीति । श्चुत्वस्यासिद्धत्वादनुस्वारे परसवर्णो बोध्यः । स्थानिवत्त्वादिति । क्वौ लुप्तं नेति त्वसार्वत्रिकमिति भावः स्पष्टञ्चेदं दीधीवेवीटामिति सूत्रकैयटे । "जायन्ते नव सौ तथाऽमि च नव भ्यांभिस्भ्यसां सङ्गमे षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि । चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिरि"ति प्राचीनस्य शुष्कप्रक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह । गवाक्शब्दस्येति । शब्दपरत्वेनापूजार्थकत्वाच्चस्य लोपः । भेदत इति । आद्यादित्वात्तसिः भेदेनेत्यर्थः । नवेति । द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं नवेत्यर्थः । अग्रेपि प्रत्येकमेव संख्यान्वयः । गवागिति । सोर्लुका लुप्तत्वान्नुम् । षण्णामिति । कुरूपक्षे त्रयाणां गतौ त्रयाणामित्यर्थः । चत्वस्येति । तेन गतौ त्रयाणामाधिक्यं नेत्यर्थः । कुरूपक्षे इति । पूजायामित्यर्थः । अश्वादीति । सप्तविंशत्यधिका पञ्चश-

तीत्यर्थः । यः शतेति । शतृप्रत्यय इत्यर्थः । आच्छीन ॥ वेति वर्त्तते उत्तरसूत्रे नित्यग्रहणात् । नाभ्यस्तादित्यतो नेति तु नानुवर्त्तते निषेधस्य प्राप्तिपूर्वकत्वादत्र च प्राप्त्यभावात् । नुम्ग्रहणन्तु स्पष्टार्थम् । शतुरवयव इति । परो यः शतेति तु नोक्तन्नुदन्तीत्यादावेकादेशे उभयत आश्रयणे ऽन्तादिवद्भावाभावेन तेन व्यपवर्गालाभेन च नुमभावापत्तेः । अवर्णश्च शतृभिन्नावयव एव गृह्यते श्यन्नकारेणाव्यभिचारात् । शप्श्यनोः ॥ आदितिकिम् । भातीत्यादौ नित्यनुमभावाय । अन्यथा प्रत्ययलक्षणे न स्यादादित्युक्तौ तु वर्णप्राधान्याच्च प्रत्ययलक्षणं नलुमतेति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताङ्गस्य कार्य एवेति भावः । पचन्तीत्यादि । बहुवचने नपुंसकस्य झलच इति नुम् । निरवकाशत्वमिति ॥ इदङ्कदिरूपधिबलेर्ढञिति सूत्रे शेषाद्विभाषेति सूत्रे च भाष्ये स्पष्टम् । परे तु निरवकाशत्वरूपप्रतिपदोक्तत्वस्य बाधकताप्रयोजकत्व प्रक्ते तदभावेनाबाधकत्वेपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो नुमि स्वाम्पीत्येवेत्याहुः । धनुरिति । वारिति दीर्घस्तु न रेफान्तस्याधातुत्वात् । श्रेयांसीत्यादौ युगपद्द्वयोरन्त्यादचः परत्वायोगाद्विरोधेन परत्वाज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न सकृद्गतिन्यायात् । किं चान्त्यादचः परो मित्प्रयोक्तव्य इति मिदचइत्यस्यार्थेन द्वयोर्मिलितयोरन्त्यादचः परप्रयोगासंभवेन नात्र नुम्द्वयप्रसक्तिः पुनः प्रसङ्गविज्ञानेपि । किंच सत्यपि नुम्द्वये परस्यानुस्वारे तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारे द्वयोरनुस्वारयोः श्रुतौ न विशेष इति नपुंसकस्येति सूत्रे भाष्ये स्पष्टम् ॥ इति हलन्तानपुंसकलिङ्गाः ॥

स्वरादि ॥ स्वरादीनामपि निपातसंज्ञैव तु न कृता स्वरादौ निपाता आद्युदात्ता इत्यापत्तेः । एतेन चादीनामप्यव्ययसंज्ञैव कार्येत्यपास्तमित्यन्यत्र विस्तरः । स्वरित्यादि । अनुकरणान्येतानि तत्रैत एव निर्देशाच्च स्वाद्युत्पत्तिस्तेन विसर्गादिकं न । स्वरादीनामनेकशक्तिप्रधानता । स्व आगतः स्वस्थितः स्वः पश्येत्यादिदर्शनात् । गणे च तन्त्रेण सर्वेषामुच्चारणम् । उच्चैरित्यादीन्यधिकरणशक्तिप्रधानानि शब्दशक्तिस्वभावात् । हिरुगादीनि क्रियाप्रधानानि क्रियाप्राधान्यञ्चैषाङ्क्रियायामेव विशेषणत्वेन स्पष्टञ्चेदन्तद्धितश्चेति सूत्रे कैयटे सायञ्चिरं मान्ते अव्यये सायञ्चिरमिति सूत्रस्थभाष्यप्रामाण्याच्चिरमित्यव्ययत्वमप्रामाणिकमिति परे । वदिति । तेन तुल्यन्तत्र तस्येव तदर्हमिति विहितः उपसर्गाच्छन्दसीति विहितस्य च्छान्दसत्वादेव न संज्ञा । वस्तुतस्तद्धितश्चेत्येव सिद्धेर्वद्ग्रहणं व्यर्थम् । अन्तरान्तरेणेति । अन्तरान्तरेण युक्ते इति सूत्रे भाष्ये ऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः

प्रक्षिप्तः । अस्तीति । धनवानित्यर्थके अस्तिमानित्यादौ धनवाचिनः सत्त्ववचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठः । विनिगमनाविरहेण विभक्तिप्रतिरूपकस्य शब्दतोऽर्थतश्च ग्रहणात् तेनैव सिद्धिरिति तु मतुप्सूत्रे भाष्यकैयटयोः । सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमिति तद्भावः । एवञ्चास्तीत्यस्याप्रामाणिकः पाठ इति तत्त्वम् । नमसितेति । महसां नमसामिति प्रयोगस्तु सत्त्ववाचकत्वे बोध्यः । प्रताम् प्रशामिति । प्रतानिति नान्ताव्ययस्य पृथक् पाठसामर्थ्यादपदान्तत्वाच्चास्य नत्वाभावः । प्रशानिति नान्तपाठोऽसांप्रदायिकः । मान्तानुकरणे नत्वाप्राप्तेः स्वरादौ हन्वादिवत् । ङमो ह्रस्वादिति सूत्रस्यभाष्यस्वरसोऽप्येवमेव । नञः स्वरादिष्वप्रामाणिकः पाठः । अव्यये नञ्कुनिपातानामित्यत्र पृथक् नञ्ग्रहणान्त्वकरणिरित्यादौ परस्यापि ह्रस्वस्य बाधनार्थमित्याकरः । एवं माङोऽपि स्वरादौ प्रक्षिप्तः पाठः । यावत्तावच्छब्दावव्युत्पन्नौ । उपसर्गविभक्ति । अत्र प्रतिरूपकत्वं विनिगमनाविरहादर्थतः शब्दतश्च गृह्यते । "गेये केनविनीतौ वा" मित्यत्रापि वामित्यस्य युष्मत्प्रकृतिकविभक्त्यन्तसमानार्थत्वमस्त्येव । स्वरांशे तु नार्थतोऽसंभवात् । एतेन युगं पततीत्यादिव्युत्पत्त्याश्रयणेन युगपदित्यादीनां विभक्तिप्रतिरूपकत्वादेव सिद्धे तेषां गणे पाठो व्यर्थ इत्यपास्तम् । एवन्तदित्यपि लुप्तषष्ठीकं विभक्तिप्रतिरूपकमव्ययम् । अत एवा "विद्यातच्चितोर्योगस्तत्तर्थविभाग" इत्यादौ त्यदादीनीति नैकशेषः । अवदत्तमिति । अत्र क्रियायोगेऽपि "अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि । सुदत्तमनुदत्तञ्च निदत्तमितिचेष्यते" इति भाष्यवचनेनोपसर्गत्वाभावबोधनद्वारा तादृशाभावो बोध्यतइत्याशयः । आहतीति । अह इत्यहनीत्यर्थः । ओमिति च स्वरादिषु तच्चाश्च उश्चम् चेति व्युत्पत्त्या शिवादिवाचकम् । अवतेष्टिलोपश्चेति सिद्धं ब्रह्मण्यङ्गीकारे च उभयोरपि स्वरादित्वं व्याख्यानात् । अन्त्ये ङमो ह्रस्वादिति तु न सिद्ध्यति च्विरव्ययमित्युणादिपठितेन नियमादप्राप्तेः । उणादिव्युत्पन्नानाञ्चेच्चादिस्वरादिपठितानां भवति तर्हि च्व्यन्तानामेवेति तदर्थः । अन्यथा च्व्यन्तानां निपातत्वादेव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । स्वरादिनिपातमित्यत्र निपातपदे गौणमुख्यन्यायाप्रवृत्तिरनित्यत्वात् । अन्यथैदिति प्रगृह्यत्वमिवेदमपि न स्यात् । एवमतिशयेन साधुरित्यर्थं साधीय इत्यपि । सर्वशब्दोऽत्र सर्वः पटो दग्ध इतिवदवयवकार्त्स्न्ये इत्याशयेनाह । यस्मात्सर्वेति । वचनत्रयात्मिकेत्यर्थः । नेति । किन्त्वेकवचनमेवेत्यर्थः । ननु संख्याकारकबोधकैरेकवाक्यतया सुपां विधानमिति पक्षे ऽव्ययार्थे संख्याकारकयोरभावात्कथं विभक्तिः । अव्ययादाप्सुप इति ज्ञापकाश्रयणे च सर्वापि

किं च विहितानां नियमपक्षे ऽपि नास्योपपत्तिस्तत्पक्षे सर्वेष्वर्थेषु विधेयतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनेन सर्वविभक्त्युत्पत्तौ लोपेनेव जातस्य निवृत्तिः । तन्निवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्त्तते नियमश्च द्विविधोऽर्थनियमः प्रत्ययनियमो वा । अन्त्योऽपि द्विविधः प्रकृतार्थापेक्षः सामान्यापेक्षो वा । तत्र कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव । कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवेत्यादिरर्थनियमः । अत्र पक्षे सर्वाः सप्तापि विभक्तयो ऽव्ययेभ्यो विभक्तीनामनियतत्वात् । कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव न करणादौ । कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा न कर्मादौ संख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेवैकवचनादि न द्वित्वादावित्यादिः प्रकृतार्थापेक्षप्रत्ययनियमः । अत्रापि पक्षे सर्वाः सप्तापि विभक्तयो ऽव्ययेभ्यो लभ्यन्ते । अथ प्रातिपादिकाच्चेद् द्वितीया तदा कर्मण्येव नान्यत्र प्रातिपदिकाच्चेत्प्रथमा तदा मात्रग्रहणात्पर्युदासन्यायेन कर्मादियोग्यतद्रहितप्रातिपदिकार्थे एवेत्यादिः सामान्यापेक्षः प्रत्ययनियमस्तदाव्ययेभ्यो विभक्तिप्राप्तिरेव नेति पूर्वोक्तज्ञापकादेव सेति सर्वापि । यद्यपि सुपान्तिङां संख्याकर्माभयार्थकत्वेन कर्मण्येव नान्यत्रेति वक्तुमशक्यं तथापि कर्मण्येव न तु तदभावे इत्याकारो वक्तुं शक्यः स्पष्टञ्चेदं सर्वं बहुष्वित्यादिसूत्रेषु भाष्ये । तत्र हि अर्थनियमे प्रकृतार्थापेक्षप्रत्ययनियमे च सप्तापि विभक्तयः संपूर्णा उक्ताः । सामान्यापेक्षप्रत्ययनियमे च सुपो ऽप्राप्तिरेवोक्ता अव्ययादाप्सुप इति सूत्रे भाष्ये ऽपि स्फुटमिदमिति बोध्यम् तद्धितश्चेति सूत्रे भाष्यकृतः एकवचनमित्येव सूत्रं कार्यमेकग्रहणञ्च न कार्यं विभक्तिविधावुद्देश्यतावच्छेदकावच्छिन्नादेकवचनमित्युत्सर्गस्तस्य द्वित्वबहुत्वयोरितरे बाधके भविष्यत एवञ्चैकत्ववत्यपि भविष्यति । अलिङ्गासंख्येभ्यो ऽव्ययेभ्यश्चैकवचनम्, द्विवचनादिविधायकयोर्द्विबहुग्रहणसामर्थ्यान्नचाहासंज्ञाबोद्ध्यैकत्वाभावेपि तत्प्रवृत्तेः । द्विबहुत्वयोर्द्विवचनबहुवचननोक्तावर्थादेकवचनस्यैकवचनमित्येतद्वचनं विनापि द्वित्वाद्यभावे कर्मादौ सिद्धत्वेन सामर्थ्यादप्राप्तप्रापणार्थमेतदिति कर्माद्यभावेप्येतत्प्रवर्त्तते इति विनिगमनाविरहात्सर्वविभक्त्येकवचनमनेन । अत एवाव्ययादाप्सुप इति प्रत्याहारग्रहणं चरितार्थं तृतीयासप्तम्योरिति च । प्रथमापि मात्रग्रहणाद्यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यमंभावनातत्रैवेति तस्याऽप्यप्राप्तिरव्ययेभ्यः । पचतिकल्पमित्यादौ तु नानेन सर्वैकवचनम् । सर्वथा ऽप्राप्तावेव तस्य विद्ध्यर्थत्वात् । अत्र च न तथा कर्त्तृत्वकर्मत्वसत्त्वेन क्रियायां स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति बोद्ध्यम् । यत्तु कैयटेन प्रथमातिक्रमे कारणाभावादनेकनियमबाधे गौरवाच्च

रोचतेः कर्तेति अभिलषति रुच्यर्थत्वाभावान्न तद्योगे संप्रदानत्वमिति भावः । तदाह हरिनिष्ठेति । पर्थीति । न च प्रीयमाणपदाभावे सूत्रस्य क्रियाजनकत्वमात्रविवक्षायां संज्ञान्तराप्राप्तिविषये चारितार्थ्येन परत्वादधिकरणसंज्ञया बाधसिद्धेः कथमेतदिति वाच्यम् । देवदत्तं रोचते इत्यस्याप्यापत्तेरित्याशयात् तत्सत्त्वे त्वस्य कर्मसंज्ञापवादत्वान्न दोषः । गोपी स्मरादिति । श्लाघादेः स्तुत्यादिना बोधनमर्थः । स्मरादिति । हेतौ पञ्चमी स्तुत्या ऽऽत्मानुरागं कृष्णं बोधयतीत्यर्थः । स्तुतिश्च कृष्णस्यैव । एवं ह्नुत्या स्वानुरागं कृष्णं बोधयतीत्यर्थः । ह्नुतिः सपत्न्यादिभ्यः कृष्णस्यैव । एवं स्थित्या शपथेन च कृष्णं स्वानुरागं बोधयतीत्यर्थः । यद्वा स्तुत्या ह्नुत्या च कृष्णं स्वसखीजनं बोधयति स्थित्या शपथेन च कृष्णं बोधयतीत्यर्थः । ज्ञीप्स्यमानपदे ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणादित्यन्यत्र विस्तरः । स्तुत्यादिमात्रार्थत्वे कृष्णं श्लाघते कृष्णं ह्नुतइत्येव । ज्ञीप्स्यमानइति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणि शानच् ॥

धारेरु ॥ धृङवस्थाने इति ण्यन्तस्य ग्रहणं व्याख्यानात् । भक्तायेति । ध्रियमाणं स्वरूपेणावतिष्ठमानं मोक्षं हरिः प्रयुङ्क्तइत्यर्थः । प्रेरणाया भक्तासत्त्वेऽभावात्तस्यापि प्रेरणाजनकत्वेन कारकत्वं बोध्यम् । अवश्यदेयत्वेन मोक्षेऽपि ऋणत्वं बोध्यम् । प्रकर्षविवक्षायान्त्विति । फलाश्रयत्वेन विवक्षायामित्यर्थः । परत्वादिति । इदं सूत्रं विषयतया क्रियाजनकत्वमात्रविवक्षायां चरितार्थमिति भावः । पुष्यसंप्रदानकेच्छेति चतुर्थी समभिव्याहारे बोधः । कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चेत्यत्र क्रियासंबन्धित्वमात्रविवक्षया षष्ठी । अन्ये तु भोगायेत्यध्याहृत्य कान्तायेति विभक्तिविपरिणामेन व्याख्येयमित्याहुः । स्पृहधातुरिच्छामात्रवाची फलावच्छिन्नेच्छावाची वाद्ये संप्रदानत्वमन्त्ये कर्मत्वम् । ईप्सितत्वन्धात्वर्थजन्यफलाश्रयत्वम् । न तु फलस्य धात्वर्थत्वपर्यन्तमाग्रहः कर्मसंज्ञायान्तु यथा तल्लाभस्तथोक्तम् । भार्यामीर्ष्यतीति । नात्र भार्यां प्रति कोपः किं तु परैर्दृश्यमानान्तां न सहत इत्येव एवञ्चात्र न कोपजन्येर्ष्या किन्त्वन्यपुरुषदर्शनजन्येति भावः । हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् क्रियया यमित्यनेन न सिद्धिः न ह्यकुपितः क्रुध्यतीति भाष्येण प्ररूढकोप एव क्रोध इति कुपेस्तदर्थत्वाभावेन न तद्योग इदम् । कुप्यति कस्मैचिदित्याद्यसाध्वेव । उपसृष्टयोरित्यस्यार्थमाह सोपसर्गयोरिति । वैयाकरणनिकाये एष एतदर्थकत्वेन प्रसिद्धः । पूर्वसूत्रापवादोऽयम् । यदीय इति । यदीय शुभाशुभसंबन्धीत्यर्थः । राधीक्ष्योः प्रश्नविषयपर्यालोचनमर्थः । कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ । अत एव श्यन् । राधोकर्मकादेवेत्युक्तेः कृष्णसंप्रदानकं शुभाशुभ

पर्यालोचनमर्थः ॥ प्रत्याङ्भ्याम् ॥ व्याख्यानात्प्रत्येकं निमित्तत्वमित्याशयेनोदाहरति । गां प्रतिशृणोतीति । अनयोः प्रवर्तनापूर्वकोऽभ्युपगमोऽर्थः । तत्र विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम् ॥ अनुप्रतीति भिन्नं पदं लुप्तपञ्चम्यन्तम् । गृणाद्गति श्नान्तानुकरणात् षष्ठी । शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनमनयोरर्थः । पूर्वव्यापारस्येति । शंसनस्येत्यर्थः । प्रोत्साहयतीति । ओथामित्यादिशब्दैरिति शेषः । शतायेति । करणस्यैव सम्प्रदानत्वेन भानमत्र शतव्यापारश्च दानरूप एवेति बोध्यम् । तादर्थ्ये । तादर्थ्यमुपकार्योपकारकभावरूपः संबन्धः । यदा तादर्थ्यस्य संबन्धत्वेन भानं तदा षष्ठी गुरोरिदं गुर्वर्थमित्यत्र भाष्ये स्पष्टम् । क्लृपीति सप्तमी । अर्थग्रहणाच्चात्र संपत्तिरुत्पत्तिः क्लृप्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्तमानाच्चतुर्थीत्यर्थः । हितयोगे । चात्सुखयोगे ऽपि ॥ क्रियार्थोप ॥ क्रियार्थः फलं यस्य तत् क्रियार्थन्तेन स्ववाचकं लक्ष्यते क्रियाफलार्थवाचकमुपपदं यस्येत्यर्थः सोऽर्थश्च प्रत्यासत्त्या क्रियारूप एव । स्थानिशब्दश्च प्रयुज्यमानवाची वैयाकरणानां निकाये प्रसिद्धः क्रियार्थक्रियपोपपदत्वञ्च तुमुनादेरेवेत्याह क्रियार्थोक्रियेति । फलेभ्यो यातीत्यादौ फलकर्मकाहरणफलकं यानमिति बोधः । यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले प्रविश पिण्डीमित्यादौ तस्यैव पदस्य संपूर्णवाक्यार्थशक्तता तथास्य समुदायस्याहरणघटितार्थे शक्तिरेतच्छास्त्रबलात् स्थानिन इत्युक्तेस्तत्प्रयोगेनेति बोध्यम् । अयमेवार्थाध्याहारः । नमस्कुर्मो नृसिंहायेति । नमः स्वस्तीत्यनेन तु न सिद्धिः उपपद विभक्तेरितिन्यायेन द्वितीयापत्तेः । पिण्डीमित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति ॥ तुमर्थात् ॥ तुम्शब्देन तदर्थो लक्ष्यते सोऽर्थो यस्येत्यर्थः । इति सूत्रेणेति । भावे ये प्रत्यया वक्ष्यन्ते ते क्रियार्थोक्रियायामुपपदे भविष्यति स्युरिति तदर्थः । यागायेति । यागफलकं यानमित्यर्थः । उपपदविभक्तेरिति । वार्त्तिकमेवेदं भाष्ये पठितमिति केचित् क्रियाकारकयोः संबन्धोऽन्तरङ्गः उपपदार्थेन तु यत्किंचित्क्रियाकारकभावमूलकः संबन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति अन्तरान्तरेणेति सूत्रे कैयटः । अत्राहुः । एवं सति नमस्यति देवानित्यादौ नमःपदार्थे क्रियाकारकभावेनैवान्वये परत्वाच्चतुर्थीमाशङ्क्यानेन वारणस्य भाष्योक्तस्यासङ्गतिः । एतेन प्रधानत्वात् क्रियायास्तत्संबन्धनिमित्तकत्वेन बलवत्त्वमित्यपि परास्तम् । कारकविभक्तित्वं च क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमत्वम् । अन्यानभिहितानुद्भूतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपि । अभिहिते प्रथमेति

वार्तिकस्वारस्यादतः प्रथमापि कारकविभक्तिरिति बोद्ध्यम् । द्वावित्यादौ द्वित्वादेरिव देवदत्तः पचतीत्यादौ उभाभ्यामेकस्यैव कर्तृत्वस्य बोध इति न तद्बोधावृत्तिः । नमस्करोति देवानिति । उत्कृष्टनिष्ठो यः स्वनिष्ठापकृष्टत्व बोधः तदनुकूलव्यापाररूपनमस्कारफलस्य तादृशबोधस्याश्रयतया देवानां कर्मत्वं स्वशब्देन प्रयोक्ता नमः शब्दस्य साक्षात्प्रभृतिपूर्यादिषु वा पाठेन गतित्वात्सत्वम् । एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चायं न्याय इति तु न युक्तम् । नमस्यति देवानित्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात् । सहयुक्त इत्यादिसूत्रस्थभाष्यविरोधाच्च । अलमितीति । अलमित्यनेन पर्याप्त्यर्थानां ग्रहणं व्याख्यानादित्यर्थः । तत्र ज्ञापकमप्याह । तस्मैप्रेति । षष्ठ्या अपि साधुत्वे बीजं स एषामिति । आशीर्विवक्षायामिति । आशीर्विषयत्वविवक्षायामित्यर्थः । स्वस्त्यर्थः कुशलं मङ्गलं वा स्वस्तियोगे चतुर्थ्या अवकाशः स्वस्ति जाल्मायास्तीति तत्वकथनम् । कुशलार्थैराशिषीत्यस्यावकाशः स्वस्तिभिक्षाः कुशलार्थाः स्वस्तिशब्दो ऽनव्ययमपि । 'प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः । स्वस्तिर्भवतु मे नित्यं सुखञ्चानुत्तमं तथे'ति भविष्योत्तरे प्रयोगात् ॥ मन्यकर्मणि ॥ तिरस्कार इति । अनादरोनादराभावमात्रमपि तु नञो ऽधर्मादाविव प्रतिपक्षवाचित्वात्तिरस्कार इति भावः । तत्रानादर इति मन्यकर्मविशेषणान्तद्द्योतकं यत्कर्मेत्यर्थः । तेन युष्मच्छब्दाच्चतुर्थी न तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेये ऽत्र गृह्यते न त्वपकृष्टसादृश्यरूपः तत्प्रतीतिश्च नञ्समभिव्याहार एव । तृणतुल्यमपि न मन्ये इत्यर्थः । तृणाय मत्वा रघुनन्दनोपीत्यादौ नञोध्याहारः तदाह न त्वां तृणमिति । कर्मोत्र चतुर्थ्यर्थः । श्यनेति । न तु यका-व्याख्यानादिति भावः । श्यंस्तूपलक्षणम् । तेन लिडादावपि भवति तत् ध्वनयन्नाह तानादिकयोगेनेति । नौकाकेति भाष्ये येषु प्राणिषु नेष्यते तेनावादयो भविष्यन्तीति येष्विति बहुवचनेन वृत्त्युदाहरणबलेन चैष्वेवानिष्टनिर्णय इति भावः ॥ गत्यर्थकर्म ॥ कर्मोत्रापि चतुर्थ्यर्थः । गत्यर्थेति किम् । ओदनं पचति । कर्मणीति किम् । अश्वेन गच्छति । चेष्टायां किमिति । धात्वर्थस्य क्रियारूपत्वात्प्रश्नः । शरीरक्रियाया एव ग्रहणमित्युत्तरम् । पन्थानमिति । अध्वशब्दो ऽर्थपरो व्याख्यानादिति भावः । अधिष्ठित इति । शब्दप्रयोगसमकालिकगन्तृव्यापारजन्यफलाश्रय इत्यर्थः । अध्वपदेन गन्तृव्याप्यो ऽर्थउच्यते तेन गन्तृयुक्तस्त्रिया स्त्रियं गच्छतीत्यादौ न । स्पष्टञ्चेदं भाष्ये । उत्पथादिति । उत्पथं सन्त्यज्येत्यर्थः । इष्यत इति । न त्वाक्रान्त इत्यर्थः । उत्पथेनेति । गन्तुमशक्त इति शेषः ॥ इति चतुर्थी ॥

ध्रुवमपायेऽपादानम् ॥ ध्रुवं स्थिरम् । अपायो विभागजनको व्यापारः तदनाश्रयमिति यावत् । विभागश्च न वास्तवसंबन्धपूर्वको वास्तव एव किं तु बुद्धिपरिकल्पितसंबन्धपूर्वको बुद्धिकल्पितोऽपि माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिकल्पितापायाश्रयेणैव भाष्ये पञ्चमीसाधनात् कर्तृवारणाय ध्रुवमिति अन्यथा कर्तृसंज्ञाया इयमपवादः स्यात् । अपायविषये यत् कारकं तदपादानमित्यर्थसंभवात् । कर्तृसंज्ञा तु पचत्यादियोगे चरितार्था । हरिरप्याह 'अपाये यदुदासीनञ्चलं वा यदि वाचलम् । ध्रुवमेवातदावेशात्तदपादानमुच्यते' इति स्पष्टञ्चेदं कैयटादौ । भाष्यानुसारिणस्तु एवं हि त्रस्तादश्वात्पतितो धावतः पततीत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्क्य ध्रौव्यस्याविवक्षितत्वमत्र यतः सतोऽप्यविवक्षा भवतीति समाहितं भाष्ये तदसङ्गतं स्यात् । त्वदुक्ताध्रुवत्वस्य पतधात्वर्थव्यापाराश्रयत्वस्यात्रासत्वेन सतो ध्रौव्यस्याविवक्षेत्यस्यासङ्गतेः । सिद्धान्तेऽपि त्वदुक्तध्रुवपदार्थकथनमेवोचितमिति तदसङ्गतिश्च लोकसिद्धातिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च । अतदावेशादित्यस्य हरिकारिकायां तदावेशाविवक्षणादित्यर्थः । तस्मादपाये गतिविशेषे सति यद्ध्रुमवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः वासादेरवधित्वोपयोगित्वाश्रयणेन शङ्का वृक्षात्पर्णमित्यादौ तस्यासत्वाव तदुपयोगित्वन्तस्येत्युत्तरम् । ध्रुवमपाये इति तु वृक्षस्य पर्णं पततीत्यादौ वस्तुतस्तस्य पर्णद्वारा पातजनकत्वात्प्राप्तापादानत्ववारणाय एवञ्चापायेति कारके इत्यस्य क्रियाजनकत्वेन विवक्षितइत्यर्थे तात्पर्यग्राहकं बोध्यम् । ध्रुवग्रहणन्तु कारकान्तराणामिवापादानस्यावधिभावोपगमातिरिक्तव्यापाराभावबोधनायेत्याहुः । अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोध्यम् । एवञ्च वृक्षात्पततीत्यादौ तदपादानविभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः । वृक्षाद्भूमिं पततीत्यादौ वृक्षापादानविभागपूर्वकः संयोगानुकूलो व्यापार इति बोधः । परस्परस्मान्मेषावपसरत इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं परस्परपदोपात्तयोरेव विभागाश्रयत्वादपादानत्वं मेषपदोपात्ते तदविवक्षणात् । प्रयोगानुसारित्वाद्विवक्षायाः, विभागपूर्वकपृष्ठतोगमनमपसरणम् । आत्मानमात्मनेत्यादावन्तःकरणाद्युपाधिकृतभेदवच्छब्दरूपोपाधिकृतभेदाग्रहणे मानाभावात् । शब्दालिङ्गितार्थभानस्यैव सत्वाच्चेत्यन्यत्र विस्तरः । यत्त्वपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठाङ्गतिंप्रति इतरस्यापादानत्वमविरुद्धमिति तन्न । वस्तुतस्तन्निष्ठव्यापारयोर्भेदेऽपि

सधातुना निवृत्तभेदस्यैवापायस्योपादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः । अत एवैकशेषसूत्रे भाष्ये उक्तं न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वादिति। धनुषा विध्यतीत्यत्र निःसरच्छरजन्यवेधार्थत्वाद्धनुषोऽपादानत्वकरणत्वोभयप्राप्तौ परत्वात् करणत्वं बोध्यम् । ग्रामादायातीति। आयातेर्विभागपूर्वकोत्तरदेशसंयोगानुकूलो व्यापारोऽर्थः। वृक्षन्त्यजतीत्यादौ व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन कर्मसंज्ञयापादानत्वस्य बाधः स्यन्देस्तु न विभागोऽर्थ इति वृक्षे स्यन्दत इत्येव। चलतेस्त्वासनाच्चलित इति प्रयोगादस्त्येव विभागार्थत्वं सार्थाद्धीयत इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽप्यपादाने चाहीयरुहोरिति ज्ञापकात्कर्मप्रत्ययान्तहीधातुप्रयोगेऽपादानत्वं कर्मसंज्ञायाञ्च कर्तृपदं स्वतन्त्रोपलक्षणमिति कर्मणि लकारः सार्थेन त्यज्यते देवदत्त इत्यर्थः। धावत इति। क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तगत्यनावेशात् धावनस्याविवक्षणाद्वा ध्रुवत्वं बोध्यम् । जुगुप्सेत्यादि। जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानं तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाविवक्षायां संबन्धित्वेन च विवक्षायां पापस्य जुगुप्सत इति षष्ठी भवत्येव सत्यभिधाने एव मुत्तरसूत्रेष्वपि बोध्यम् । एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया सूत्रेणैव सिद्धेदं वार्तिकमुत्तरसूत्राणि च प्रत्याख्येयानीति स्पष्टं भाष्ये। भयं भीस्त्राणन्त्रास्तदाह। भयार्थानामिति। हेतुतृतीयापवादोऽयम् अरण्ये इति। भयाद्यर्थानां योगे कारकमपादानमित्यर्थेऽविशेषात्सर्वसंज्ञापवादः स्यादिति भावः ॥ पराजे ॥ असोढो ग्लानिविषयः एवञ्च पराजेरकर्मकत्वे उदाहरणत्वं तदाह ॥ ग्लायतीत्यर्थ इति । अभिभवतीति। तिरस्कारानुकूलो व्यापारो धात्वर्थ इति भावः। प्रवृत्तिविघात इति। भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापार इत्यर्थः। ईप्सित इति। वारणार्थधात्वर्थफलाश्रय इत्यर्थ उदाहरणे च तद्धात्वर्थव्यापारजन्यसंयोगादिरूपफलाश्रयत्वाद्यवानामपादानत्वं ईप्सित इत्यनेन प्रधानाप्रधानान्यतरव्यापाराश्रयमात्रस्याक्षेपः कर्मलक्षणेतु तमप्ग्रहणात् प्रकृतधात्वर्थप्रधानभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणमिति भावः ॥ अन्तर्धौ ॥ अन्तर्द्धिरन्यकर्तृकस्वकर्मकदर्शनाभावानुकूलो व्यवहितदेशस्थितिरूपस्तद्घटकं यत्कर्तृकदर्शनाभावमिच्छति तदपादानमित्यर्थस्तत्फलितमाह। व्यवधाने सतीति। येनेत्यत्र कर्तृकर्मणोरिति षष्ठी न सौत्रत्वात् आत्मन इति प्रत्यासत्ति लब्धम् । मातुर्निलीयतइत्यादावाक्षेपलभ्येच्छा बोद्ध्या । चोरानिति । चोरकर्मकदर्शनेच्छाभाव इति शाब्दोऽर्थः स च चोरकर्तृकस्वदर्शनाभावायेति प्राप्तिः । इच्छामात्रस्याक्षेपलभ्यत्वइव

विशिष्टस्यात्तेपलभ्यत्वे ऽपि स्यादिति भावः । प्रकृते नान्तर्द्धिरिति दोषः। येनेत्यस्याभावे हि स्वकर्मकदर्शनाभावं य इच्छति इत्यर्थे कर्तुरेव स्यादतस्तत्। इच्छतिग्रहणं किमिति । अन्तर्धौ सति यत्कर्तृकदर्शनस्याभावस्तदपादानमित्यर्थोऽस्त्विति भावः। सत्यपीति । अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः । अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः। नियमेति । उपयोगशब्दस्य तत्रैव रूढेर्नियमो ब्रह्मचर्यादिः। नटस्येति । नटजन्यं श्रवणमिति बोधात् कारकत्वं नियमपूर्वकविद्यावक्तृत्वाभावान्नेत्युत्तरम् ॥ जनिक ॥ प्रकृतिरुपादानकरणं ब्रह्म च मायाशबलञ्जगदुपादानकारणम्। वृत्तौ हेतुपदमप्युपादानकारणपरमेवेति बोद्ध्यम्। विभाषेत्येव सिद्धे इदमपादानत्वेन बोधनार्थम्। तत्र हि गुणे ऽस्त्रियामिति प्रायिकं बाहुलकं प्रकृते स्तनुदृष्टेरिति वार्तिकप्रयोगात् ॥ भुवः॥ प्रभवनं प्रथमप्रकाशः प्रग्रहणात् तदधिकरणमपादानमित्यर्थः 'प्रभवो जलमूले स्यात् जन्महेतौ पराक्रमे॥ ज्ञानस्य चादिमान'इति विश्वः। प्रकाशत इत्यस्य योगे तु न प्रथमप्रकाशार्थत्वाभावात्तदाह तत्र प्रकाशतइत्यर्थ इति । ल्यप्लोपइति। ल्यबन्तशब्दाज्ज्ञाने इत्यर्थः । कर्मणीति। प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः। प्रासादादिति। फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया आजघ्रे विषमविलोचनस्य वक्त्र इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी वक्त्र इत्यस्य प्राप्येतिशेषः । गम्यमानापीति। विशिष्य तद्वाचकपदानुपात्तापीत्यर्थः। कस्मात्त्वमित्यादौ फलेभ्योयातीत्यत्रेव बोधप्रक्रिया। अन्येत्यर्थेति ! तदर्थश्च भेदवान् अत एव घटात् भिन्न इत्यादि सिद्धिः । परेतु ध्रुवमिति सूत्रे अपायशब्देन भेदस्यापि ग्रहणं पञ्चमी विभक्ते इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात् भिदिर् विदारण इत्यत्र भेदज्ञानविषयत्वमपि विदारणं एकत्वेन गृहीतस्य तथाबोधे बुद्धिविदारणस्य तत्रापि सत्वात् अत एव घटात् भेद इति सिद्धं तद्योगेप्यपादानत्वात् तस्यैव संबन्धत्वेन विवक्षायाङ्घटीयो भेद इत्यपि अन्यशब्दार्थस्याक्रियत्वात् तद्योगे एतद्विधानं अत एव घटः पटो नेत्यादौ न पञ्चमी नञो भेदवदर्थकत्वे ऽपि अक्रियात्वात् घटादेक इत्याद्यसाध्वेव अत एवेतरग्रहणञ्चारितार्थं अत एव भाष्ये ऽर्थे ग्रहणं नोक्तमित्याहुः। आराद्दूरसमीपयोः। एतद्योगे दूरान्तिकार्थैरिति प्राप्तम् । नन्वयं देशवाची न दिक् शब्दो ऽत आह, दिशि दृष्ट इति । शब्दग्रहणादिति भावः । ते च रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते नैन्द्रीककुबादयो व्याख्यानात् । अवयववाचीति । तद्वाचिपूर्वादियोगे ऽवयविवाचकान्नेत्यर्थः । ज्ञापकस्य सजातीयापेक्षत्वात् । अत

एवास्मादयं पूर्वो भागः कायस्येति सिद्धम् । अवयवे पूर्वत्वं अवयवान्तरापेक्षया प्रथमकालोत्पत्तिकत्वेन बोद्ध्यम् । अञ्चूत्तरपदस्येति । दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणात्तेन सध्र्यङ् इत्यादावर्थे तन्नेति भावः बाधितुमिति । परत्वात्प्राप्तमित्यादिः । यदि तु षष्ठ्यतसर्थेत्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्ययएव प्रवृत्तिस्तदेदं मास्त्विति तत्त्वमिति भाष्ये स्पष्टम् । दक्षिणा ग्रामादिति । दक्षिणस्यान्दिशीत्यर्थ दक्षिणादाजिति आहि च दूरे इत्याजाही षष्ठ्यतसर्थेत्यस्यापवादः । प्रभृतियोगे इति । प्रभृत्यर्थयोगइत्यर्थः । अपादाने पञ्चमीति सूत्रे यतश्चाध्वकालनिर्माणं ततः पञ्चमी कार्तिक्या आग्रहायणी मासइति वार्तिकप्रत्याख्यानायेदमत्र प्रयोक्तव्यं सत्र प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मासइति भाष्येण प्रभृतिशब्दाभावे ऽपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थकेन प्रभृत्यर्थयोगे पञ्चमीति वचनसत्त्वस्य भगवता बोधितत्वादन्यथा प्रभृतिपदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिति भावः । एवञ्च तदर्थकारभ्यशब्दयोगे ऽपि पञ्चमी यथा अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको मेरुपृष्ठादारभ्य ध्रुवपर्यन्तङ्ग्रहनक्षत्रतारागणचित्रितोन्तरिक्षलोक इति पातञ्जलभाष्यप्रयोगे प्रभृतीत्यस्य चावधिमादायेत्यर्थं आरभ्येत्यस्यैतदर्थकतापि अवधौ पञ्चम्यन्तार्थस्याभेदेनान्वयः । तद्विशेषणत्वे ऽपि न द्वितीया प्रभृत्यर्थयोगे पञ्चमीति भाष्यकृद्बोधितवचनात् आरभ्येत्यस्य गृहीत्वेत्यर्थेनावीचिमारभ्येत्यादौ द्वितीया । वस्तुतो ऽवधित्वन्तस्य समभिव्याहृतपदार्थनिरूपितं गम्यमानक्रियापेक्षमित्यपादानत्वादेवात्र पञ्चमी सिद्धा । कार्तिकीतो विभक्ते अत एव कार्तिक्यवधिके आग्रहायणीघटिते मासे कार्तिकीमादाय गते आग्रहायणीति बोधः । भवात्प्रभृति आरभ्य वेत्यत्र भवकालाद्विभक्ते अत एव भवावधिके मरणान्ते काले भवकालमादाय हरिः सेव्य इति बोधः । एवमन्यत्राप्यूह्यमित्यलं विस्तरेण । ज्ञापकादिति । पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यर्थः । अयं भावः । परस्परसाहचर्यात्तत्रापपरी वर्जनार्थौ कर्मप्रवचनीयावेव । तद्योगे पञ्चम्यपाङ्परिभिरिति वचनात् लक्षणप्रतिपदोक्तपरिभाषया ऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च पञ्चम्यैव सिद्धः समासः तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तरपदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समास इति व्यर्थं तत् बहिःशब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञापनार्थमिति । इदमपपरिबहिरिति सूत्रे भाष्ये स्पष्टम् । पञ्चमीति । सापीत्यर्थः । तेन करस्य करभो बहिरिति सिद्धम् ॥ प्रतिनिधि ॥ यस्मादिति पञ्चम्यर्थः संबन्धः । अस्मादेव निपातनात्षष्ठ्यर्थे पञ्चमी । प्रतिनिधिप्रतिदानशब्दौ कर्मक्रिभावल्युडन्तौ ।

प्रतिनिधिप्रतिदाने यत्संबन्धिनी ततः कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः । प्रतिनिधिः सदृशः प्रतिदानम् दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम् । कर्तृवर्जितमिति । कर्तृसञ्ज्ञारहितमित्यर्थः । ऋणत्वंवस्तुसन्निमित्तं न तु तृतीयावाच्यकोटिनिविष्टम् । हेतुभूतमिति । तेन करणत्वविवक्षायान्तृतीयैवेति भावः ॥ विभाषागुणे ॥ योगविभागादिति । बाहुलकं प्रकृतेस्तनुदृष्टेरित्युक्तवार्तिकप्रयोगाद्गुणे ऽस्त्रियामिति प्रायिकमित्यन्ये । धूमादिति । धूमपदं स्वज्ञाने ऽग्निमत्पदं स्वज्ञानविषये लाक्षणिकं बोद्धम् । समुच्चयार्थमिति । स्पष्टञ्चेदं भाष्ये । एतेनान्यतरस्यामङ्गीकार इत्यर्थकं पदद्वयमेतदित्यपास्तम् । विकल्पविषयेप्यर्थासङ्गतिश्च । परे तु द्वितीयासमुच्चयेन फलं विना वातं विना वर्षमित्यादौ ऋतेशब्दयोगइव ततोन्यत्रापि दृश्यतइत्यनेन द्वितीयासिद्धेरत एव भाष्ये द्वितीयासमुच्चयो नोक्तः । पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः दक्षिणेन ग्रामं दक्षिणतो ग्रामस्येति प्रकृतसूत्रस्थभाष्येण एनपा द्वितीयेति सूत्रं षष्ठ्यतसर्थेत्यतः प्रागिति च सूचितमन्यथा सौत्रक्रमत्यागे न्यायविपरीतपूर्वनिपातकरणे च बीजानापत्तिरत एव करणे चेति सूत्रे द्वितीयासमुच्चयो नेत्याहुः ॥ करणे च ॥ करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम् । चकारः तृतीयान्यतरस्यामित्यनुकर्षणार्थः षष्ठी णापोष्टगितिवत् । अद्रव्येति । द्रव्यभिन्नवचनेभ्य इत्यर्थः । द्रव्यपदेनात्र सर्वनामपरामर्शयोग्यं लिङ्गनिरूपितविशेष्यं वा स्तोकशब्दो यद्धर्मावेशाद् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः स च धर्मो ऽल्पादिशब्दप्रवृत्तिनिमित्तमेव । शुक्लादिवच्चैते धर्मवचना अपि करणत्वञ्च परम्परया ईदृशार्थएव च साधुत्वं सूत्रबलादिति स्पष्टमलुगुत्तरपदइत्यत्र कैयटे । करणे किम् । स्तोकम्पचति । असत्वरूपफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्यासत्ववचनत्वमिति दिक् ॥ दूरान्तिका ॥ अत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामित्यतः समुच्चयार्थकान्यतरस्यां ग्रहणानुवृत्त्यैवार्थाधिकारात्पञ्चम्याः सिद्धौ चकारो व्यवहिततृतीयासमुच्चयार्थो व्याख्यानादित्याह चादित्यादि । प्रातिपदिकार्थमात्रे इति । व्याख्यानादिति भावः ॥ इति पञ्चमी ॥

षष्ठी शेषे ॥ शेष उक्तादन्यः स च तत्तद्रूपेण स्वत्वादिः । संबन्धत्वेन रूपेण च । कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वन्तत्रापि तन्मूलके संबन्धे विवक्षिते षष्ठी तदाह कारक इति । स्वस्वामिभावादिरिति । स्वत्वस्वामित्वसमूहः संबन्ध इत्यन्यत्र विस्तरः । एवं सर्वत्र बोद्धम् । षष्ठ्यर्थस्य संसर्गविधयैव भानं कारकविभक्तिभ्यो ऽपि क्रियाकारकभावसंसर्गविधया भानमित्युक्तम् । संबन्धमात्रविव-

क्षायामिति । संबन्धत्वेन भाने इत्यर्थः । यद्वा क्रियाकारकभावमूलकसंबन्धस्यैव विवक्षायां न तु तद्विवक्षायामित्यर्थः । कर्तुरपि तथा विवक्षा क्तस्य च वर्तमानइति सूत्रे छात्रस्य हसितमित्यादौ भाष्ये स्पष्टा । संयोगसंबन्धावच्छिन्नाधारस्य न तथा विवक्षा, अत एव घटवद्भूतलमिति प्रयोगसाधकं मतुप्सूत्रे ऽस्मिन्निति चरितार्थमिति तत्रैव भाष्ये स्पष्टम् । लोहितोष्णीषा इत्यादावपि सप्तम्यर्थे बहुव्रीहिर्बोध्यः । एधो दकस्येति । एधः कर्तृ कर्ता वा । दकस्योदकस्येत्यर्थः । एधशब्दो ऽदन्तः पुल्लिङ्गः कारकइति सूत्रे भाष्ये प्रयुक्तः । एधाः पत्यन्ते इति सान्तः क्लीबो ऽपि । हेतौ द्योत्ये इति । हेताविति वर्तते हेतुहेतुमद्भावेनेतरान्वये इत्यर्थः । तेनान्नं हेतुं पश्येत्यादौ न । षष्ठीति । हेतुवाचकादित्यर्थः । निमित्तेत्यादि । निमित्तादिप्रयोगे तेभ्यस्तत्समानाधिकरणशब्देभ्यश्चेत्यर्थः । किंनिमित्तमिति । प्रथमान्तं द्वितीयान्तञ्च । प्रायग्रहणादिति । एवञ्च षष्ठी हेतुप्रयोगे सर्वनाम्नस्तृतीया चेति सूत्रे व्यर्थं इति बोध्यम् ॥ षष्ठ्यत ॥ दिक्शब्दत्वात्पञ्चम्यां प्राप्तायामिदम् । ततः पश्चादित्यत्र तु सार्वविभक्तिकः पञ्चन्तात्तसिः । षष्ठ्यपीति । स्पष्टञ्चेदं वृत्तौ । भाष्ये तु न दृश्यते । विपरीतं षष्ठ्यतसर्थेति सूत्रात्पूर्वमेनपेत्यस्य पाठ इति लभ्यते इति पृथग्विनानानेति सूत्रे उक्तम् ॥ दूरान्तिकार्थैः ॥ यदपेक्षं दूरत्वादिकन्ततः षष्ठीत्यर्थः । पञ्चमी चेति । तस्या एव समुच्चयो न द्वितीयातृतीययोरपीति भावः ॥ ज्ञो ऽविदर्थ ॥ अत्र सूत्रे ऽविदर्थस्येति छेदो व्याख्यानात् । सर्पिषो ज्ञानमिति । जानातेः प्रवृत्तिरर्थः सर्पिःसंबन्धिनी प्रवृत्तिरित्यर्थः । अधीग ॥ अधीगर्थः स्मृतिः । कर्मणि किम् । मातुर्गुणस्मरणम् । करणे शेषत्वेन षष्ठ्यभावे समासो भवत्येव । अत एवात्र सूत्रे भाष्ये शेषइत्यनुवर्ततइत्युक्तम् । प्रतिपदविधाना षष्ठी न समस्यतइत्येतैः षष्ठीसमासनिषेधात् । एधोदकस्येति । एध इति पृथक्पदं दकशब्द उदकवाची ॥ रुजार्थानाम् ॥ रोगार्थानां धातूनामित्यर्थो व्याख्यानात् धातोर्भाववचनत्वाव्यभिचारेण सामर्थ्याद्वचनइति कर्तरि ल्युट् भावशब्देन सिद्धरूपार्थ उच्यते ल्युट्प्रकृत्यर्थो ऽविवक्षितस्तदाह । भावकर्तृकाणामिति । रोगकर्तृकमिति च । रोगो ऽत्र ज्वरादिः । भावकर्तृकाणां किम् । श्लेष्मणश्चोररुजा । श्लेष्मात्र न भावः । सर्पिषो नाथनमिति । सर्पिर्मे भूयादित्याशासनमित्यर्थः ॥ जासिनि ॥ जसु मोक्षणे इति दैवादिकस्य न ग्रहणञ्जासीति निर्देशाद्धिंसायामित्युक्तेश्च । निप्रोपसृष्टो हनो निप्रहणः शब्दपरत्वे ऽपि सौत्रत्वाद्वृत्तेरिति णत्वम् । चुरादिरिति । घटादेस्तु न ग्रहणं दीर्घनिर्देशात् क्राथनमिति । घटादेः क्रथेः क्राथेरिति सूत्रे निपातनाद्वृद्धिरिति वृत्तिः ।

परे तु एतत्सूत्रप्रामाण्याच्चटसाहचर्याच्चायमपि चुरादिर्बोध्यस्तस्याकृतिगणत्वात् निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां चोरस्य क्राथनमित्यस्यानापत्तिः सामान्येन निपातने चिण्णमुल्विषये क्राथमित्यादेः क्राथयतीत्यादेश्चानापत्तिरित्याहुः। समर्थयोरिति । समपर्यायसंशब्देन समासः शकन्ध्वादित्वात् पररूपं वा । ब्राह्मणपणनमिति । आयप्रत्ययो वैकल्पिकत्वाच्च कृतः। उदाहरणे स्तुतावेवेति नियमादपि न॥ दिवस्त॥ कर्मणि षष्ठी स्यादिति। शेष इति त्वत्र न संबध्यते व्याख्यानात्। अत एव द्वितीया ब्राह्मणे इति सूत्रङ्गामस्य तदहः सभायान्दीव्येयुरित्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयार्थमिति भाष्ये उक्तं तत् ध्वनयन् तिङन्तमुदाहरति। शतस्य दीव्यतीति। यद्यपि पूर्वसूत्रे दिवं पठित्वा तदर्थस्येति त्यक्तुं शक्यते तथापि योगविभाग उत्तरार्थः शेषइत्यस्यासंबन्धार्थश्च ॥ विभाषोप॥ अत्रापि शेषइति न संबध्यते तदर्थस्येति च वर्तते तदाह। पूर्वयोगेति । अत एवेयं प्राप्तविभाषेति न वेति सूत्रे भाष्ये स्पष्टम्॥ कृत्वोर्थप्रयो॥ शेषे किमिति । दिवस्तदर्थस्येत्यादिना विच्छेदादधिकरणकारकएव षष्ठीविधानं युक्तमिति प्रश्नः। द्विरह्नीति। वृत्त्यादिप्रामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम् । अधीगर्थेति सूत्रे कर्मादीनामविवक्षा शेष इति भाष्ये बहुवचनेनात्रापि शेषपदसंबन्धबोधनाच्च । वस्तुतस्तु कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वचनमिति वार्तिकप्रत्याख्यानाय शेषइति वर्तते इति भाष्यकृतोक्ते परेण शेषश्च क इति पृष्टे शेषे षष्ठीति सूत्रोक्तं कर्मादीनामविवक्षा शेष इति सिद्धान्तिना स्मारितं नैतावता कृत्वोर्थेत्यत्र तत्सं बन्धो लभ्यते । किंचैतद्भाष्यबलात् दिव इति सूत्रे ऽपि शेषपदसंबन्ध आवश्यकः। अन्यथा वार्तिकरीत्या शतस्य दीव्यते इति भावे इष्टस्य प्रयोगस्यासिद्धिः । अत एव वार्तिकव्याख्यायां अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्माश्रयपदेनोच्यन्तइति कैयटः । एवञ्च शेषइत्यनुवृत्त्या वार्तिकप्रत्याख्यानवदेतत्सूत्रद्वयप्रत्याख्याने एव भाष्यतात्पर्यन्द्वितीया ब्राह्मणे इति सूत्रस्थभाष्यं तु वार्तिकरीत्येत्याहुः । किंच यदा कर्मविवक्षितं भवति तदा षष्ठी न भवति स्मराम्यहं मातरमिति भाष्ये उक्तम् । त्वद्रीत्या तु यदा कर्माद्यविवक्षितं भवतीति वदेत् । एवञ्च ज्ञोविदर्थस्येत्यत्रापि तदसंबन्ध एव। एवञ्च तद्योगे न कदापि तृतीया शतं दीव्यतीत्यादि च सिद्ध्यति अधीगर्थेत्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु ॥ कर्तृकर्मणोः ॥ अत्र शेषइति न संबध्यते सूत्रवैयर्थ्यापत्तेः कृद्योगा षष्ठी समस्यतइति वार्तिकेन तत्र समासस्येष्टत्वात् । कृतिरिति भावे क्तिन् । कृष्णः कर्ता । जगत इति । कर्मेदं कर्तृसाहचर्यात् कर्मापि धात्वर्थे भेदेनान्वय्येव गृह्यते तेन स्तोकं पाक इत्यादौ न क्रियाविशेषणात्

षष्ठी । किंच क्रियाविशेषणेन स्तोकम्पाचक इत्यादौ न समानाधिकरणसमासो नापि सुप्सुपेत्यादिः सुबन्तार्थविशेष्यणान्वयेनासामर्थ्यात् द्वितीया श्रितेत्यादेस्तु सामर्थ्यादवयवद्वारके सामर्थ्ये प्रवृत्तिः द्वितीयाप्रकरणोक्तपरेतुमतरीत्या वा सामर्थ्यम् । अत एव पूजनात्पूजितमिति सूत्रे दारुणं यथा भवति तथाऽध्यापक इत्यर्थकस्य दारुणाध्यापक इत्यस्य सिद्ध्यर्थं मलोपवचनमारब्धं भाष्येऽन्यथासमासेन सिद्धे तद्व्यर्थं स्यात् । एतदेव भाष्यं ततः षष्ठ्यभावेपि मानमन्यथा षष्ठीसमासस्य तृजकाभ्यां कर्तरीत्यादिनिषेधैरुक्तसामर्थ्येपि प्रवृत्त्या तत्समासेनैव सिद्धौ मलोपवचनं व्यर्थमेव स्यादिति बोध्यम् । न च भिन्नपदत्वे ऽपि तथा प्रयोगसाधुत्वार्थं मलोपवचनमिति वाच्यम् । तथा सति वाक्ये मलोपश्च वक्तव्य इति वदेत् । अत एव कैयटेन क्रियाविशेषणं दारुणादयस्तत्र वैयधिकरण्यात् समासाभावात् मलोपो विधीयतइत्युक्तम् । सुप्सुपेत्यादिसमासो न सार्वत्रिक इति तदाशय इत्यलम् । कृति किमिति । कर्तृकर्मभ्यां क्रिया सन्निधाप्यते तद्वाचीतु धातुरेव कारकान्वययोग्यतावच्छेदकरूपेण साध्यत्वेन धातुभिरेव तदुपस्थितेः शत्योऽश्वः आश्विक इत्यादौ तद्धितान्न तेन रूपेणोपस्थितिरिति न तत्र कारकान्वय इति एतत् भाष्य प्रामाण्यात् । अत एव हृक्रोरन्यतरस्यामिति सूत्रे आकर्षादिषु षष्ठ्या अपि प्राप्तिरिति रसिकाभिमतम् । अत एव हिरुगादियोगे न कर्मादिसंज्ञा एतेन देवदत्तेन शत्योऽश्व इत्यादौ षष्ठीनिवृत्त्यर्थं कृद्ग्रहणमित्यपास्तम् । अधिका खारी द्रोणेनेत्यत्र हेतौ तृतीया क्रियायोगाभावात् कर्तुः कर्तृत्वाभावे जनकत्वरूपहेतुसत्वात् । धातोश्च द्वये प्रत्ययास्तिङः कृतश्च तत्र तिङ्योगे न लोकेति निषेधात् कृद्योगएव भविष्यतीति किं तेन, नलोकेति सूत्रे कृदव्ययस्यैव ग्रहणं तु अव्ययार्थस्य ये कर्तृकर्मणी इति व्याख्यानेन सिद्धम्, उभय प्राप्ताविव्यत्र बहुव्रीहिस्तु एकाचोद्वे इत्यादाविवान्यपदार्थस्याशाब्दत्वे ऽपि व्याख्यानाद्भविष्यति न च भेदिका देवदत्तस्य काष्ठानामित्यादौ गुणभूते णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं करोतीति कृदिति कर्तृपरन्त्वदिति वाच्यम् । तृतीयावत्तत्र षष्ठ्या अपि विनैव यत्नं सिद्धेरिति प्रश्नः । तद्धिते इति । तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्त्तरि कर्मणि च माभूदित्यर्थः । उदाहरणे सकर्मकप्रकृतिकभावक्तान्तस्येदृशवृत्तिमात्रविषयताया भाष्यसंमतत्वेन तस्य केवलस्य काप्यप्रयोगेण तद्धितान्तसमुदायशक्त्यैव क्रियोपस्थापकत्वात् कृद्ग्रहणात्कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोर्ग्रहणम् न चात्र तथा तण्डुलानां पाचकतर इत्यादौ च पाचकादेः पृथक् प्रयोगेण तच्छक्तिग्रहस्यापि सत्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भवत्येव षष्ठी । अत एव तद्धिते माभूदित्येवोक्तं न तु तद्धिताधिक्येपीति । भाष्ये ऽपि तद्धितस्य ये कर्तृकर्मणी तत्र माभूत्कृतो ये

कर्तृकर्मणी तत्रैव यथा स्यादित्येवोक्तम् । कृतपूर्वीति । अत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षया ऽकर्मकत्वाद्भावे क्ते पूर्वादिनिरिति तद्धितस्तदनन्तरं तु विशेषरूपेण कर्मयोगो भवत्येव । तत्रोक्तरीत्या षष्ठ्यभावे ऽनभिहितत्वाद्द्वितीया एवंरीत्या साधुत्वे ऽत्रत्यभाष्यमेव मानम् । वृत्तेः पूर्वं कर्मान्वयाभावाच्च सापेक्षत्वाद्वृत्तिर्न स्यादिति न शङ्क्यं एवमधीती व्याकरणे इत्यादावपि बोध्यम् । तदुक्तं भाष्ये । यदा वाक्यं न तदा प्रत्ययः यदा प्रत्ययः सामान्येन तदा वृत्तिरिति न तदा प्रत्ययः न तदा भावे प्रत्ययः धातोः सकर्मकत्वात् । यदा प्रत्ययः भावे इति शेषः तदा वृत्तिरेव सा च वृत्तिर्न कदापि कर्मक्तान्ते नेत्याह । सामान्येनेति । कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षा विशिष्टो योर्थः तदर्थकधातु प्रकृतिकक्तान्तेनेत्यर्थः । इयमेव कर्मणो विवक्षानामभावेन तादृशक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमेवोक्तं प्रयोगानुरोधिनी हि विवक्षेति तद्भावः । न चाविवक्षितकर्मतया भावे क्तसाधनयत्ना व्यर्थः नपुंसके भावे इत्यनेन सकर्मकेभ्यो ऽपि सिद्धेरिति वाच्यम् । तस्याप्यकर्मकेभ्य एवेष्टेः । अत्र चेदमेव भाष्यं मानम् । 'ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् । लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः' इति भट्टिपद्यं मादृग्भ्यो दुःखं ददद्भिरुत्तममामोदं युष्मादीनाङ्गृहीत्वा मादृशान्दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृक् विरहाग्निव्याप्तश्चेतयन् ज्वलः ज्वलन्निव न स्यादिति तदर्थः । दाधातोः पोषणार्थाद्धाञश्च ददातिदधात्योरिति शणो लिम्पेः शः ज्वलेर्णः इति जयमङ्गलाश्लोकव्याख्याप्येतज्जातीयैव तत्रेति दिक् । तत्र धायैरामोदमुत्तममित्यत्र गृहीत्वेत्यध्याहृत्य तद्योगे द्वितीया बोध्या । उभयोः प्राप्तिर्यस्मिन्निति । तेनैकनिमित्तत्वलाभादोदनस्य पाको ब्राह्मणानाञ्च प्रादुर्भाव इत्यादौ विभिन्नक्रियाकर्तृकर्मणोः षष्ठीप्राप्तौनायं नियम इति भावः । प्राप्तिपदेन चोभयोः प्रयोगएवायं निषेध इति ध्वनितम् । स्त्रीप्रत्यययोरिति । स्त्रियां क्तिनित्यधिकारविहितयोरित्यर्थः । नायं नियम इति । तेनोभयत्रापि षष्ठी भवत्येवेति भावः । भेदिकेति । धात्वर्थनिर्देशे ण्वुल् सवन्ताद्भिदेरप्रत्ययादित्यकारप्रत्ययः । शेष इति । नियमस्यायं विकल्प इत्येके । इत्येतल्लभ्यमर्थं स्पष्टप्रतिपत्तये आह । केचिदिति । अकारभिन्ने कृन्मात्रे इत्यर्थः । अनुशासनमिति । अनुशिष्यन्ते ऽसाधुभ्यो विविच्य बोध्यन्ते येनेति करणे ल्युट् । मत इत्यादौ मतिबुद्धीति वर्तमाने क्तः । इदमेषामिति । कर्तरि षष्ठो, सकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणोर्द्वयोरपि षष्ठी इदमेषां भुक्तमोदनस्य । उभयप्राप्ताविति तु मध्ये-

पवादन्यायेन कर्तृकर्मणोरित्यस्यैव नियम इति बोध्यम् ॥ न लोका ॥ लादेशा इति । लकारसंबन्धिन इत्यर्थस्तेन इदिगो इति सिद्धम् । केवललस्य क्वापि प्रयोगाभावादेवं व्याख्यातं कुर्वन्निति । तृन्प्रत्याहारघटकस्तु नायम् । तृशब्दस्य तद्घटकत्वे ऽपि शतुस्तद्घटकत्वाभावात् । लिडादेशक्वस्वादि-योगे लिट् सद्भृशक्किक्किनोर्योगे च निषेधार्थन्तस्यावश्यकत्वाच्च । उ इति । उका-रेण व्याख्यानात्तदन्तविधिर्व्यपदेशिवद्भावेनोकारस्यापि । सनाशंसेति अलङ्कृ-ञिति च उद्गृणुचौ । घातुक इति । लषपतपदेत्युकञ् वृद्धिस्तत्वम् । कमेरिति । उकान्तस्येति शेषः इदञ्च भाषायामेव । भाषायामिति भाष्योक्तेः । निष्ठेति । एतदपवादतया भाष्ये वार्तिकं पठ्यते । नपुंसके भावे क्तस्य योगे षष्ठ्या उप-संख्यानं छात्रस्य हसितमिति । इदञ्च प्रतिपदोक्तत्वात् नपुंसके भावे क्त इति सूत्रविहित क्तान्तयोगएव, भ्रान्तन्देशमित्यादौ गत्यर्थाकर्मकेत्यनेन क्ते ना-नेन षष्ठी नपुंसके भावे क्तस्तु नात्र तस्याप्यकर्मकेभ्य एवेष्टेः । अविवक्षितक-र्मतया ऽकर्मकत्वेन क्तस्तु कृतपूर्वीत्यादिवृत्तिविषयएवेत्युक्तम् । एवञ्चेहाहि सृप्तमित्यादौ परत्वेन क्तोधिकरणेचेत्यनेन भावे क्ते शेषत्वविवक्षयैव षष्ठी-साधनस्यावश्यकत्वेनेदं शेषत्वविवक्षया भाष्ये प्रत्याख्यातम् । वार्तिकेन चा-नेन कारकषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते, शेषत्वविवक्षया भा-ष्योक्तत्प्रत्याख्याने तु अनभिधानात् क्तातिरिक्तविषये न सा पूरणगुणेति सूत्रे भाष्ये ध्वनितमिदं, तत्र हि सति किमुदाहरणं ब्राह्मणस्य कुर्वन् नैत-दस्ति कारकषष्ठ्या निषेधात् शेषष्ठ्या तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यादि-त्याद्यर्थकमुक्तमिति परे । अधीयन्निति । इङ्धार्योः शत्रकृच्छ्रिणीति शता । द्वि-षन्निति । द्विषोमित्र इति शता । शेषषष्ठी त्विति । इदञ्चिन्त्यमित्युक्तं परैः ॥

अकेनो ॥ अत्र यथासंख्यं नेष्यते । अकस्याधमर्ण्ये ऽसंभवादाह । भविष्यत्य-कस्येति । वर्षशतस्य पूरक इत्यादौ एतत्कर्मकयाजनकर्तार इत्यर्थके ऽङ्ग य-ज्ञतां लप्स्यन्ते ऽस्य याजका इत्यादौ च षष्ठी भवत्येव । कर्तृमात्रार्थके ण्वुल्तृ-चाविति ण्वुलि पदान्तरसंबन्धेन भविष्यत्त्वप्रतीतावप्यकस्य तत्रावृत्तेः तुमुन्-ण्वुलाविति ण्वुल् तु भविष्यतीत्यधिकृत्य विधानाद्भविष्यदर्थक एवेति भावः । व्रजङ्गमीति । गमेरिनिरित्यौणादिक इनिः स च भविष्यति, भविष्यति गम्या-दय इत्युक्तेः । गामीति पाठे बाहुलकाद्वृद्धिः । शतन्दायीति । आवश्यकाधमर्ण्य-योरिति णिनिः आवश्यके णिनावप्ययं निषेधः सूत्रे आधमर्ण्यपदेन तत्सूत्रो-क्तार्थोपलक्षणात् । अत एवांशं हारीति निर्देशः संगच्छते । तत्र आवश्यके णिनिः । न च तत्र भविष्यदर्थकत्वेन सिद्धिः भूतवर्तमानयोरावश्यकत्वबोध-

नस्य वैफल्येन भविष्यत एव ततो बोधादिति वाच्यम् । वस्तुतो भविष्यतो बोधे ऽपि तत्वेनाबोधात् णिनेस्तदर्थकत्वाभावाच्च । अत एवावश्यं कारी कटस्येति वृत्त्युदाहृतं सङ्गच्छते । तत्र हि नानेन णिनिः । अवश्यपदोपादानात् किं तु सुप्यजातावित्यवेति नव्याः ॥ कृत्यानाम् ॥ कर्तृकर्मणोरिति नित्ये प्राप्ते विभाषाकर्मनिवृत्त्यर्थं कर्तृग्रहणम् । अनुवर्त्ततइति । निषेधो ऽयं कर्त्तरि कर्मणि च । कर्तरि वेति त्वनुभयप्राप्तिविषयमिति वृत्तिकैयटादयः । व्रजमित्यत्र गुणकर्मणि वेष्यत इति विकल्पस्तु न, कृत्यातिरिक्ते चरितार्थस्य तस्य दोग्धव्या गावः पयः कृष्णेनेत्यादौ गुणकर्मण उक्तत्वात् प्रधानचरितार्थेनानेन परत्वाद्बाधात् । तुल्यार्थैर्योगइति । तुल्यत्वार्थैरित्यर्थः । अत एवातुलोपमाभ्यामिति चरितार्थम् । अत एव पर्युदासादनव्यययोगएवेदं, तेनेवशब्दयोगे न ॥

चतुर्थी चाशिषि ॥ आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकात्तद्द्वारके आयुष्यादियोगे चतुर्थीषष्ठावित्यर्थः । अत एवैतदर्थकचतुर्थ्याद्यन्तेन सुखहितादिभिर्न समासः । उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात् । अत एव हि तेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्याकरोक्तं संगच्छते । यत्तु वृत्तावुद्देश्यविधेयभावेनानन्वयादाशीर्विषये च तथा ऽन्वयाच्च समास इति तन्न, वृत्तावपि प्राप्तत्वादिपर्यालोचनेन लोहितोष्णीषेत्यादौ तथान्वयदर्शनात् भाष्ये तथान्वये वृत्तेरसाधुताया अनुक्तेश्चेति समासवादे मञ्जूषायां विस्तरः । व्याख्यानादिति । सूत्रेऽर्थशब्दः पृथङ्निमित्तमिति भावः । भाष्ये तु नैतद् दृश्यते ॥ इति षष्ठी ॥

आधारो ॥ कारके इत्यधिकारात्क्रियाजनके एतत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव तत्रेप्सिततमस्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्मकर्तृसंज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणं परम्परा च कर्तृकर्मद्वारिकैव व्याख्यानादित्याह । कर्तृकर्मद्वारेति । यद्यपि कालस्य साक्षात्क्रियापरिच्छेदकत्वं तथापि तदधिकरणं कर्तृकर्मद्वारैव तथैवानुभवात् साक्षात्तदाधारत्वे ऽपि आधारपदे स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम् । किंच साक्षात्तदाधारत्वे कर्तृत्वमेव तस्य स्यात्कालः पचति भूतानीतिवत् । एवञ्च क्रियान्वयोप्यस्य कर्त्राद्यन्वयद्वारैव यस्य यद्द्वारा कारकत्वन्तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेरत एवाक्षशौण्ड इत्यादौ समासः । अत्र आसत्त्यादिक्रियान्तर्भावेण बोधाननुभवात्क्रियाद्वारा सामर्थ्यमिति कैयटाद्युक्तं न युक्तम् । मूले वृक्षः कपिसंयोगीत्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वं विशिष्टवृक्षस्य मूलवृत्तित्वबोधेन्यत्रावयवे

तद्विशिष्टवृत्त्यभावप्रतीतेः कपिसंयोगे तदवच्छेदकत्वं फलतीति दिक् । चकारादिति। प्रातिपदिकार्थे इति शेषः। त्रिधेति । तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम् । यथा तिलेषु तैलमिदमेव मुख्यमधिकरणमिति स्वरितेनेत्यत्र साधकतममित्यत्र च भाष्ये स्पष्टम् । उपसमीपे श्लेषः संबन्धस्तत्कृतमौपश्लेषिकम्। अत एवेको यणचीत्यादावौपश्लेषिके आधारे सप्तम्युक्ता संहितायामिति सूत्रे भाष्ये । तत्राजादिसामीप्यमेवेगादीनां यन्मासेतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमित्युक्तं तत्र च दीयते इति सूत्रे भाष्ये तदस्मिन्नधिकमिति सूत्रे च भाष्ये स्पष्टमिदम् । कटे आस्ते इति तु नौपश्लेषिकोदाहरणं युक्तमुक्तभाष्यविरोधात् । यत्त्वेकदेशावच्छेदेन श्लेषे ऽपि श्लेषस्य समीपमुपश्लेषं तत्कृतमिति व्युत्पत्त्यौपश्लेषिकत्वमित्यभिप्रायेण तदुदाहरणं तदेतत् सर्वं गौणमधिकरणं गङ्गायाङ्घोष इत्यादिकञ्चेति स्वरितेनेत्यादौ भाष्ये स्पष्टम् । गौणोप्याधारादिः सप्तम्यादिशक्य एवेति बोद्ध्यम् । एतदतिरिक्तं सर्वं वैषयिकं अधिकरणत्वशक्तिमाँश्चाधिकरणविभक्त्यर्थः । इन्विषयस्येति । इनो विषयस्येन्प्रकृतेः क्तान्तस्य कर्मणीत्यर्थः । तेन कृतपूर्वी कटमित्यत्र न उदाहरणे न कर्मणिक्तः अभिहितत्वेन सप्तम्यनापत्तेः किंतु भावे इष्टादिभ्यश्चेति तत्र हि आद्वमनेनेत्यतो ऽनेनेति वर्त्तते। अत्र कर्मशब्देन कालादिव्यतिरिक्तमेव गृह्यते व्याख्यानात्, तेन मासमधीती व्याकरणे इत्यत्र नेति कैयटः । साध्वसाधु॥ शेषषष्ठ्यपवादो ऽयं साधुनिपुणाभ्यामित्येव सिद्धेर्न चार्थमत्र साधुग्रहणन्तेन तत्वकथने ऽपि भवति । सूत्रेर्चाग्रहणन्तु निपुणार्थम् । निमित्तादिति। निमित्तवाचकात् सप्तमी भवति तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योग इत्यर्थः। निमित्तञ्चात्र क्रियाफलम्, एवञ्च फलं सप्तम्यर्थः। चर्मणीति। चर्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधीनत्वात्। कर्मसंबन्धश्च स्वरूपसन्नेव निमित्तम् । द्वीपिचर्मणोरपडकोशमृगयोश्च समवाय इतरयोः संयोगः। मुक्ताफलाय करिणं रघुवीरेत्यादौ क्रियार्थोपपदस्येति चतुर्थी घ्नन्तीति शेषः। मुक्ताफलान्याहर्तुमित्यर्थः ॥ यस्य च भा॥ भावः क्रिया । ततः ज्ञापकक्रियाश्रयवाचकात्, तेन गोपदद्दुह्यमानपदयोरुभयोरपि सप्तमी सिद्धा । क्रियाश्रयः कर्त्ता कर्म च । तत्र ब्राह्मणेष्वधीयानेषु गत इति कर्त्तर्युदाहरणं कर्मण्याह। गोष्विति । यत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति यथा प्रकृते, काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन यथा गोषु धोक्ष्यमाणास्वित्यादौ, काचित्स्वाधारकालान्तरकालेन यथा गोषु दुग्धास्वित्यादौ । ज्ञापकत्वं सप्तम्यर्थस्तस्य च भावलक्षणमित्युक्तेः क्रियायामेवान्वयः लक्ष्यलक्षणभावः शब्दबोद्ध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य भूयो

दर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोद्धयम् । अन्यथोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते कदाचिद्धि गोषु दुह्यमानास्वसौ गतः, इदञ्च मानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवर्तते भाष्यस्वरसात् । राहूपरागे स्नायादित्यत्र राहूपरागपदेन तदाश्रयकाल उच्यते इति अधिकरणसप्तम्येव विवाहे नान्दीमुखङ्कुर्यादित्यत्र विवाहपदेन तत्प्राक्काल उच्यते । गवान्दोहे आगत इत्यत्राप्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः । अर्हाणाम् ॥ कर्तृत्वार्हाणाम् । तद्वैपरित्ये अर्हाणामकर्तृत्वेनर्हाणाञ्च कर्तृत्वे इत्यर्थः । वाक्यचतुष्टयमेतत् कर्तृसमर्पकाच्च सप्तमीत्यर्थः । सप्तम्यान्तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्याच्छतृशानचावेव । लक्ष्यलक्षणभावाविवक्षार्थमिदम् । सत्स्विति । सन्तो हि तरणक्रियाकर्तृत्वार्हाः तरणक्रियाकर्तृसत्संबन्धि असत्कर्तृकमासनमिति बोधः । स्वक्रियाधिकरणकालवृत्तित्वं संबन्धः । असत्स्विति । तरणक्रियाकर्तृत्वानर्हाणान्तदकर्तृत्वमत्र । यद्यपि स्थितिक्रिया कर्तृत्वार्हत्वेनेदं सिद्धं तथाप्यसतान्तरणक्रियानर्हत्वादिकमपि बोधविषय इति भावः । सत्स्विति । तरणक्रियाकर्तृत्वार्हाणान्तदकर्तृत्वमत्र । असत्स्विति । तरणकर्तृत्वानर्हाणान्तत्कर्तृत्वमत्र ॥ षष्ठी चा ॥ अनादरइति विषयसप्तमी यस्य च भावेनेत्याद्यनुवर्तते । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी षष्ठी चेत्यर्थः फलितमाह, अनादराधिक्यइति । लक्ष्यलक्षणभावः षष्ठ्यर्थः । अनादरविशिष्टं प्रव्रजनन्धात्वर्थः । तत्र षष्ठीतात्पर्यग्राहिका ऽनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः ॥ स्वामीश्वरा ॥ शब्दपरत्वाद्विरूपाणामपीति नैकशेषः पर्यायान्तरसङ्ग्रहापत्त्या स्वाम्यर्थेनोक्तम् । दीयते इति व्युत्पत्त्या दीयमानांशरूपं दायमादत्ते इति सोपसर्गादप्यादन्तादत एव निपातनात्कः गवादिकञ्च दीयमानेन्वेति नित्यसाकाङ्क्षत्वाद्वृत्तिः । दायादशब्दः स्वामिपर्याय इत्यन्ये । षष्ठ्यामेवेति । शेषषष्ठीत्यनेनेति भावः । तात्पर्ये इति । आसेवापदस्य तत्र रूढेरिति भावः । तात्पर्यञ्च तदेकव्यापारता आयुक्तयोगे ऽधिकरणत्वविवक्षायां सप्तमीप्राप्तौ संबन्धविवक्षायामत्र कुशलयोगे च षष्ठीप्राप्तौ वचनम् ॥ यतश्च ॥ जातिगुणक्रियासंज्ञाभिरिति । विशिष्टस्येत्यध्याहारः । तद्विशिष्टस्य एकदेशस्य यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकं पृथक्करणन्तद्वाचकात् षष्ठीत्यर्थः । यत इति किम् । यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वबोधनन्तत एव माभूत् षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि सम्भवात् स्वघटितसमुदायाबाधिकस्वेतरसमु-

दायघटकव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयत्वरूपो ऽवयवावयविभावरूपश्च संबन्धो विभक्त्यर्थः। नृसमुदायावधिकद्विजेतरनरव्यावृत्तश्रेष्ठत्वकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोधः। संसर्गघटककरणं श्रेष्ठत्वादिरूपमेव प्रत्यासत्तेः। अत एव न निर्धारणइति सूत्रबोधितनिर्धारणस्य विभक्त्यर्थत्वं सङ्गच्छते । उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनन्तिरोहितावयवभेदविवक्षया निर्धारणविषये एकवचनन्त्वसाध्विति कारके इति सूत्रभाष्ये स्पष्टं, तत्र हि निर्धारणे कारकेष्विति ब्रूयादित्युक्तम्। मिदचोन्त्यादित्यादौ तु सौत्रो निर्देश इति तदाशयः। द्वन्द्वः समासिकस्य चेत्यत्र समाससमूहमद्ध्ये इत्यर्थः। समूहेर्थे ऽचित्तेति ठक्॥ पञ्चमी वि॥ यतश्च निर्धारणमित्यनुवर्तते विभागोत्र भेदः तत्र निर्धारणे सर्वत्र यथाकथञ्चिद्भेदस्य सत्वेन विभक्तग्रहणसामर्थ्यात् यत्र भेद एव न तु केनाप्युपात्तरूपेण भेदस्तत्रैव प्रवृत्तिरित्याह, भेद एवेति । अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव। पाटलिपुत्रकावधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः। एवञ्च त्रितयोपादानएवनिर्धारणप्रतीतिरिति पुरुषोत्तम इत्यादौ संबन्धसामान्ये षष्ठी उत्तमनिरूपितेति समाससिद्धिरिति तरप्सूत्रे कैयटः॥ साधुनि॥ निपूर्वात् पुण कर्मणि शुभे इत्यत इगुपधलक्षणः कः अर्चतेश्च भौवादिकाद्गुरोश्च हल इत्यप्रत्ययः। अर्चा । चौरादिकात्तु ण्यासश्रन्थेति युच् स्यात् षष्ठ्यपवादो ऽयम्। अप्रत्यादिभिरिति । लक्षणेत्थमिति सूत्रोपात्ताः प्रत्ययादयः ॥ नक्षत्रे च ॥ लुप्शब्देन लुप्सञ्ज्ञया लुप्तप्रत्ययार्थो लक्ष्यते इति बोध्यम् । अधिकरणे किम् । अद्य पुष्यः । असत्यान्तदनुवृत्तावन्तरङ्गत्वात्प्रातिपदिकार्थे एव स्यात् । मूलेनेति । नक्षत्रेण युक्तः काल इत्यणो लुबविशेषइति लुप् । नक्षत्रे किम्। पञ्चालेषु तिष्ठन्ति। जनपदे लुबिति लुप् ॥ सप्तमीपञ्चम्यौ ॥ कालाध्वनोरित्यतस्तदनुवर्त्तते तच्च पञ्चम्या विपरिणम्यते मध्यस्यावधिद्वयसापेक्षतया द्विवचनान्तेन समासः । बोधस्तु शक्तित्वेन शक्तिद्वयस्य न तु द्वित्वेनेति बोद्ध्यम् । ननु कर्तृरूपस्य कारकस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशासम्भवो ऽत आह। शक्तिद्वयमध्ये यावदिति । कर्तृत्वादिशक्तिरेव कारकम् । सा च क्रियाभेदेन भिन्नेति भावः । यद्यप्यवध्यवधिमतोस्साजात्यनियमाच्च कालाध्वानौ कारकमध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः । षष्ठ्यपवादो ऽयम्। स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः । शक्तिद्वयमध्यवर्त्तित्वन्तु वस्तुसन्निमित्तम् । अधिकशब्देनेति । कर्त्तरि क्तप्रत्ययान्ताध्यारूढवद्वाचकाधिकशब्दयोगे लोकशब्दात् षष्ठ्याम्प्राप्तायाञ्ज्ञापकादिमे इष्येते इत्यर्थः । तदस्मिन्नधिकमितिसूत्रे भाष्ये तु उपश्लिष्टपदाध्याहारेणौपश्लेषिके

ऽधिकरणे सप्तमीत्युक्तम् । कर्मणिक्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकयोगे तु अधिको लोको हरिणेति प्रथमैव । उपपरार्द्धं इति । उपोधिके चेति कर्मप्रवचनीयत्वम् । ननु मामुद्दिश्य विनियोक्ष्यतइत्यर्थादत्र कर्मणि द्वितीयैवेति किङ्कर्मप्रवचनीयत्वेनेत्यत आह । अगतित्वादिति । तिङि चेति । उदात्तवति तिङन्ते गतिर्निहन्यतइत्यर्थः । अत्र तिङ्ङतिङ इति निघातस्य निपातैर्यद्यदीत्यादिना निषेधात् करिष्यतीति तिङन्तस्योदात्तवत्त्वमिति सर्वेष्टसिद्धिः ॥ इति विभक्त्यर्थाः ॥

श्रीगणेशाय नमः ॥ समर्थः पद ॥ विधिशब्दः कर्मसाधनः शेषषष्ठ्या समासस्तदाह । पदसंबन्धीति । पदविधिसहचरितो ऽपि पदविधिशब्देन गृह्यते । अत एव सनन्तादावेकार्थीभावः । पदविधिश्च समाससंज्ञादिस्तस्य च न सामार्थ्यं साक्षात् विशेषणमसम्भवादत आह । समर्थाश्रित इति । सामर्थ्यं चात्र न व्यपेक्षा व्याख्यानात् समासादिवृत्तिषु तस्यासंभवाच्च किन्त्वेकार्थीभावः स च विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वं संसृष्टार्थं समर्थमिति भाष्योक्तेः । अत एव राजपुरुषैकदेशे राज्ञि ऋद्धस्येत्यादिविशेषणान्वयो न, देवदत्तस्य गुरुकुलमित्यादौ तु गमकत्वाद्भवत्येव वृत्तिः । एवं राजपुरुष इत्यादौ विशेषणपदे संख्यानवगमोऽप्येकार्थीभावकृतः संख्याविशेषप्रकारेण तत्तदर्थभाने पृथगुपस्थितेस्तन्त्रत्वात् यथा घटा इत्यादितो बहुत्वेनैव त्रिचतुरादिव्यक्तीनां भानं न तु त्रित्वचतुष्ट्वादिना तथा वृत्तौ राजत्वादिनैकानेकव्यक्तिभानन्तात्पर्यवशाच्च त्वेकत्वद्वित्वादिना । एवन्तावकीनो यौष्माकीण इत्यादौ संबोध्यत्वेनैवैकानेकव्यक्तिभानं न त्वेकत्वबहुत्वादिना विग्रहवाक्यीयैकवचनत्वारोपेण शास्त्रप्रवृत्तिमात्रं न तु तद्बोधः । वृत्तिस्वभावविरोधादिति मञ्जूषायां विस्तरः । गमकत्वादेव शिवस्य भगवतो भक्त इत्यर्थे शिवभागवत इत्ययःशूलेति सूत्रे भाष्ये प्रयोगः । परं तु तत्र वृत्तिरेव न तु शिवस्य भागवत इति वाक्यं साधु तत्र भगवच्छब्दादण् शिवपदेन भगवच्छब्दस्य समासश्च युगपदेवेति बोध्यम् । तथोपस्थितिश्च समुदायशक्तिसाध्या । एवञ्च क्लृप्तशक्तित्यागे मानाभावात्प्रत्येकशक्तिसहकृतया समुदायशक्त्या तथोपस्थितिरयमेव चैकार्थीभावः । जहत्स्वार्था वृत्तिः पदानामानर्थक्यमिति तु न युक्तं महाबाहुः सुपन्था इत्यादावात्वाद्यनापत्तेः । अर्थवत्त्वे भूतपूर्वगत्याश्रयणन्तु सत्याङ्गतावयुक्तम् । तदुक्तं वृद्धैः । जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी । अवयवार्थं विरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः । यथा गौरखरकृष्णसर्पादौ । परिभाषेयम् । सा च पदविधिरिति सूत्र स्वरसात् । समासेङ्गुलेः सङ्ग इत्यादौ समासग्रहणाच्च गतिर्गतावििति सूत्रे पदस्येत्यधिकारात् समर्थपरिभाषोपस्थि-

तिरिति कैयटस्वरसाच्च । पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैव प्रवर्त्तते । तेनान्यारादितरेत्यादौ नास्याः प्रवृत्तिः । एकार्थीभावश्चालौकिकविग्रहवाक्यएव कल्प्यते यथा शत्रादौ द्वितीयासामानाधिकरण्यं दृष्ट्वा लकारे ऽपि तत्कल्पना तथा अन्यपदार्थे समर्थश्चार्थे इत्यनुवादबलादस्य तत्र कल्पनेति । तथा च शतृविधायके भाष्यम् । लस्य प्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिस्तस्य क्वापि प्रयोगाभावादित्याशङ्क्यादेशसामानाधिकरण्यं दृष्ट्वा ऽनुमानाद्गन्तव्यं प्रकृतेरपि तद् भवतीति तत्र कैयटः । सिद्धानां शब्दानामन्वाख्यानात् पचन्तं देवदत्तं पश्येत्यादि प्रयोगदर्शनात् स्थानिनो ऽपि लटः प्रक्रियार्थं विहितस्याप्रथमासामानाधिकरण्यमनुमीयतइति । अत्रानुमाने सौत्रानुवाद एवानुकूलस्तर्कः । अत्र प्रक्रियार्थं विहितस्येत्यनेनान्यस्यापि प्रक्रियार्थं कल्पितस्य लोके ऽबोधकत्वं सूचितमित्यन्यत्र विस्तरः । समर्थः किम् । पश्य कृष्णं श्रितो राममित्यत्र कृष्णश्रितयोः परस्परसंबन्धाभावेनैकोपस्थित्यजनकत्वेनासामर्थ्यम् ॥ सह सुपा ॥ सुबामन्त्रितइत्यतः सुबिति वर्त्तते । सुबन्तसहितं सुबन्तं समाससञ्ज्ञकमित्यर्थः । समास्यतइत्युक्तिस्त्वबुधानां भिन्नयोः शब्दयोरनेन संश्लेषः क्रियतइति प्रतिपत्तिस्तदनुसारेण संपूर्वकास्यतेश्च संश्लेषोऽर्थः । प्राक्कडारादित्यत्र प्राग्ग्रहणमावर्त्तते । तेन प्राक्समाससञ्ज्ञका भवन्ति तत्सञ्ज्ञाः सन्तो ऽव्ययीभावादिसञ्ज्ञका इत्यर्थात्तयोः समावेश इति भाष्ये स्पष्टम् । अन्यथा कडारत्वात्पर्यायः स्यात् इति दिक् । अत्र सुबित्येकत्वं विवक्ष्यते । तेन महिष्या अजायाश्च क्षीरमित्यत्र सुबन्तसमुदायस्य न क्षीरशब्देन समास इति कैयटादयः । परे तु अनुवाद्यत्वादेकत्वाविवक्षैव किं च तद्विवक्षायामेकेनैव केनचित्सुबन्तेन किंचिदेकं सुबन्तं समस्येत न त्वन्यैरन्यानि तस्मात्सुबित्यादौ जातिविवक्षा एवञ्च यथा स्वाङ्गग्रहणेन स्वाङ्गसमुदायस्य न ग्रहणं स्वाङ्गत्वस्य प्रत्येकं समाप्तत्वात् । एवं सुबन्तत्वादेरपि प्रत्येकं समाप्तत्वेन सुबन्तादिग्रहणेन न सुबन्तादिसमुदायस्य ग्रहणमिति नोक्तदोषः । स्पष्टञ्चेदं मतुप्सूत्रसमर्थसूत्रयोर्भाष्ये । तत्रत्यकैयटादीनान्तु प्रमादः । अत एव विभक्तिश्चेति सूत्रे प्रतिप्रत्ययं विभक्तिसञ्ज्ञेति पक्षे प्रथमयोरित्यादौ विभक्तिसमुदायस्य विभक्तिग्रहणेनाग्रहणात् प्रथमयोः प्रत्यययोरेव ग्रहणं प्राप्नोतीत्युक्तं कैयटेनेत्यन्यत्र विस्तर इत्याहुः । अनुव्यचलदिति । अनोर्व्यचलदित्यनेन युगपत्समासः । अनु इति सुबन्तेन व्यचलदिति समुदायस्य समर्थत्वात् । सुपेति । इदं लक्षणमधिकारश्च अन्त्ये फलन्तु देवः करोति मातुः स्मरतीत्यादौ विशेषणसमासषष्ठीसमासयोरभावः ॥ सुपो धा ॥ अङ्गनिमित्तस्य सुप

वृत्त्यर्थभ्रमवारणायाङ्गस्य सुप इति नोक्तम् । पूर्वनिपात इति । भूतशब्दस्यैवेत्यर्थः । अन्यथा विनिगमनाविरहेण प्रथमानिर्दिष्टत्वाविशेषादनियमः स्यादिति भावः । अत एव निर्द्देशादीदृशे विषये ऽवयवद्वारकसामर्थ्यमप्यस्य प्रवृत्तिः । विस्पष्टपटुरित्यादावपि विस्पष्टादीनि गुणवचनेष्विति गमकं बोध्यम् । तत्र हि विस्पष्टमित्यादि पटुत्वादिविशेषणमिति कैयटे स्पष्टम् । इवेनेति । हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीमित्यसाध्वेव । तिङ्समानाधिकरणे प्रथमा अभिहिते प्रथमेति वार्त्तिकस्वारस्येन प्रथमायास्तत्र तत्र कारकविभक्तित्वोक्तिपरभाष्येण च क्रियायोगे एव प्रथमायाः प्रवृत्त्या मातेति प्रथमाया मातृसदृशीमित्यर्थे ऽसाधुत्वादित्यन्यत्र विस्तरः । एतद्योगविभागसिद्धसमासस्य विशेषसञ्ज्ञा न सन्त्येव तत्तदधिकारेष्वपाठात् । जीमूतस्येवेति । अत्र यथार्थत्वादिप्रयुक्तो ऽव्ययीभावस्तु न तत्र तस्येवेति निर्द्देशात् ॥ अव्ययी ॥ अनव्ययमव्ययं भवतीति भवतेर्णस्य उपसंख्यानमिति कर्त्तरि णः । महासञ्ज्ञाकरणं प्राचामनुरोधात् । योगो विभज्यते इति । भाष्ये त्विदं न दृश्यते अपदिशमित्यादिमान्तानां स्वरादिपाठादव्ययत्वम् । अपदिशेनेत्यादि तु चिन्त्यमेवेत्यन्ये । ननु समासगते ऽन्तर्विभक्त्याश्रये प्रथमान्तत्वे आश्रीयमाणे कष्टं श्रितादौ श्रितस्य पूर्वनिपातापत्तिः निर्द्दिष्टपदञ्च व्यर्थमत आह ॥ समासशास्त्रे इति ॥ समाससञ्ज्ञाविधायके शास्त्रे इत्यर्थः । न च राज्ञः कुमारीं श्रितो राजकुमारीश्रित इत्यत्र द्वितीयायाः द्वितीयाश्रितेति सूत्रे प्रथमानिर्द्दिष्टत्वेन कुमारीशब्दस्य पूर्वनिपातापत्तिरिति वाच्यम् । अप्रधानमुपसर्जनमिति शास्त्रान्तरोक्तमहासञ्ज्ञाकरणेनास्य तदर्थकतया समासशास्त्रे प्रथमानिर्द्दिष्टमप्रधानत्वसमानाधिकरणोपसर्जनपदवदिति वाच्यार्थे निष्पन्ने ऽप्रधानत्वस्य ससंबन्धित्वाद्यं प्रति यदप्रधानन्तं प्रति तदुपसर्जनसञ्ज्ञमित्यवगतेरदोषादिति भाष्येणैव समाधानात् । प्रकृते च न राजनिरूपितमप्राधान्यं कुमार्या इति न तदपेक्षो ऽस्य पूर्वनिपातः । न चैवं पूर्वकायाद्यसिद्धिः कायनिरूपिताप्राधान्यस्य पूर्वपदार्थे ऽभावादिति वाच्यम् । समासशास्त्रस्थप्रथमानिर्द्दिष्टशब्दगताप्राधान्यस्याश्रयणेनादोषात् । समासशास्त्रे यं प्रति यदप्रधानन्तं प्रति तदुपसर्जनमित्यर्थात् । भवति च श्रितादीन्प्रति द्वितीयान्तं तथा सहयुक्ततृतीयान्तार्थस्य शाब्दगुणान्वयित्वाभावरूपाप्राधान्ये ऽपि तत्समभिव्याहृतप्रथमाद्यन्तार्थे तदधीनत्वरूपाप्राधान्यप्रतीतेः । अत एव समकक्षयोरप्येकस्य परेण सहागन्तव्यमित्युक्ते दुःखं दृश्यते प्रकृते ऽपि द्वितीयान्तं श्रिताद्यधीनं तं विना समासाघटकत्वात् । श्रितादिकन्तु तं विनापि समासान्तरे घटकमिति द्वितीयान्तस्य श्रिताद्यधीनता

एवमन्यत्राप्यूह्यम् । यस्य शब्दस्य समासविधौ यत्प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनमिति वक्तव्यमिति वार्त्तिकप्रत्याख्यानाय तद्भाष्यप्रवृत्तेः, भाष्ये ऽपि यं शब्दं प्रति यत्प्रथमानिर्दिष्टमप्रधानं तं शब्दं प्रति तत्प्रथमानिर्दिष्टं वाच्यं यदनुपसर्जनमित्यर्थस्यैवौचित्यात् । अत एव यं यदिति भिन्नलिङ्गनिर्देशः । बहुव्रीहौ त्वेकविभक्तीत्येवोपसर्जनत्वमिति अनुपदमेव स्फुटीभविष्यति । अन्वर्थत्वविरोधाद्यानेनेति भाष्यसिद्धान्त इति बोध्यम् । यत्त्वर्थगताप्राधान्येनान्वर्थत्वे ऽपि पूर्वकायादौ न दोषो ऽन्वर्थसञ्ज्ञा हि यत्र सोऽर्थः सम्भवति तत्र प्रवृत्तिनिमित्तापेक्षा प्रवर्त्तते ऽन्यत्र तु विधानासामर्थ्यात्तन्निरपेक्षा । यथा स्वादीनां कर्मप्रवचनीयत्वमिति प्रथमानिर्देशसामर्थ्यात्पूर्वादीनां प्रवर्त्तते इति तन्न, निर्विभक्तिकस्योच्चारणासम्भवेन तत्सामर्थ्यायोगात् प्राथम्यादन्वितार्थकत्वाल्लघुत्वाच्च प्रथमैवोच्चारितेत्यस्य वक्तुं शक्यत्वादित्यलम् । उपसर्जनं पूर्वम् ॥ समासे इत्यधिकृतं योग्यताबलेन सप्तम्या विपरिणम्यते तदाह । समासे इति । न च राज्ञः कुमार्या इति परिनिष्ठितविभक्त्या समासे कुमार्या अपि पूर्वनिपातापत्तिरिति वाच्यम् । षष्ठ्यन्तयोः समासे ऽर्थाभेदात् प्रधानस्यापूर्वनिपात इति भाष्येण समाधानात् अर्थाभेदात् । अर्थस्य प्रधानस्याभेदात्समस्यमानराजपदार्थनिरूपितसंबन्धाभावात् । अस्य षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वाभावान्न पूर्वनिपात इति तदर्थः । अयं भावः । षष्ठीत्यादिसूत्रे येन सुबन्तेन समासस्तदर्थनिरूपितसंबन्धाद्यर्थकमेव षष्ठ्याद्यन्तङ्गृह्यते । तदेव च तत्र प्रथमानिर्दिष्टमिति । तदुक्तं कैयटेन राज्ञः पुरुषस्येत्यत्र राजापेक्षया पुरुषः प्रधानमेवेति नासौ भिद्यते राजापेक्षया न व्यतिरिच्यते इत्यप्रधानस्यैव पूर्वनिपात इति उक्तरीत्या ऽप्रधानषष्ठ्यन्तमेव तत्र प्रथमानिर्दिष्टं न तु प्रधानमिति तद्भावः । यत्तूपसर्जनसञ्ज्ञान्वर्थत्वादप्रधानस्यैवेत्युपसर्जनं पूर्वमित्यत्र कैयटस्तन्नेत्युक्तमेवेत्यलम् । प्रथमानिर्दिष्टमित्यतो ऽनुवृत्तं समासइति तदर्थविग्रहपरमित्याह विग्रहे इति । नियतेति । एकग्रहणादवधारणगर्भसमासलाभ इति भावः । निष्कौशाम्बिरित्युदाहरणम् । परिनिष्ठितविभक्त्यापि समासेन निष्क्रान्तेनेत्यादिक्रमेण तस्यानियतविभक्तिकतया कौशाम्बीपदस्य तदपेक्षया नियतविभक्तिकत्वादनेनोपसर्जनत्वेन ह्रस्वत्वं परिनिष्ठितविभक्त्या समासे चेदमेव ज्ञापकम् । अयं पक्षस्तत्पुरुषे तुल्यार्थेति सूत्रे भाष्ये प्रथमान्तेन समास इति पक्षोऽप्यनेकमिति सूत्रे भाष्ये इति केचित् । परे तु अनेकमिति सूत्रे भाष्ये समासार्थविग्रहे प्रत्यासत्त्या समासापेक्षया नियतविभक्तिकस्यानेनोपसर्जनत्वमुक्तम् राज्ञः कुमारी राजकुमारी-

त्यत्र परिनिष्ठितविभक्त्यापि समासत्वान्न तदपेक्षया कुमार्या नियतविभक्तिक-त्वमिति न तस्या उपसर्जनत्वमित्युक्तम् । चित्रगुरित्यत्र च गोपदस्यानेनोप-सर्जनत्वमङ्गीकृत्यानेकग्रहणं प्रत्याख्यातम् । बहूनां समासस्तु तद्धितार्थेत्य-नेनोत्तरपदे द्विगुविधानात् ज्ञापकात्सिद्ध इति चोक्तम् । एवञ्चोत्तरपदेन परिमाणनेत्यपि प्रत्याख्यातम् । अतिप्रसङ्गस्त्वनभिधानाच्च। तदुक्तमनेकवचन-मुपसर्जनार्थं न चैकविभक्तित्वादिति वार्त्तिकस्तान्वर्थत्वानुक्तेस्तद्रीत्या प्रयो-जनवार्त्तिकत्ववेति तत्खण्डनं, भाष्यरीत्या त्वेतदप्राप्तिरेवात्रेति बोध्यम् । अन्यथा चित्रगुरित्यस्य विग्रहे द्वयोरपि नियतविभक्तिकतया क्रिमपेक्षङ्गो-शब्दस्य नियतविभक्तिकत्वं स्यात् । एकस्यानियतविभक्तित्वे हि तदपेक्षम-न्यस्य तत्त्वं वाच्यम् । समासापेक्षं नियतविभक्तित्वमेव युक्तमाश्रयितुमन्यथा सभार्य इत्यत्रोपसर्जनह्रस्वानापत्तिः सहशब्दस्याव्ययतया विभक्तिमात्राभा-वेन लुकानुत्पत्तेरेवान्वाख्यानेन वा नियतविभक्तित्वाभावात्तदपेक्षनियतवि-भक्तित्वस्य सभार्या इत्यत्राभावेनोपसर्जनत्वानापत्तिः । ममतु समा-सस्यानियतविभक्तित्वात्तदपेक्षन्तत्त्वमस्त्येवेति न दोष इत्याहुः । गोस्त्रि-योः । अत्रस्त्रीशब्दः स्वर्यते । तेन स्त्र्यधिकारोक्तचातुर्थिकप्रत्ययला-भः । उपसर्जनस्येति गोस्त्रियोर्विशेषणम् । प्रत्ययग्रहणपरिभाषया च स्त्री-शब्देन तदन्तग्रहणम् । ताभ्याञ्च प्रातिपदिकविशेषणात्तदन्तविधिरित्या-होपसर्जनं य इत्यादि । गोकुलं राजकुमारीपुत्र इत्यादौ तु न दोषः । महा-सञ्ज्ञाकरणेन येन शब्देन समासविधौ यत्प्रथमानिर्द्दिष्टन्तस्य तं प्रत्येवोक्त-रीत्या ऽप्रधानत्वेनोपसर्जनत्वात् । प्रत्यासत्त्या तदन्ततत्समासप्रातिपदि-कान्त्यस्यैव ह्रस्व इत्यदोष इति भाष्ये स्पष्टं, तत्र ह्येवं भाष्यम् । अप्रधान-मुपसर्जनमिति संबन्धिशब्दावेतौ तत्र संबन्धादेतद्गन्तव्यं यं प्रति यदप्रधान-न्तस्य चेत्सोन्तो भवतीति यत्प्रथमानिर्द्दिष्टन्तस्य तद्घटितसमाससमुदायस्य सोऽप्रधानशब्दान्तो भवतीति तदर्थः । यद्यपि कुक्कुटमयूर्याविति द्वन्द्वे बहु-व्रीहाविव एकविभक्तीत्युपसर्जनत्वम् । द्वन्द्वः प्रथमान्तानामेवेति चार्थे द्वन्द्व इत्यत्र वक्ष्यते । एकविभक्तीत्युपसर्जनसञ्ज्ञा ऽप्रधानार्थकस्यैवेति मते ऽपि उद्भू-तावयवभेदसाहित्यं प्रति मयूरीपदार्थस्य तत्त्वमस्ति । सर्वत्र द्वन्द्वे साहित्यमेव विशेष्यमिति चार्थसूत्रे भाष्ये स्पष्टम् । तथापि भाष्ये द्वन्द्वे नेति वचनारम्भा-च्च दोषः अत एव कुमारीमिच्छन् ब्राह्मणः कुमारीत्यत्र ह्रस्वो न । प्रथमानि-र्द्दिष्टमित्यादेः शास्त्रीयस्यैवात्रोपसर्जनस्य ग्रहणात् । अत एव गोबष्कयणी-त्यादौ बष्कयणीशब्दस्य गुणशब्दत्वादप्रधानत्वे ऽपि तदन्तस्य ह्रस्वो न

एतच्चेद्वाण्या इति सूत्रे भाष्ये स्पष्टम् । अतिराजकुमारिरित्यादौ स्त्रीप्रत्यये तदादिनियमनिषेधात् राजकुमारीत्यस्य स्त्रीप्रत्ययान्तत्वम् । न च तस्यात्यर्थं प्रत्युपसर्जनत्वेन कथं स्त्रीप्रत्ययान्तत्वमुपसर्जनस्त्रीप्रत्यये तदादिनियमादिति वाच्यम् । यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयन्तदर्थं प्रति स्त्रीप्रत्ययस्यानुपसर्जनत्वमेवेत्यदोषात् । प्रत्यासत्त्या तादृशानुपसर्जनत्वस्यैव निषेधनिमित्तत्वात् । अस्य चातिक्रान्तार्थं प्रत्युपसर्जनत्वे ऽपि राजकुमारीत्येतदर्थं प्रत्यनुपसर्जनत्वमेवेति दिक् । नाव्ययीभावा । अपञ्चम्या इत्यम एव विशेषणम् । न लुगभावस्य तुना व्यवच्छेदात् । अपदिशमिति । यद्यपि नपुंसकह्रस्वेनापीदं सिध्यति तथापि चित्रगुरित्याद्यर्थमावश्यकेन गोस्त्रियोरित्यनेनापीदं सिद्ध्यतीति तदुपन्यासः । दिश्शब्दस्य शरदादिषु पाठे ऽपि लिङ्गविशिष्टपरिभाषयात्र न टच् । समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषाभावस्य ङ्याप्सूत्रे भाष्ये उक्तत्वात् । टाबन्तदिशाशब्दो ऽकारान्तप्रकृतिक एवेति मते टचः प्राप्तेरेवाभावः । अमरस्वारस्यात् दिश्शब्देन विग्रहे तु न ह्रस्वप्रयोजनम् । इत्यादिविति । आदिनैकविंशतिभारद्वाजं सप्तगङ्गमित्यादिसङ्ग्रहः । विभक्तीत्यादेरिति । विभक्तिशब्देन तदर्थो लक्ष्यते वचनशब्दः कर्मसाधनः प्रत्येकं संबध्यते । विभक्त्यादयश्च श्रुतत्वादव्ययस्यैव विशेषणानि तदाह । विभक्त्यर्थादिष्विति । अत्र सुबन्तेनेत्यस्य समर्थेनेति विशेषणम् । अत एव तदुत्तरविभक्त्यर्थान्तर्भावेणैकार्थीभावः । द्वितीया श्रितेत्यादौ समर्थेन सुबन्तेनेत्यस्य समर्थप्रकृतिकसुबन्तेनेत्यर्थः । अत एव कष्टं श्रितस्येति परिनिष्ठितविभक्त्या समासेप्युत्तरपदीयविभक्त्यर्थान्तर्भावेण न सः । अत एव कष्टश्रितस्य धनमित्यादौ षष्ठी द्वितीयान्तं समर्थमित्यर्थान्तर्भावेणैकार्थीभावादुक्तार्थत्वाच्च द्वितीयेत्याहुः । हरिङीति । फलाविशेषेप्यन्तरङ्गानपीति न्यायप्रभृतिमुपेत्येदं ङ्यधोः समानार्थत्वध्वननाय च ङ्युत्तरमेवात्राधिशब्दप्रयोगः वचनेति । प्रत्यासत्त्या यद्विभक्त्यर्थवाचकाव्ययेन सुबन्तस्य समासस्तद्विभक्त्यैव यत्सुबन्तन्तस्य ग्रहणादिति भावः । तिङ्कृत्तद्धितसमासैरिति भाष्यसम्मतपरिगणनाच्च तेनाभिहिते सप्तमीत्यपि बोध्यम् । अत एव गृहस्योपरि इत्यादौ न समासः । उपरीत्यस्याधिकरणशक्तिप्रधानत्वे ऽपि येन सुबन्तेन समासस्तद्घटकविभक्त्यर्थावाचकत्वात् अधिहरि भक्तिरित्यत्र हर्यधिकरणिका भक्तिरिति बोधः । न च प्रतेरुरसः सप्तमीस्यादिति सूत्रसम्मतसप्तम्यर्थमात्रवृत्तिप्रतिरूपाव्यये चरितार्थस्याधेः शौण्डादिपठितत्वेन परत्वात्सप्तमी शौण्डैरित्यनेन बाधः स्यादिति वाच्यम् । आधेयप्रधानस्यैवाधेस्तत्र पाठात् । विधानासामर्थ्यादिति । एतच्च रचितानुसारेण वस्तुतो मध्यार्थकसमयाशब्दयोगे द्वितीया-

विधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधानस्य चारितार्थ्यादिदमयुक्तम् । समयानिकषाऽऽराच्छब्दा अधिकरणशक्तिप्रधाना इति समीपमात्रवाचित्वाभावान्नैतैः समासः समीपे इति हि तेषामर्थः । अव्भक्षन्यायेन विभक्त्यर्थसमीपादिमात्रवृत्त्यव्ययस्यैव तेन समासात् । उपशब्दस्तु तन्मात्रवाचीकृष्णसामीप्यवन्त इति बोधादिति बोध्यम् । सुमद्रमिति । वचनग्रहणात्समृद्ध्यादिवाचकत्वे ऽव्ययीभावः । सुमद्रा इत्यादौ तु सुशब्दो द्योतकः समृद्धा मद्रा इति बोधादिति ज्ञेयम् । निपातानां वाचकत्वं द्योतकत्वञ्चेत्यत्रैव भाष्ये स्पष्टम् । उपदशा इत्यादावुपस्य समीपवर्त्तिपदार्थबोधकत्वेन समीपमात्रबोधकत्वाभावान्नाव्ययीभावः । विगतेति ऋद्धेरभाव इति यावत् । अर्थाभावशब्देन समस्यमानपदार्थाभावस्यैव ग्रहणादत्र तेन न सिद्धिस्तद्ध्वनयन्नाह । मक्षिकाणामभाव इत्यादिना अर्थाभावशब्देन उत्तरपदार्थाभावस्यैव ग्रहणं व्याख्यानात् । नञा तु नायं समासः अर्थाभावशब्दे नञ उपादानेन सूत्रगृहीताव्यये नैतत्ससमासाप्राप्तेः तच्च नञ्सूत्रे उपपादयिष्यते । न चाभावेत्येव सिद्धे ऽर्थग्रहणं व्यर्थम् । प्रतियोगिभूतबहिर्विद्यमानार्थसमानाधिकरणाभाववाचकेनैव समासो यथा स्यादित्येतदर्थं तत्सत्त्वात्तेनाभावार्थेनिरासश्शशशृङ्गादिशब्दानामयनप्रागभावार्थेन च स न । अत एवात्ययग्रहणाच्चरितार्थं तदुदाहरणं निर्हिमं निःशीतमिति वृत्त्युक्तमेव युक्तम् । अतेस्तदर्थत्वाभावात् अतिहिममित्युक्ते तदतिशयस्यैव प्रतीतेः । अत्ययशब्दे ऽतेः सूत्रगृहीताव्ययत्वाच्चेति दिक् । संप्रति न युज्यत इति । वृत्तौ युजिक्रियान्तर्भावेणैकार्थीभावः अतिनिद्रमासीदित्यादौ तथाव्यवहारविषये ऽतिनिद्रशब्दस्य लक्षणेति बोध्यम् । शब्दप्रादुर्भावेत्यस्य शब्दविषयप्रकाशार्थेनाव्ययेन समास इत्यर्थः । भाष्यप्रयोगेति । अचः परस्मिन्निति सूत्रेयं प्रयोगः । एतद्भाष्यप्रयोगादेतत्सूत्रे तत्तदर्थबोधकपदघटकतया गृहीताव्ययेन तत्तदर्थकेन नायं समासः । अत एव यथा सादृश्यइति सूत्रे सादृश्यसंपत्तीति प्राप्नोतीति भाष्ये उक्तम् । यथाशब्देन तु भवत्येवोत्तरसूत्रारम्भादिति भावः । ननु नित्यसमासत्वाद्वाक्यं दुर्लभमत आह । प्रतिशब्दस्येति । इदं प्राचामनुरोधेन वस्तुतः प्रतिस्यानमित्यादौ षत्वाभावसम्पादनेन सा चरितार्था तस्मादर्थमर्थं प्रति प्रत्यर्थमिति सरूपसूत्रादिस्थभाष्यप्रयोगात् यदा द्विर्वचनन्तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात्समासाप्राप्त्या वाक्यं साध्विति तत्त्वम् । वृत्तौ द्विर्वचनन्तु न समासेन वीप्साया द्योतितत्वात् इति हयवरट्सूत्रे कैयटः प्रतिना तस्या उक्तत्वादिति तत्त्वम् । शक्तिमनतिक्रम्येति । परावरयोगे चेति त्क्त्वा परावरत्वञ्च बोद्धुम् । हरेः सादृश्यमिति । हरिटासहे-

त्यलौकिकम् । वक्ष्यमाणेनेति । अत्र सूत्रालेखो वैचित्र्यार्थः यथा सूत्रपूत्तरत्र कृतस्य पूर्वत्रापकर्षणं वैचित्र्याय तद्वत् । अनुज्येष्ठं कार्यं कृतमनुज्येष्ठं प्रणामतीत्यादौ करणत्वेनान्वयात्परिनिष्ठितविभक्त्या समासमभिप्रेत्याह । ज्येष्ठस्यानुपूर्व्येणेति । आनुपूर्व्यं क्रमः पूर्वं क्रमेणेत्यनुपूर्वमिति सूत्रगृहीताव्ययेनाप्यनुना समास एतस्मात्सूत्रप्रयोगात् । युगपच्छब्देन तु समासः सूत्रगृहीतत्वात् । उभयत्रापि स्वार्थे ष्यञ् तत् ध्वनयन्नाह । चक्रेण युगपदिति । गुणभूते इति । व्याख्यानात्सादृश्यइति स्वार्थे ष्यञिति भावः । संपत्तिसमृद्ध्योः पर्यायत्वमाशङ्क्याह । ऋद्धेरिति । धनधान्यादेरित्यर्थः अनुरूपो योग्यआत्मनः समस्यमानोत्तरपदस्य भावः प्रवृत्तिनिमित्तं क्षत्रत्वादिः संपत्तिरित्यर्थः । सक्षत्रमित्यस्य क्षत्रियाणां योग्यं क्षात्रमित्यर्थः । तृणमपि इति । साकल्यबोधकाव्ययेन समासः । समासस्य नित्यत्वादस्वपदविग्रहो दर्शितः । तृणटासहेत्यलौकिकम् । अपरित्यज्येति । परावरयोगे चेति क्त्वा तद्योगश्च बोद्ध्यः । न त्वत्रेति । तृणेन सह भुङ्क्ते इति बोधोत्तरं यत्तृणानि भक्षयेत्सकलमन्यत्परित्यजेदिति प्रतीतेः सकलं भोज्यमत्तीत्यत्रैव तात्पर्यादिति भावः । अग्निग्रन्थपर्यन्तमिति । बहुव्रीहौ द्वितीयान्तं, ग्रन्थोऽन्यपदार्थः । अधीतइत्यस्य तु न समासेऽन्तर्भावो मानाभावात् । अन्त्यत्वं साहित्यञ्च सहार्थः । अन्त्याग्निग्रन्थसहितमिति बोधः । अग्निटा सहेत्यलौकिकं, न च तदधीतइत्यत्र प्रसङ्गो वैकल्पिकत्वात् ॥

यथा ऽसा ॥ असादृश्यइति छेदस्तत्रैव वर्त्तमान इत्यर्थः । तथा हर इति । तथाशब्दस्य सादृश्यार्थकत्वे ऽपि न समासः । सदृश इत्युक्तेर्नियमेन प्रतियोग्याकाङ्क्षादर्शनात्सादृश्यप्रतियोगिवाचकेनैव तद्बोधकाव्ययस्य समासात् । द्योतयतीति । सामान्यस्य भेदको यो विशेषस्तद्रूपे प्रकारे थालिति यद्विशेषवान् हरिस्तद्विशेषवदभिन्नो हर इति बोधे यत्तच्छब्दाभ्यान्तयोरेकत्वावगमे ऽर्थादुपमानत्वप्रतीतेरिति भावः । सूत्रे ऽपि सादृश्यशब्देनोपमानत्वमेव थाल्सूत्रे सादृश्यस्य प्रकारशब्देन ग्रहणे यत्सादृश्यवान्हरिस्तत्सादृश्यवान्हर इत्येव बोधः स्यान्न तु हरिसदृशो हर इति । भाष्यानुसारिणस्तु यथासादृश्ये इत्यस्य यथाशब्दः सुबन्तेन समस्यते सादृश्ये द्योत्येनेत्यर्थः यथाशक्तियथाबलमित्याद्युदाहरणम् । अत एव भाष्ये असादृश्ये इति किमर्थं यथा देवदत्तस्तथा यज्ञदत्त इत्युक्तं न तु सूत्रमेव किमर्थमित्युक्तम् । यथार्थत्वेन तु नसिद्धिः सूत्रगृहीताव्ययेन तेनासमासात् । अत्र चेदमपि ज्ञापकम् । न च प्रकारवचने थाला निष्पन्नस्य यथाशब्दस्य सर्वथा सादृश्यद्योतकत्वेन सूत्रोदाहरणासम्भव इति सूत्रं व्यर्थमिति वाच्यम् । अत्र सूत्रे अव्युत्पन्नस्य वीप्सायोग्यतापदार्थानतिवृत्तिबोधकस्यैव ग्रहणेनादोषात् । यथाशक्ति इत्यु-

दाहरणे एतदर्थक एव सः । यद्यपि यथाशब्द उपमानत्वं द्योतयतीति सक्लाभियुक्तोक्तेर्यद्विशेषवानित्यादिप्रागुक्तबोधोत्तरमुपमानदेवदत्ताभिन्न उपमेयो यज्ञदत्त इति बोधः । गृहीतविशेषधर्म एव च साधारणधर्मः लक्षणामूलव्यञ्जनाजन्यबोधस्थलद्वोभयोः शाब्दत्वं सुवचनम् । अत एवोपमानोपमेययोः समानविभक्तिकत्वसिद्धिः । एवञ्च पूर्वपदार्थप्राधान्याभावेन नात्राव्ययीभावप्रसक्तिस्तथापि प्रसिद्धत्वात्प्रकारवचनस्यैवात्र ग्रहणे तत्सामर्थ्याद्विमुनीत्यादाविव तदभावे ऽपि समासः स्यादतो ऽसादृश्यइति सूत्रे कृतम् । तत्र कृते तु तद्भिन्नस्याव्युत्पन्नस्यैवात्र सूत्रे ग्रहणम् । न च यथाबलमित्याद्युदाहरणे प्रकारवाचियालन्तस्यैव ग्रहणमस्तु सादृश्यसम्पत्तीत्यनेन च समासोऽस्तु इदं सूत्रञ्च मास्तु पूर्वसूत्रे यथाग्रहणञ्च माऽस्त्विति वाच्यम् । एतत्सूत्रारम्भसामर्थ्येन तत्र तद्प्रयोगात् । तत्रार्थे साधोरन्यत्रार्थे ऽसाधुत्वापत्तेश्च । इदमेव सूत्रमव्युत्पन्नस्य तदर्थकस्य यथाशब्दस्य सत्त्वे मानम् । तथा च भाष्यम् । असादृश्यइत्युच्यते तत्रेदं न सिद्ध्यति । यथाशक्ति यथाबलं प्रकारे यस्याल् तदन्तस्य सादृश्यएव वृत्तेरित्याशङ्क्य वीप्सादिवाचिनोऽत्र सूत्रे यथाबलमित्युदाहरणे च ग्रहणमित्यर्थकोक्त्यनन्तरमथ यः प्रकारवचने याल् तदन्तस्य ग्रहणं कस्मान्न भवति पूर्वेण प्राप्नोति सादृश्यसम्पत्तीति पूर्वपक्षिणोक्ते प्रतिषेधवचनसामर्थ्याच्च भविष्यतीति उत्तरितम् । नानेन भाष्येण प्रकृतसूत्रे प्रकारवचनथालन्तस्य ग्रहणं शङ्क्यतइति वक्तुं युक्तम् । असादृश्यइत्यस्य सूत्रे श्रवणात् । यद्यपि तद्विस्मरणेनायं पूर्वपक्ष इत्यपि वक्तुं शक्यम् । तथापि पूर्वेण प्राप्नोतीत्यादेरसङ्गतिः । तस्मादुदाहरणे थालन्तस्य ग्रहणं तत्र सादृश्यार्थकेन समासं कृत्वा ऽन्यत्रार्थे प्रयोगे बाधकाभाव इत्यभिमानेनार्थघटितं साधुत्वमित्यजानतो ऽव्युत्पन्नसत्त्वे मानञ्चापश्यतः शङ्केयमिति युक्तं प्रतिषेधवचनसामर्थ्यादित्यस्य प्रतिषेधयुक्तैतद्वचनसामर्थ्यादित्यर्थः । एवञ्चाव्युत्पन्नतत्सत्त्वे ऽर्थघटितं साधुत्वमित्यत्र चैतदेव मानमिति भावः । यत्तु प्रतिषेध इति प्रतीकमुपादाय यथार्थे यदव्ययन्तेन समस्यतइति पूर्वेण सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्येति कैयटस्तन्न । सूत्रगृहीताव्ययेन तेन सूत्रेणासमासात् । नियमत्वापेक्षयैतदर्थज्ञापकत्वस्यैवोचितत्वात् । तत्र सूत्रे यथार्थशब्देन सादृश्याग्रहणाच्च । अत एव तत्र सूत्रे सादृश्यग्रहणं चरितार्थम् । अत एव भगवता सादृश्यसम्पत्तीति प्राप्नोतीत्युक्तम् । न च सादृश्यग्रहणं गुणभूतसादृश्यग्रहणार्थम् । लक्ष्यानुरोधेन प्रधानन्यायाप्रवृत्त्योभयत्रापि तेन सिद्धेः । यथा योग्यताया यथार्थत्वे ऽपि रूपस्य योग्यमनुरूपमित्यादौ तद्वदर्थकेनापि समासस्तद्वत् । पूर्वसूत्रे यथार्थग्रहणन्तदर्थकान्याव्ययग्रहणा-

र्थम् । एवञ्च यथाशक्तीति एतदुदाहरणमेवेति भाष्ये स्पष्टम् । वीप्सादावपि यथाशब्देन समासो भवत्येव । यदव्युत्पन्नं वीप्सावाचि तस्येदं ग्रहणमिति भाष्यात् । एवञ्च स्पष्टमेवोपक्रमोपसंहाराभ्यामस्य सूत्रस्य विधित्वं भाष्याल्लभ्यते । अत्र सूत्रे यथाशब्देन यथार्थस्य न ग्रहणं मानाभावात् । पूर्वसूत्रे तु वचनग्रहणात्तथा विभक्तिशब्देनेवेत्याहुः ॥ यावदव ॥ संख्यादिनैयत्त्यपरिच्छेदोऽवधारणम् । तद्बोधकं यावदित्यव्ययं समस्यते इत्यर्थः । अवधारणे किम् । यावद्दत्तं तावद्भुक्तं कियद्भुक्तमिति नावधारयामीत्यर्थः ॥ सुप्प्रतिना । मात्राशब्दोऽल्पपर्यायः पुनः सुप्ग्रहणमव्ययनिवृत्त्यर्थम् । अन्यथा दोषामन्यमहरित्यादौ दोषादीनां वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्ययेनैव समासः स्यात् । वृत्तं प्रति इति । लक्षणे प्रतिः कर्मप्रवचनीयत्वन्तु प्रतेर्गतिर्गतावित निघाताभावायेत्याहुः ॥ अक्षशला ॥ समस्यन्त इति शेषः । पराजय एवेति । पञ्चिकानाम द्यूतं पञ्चभिः कपर्दैर्भवति तत्र यदि सर्वे उत्ताना अवाञ्चो वा पतन्ति तदा पातयिता जयत्यन्यथा जीयते विपरीतवर्त्तने कर्तृत्वेनाक्षादेस्तृतीया वृत्तौ परेस्तदर्थः अक्षङ्परीत्यलौकिकम् । नित्यसमासत्वादस्वपदविग्रहः । वैपरीत्यञ्च जयापेतयेति भावः । अक्षेणेति । अक्षाभ्यां विपरीतं वृत्तमित्याद्यर्थे न समासोऽनभिधानात् । अक्षत्वेनैकाक्षबोध एवास्य साधुत्वम् । न तु तेन रूपेणानेकाक्षबोधे एकत्वादिनाबोधस्तु वृत्तौ नास्त्येवेति भाष्ये स्पष्टम् ॥ विभाषा ॥ यद्यपि एकार्थीभावे समासस्य व्यपेक्षायां वाक्यस्य च सिद्धिरिदं व्यर्थं एकार्थीभाव एव समाससञ्ज्ञादिविकल्पस्तु नेष्यते एवं समासनिषेधस्तत्राणि नित्यं क्रीडेत्यत्र नित्यग्रहणञ्च व्यर्थं निषेधविषये एकार्थीभावाभावेन समासाप्राप्तेः । नित्याधिकारविषये ऽस्याभावेन वाक्याप्राप्तेश्च तथापि लक्षणैकचक्षुष्कान्मन्दान्प्रति क्वैकार्थीभावो नित्यः क्व पाक्षिकः क्व नास्त्येवेत्यर्थबोधनार्थं सर्वमावश्यकम् । ध्वनितं चेदं समर्थानामिति सूत्रे भाष्ये । लक्ष्यैकचक्षुष्कं प्रति समर्थ इति सूत्रे भाष्ये तत्प्रत्याख्यातम् । एवञ्च विशेषणीभूतैकार्थीभावस्य विकल्पादिबोधकानीमानि । अत एव पारेमध्ये इति सूत्रे भाष्ये एकया वृत्तिर्विभाषा परया वृत्तिविषये ऽनित्योपवाद इत्युक्तम् । तत्र वृत्तिरेकार्थीभावः । एतत्सामर्थ्यादिति । अत्रैतत्करणात्प्राक्तनसंबन्धेन तद्विषये एकार्थीभावस्य नित्यत्वमिति भावः । नन्वेवं सुप्सुपेत्यस्यापि नित्यतापत्तिः । एवञ्च भाष्ये सुप्सुपेत्युदाहरणभूते विस्पष्टपटुरित्यत्र विस्पष्टं पटुरिति विग्रहप्रदर्शनासङ्गतिरत आह । सुप्सुपेति त्विति । एतत्समासानुवादेनैवाव्ययीभावादिसञ्ज्ञाविधानेन सिद्धे पुनस्तैः समाससञ्ज्ञाविधानं तदनित्यत्वज्ञापकम् । उप-

पदमतिङ् कर्तृकरणे कृता आख्यातमाख्यातेनेत्यादावुद्देश्याप्रसिद्ध्या अनेकमन्यपदार्थे इत्यादौ च्व्यादिपदघटितसमासरूपोद्देश्याप्रसिद्ध्या तेषु समाससञ्ज्ञाविधानस्यावश्यकत्वेनार्थाधिकारानुरोधात्सर्वत्र तस्य विधेयसमर्पकत्वम् । प्रथमानिर्दिष्टमिति सूत्रे समासे इत्यस्य समासत्वव्याप्यसञ्ज्ञाविधायके लक्षणया ऽव्ययादीनामुपसर्जनत्वं साधयितुं शक्यमिति न तदर्थं समाससञ्ज्ञाविधानं चरितार्थमिति भावः । विग्रहप्रदर्शनपरोक्तभाष्यादपि तस्यानित्यत्वं बोध्यम् ॥ लक्षणेनाभिप्रती ॥ अभिप्रती आभिमुख्यस्याग्नेर्ज्ञापकत्वसंबन्धेनान्वयस्य च द्योतकौ । अग्निज्ञाप्यं शलभकर्तृकम्पतनमिति बोधः । उदाहरणे तथाबोधे चाग्न्यभिमुखत्वं शलभपतनस्य लोकप्रसिद्ध्या मनसा गृह्यते इत्याभिमुख्यद्योतकताभिशब्दस्य अग्निज्ञाप्यं शलभकर्तृकं प्रत्यासत्त्याग्न्यभिमुखं पतनमिति बोध इत्यन्ये । कर्मप्रवचनीयद्योत्यसंबन्धेनान्वयाद्वाक्ये द्वितीया तदाह । अग्निमभीति । लक्षणेनेति किम् । स्रुघ्नं प्रति गतः स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः । अभिमुख्ये किम् । वृक्षं प्रति विद्योतते इत्यादावाभिमुख्ये द्योतनाभावे समासो मा भूदिति । अस्य समासस्य वैकल्पिकत्वेन पक्षे कर्मप्रवचनीयत्वं चरितार्थम् । अभिप्रती इति किम् । अग्नेः संमुखं शलभाः पतन्तीत्यर्थे सांमुख्यार्थकसंशब्देन लक्षणत्वसम्बन्धेनान्वये समासो मा भूदिति । अनुर्य ॥ लक्षणेनेति वर्त्तते समयेत्यधिकरणशक्तिप्रधानम् । यदिति सामान्ये नपुंसकं द्वितीयान्तम् । यं पदार्थं समयेत्यर्थद्योतकोऽनुस्तेन लक्षणभूतेन तद्वाचकेन समस्यतइत्यर्थस्तदाह । यमिति । वनादेर्लक्षणत्वं समीपद्वारा स्वसामीप्येन हि वनेनाशनिदेशो ज्ञाप्यते लक्षणत्वन्तु वस्तुसन्निमित्तं न तु तेन संबन्धेनान्वयस्तदाह । वनस्य समीपमिति । यस्य दैर्घ्यमिति । यद्दैर्घ्यसदृशदैर्घ्यमित्यर्थः । अत्रापि लक्षणत्वं वस्तुसदेव निमित्तम् । तद्ध्वनयन्नाह गङ्गाया अन्विति । तद्द्योत्यसंबन्धेनान्वयाभावाच्च द्वितीया । उपलक्षितेति । विशिष्टेत्यर्थः । दैर्घ्यसदृशदैर्घ्यविशिष्टत्वमनोरर्थः । तथा बोधे च गङ्गाया ज्ञापकत्वस्य गङ्गासमीपे गत इति बोधे गङ्गाया ज्ञापकत्वस्य च नियमेन मनसा बोधादन्यलभ्यत्वेन नात्र तद्द्योत्यमिति तात्पर्य्यम् । तेन संबन्धेनान्वयेतु वनमनुगङ्गामन्विति द्वितीयैवेति बोध्यम् । निवेश्यगङ्गामनुतां महानदीं चमूमिति रामायणे प्रयोगात् । वाराणस्याः स्वरूपेण ज्ञातत्वेप्यायामवैशिष्ट्येन ज्ञाप्यत्वं बोध्यम् ॥ तिष्ठद्गुप्र ॥ चेनैषां वृत्त्यन्तरे प्रवेशो न । आतिष्ठद्गुजपेत्सन्ध्यां पश्चिमामायतीगवादिति भट्टिश्लोके आ तिष्ठद्गु आ आयतीगवादिति भिन्ने पदे । इह । उक्तोदाहरणद्वये । तत्राद्ये शत्रादेशमात्रम् । प्रथमासामानाधिकरण्यात्तदप्राप्तिः । यद्यपि पचन्पुरुष इति वत्सिध्यति तथाप्युपायान्तर-

मिदम् । समासान्तश्चेति । इदमन्त्ये चेनान्यपदार्थे ऽव्ययीभाव इति बोद्धम् । पत्ते षष्ठीति । अयं भावः । महाविभाषैकार्थीभावस्य विकल्पबोधिका वृत्तिश्चैकार्थीभावे नित्यवेति येननाप्राप्तिन्यायेनाव्ययीभावस्तत्पुरुषं बाधेत य- थैकदेशिसमासः षष्ठीतत्पुरुषमिति पत्ते तल्लाभाय पुनर्वाग्रहणमिति संख्येत्या- दित्रिसूत्री स्वभावात्समानाधिकरणविषया । वंश इति । एकस्वभावः सन्ता- नप्रबन्धो वंशः, द्वौ मुनी पाणिनिकात्यायनौ त्रिमुनि भाष्यकृत तौ च, स्वप- दार्थप्राधान्ये एवायं समासः । नन्वेवं त्रिमुनि व्याकरणमिति सामानाधिकर- ण्यानुपपत्तिरत आह । विद्येति ॥ अन्ये तु बहुव्रीहौ त्रिमुनिव्याकरणमव्ययी- भावे व्याकरणस्येति स्वरभेदश्चेष्ट एवेत्याहुः । परे तु विद्यावंशो नाम गुरुशिष्यपर म्परा न चैतस्य मुनित्रयस्य तत्त्वे मानमस्ति त्रिमुनिव्याकरणस्येति यदीष्यते तदेदं तिष्ठद्गुप्रभृतिषु पाठात्साध्यमित्याहुः । मूलन्तु वृत्त्यनुसारेण किंच न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते इति न्यायेन द्विमुनीति व्यवहारासङ्गति- र्बोध्या जन्मनोदाहरति । एकविंशतीति । एकविंशतिर्भरद्वाजवंश्या इति विग्रहः । वृत्तौ तृतीयासप्तम्योरिति सूत्रस्थभाष्यप्रयोगात्तत्प्रामाण्येनोपका- दिष्वनयोः पाठात् यञञोश्चेति लुगभावोबोध्यः ॥ नदीभिश्च ॥ अत्र च बहु- वचननिर्देशान्न सञ्ज्ञाया ग्रहणं नापि शब्दस्वरूपस्य शब्दसञ्ज्ञात्वाच्च किन्तु नदीत्यर्थग्रहणं तेन तद्वाचके सर्वत्र प्रवृत्तिः । एतच्च संख्यासञ्ज्ञासूत्रे भाष्ये स्पष्टम् । समाहारे चेति । तत्रैवेत्यर्थः एवञ्च तदविवक्षायां पूर्वकालैकेति समासे एकनदीतरः सिद्धो ऽन्यथा समानाधिकरणतत्पुरुषं बाधित्वाव्ययी- भावे नपुंसकह्रस्वापत्तिः । अच्प्रत्यन्वयोतियोगविभागसिद्धोभियुक्तोक्तो गोदा- वर्याश्च नद्याश्च संज्ञायाउत्तरे यदीत्यच् तु न । योगविभागस्येष्टसिद्ध्यर्थ- त्वात् । भाष्यकृता तदनुक्तेश्चेति भावः ॥ अन्यपदा ॥ संख्येति निवृत्तम् । नदी ग्रहणमनुवर्त्तते । सञ्ज्ञानवगमादिति । सञ्ज्ञेति कर्मण्यङ् तेन सञ्ज्ञिनोद्देश- विशेषस्यानवगमादित्यर्थः । नित्यसमास इति । तत्सदृश इत्यर्थः । तत्सादृश्यञ्च समाससमानार्थकवाक्याभावेन समासघटकपदानां विग्रहस्त्वस्त्येव महाविभाषाया असंबन्धे मानाभावात् अत एव द्वितीयतृतीयेति सूत्रे ऽन्यतरस्यां- ग्रहणेनोत्सर्गापवादयोर्महाविभाषाविषयत्वे ऽपवादाभावे उत्सर्गाप्रवृत्तिरि- त्यर्थे ज्ञापिते उन्मत्तगङ्गमित्युदाहृतम् । अव्ययीभावेन मुक्ते बहुव्रीहिर्नेति चोक्तं भाष्ये अस्य नित्यत्वे तेन मुक्त इत्यसङ्गतिः स्पष्टैव एवमन्यत्रापि बोद्धम् ॥ समासान्ताः ॥ अत्र समासपदन्तत्संबन्ध्यलौकिकविग्रहवाक्यपरमेव- मव्ययीभावादिपदान्यपि तत्पराणि । अत एव बहुकुमारीक इत्यादौ ह्रस्वो न । गोस्त्रियोरित्यत्र भाष्ये स्पष्टमेतत् । अन्त इति सूत्रे भाष्ये च । एवञ्चा-

लौकिकविग्रहवाक्ये समाससञ्ज्ञासमकालमेव समासान्ता इति सिद्धान्तः। न च पूर्वं समासान्ते तत्संनियोगशिष्टाद्युदात्तत्वे तदेकवाक्यतापन्ने पूर्वस्य निघाते च कृते पूर्वपदस्योदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वराप्रवृत्तौ इचश्चित्त्वं व्यर्थमिति वाच्यम् । तत्सामर्थ्येन समासान्तविधावाद्युदात्तश्चेत्यस्यासंबन्धज्ञापनात् । तेन सम्भृतौ पूर्यस्य समृद्धपुरो राजेत्यादौ पूर्वपदप्रकृतिस्वरसिद्धिः । द्वित्रिभ्यामिति सूत्रस्थं समासान्ता इत्येतत्परं भाष्यमेकदेश्युक्तिरुक्तभाष्यद्वयविरोधादित्यन्यत्र प्रपञ्चितम् । अन्तशब्दश्चरमावयवाची स च समुदायावयवः । अत एवोपशरदमित्यत्र नाव्ययीभावादित्यम् । अव्ययानामिति टिलोपाभावश्च सिद्धः । पूर्वभागस्याव्ययीभावत्वाभावेनानव्ययत्वात् । यत्तु कैयटेन गोस्त्रियोरिति सूत्रं समासपदस्य समासार्थविग्रहवाक्यस्योत्तरपदलक्षणयोत्तरपदावयवत्वमुक्तम् । तथा सरूपसूत्रे उक्तम् । उत्तरपदावयवत्वमित्यपि भाष्यकारस्य मतमिति तन्न । फलाभावात् । द्विपुरीत्यादौ स्त्रीत्वस्य लोकतः सिद्धः लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्येण लिङ्गप्रकरणस्य नियमार्थत्वाभावबोधनात । अत एव परवल्लिङ्गमिति सूत्रसत्त्वेऽपि द्विनावमङ्गुखारमित्यादौ नपुंसकत्वसिद्धिः पञ्चराजमित्यादावपि तत्प्रवृत्त्यापत्तावकारान्तोत्तरपदेत्यत्रोत्तरपदग्रहणस्य व्यर्थत्वापत्तिश्च । अन्त इत्यादिसूत्रस्थभाष्यविरुद्धं चोत्तरपदावयवत्वम् । एवं हि तत्र भाष्यम् । समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्प्य आद्ये इदम्प्रथमका इत्यादौ कपोन्तोदात्तत्वापत्तिमुक्त्वा ऽन्त्ये नृ च इत्यत्रान्तोदात्तत्व सिद्धिरित्युक्त्वा उभयोरपि प्रकरणेन लक्ष्यानुसारात्क्वचिदुत्तरपदान्तस्य क्वचित्समासान्तस्योदात्तत्वमिति । सरूपसूत्रस्थभाष्यन्तदनाश्रयणे ऽपि योजयितुं शक्यम् । तथाहि कृतद्वन्द्वानां विभक्तौ परत एकशेष इति पक्षे ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोति इति भाष्ये समासान्तानां समासावयवत्वे ऽपि तत्प्राग्भागस्य विभक्तिपरत्वाभावस्तद्विशिष्टस्य तु न सरूपत्वमिति तद्भावः । न च तस्यानर्थक्येन तदनुक्त्या भाष्यस्य न्यूनता द्वन्द्वावयवानामर्थवतामेवैकशेष इत्यत्र मानाभावात् । विशिष्टरूपोपादानाभावेन तत्परिभाषाया इहाप्रवृत्तेः । भाष्यान्तरं तु तादृशं नोपलभ्यतएवेति दिक् । स च समासान्तो बहु जस् गोमत् जसित्यवस्थायामलौकिके वाक्ये सुप परस्तादेव ततः पूर्वत्वे तु वाच्यार्थविरोधः । न हि सुब्रहितं समासार्थं किन्तु तद्विशिष्टमेव । न च विशिष्टस्य सुबन्तत्वाभावेन सुबन्तात्तद्धित इति सिद्धान्तविरोधः, तेषामर्थाभावेन परिपूर्णपदमिति तन्मूलभूतन्यायस्यात्र विषयाभावात् । अत एव पुंयोगादिति सूत्रे ऽत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवो-

त्पत्तिर्भाष्ये उक्ता किंच समासान्तप्रकरणे ङ्याप्प्रातिपदिकादित्यस्याप्यसंबन्धः । तस्यामवस्थायां वाक्यस्याप्रातिपदिकत्वात् । तत्र कबुत्पत्तिकाले एव तत्पूर्वभागस्य समाससञ्ज्ञाविरोधाभावात् । समासान्तस्य च तद्वाक्यावयवत्वेन तद्ग्रहणेन ग्रहणात् । बहुकुमारीक इत्यादावुपसर्जनस्त्रीप्रत्ययान्तप्रातिपदिकाभावान्न ह्रस्वः । कप् ह्रस्वादन्तरङ्गतरः । तादर्थ्यात्ताच्छब्द्यम् । येषां पदानां समासो न तावत्तेषामन्यद्भवति कपन्तावत्प्रतीक्षतइति भाष्येण स्पष्टं तथाभिधानात् । तत्राद्यस्य तावदित्यस्य कपः प्रथममित्यर्थः अन्यत्समाससञ्ज्ञारूपम् । कपा सह स्वभवनाय कपं पश्यतीत्यर्थः । पूर्वं स्वप्रवृत्तौ हि तदर्थकवाक्याभावेन कप्शास्त्रवैयर्थ्यभिया हि तद्भवनकालप्रतीक्षा । अन्यथा तदनपेक्षत्वेन कप्प्रतीक्षोक्तिरत्यन्तासङ्गता स्यात् । अत एव प्रत्ययस्यादिति सूत्रभाष्योदाहृते बहुचर्मिकेत्यादावापः सुपः परत्वाभावादित्वसिद्धिरिति दिक् । अथाव्ययीभावे ऽसाधारणसमासान्तानाह ॥ अव्ययीभावे ॥ अव्ययीभावे उत्तरपदतया वर्त्तमानं यच्छरदादिप्रकृतिकसुबन्तं तदन्ताट्टच् । स च समासार्थविग्रहवाक्यस्यान्तावयव इत्यर्थः । राजाह इत्यतष्टजनुवर्त्तते । अन्नन्तादव्ययीभावादित्यादि तु फलितार्थपरतया कथञ्चिन्नेयम् । अत्र गणे ये झयन्तास्तेषां झय इति विकल्पे प्राप्ते नित्यार्थः पाठ इति केचित् । प्रत्यक्षमिति ॥ लक्षणेनाभीति समासः । परोक्षमिति । इन्द्रियाजन्यज्ञानविषये त्वर्शआद्यजन्तः प्रयोगः । नन्वत्राव्ययीभावाप्राप्तिरत आह । सामर्थ्यादिति । परस्योकारेति । परशब्दस्य ओकारोन्तादेश इत्यर्थः । एङि इति पूर्वरूपत्वम् । परस्योकारेति पाठे परस्यातिशब्दस्यादेरुका इत्यर्थः । आद्गुणः । अर्शआद्यचीति । धर्मपरादिति भावः । अत्र गणसूत्रे परग्रहणं प्रक्षिप्तमिति परोक्षे लिडिति सूत्रस्थभाष्यकैयटस्वरसः । तत्र हि समासान्तो ऽपि निपातनात्साधितः । पूजार्थमिति । वेति वक्तव्ये तत्पूजार्थमपीत्यर्थः । अन्यतरस्यांग्रहणस्य तु स्वरितत्वं नास्त्येव । अत एव नदीपौर्णमासीति सूत्रे नदीशब्देन विशेषाणामग्रहणे शरदादिषु विपाट्शब्दपाठस्य ज्ञापकत्वमुक्तं संख्यासञ्ज्ञासूत्रे भाष्ये । नदीत्यादेर्वैकल्पिकत्वे नित्यत्वाय पाठस्यावश्यकतया ज्ञापकत्वासङ्गतिः स्पष्टैव । तत्र झयन्तपाठस्तु प्रपञ्चार्थस्तत्र नदीसञ्ज्ञकस्य न ग्रहणं पौर्णमास्या विग्रहणात् । न चाशब्दसञ्ज्ञेति निषेधात्स्वरूपस्यापि ग्रहणं न स्यादिति वाच्यम् । लक्ष्यानुसारेण सामर्थ्येन च तस्यात्र त्यागात् । अत एव तत्सूत्रं भाष्ये प्रत्याख्यातमिति प्रामाणिकाः ॥ इत्यव्ययीभावः ॥

चकारबलेनेति । संख्यापूर्वो द्विगुरिति योगं विभज्य पूर्वेण संख्यापूर्वस्य तद्धितार्थेत्यत्रोक्तस्य तत्पुरुषसञ्ज्ञाविधानसामर्थ्यादेव पर्याये सिद्धे चकारः समा-

वेशार्थं इति भावः । श्रितेति । श्रितादीनां सुबन्तत्वासम्भवात् श्रितादिप्रकृतिकैरित्यर्थलाभः । येनविधिरिति सूत्रस्यभाष्यप्रमाण्येन संबुद्धिस्त्रीलिङ्गप्रथमान्तभिन्ने ऽपि प्रवृत्तेरावश्यकत्वादिति भावः । समर्थविशेषणत्वाच्छ्रितादीनां प्राप्तो ऽपि तदन्तविधिः । समासप्रत्ययविधाविति । निषेधान्न भवति तदन्तविधौ हि श्रिताद्यन्तसमर्थप्रकृतिकैरित्यर्थे कष्टं परमश्रित इत्यादावपि समासापत्तिः । कष्टं श्रित इति । न लोकेति षष्ठीनिषेधः । पतितशब्दे तनिपतिदरिद्रातिभ्यः सनो वेट्कत्वेन यस्य विभाषेतीण्निषेधप्राप्तावपि अत एव निर्देशादिट् बोध्यः । अयोग्यत्वादिति । स्वयमित्यात्मनेत्यर्थकं कर्तृशक्तिप्रधानमित्यर्थः । स्वायंकृतिरिति । असमासे कार्त्तिरिति स्यादिति भावः । ऐकस्वर्यमपि समासफलम् । खट्वा ॥ अस्य तत्प्रकृतिके लक्षणया द्वितीयेत्यनेन सामानाधिकरण्यम् । जाल्म इति । तेन केवलरूढत्वन्तस्य सूचयति । एतेन प्रकरणादिसहकृतवाक्येन निन्दाप्रतीतिसम्भवान्न हि निन्दा इत्ययुक्तमित्यपास्तम् । योगरूढे तत्संभवे ऽपि केवलरूढे तदभावात् । न हि निन्देत्यस्य च विवक्षिता निन्देत्यर्थः । समीत्यर्धे । काला इति । कालवाचिन इत्यर्थः । बहुवचनात् । ननु क्तेनेत्यस्य निवृत्त्या क्तान्ताक्तान्तसाधारणोत्तरसूत्रेण सिद्धे योगविभागो व्यर्थोत आह । अनत्यन्तेति । परिच्छेत्तुमिति । रभेर्योगे शकधृषेति तुमुन् । अत्यन्त ॥ अत्यन्तसंयोगानत्यन्तसंयोगसाधारणेन पूर्वेण सिद्धे इदं किमर्थमत आहाऽक्तान्तार्थमिति । क्तेनेति अत्र नानुवर्त्ततइति भावः ॥ तृतीया ॥ इदं सूत्रं कृतद्वारकएव सामर्थ्ये प्रवर्त्तते न साक्षात्परस्परान्वये उत्तरसूत्रेण निपुणश्लक्ष्णाभ्यां समासविधानात् । तद्योगे हि हेतौ तृतीया तत्कृतेत्युक्तेश्च स्पष्टञ्चैतद्भाष्ये गुणेत्यस्य तत्कृतेत्येतत्सापेक्षत्वे ऽपि सौत्रत्वात्समासः । खण्डशब्दश्च खण्डगुणवत्त्वेन शकलबोधक इति शङ्कुलाखण्ड इत्यत्र कृतद्वारकमेव सामर्थ्यं शङ्कुलाकृतखण्डगुणवानित्यर्थः । वचनग्रहणन्तु गुणोपसर्जनद्रव्यवचनेनैव समासार्थम् । तेन कुसुम्भेन कृतं रूपमित्यादौ न । घृतेन पाटवमित्यादौ च न । स्पष्टञ्चेदं भाष्ये । यद्यपि जातिसञ्ज्ञाकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दभिन्नशब्दानामेव गुणवचनसञ्ज्ञा तथापि प्रकृते व्याख्यानात् शुद्धयौगिक एव गुणवचनशब्द इति बोध्यम् । तृतीयान्तार्थेन कृतो यो गुणस्तद्वचनेन समास इत्यर्थात् । तत्कृतेत्यस्य गुणपदेनैवान्वयेन सञ्ज्ञानुपादानाच्च गुणेनेतीयता सिद्धे वचनग्रहणाद्गुणमुक्तवतेत्यर्थ इति भाष्याच्च गुणपदेन धर्ममात्रमत्र । तेन खण्डशब्दस्य क्रियावचनत्वे ऽपि न दोषः । धान्येनेति । अर्थशब्दो धनपरो हेतुतृतीयेति बोध्यम् ॥ पूर्व-

सदृश ॥ यद्यपि सदृशशब्देन षष्ठी समासः सिद्धस्तुल्यार्थैरित्यनेन तद्योगे षष्ठ्या अपि विधानात् एतस्याश्च न प्रतिपदविधानत्त्वमिति वक्ष्यते । अतः प्रतिपदविधाना षष्ठी न समस्यत इति निषेधोऽत्र न । पूर्वपदप्रकृतिस्वरोऽपि सदृशप्रतिरूपयोरिति सिद्धः । तत्र हि दास्याः सदृश इत्यादौ षष्ठ्या अलुकि पूर्वपदप्रकृतिस्वरार्थं सदृशग्रहणमावश्यकं, मनसा सदृश इति सञ्ज्ञा नास्त्येवेति न तदर्थमिदमावश्यकं तथापि भोजनहेतुकसादृश्यवानित्यर्थे भोजनसदृश इत्यत्र समासार्थमिदमावश्यकम् । हेतोः शेषत्वविवक्षया षष्ठीसमासे तु पूर्वपदप्रकृतिस्वरासिद्धिः । सादृश्यग्रहणेन सदृशप्रतिरूपयोरित्यस्योपमानबोधकपूर्वपदके एव प्रवृत्तेरिति स्पष्टं सदृशप्रतिरूपयोरित्यत्र भाष्ये । यदि तु भोजनेन कृतः सदृश इत्यर्थे पूर्वसूत्रेण समासे तत्पुरुषे तुल्यार्थेत्यनेन स्वरोऽपि सिद्ध इत्युच्यते तदा सदृशग्रहणं व्यर्थमेवेति प्रकृतसूत्रे कैयटेन ध्वनितम् । सदृशेति स्वरविधायकसूत्रशेषस्थं भाष्यन्तु एकदेश्युक्तिरिति तदाशयः । मिश्रश्चेति । पणबन्धेनैकार्थ्यं सन्धिस्तत्र गम्यमाने मिश्र इत्युत्तरपदमनुपपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तमित्यर्थः । अवरस्येति । यद्यप्ययमूनार्थोऽपि तथापि व्यवस्थाविषयावरार्थमिदम् । भाष्ये ऊनार्थेत्यर्थग्रहणस्य तृतीयेति सूत्रे प्रत्याख्यानात्समर्थसूत्रे तृतीया तत्कृतेत्युपन्यस्योपादानविकल इत्युदाहरणाच्चात्रोनार्थग्रहणं नेति वादिनां मते सर्वथास्यावश्यकत्वाच्चेति दिक् ॥ कर्त्तरि करणे चेति । सूत्रे समाहारद्वन्द्वात्सप्तम्येकवचनमिति भावः । तृतीयेति । तृतीयान्तमित्यर्थः । कृद्ग्रहणे इति । यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्विशिष्टस्यैव ग्रहणम् । अपिशब्दात्तदसमभिव्याहृते केवलस्यापीत्यर्थ इत्यन्यत्र विस्तरः । कृतेति किमिति । सुपेत्यधिकारेण तिङन्तेनाप्रसङ्गात् कर्त्राद्याक्षिप्तधात्वर्थक्रियाबोधककृदन्तेनैव भविष्यतीति प्रश्नः । काष्ठैरिति । अन्ये तु कृदन्तेनैव समासो यथा स्यान्न सुबन्तेनेत्यर्थं तदुक्तोदाहरणे तु शानजन्तादिभिरिव बहुलग्रहणेन वारयितुं शक्य इति प्राहुः । अर्थवाद आरोपितार्थः । काकपेयेति । शक्यार्थे कृत्यः पूर्णाम्भस्त्वेन कोमलत्वेन च स्तुतिरल्पाम्भस्त्वेन दुर्बलत्वेन निन्दा वा । इहान्तर्भूतेति । तां विना दध्नः संस्कार्यत्वेन प्रतीतौ व संस्कारकत्वानुपपत्तेरिति भावः । तदुक्तं भाष्ये युक्तार्थसंप्रत्ययाच्च सामर्थ्यमिति दध्ना युक्तोऽर्थ उपसेकादिस्तत्संप्रत्ययादित्यर्थः । सर्वलोकव्यवहारप्रसिद्ध्या च तदर्थान्तर्भावनिश्चय इति च । अन्नशब्देनौदनः । भिस्सास्त्रीभक्तमन्धोऽन्नमिति कोशेन तत्र तस्य रूढेर्योगाच्च रूढिर्बलीयसीति बोद्ध्यम् । मिश्रणेति । तां विना मिश्रीकरणत्वायोगादिति भावः तच्छब्देन चतुर्थ्यन्तार्थ इत्याशयेनाह । चतुर्थ्यन्तार्थायेति । तादर्थ्ये चतुर्थी । बलिरचितग्रहणादिति । तद्योगे हि ता-

दर्थ्यचतुर्थी हितशब्दयोगे चास्मादेव ज्ञापकाच्चतुर्थी हितसुखाभ्यामन्योपकाराजनने तद्योगे तादर्थ्यचतुर्थ्या असम्भवात् । एतत्सर्वं भाष्ये स्पष्टम् । षष्ठीसमासा इति । रन्धनाय स्थालीत्यादावभिधानस्वाभाव्यात्तदर्थत्वेनैव तस्य भानं न संबन्धत्वेनेति षष्ठ्यभावाच्च तत्र षष्ठीसमासः । चतुर्थीसमासवारणाय तु प्रकृतिविकृतिभावएवेत्युक्तम् । अश्वघासादावुपकारकत्वेन बोधे वाक्यमेव । संबन्धत्वेन बोधे षष्ठ्यन्तेन समासो ऽपीति व्यवस्था, रन्धनार्था स्थालीति मध्यमपदलोपिसमासो ऽपि तत्र नानभिधानादिति भावः । एतेन षष्ठीसमासेन रन्धनस्थाल्या अपीष्टत्वात्प्रकृतिविकृतिभावएवेति व्यर्थम् । चतुर्थीसमासे ऽपि चतुर्थी तदर्थइति पूर्वपदप्रकृतिस्वरो न । तस्य प्रकृतिविकृतिभावएव प्रवृत्तेः अन्यथा गोरहितमित्यत्राप्यनेनैव स्वरसिद्धो क्ते चेति व्यर्थं स्यात् । न च हितार्थं, क्ते चेत्यत्रापि तदर्थे इत्यनुवृत्तेः । अत एवास्योक्तार्थज्ञापकतापरं भाष्यं सङ्गच्छत इत्यपास्तम् । अर्थशब्दस्य नित्यपुंस्त्वेन परवल्लिङ्गमित्यस्य बाधायाह । विशेष्यलिङ्गता चेति । एतदेवात्र विधेयं नित्यत्वन्तु चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहाप्रसक्तेर्न्यायसिद्धम् । गुरोरिदं गुर्वर्थमित्यादाविव यदि लिङ्गमपि लोकतः सिद्धन्तदेदं स्पष्टार्थम् । भयभीति । निर्गतजुगुप्सयोरप्युपलक्षणमिदम् । भोगोपरतवन्येतरादिषु सुप्सुपेति समासः मयूरव्यंसकादित्वाद्वा । अल्पं पञ्चम्यन्तमिति । कानि चिदेव पञ्चम्यन्तानि समस्यन्तइत्यर्थः । मङ्गलसंबन्धाभावेप्यल्पश इत्यस्मादेव निपातनाच्छस् ॥ स्तोकान्तिक ॥ स्तोकार्थो ऽल्पशब्द एव न लेशादयो व्याख्यानात् स्तोकाल्पाभ्यां कृच्छ्राच्च करणे च स्तोकेति पञ्चमी दूरान्तिकार्थेभ्या द्वितीया चेत्यनेन तेभ्य इति बोध्यम् । प्रतिदोक्तपरिभाषयैतद्विहितपञ्चम्यन्तेनैवायं समास इत्याहुः । राजपुरुष इति । अन्तर्वर्तिविभक्त्या पदत्वाच्चलोपः । गुणात्तरेण ॥ इदञ्च पूरणगुणेत्यस्यापवाद इति सर्वं गुणेति सूत्रे भाष्ये ततः सर्वपदानुवृत्तेः । सर्वशब्दएवेदं गुणबोधकाद्विहितोयस्तरप्तदन्तेन सर्वशब्दस्य समास इति वाच्यार्थः । गुणाद्विहिततरबन्तञ्च गुणवाच्येवेत्याशयेनाह । तरबन्तं यद् गुणेत्यादि । ननु यते निर्द्धार्यते यश्च निर्द्धार्यते यश्च निर्द्धारणहेतुस्त्रितयसन्निधानएवायं निषेधो युक्तो निर्द्धारणषष्ठी च युक्ता स्पष्टं चेदन्तरब्विधायके कैयटे अतो नात्रास्य प्राप्तिः सर्वेषां श्वेततर इत्यादो तमबापत्तिश्चेत्यरुचेराह । पूरणेत्यादि । द्रव्यान्तराधेयश्वेतापेक्षया सर्वेषां पटानामधिकोयं श्वेतो गुण इत्युदाहरणार्थः । एवञ्च तरबप्युपपन्नः । कृद्योगा चेति प्रतिपदविधाना न समस्यत इत्यस्यापवादः । न निर्द्धारणे ॥ द्विजादिशब्देः प्राप्तस्य निषेधोयम् । पुरुषोत्तम इत्यत्र त्रितयसन्निधानाभावाच्च निर्द्धारणविभक्तिः किन्तु संबन्धसामान्ये

षष्ठीति तया समासः । अत एव हलादिः शेष इति सूत्रे किमयं हलामादिरिति षष्ठीसमास इति भाष्ये उक्तम् । गुणवचनेन निषेधस्त्वनित्य इति तरप्सूत्रे कैयटः । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतइत्यादि गीतावाक्यादत्र कर्मधारय इति लभ्यते राजदन्तादित्वात्परनिपातः । प्रतिपदेति । ज्ञोविदर्थस्येत्यादि कृत्वोर्थइत्येतत्सूत्रविहिताप्रतिपदविधाना । यत्तु तेषु शेषपदसंबन्धेन शेषत्ववतैः षष्ठीविधानेन तत्र च षष्ठीशेषइत्यनेनैव सिद्धौ तत्तत्सामर्थ्यात्समासाभावः कल्प्यते तेन प्रतिपदविधानेति नापूर्वमिति तन्न । तत्तद्धातुयोगे उपात्तकारकातिरिक्तकारकाणां शेषत्वविवक्षाभावज्ञापनेनापि चारितार्थ्यसम्भवात् । किंच कृत्वोर्थप्रयोगे ज्ञोविदर्थस्य दिवस्तदर्थस्येत्यादि विषये समासनिषेधानापत्तिः । तत्र शेषग्रहणनिवृत्तेः सर्वसम्मतत्वात्कृत्वोर्थइत्यत्र तत्संबन्धे भाष्यानुग्रहाभावात् । एवञ्ज्ञोविदर्थस्येति सूत्रे ऽपि तत्संबन्धेनात्यन्तभाष्यानुग्रहः । अधीगर्थेत्यादौ मण्डूकानुवृत्तिः । एतच्च दिव इति सूत्रे विस्तरेणोपपादितम् । शतस्य देवितेत्यादौ तृन्योगे कर्तृकर्मणोरित्यस्य निषेधेनानेनैव षष्ठ्या समासनिषेधस्य भगवत इष्टत्वात् । अत एव भाष्ये नेदं प्रत्याख्यातम् । अत एव प्रतिपदविधाना केति प्रश्ने सर्वा प्रतिपदविधाना शेषलक्षणां वर्जयित्वा कर्तृकर्मणोः कृतीति च कृद्योगेति भाष्ये उक्तम् । तत्र शेषलक्षणामित्यस्य शेषमात्रलक्षणामित्यर्थः प्रतिपदविधानेत्यस्य कारकविशेषोपादानेन विहितेत्यर्थः तेन तुल्यार्थैरित्यादेर्न तत्त्वमित्यलम् । पूरणाद्यर्थैरिति । आदिना गुणसुहितौ अत्र पूरणार्थत्वेन पूरणात्स्वार्थे तीयादन्तिति अनन्तस्यापि ग्रहणं व्याख्यानात् । गुणार्थशब्देन केवलगुणवाची सन् गुणोपसर्जनद्रव्यवाची गुणबोधकप्रकृतिकभावप्रत्ययान्तश्च गृह्यते व्याख्यानात् तदाह । काकस्येति । आकडारसूत्रोक्तगुणवचनानान्तु नेह ग्रहणं वचनपदानुपादानात् । तदेदमिति । अन्यथा ब्राह्मणस्य ये दन्ता इत्यर्थे शुक्लपदेनासामर्थ्यात्समासप्राप्तिरेवनेति भावः इदानीं तु शुक्लशब्द एव विशेष्यसमर्पक इति तात्पर्यम् । परे तु एवमपि सामर्थ्यं दुरुपपादम् । षष्ठ्यन्तं समर्थप्रकृतिकेन सुबन्तेन समस्यतइत्यर्थेनादोषात् । अत्र हि सुबन्तेन शुक्ला इति पदेन वाक्यैकदेशन्यायेन शुक्ला दन्ता इत्यर्थबोधः । एवञ्च सुबुत्पत्तिः शुक्लशब्दात्स्वार्थ एवेति न समर्थप्रकृतिकता सुबन्तस्यात एव ब्राह्मणस्य ग्रामं गत इत्यर्थके ब्राह्मणस्य गत इति वाक्ये प्रकरणादिना ग्राममित्यर्थस्योक्तन्यायेन गत इत्यनेनोक्तौ समासे न । नेष्यते च तत्र समास इति कर्मणि चेति सूत्रे भाष्यकैयटयोः । तस्मात्काकार्थ्यादय एवात्रोदाहरणम् । गुणपरतापि शुक्लादीनां विशेष्यद्रव्योपादाने प्रकरणादिना तदवगतौ वा नान्यत्राभिधानस्वाभाव्या-

दित्याहुः । अनित्योयं गुणेति । पूरणार्थेनेति च बोद्धम् । इत्यादीति । लोपे चेत्पादपूरणमित्यादिशब्दार्थः । तेन कुम्भपूरणभव उञ्छपष्ठ इत्यादि सिद्धम् । परे तु एषु कुम्भसंबन्धिपूरणमुञ्छसंबन्धी षष्ठ इति मध्यमपदलोपी समासो ऽत एव भाष्ये ऽनित्यत्वं नोक्तमन्यत्रास्यानभिधानमत एव सर्वश्वेत इत्यादौ गुणेन नेति निषेधात्कथं समास इत्याशङ्क्य गुणात्तरेण समासस्तरलोपश्चेति वचनमारब्धं सर्वगुणेति सूत्रे भाष्ये संख्याशब्दास्तु भावशब्दा इति योजनशतादौ क्रोशशतादौ गोविंशतिरित्यादौ च नायं निषेधः । तथा च पङ्क्तिविंशतीति सूत्रे भाष्यं ते एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्तीति विंशत्यादिषु भाववचनेष्विति च यस्तु तत्रैषां गुणवचनत्वव्यवहारो ऽपि स तु तत्सादृश्यात् । अन्यथा गावो धनमित्युपक्रम्य धनमेको गुणः अपत्यमेको गुण इत्यपि भाष्योक्तिश्चैत्रधनञ्चैत्रापत्यानीत्यादि न स्यादिति वदन्ति । सूत्रे सुहितेति भावे क्तः । तेन फलानां तृप्तिरित्यादावपि निषेधस्तदाह । तृप्त्यर्था इति । तृतीयेति तत्र । करणत्वेन भानं षष्ठीसमासे संबन्धत्वेनेति भावः । अतविशेषमप्याह । स्वरे विशेष इति । तृतीयासमासे तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरस्यापादिस्वरापवादः । षष्ठीसमासे त्वन्तोदात्तः तृप्त्यर्थानां सकर्मकत्वात्कर्मणि क्तः । द्विजस्येति । कुर्वन्नित्यपेक्षया न कर्मणि षष्ठी नलोकेति निषेधात् । नापि घटापेक्षया ऽसामर्थ्यात्समासापत्तिः । किं तु शेषे इत्याह । किंकर इत्यर्थ इति । रक्षित इति । अत एव सर्वपश्चादिति भाष्यप्रयोगः सङ्गच्छते प्रकृतसूत्रे भाष्ये ऽपि अकृदव्ययैरुच्चैरादिभिरसामर्थ्येन समासाभावमुक्त्वा कृदव्ययमेवोदाहृतम् । तेनान्याव्ययैः सति सामर्थ्ये समास इष्ट इति गम्यते । परे तु द्विजस्य कुर्वन्कृत्वेत्यादौ कारकषष्ठ्या निषेधात् कटाद्यपेक्षया शेषषष्ठ्यान्त्वसामर्थ्यात्समासप्राप्तिरेव नेत्याशङ्क्य द्विजस्य द्विषन् पुरा सूर्यस्योदेतोरित्यादौ द्विषः शतुर्वावचनन्तोसुन्कसुनोरप्रतिषेध इति कारकषष्ठीसत्वात्तत्रोदाहृतं भाष्ये तस्मादीदृशे विषये कर्मणः शेषत्वविवक्षायाः तादर्थ्यस्य संबन्धत्वविवक्षायाश्चाभाव एव पाणिनितात्पर्यनिर्णयायैव भाष्यकृतः प्रवृत्तिरित्याहुः । स्वकर्त्तव्यमिति । कर्तृषष्ठ्या समासः । तक्षकस्येति । परिनिष्ठितविभक्त्या समासः । अत्र परत्वात्समानाधिकरणसमासं बाधित्वा षष्ठीसमासः प्राप्तः । कटो ऽपि कर्म भीष्मादयोपीति पक्षे परस्परान्वय एवेति नासामर्थ्यं क्रियान्वयनियमश्च न साक्षादेव किं तु यद्द्वारा कारकत्वन्तद्वारकोपीत्युक्तम् । अत एवैतन्निषेधसामर्थ्यक्यन्तत्पक्षे न च समानाधिकरणमसमर्थवदित्यसामर्थ्यम् । समानाधिकरणाधिकारे समानमध्यमवीराश्चेति पाठेन तस्य समानाधिकरणाधिकारस्य समासाविषयत्वेप्यन्यत्राप्रवृत्तौ मानाभावादिति वाच्यम् । अधात्वभि-

हितमित्युक्त्या धातूत्तरप्रत्ययेन कर्माभिधाने यजुषः पीयमानस्येत्याद्यर्थमावश्यकत्वात् । स्पष्टञ्चेदं भाष्ये समर्थसूत्रभाष्योक्तेः प्रकरणान्तरस्थे इसुसोरितिपत्वे ऽपि तत्प्रवृत्तिरित्यन्यत् । ननु षष्ठीसमासस्य निषेधे ऽपि विशेषणसमासो ऽत्र दुर्वार इति निषेधे फलाभावो ऽत आह । विशेषणसमासस्त्विति । विशेषणं विशेष्येणेत्युभयोपादानेन तत्त्वावच्छेदकधर्मयोः परस्परं व्यभिचार एव विशेषणसमासप्रवृत्तिरिति तु न युक्तम् । कैलासाद्रिरित्यादौ समासानापत्तेरत एवोभयोपादानं स्पष्टार्थमिति कैयटः । इह तक्षकस्य सर्पस्येत्यादौ तयोः समासयोरत्र फले विशेषाभावादिति भावः । एवं प्रथमान्तेन समास इति पक्षे ऽपि षष्ठ्यन्तप्रयोगाभाव एवानभिधानादिति बोध्यम् । एतच्च भाष्यवृत्त्युदाहृतप्रयोगविषयम् । अत एवान्यस्य पदस्यार्थे इत्यर्थकोऽन्यपदार्थे इति सूत्रप्रयोगः सङ्गच्छते । एवञ्च नीलोत्पलस्य गन्ध इत्यादि साध्वेव । निषेधसामर्थ्यादिति तु नोक्तम् । गमनस्य श्रेयस इत्यादौ कर्मधारये अज्यावसकन्यायवत्सुभावे कर्मधारयइत्यनेन पूर्वपदप्रकृतिस्वरः षष्ठीसमासे त्वन्तोदात्तत्वमिति भेदेन तत्सामर्थ्यस्यात् । फलान्तरमप्याह । गोर्धेनोरिति । तत्र हि षष्ठीसमासे गुणप्रवृत्तिनिमित्तकत्वेनाप्रधानत्वात्प्रथमानिर्दिष्टत्वाच्च धेनोः पूर्वनिपातो विशेषणसमासे तु गोरिति भेद इति भावः । आदिना भोज्यस्योष्णस्येत्यादि सङ्ग्रहः । ये तूपसर्जनसञ्ज्ञामन्वर्थां नाश्रयन्ते तेषां षष्ठीसमासे पूर्वनिपातानियम इति तद्वारणाय निषेधो विशेषणसमासस्तु स्यादेवेति कैयटः । परे तु प्रथमानिर्दिष्टमित्यादिसूत्रभाष्योक्तरीत्या षष्ठीति सूत्रे प्रत्यासत्त्या येन सुबन्तेन समासस्तदर्थनिरूपितसंबन्धाद्यर्थकषष्ठ्या ग्रहणमेवञ्च प्रकृते न समासप्राप्तिरिति समानाधिकरणग्रहणं व्यर्थमेव ध्वनितञ्चेदमत्र भाष्ये तथा च भाष्यं समानाधिकरणे किमुदाहरणम् । एकदेश्याह राज्ञः पाटलिपुत्रकस्य प्रष्टाह नैतदस्ति असामर्थ्यादत्र न भविष्यति उक्त आशयउदाहरणवाद्येकदेश्याह कथमसामर्थ्यं प्रष्ट्रेकदेश्याह समानाधिकरणसमर्थवदिति उदाहरणवाद्येकदेश्याह । अधात्वभिहितमिति तच्छेषात्सर्पिषः पीयमानस्येत्युदाहरणमित्युपसर्जनसञ्ज्ञासूत्रस्थभाष्यैकवाक्यतयास्यैवं व्याख्यानस्यैवौचित्यादित्याहुः । व्याख्यानात्पूजायामिति सूत्रोपलक्षणमित्याह । मतिबुद्धीति । राज्ञां मत इति । क्तस्य च वर्त्तमान इति षष्ठी । अयञ्च कारकषष्ठी शेषषष्ठ्योरुभयोरपि समासस्य निषेधः । तयोः समासयोस्थाथादिस्वरसमासस्वराभ्याम-न्तोदात्तस्यैव प्राप्त्या फले विशेषाभावात्तद्द्वयनयत्राह । भूते क्तान्तेनेत्यादि । न च वर्त्तमाने क्तो भूते क्तस्य बाधकस्तक्रकौण्डिन्यन्यायादिति वाच्यम् । भूते क्ते ऽवश्यं प्राप्ते वर्त्तमाने क्तस्यानारम्भात् । भूतत्ववर्त्तमानत्वयोर्युगपद्विवक्षाया असम्भवात् ।

दधिदाने ऽवश्यं प्राप्ते तक्रदानारम्भाद्युक्तस्तेन दधिदानबाध इति बोध्यम् । कर्मणि च ॥ अस्य क्तेन न संबन्धः । पूजायां प्रतिषेधानर्थक्यात्तदाह । कर्मणीति या षष्ठीति च । शब्द इतीत्यस्यार्थ इति भावः । एवञ्च क्तस्याननुवृत्तिरेव । इक्षुभक्षिकेति । धात्वर्थनिर्देशे ण्वुल् कर्मणि षष्ठ्या समासः कर्तुः प्रयोगाभावेनोभयप्राप्ताविव्यस्याप्राप्तेः कर्मणि चेति निषेधो न शङ्क्यः । पर्यायार्हर्णोत्पत्तिष्विति भावे ण्वुजित्यन्ये । पत्यर्थेति । प्रसिद्धत्वेन तस्यैव तत्र ग्रहणादिति भावः । कैयट इति । प्रत्यासत्त्या कारकषष्ठ्या एव तन्निषेध इति भावः । गुणविशेषक इति भाष्यप्रतीकमुपादाय बहुष्विति सूत्रे कैयटे एतत् ॥ कर्तरि च । अत्र सामर्थ्यात्कर्त्तरीति षष्ठ्या एव विशेषणम् । भवतः शायिकेति पर्यायेति ण्वुच् । धात्वर्थनिर्देशे ण्वुल् । वा । नित्यं क्री ॥ जीविकायां निषेधस्य सिद्धेर्नित्यग्रहणाच्च विधिरयम् । दन्तानां लेखितेत्यादौ जीविकायां तृचो ऽनभिधानात्, क्रीडायां तृचो ऽसम्भवाद्वृच्छचत्वाच्च तस्यात्रासंबन्ध इत्याहाकेनेति । अके जीविकार्थइत्यत्राकग्रहणं त्वर्थग्रहणवत्स्पष्टार्थम् ॥ प्रतिपदोक्तत्वेनैतद्विहितसमासएव तत्प्रवृत्ति सिद्धेः । सञ्ज्ञायामितीति । यद्यप्यत्र धात्वर्थनिर्देशइत्येव सिद्धं सञ्ज्ञायामिति त्वधिकरणार्थमिति कृदन्ते वक्ष्यते । तथापि तदर्थस्य भावे ऽपि प्रवृत्तिर्न्याय्या । सञ्ज्ञायां विशेषविहितत्वात् । अचारितार्थ्याभावे ऽपि तस्य प्रथमं बुद्ध्यारोहेण प्रथमं प्रवृत्तौ नियामकत्वमस्तीत्यन्यत्र प्रपञ्चितम् । सञ्ज्ञायामिति ण्वुलित्येवं पाठः उदाहरणे ऽधिकरणे स इति तत्त्वम् । षष्ठीसमासप्रसङ्गेन तदपवादमेकदेशिसमासमाह । पूर्वापरेति । अवयवित्वञ्चावयवापेक्षम् । तद्वाचकाश्चोपस्थितत्वात्पूर्वादय एवेत्याह । पूर्वादय इति । अधिकरणं द्रव्यम् । एकत्वविशिष्टद्रव्ये वर्तमानेनावयविवाचकेनेति वाच्योर्थः । फलितमाहैकत्वेति । मध्याह्न इति राजाह इति टच् । अन्होन्ह इत्यन्हादेशः । अर्धेति । निर्देशादेव नपुंसकत्वे लब्धे नपुंसकग्रहणं सूत्रनिर्देशे लिङ्गाविवक्षाज्ञापनार्थम् ॥ न च समांशवाचिनित्यनपुंसकग्रहणार्थं तत् । एओङ एच इगिति सूत्रे एचो ह्रस्वशासने अर्धैकारौकारयोर्विधानमाशङ्क्य न वेदे नैव लोके ऽर्ध एकारोर्द्ध ओकारो वास्तीति भाष्यप्रयोगात्समांशवाचिनो ऽपि नित्यनपुंसकत्वाभावात् । अवयववाचीतु पुल्लिङ्ग एव । अपूपार्धं ग्रामार्धमित्याद्यपि समप्रविभागएवेत्याहुः । पिप्पल्या एकविभक्तीत्युपसर्जनत्वाद्ध्रस्वत्वं स्यादत आहैकविभक्ताविति । नन्वेवं पञ्चानां खट्वानां समाहार इति विग्रहे पञ्चखट्वीति न सिध्येतद आहैकदेशीति । इदञ्चापथं नपुंसकमिति सूत्रे पञ्चखट्वीति भाष्योदाहरणाज्ज्ञायते । निषेधं बाधित्वेति । भागार्थकान्प्रत्ययान्तोपि स्वार्थिकत्वात्पू-

णार्थ इति भाष्ये स्पष्टम् । पूर्वत्यादिविहित एकदेशिसमासः परवल्लिङ्गमिति सूत्रस्यमेकदेशिसमासपरन्तत्पुरुषग्रहणञ्च परवल्लिङ्गमिति सूत्रे भाष्ये प्रत्याख्यातम् । द्वन्द्वैकदेशिनोरिति वक्ष्यामि प्राप्तादिषु चाप्राप्तिरेव । तदेकदेशिग्रहणमपि न कार्यं कथमेकदेशिसमासो नारप्स्यते अर्द्धपिप्पलीत्यादिः समानाधिकरणसमासः अवयवे समुदायरूपारोपादर्धं च सा पिप्पलीति । न च भेदविवक्षायां षष्ठीसमासो ग्रामार्धमित्यादिवदर्द्धपिप्पलीत्यादि भवितव्यमेवेति भाष्यात् । द्वितीयया अ इति । न चात्र प्रश्लेषे द्वितीयान्तस्याकारः स्यात् न प्राप्तापन्नयोरिति वाच्यम् । प्राधान्येन तयोरेवादेशात् । चकारश्च भिन्नक्रम इति भावः । प्राप्तापन्ने इत्युत्तरमकारप्रश्लेषः । प्रगृह्यत्वं सौत्रत्वादेवेति भाष्यस्वरसः । एकादेशस्य पूर्वान्तत्वेन ग्रहणात्प्राप्तशब्देन समासः । जीविकाशब्दस्यैव विभक्तीत्युपसर्जनत्वात् । गोस्त्रियोरिति ह्रस्वे तदन्ताट्टाविति बोध्यम् । बहुव्रीहिणा तु न गतार्थता स्वरे विशेषात् ॥ कालाः प ॥ मासस्य जात इति षष्ठीसमासेन सिद्धं जातमास इत्यनिष्टनिवृत्तये इदम् । यद्यपि बहुव्रीहिणेदं सिद्धम् । जातिकालसुखादिभ्योनाच्छादनात् क्तो वा जात इत्यनेनान्तादात्तत्वेन स्वरे विशेषाभावात् । जातिकालसुखादिभ्यः परा निष्ठेति वचनाच्च जातस्य पूर्वनिपातः । तथापि जातवच्छब्देन समासे मासजातवानित्यादावन्तोदात्तार्थमावश्यकमिदमिति केचित् । परे तु परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्याद्देव षष्ठीस्वीकारेण मासस्य जात इति विग्रहस्य तत्र षष्ठीसमासस्य च खपुष्पायमाणता । अत एव भाष्ये उत्तरपदार्थप्रधानत्वे समासात्षष्ठीमाशङ्क्य संबन्धस्य प्रातिपदिकार्थत्वेनाशेषत्वात्परिहृता । अन्यथा मासस्य जात इति विग्रहेण तत्प्राधान्यं दर्शितं स्यात् यत्र षष्ठीप्रसक्तिरेव न, षष्ठीति सूत्रेण सिद्धे इदं सूत्रञ्जातमास इत्येतन्निवृत्त्यर्थन्तवेव ममापि । कालाः परिमाणिना समस्यन्ते न तु परिमाणी काले नेत्यर्थात् । किं च मासो जातो यस्येति बहुव्रीहिणा ऽतीतमाससंबन्धिजननक्रियाकर्त्तुरिव तत्संबन्धिगमनादिकर्त्तुरपि मासजातशब्दात् प्रतीत्यापत्तिरित्यनयोर्बहुव्रीहेरनभिधानमेव । अत्र विग्रहे वृत्तौ चोभयत्राप्युत्तरपदार्थप्रधानत्वम् । न च विग्रहे ऽपि तत्त्वे जातात्षष्ठ्यनुपपत्तिर्विशेषणादेव षष्ठीविधानादिति वाच्यम् । वाक्यस्य वृत्त्यर्थबोधकत्वविवक्षायां विशेष्यविशेषणभाववैपरीत्ये ऽपि पूर्वजातसंस्काराऽनिवृत्तेः । अन्यथा समासे जातप्राधान्येन विशेषणविभक्तिषष्ठ्यापादनस्य भाष्ये ऽसङ्गत्यापत्तेः । मम तु न दोषः । विग्रहे तस्यैव प्राधान्ये ऽपि तत्स्थितिवत्समासादपि तदापादानसम्भवात् । तदुत्तरषष्ठ्यैव तत्र मासविशेषणकसंबन्धप्रतीतिवत् समासे ऽपि विशिष्टोत्तरषष्ठ्या त-

त्सम्भव इत्याशयात् । शब्दस्वभाव एव च तद्व्यत्यासे बीजम् । यत्तु एकार्थीभावबलाद्वृत्तौ विशेष्यविशेषणभावव्यत्यास इति, तन्न । एकार्थीभावफलेषु भाष्ये ऽस्यागणनात् । वृत्तिविग्रहयोः समानार्थत्वभङ्गापत्तेश्च । किंप्रधानोयं समास उत्तरपदार्थप्रधान इति भाष्यं वृत्तिविग्रहोभयपरम् । समासपदेन तस्याप्युपलक्षणात्, अन्यथा मासजातो दृश्यतामित्यादौ जातस्यैव कार्यसंबन्धदर्शनेनौत्सर्गिकत्वाच्च तत्पुरुषत्वेनोत्तरपदार्थप्रधानत्वनिर्णयेन किंप्रधानोयं समास इति प्रश्नस्य निर्दलत्वापत्तेः। तस्माद्वृत्तिविग्रहयोः समानार्थत्वनिर्वाहमपश्यत उभयविषयोय प्रश्न उत्तरञ्चेत्युचितम् । अन्ययोत्तरपदार्थप्रधानोयन्तत्पुरुषस्तेनान्यैरुत्तरपदार्थप्रधानैः सधर्मणा भवितव्यम् । अन्यत्र चोत्तरपदेयान्तर्वर्त्तिनी विभक्तिः सैव समासेपि भवति इह तु वाक्ये षष्ठीसमासे प्रथमा केनेतदित्येवाशङ्क्येत । प्रातिपदिकेनोक्तत्वेन प्रातिपदिकार्थतया ऽशेषत्वाच्च षष्ठीत्युत्तरं तुल्यमेवेत्याहुः । मासजात इत्यादौ मासत्वेनैकमासव्यक्तिरेव बुध्यते ऽन्यथा परिच्छेदकत्वं न स्यात् । मासो जातस्येत्याद्यर्थे तु न समासो ऽनभिधानात् ॥ उत्तरपदेनेति । इदं वार्त्तिकमेतत्सूत्रविषयमेव तद्धितार्थेति सूत्रे पाठेप्येतद्विषयस्यैव भाष्यकृतोदाहरणात् । पूर्वत्र त्विति । द्व्यहजात इत्यत्रेऽन्यर्थः । अक्षशौण्ड इति । अधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वयाच्छौण्डादिभिः सामर्थ्यम् । आसक्त्यादिक्रियान्तर्भावेण सामर्थ्यमिति तु न युक्तम् । तदप्रतीतेः । साङ्काश्ये सिद्ध इति । सङ्काशेन निर्वर्त्तिते वने तपसा सिद्ध इत्यर्थः । साङ्काश्ये नगरे सिद्धो जात इत्यर्थो वा ॥ ध्वाङ्क्षेण ॥ व्याख्यानादर्थग्रहणम् । इवेति । तत्र स इव यो गुरुकुलादौ न चिरन्तिष्ठति स एवमुच्यते । एवं हि निन्दा भवति । ऋणग्रहणमावश्यकोपलक्षणमित्याह, आवश्यके इति । तत्फलमाह । पूर्वाह्णे गेयं सामेति । तत्पुरुषे कृतीत्यलुक् । अयं सामसो यत्प्रत्ययान्तेनैवाभिधानस्वाभाव्यात् । तत्रेत्येतत्सप्तम्यन्तमिति । अधिकारबाधायाधिकरणशक्तिप्रधानादपि सप्तमीति वृत्तिकृत् । तेन पूर्वपदप्रकृतिस्वरसिद्धिः । अव्ययत्वेन तु न सः । अव्यये नञ्कुनिपातानामिति परिगणनात् । अवतप्ते नकुलेति । चापलादिति भावः । कृद्ग्रहणपरिभाषया नकुलस्थितशब्देन समासः । तत्पुरुषे कृतीत्यलुक् । अव्यवस्थितत्वप्रतिपत्त्याच्च निन्दा । गेहे नर्दीति । नर्द शब्दे अस्माण्णिनिः । तत्पुरुषे कृतीत्यलुक् सर्वत्र । समासान्तरे इति । समासप्रकरणादिति भावः । तेन पात्रे समितिरित्यादि भवत्येव । समासश्चानन्तरत्वात्कर्मधारय एवेत्याहुः । प्रवेशो नेति । तेन परमाः पात्रे समिता इत्येव । समितेति निरनुस्वारम् ॥ पूर्वकालैक ॥ अत्र पूर्वकालशब्दो ऽर्थपरो ऽन्ये

पट्स्वरूपपराः । पूर्वः कालो यस्य तद्वाचकः शब्दः प्रत्यासत्त्या परकालवाचकेन समस्यते इत्यर्थः । सिद्धे पूर्वनिपातेति । एषां विशेषणत्वस्यानैयत्येऽपि एषामेवतत्त्वार्थमिति भावः । नियमबाधनार्थञ्चेति । मुख्याद्यर्थकैकशब्दस्य त्वप्रसिद्धत्वाचात्र ग्रहणमिति भावः । नवशब्दः पुराणसाहचर्यान्नूतनार्थः । जरन्वृद्धः । समानाधिकरणेनेति किम् । एकस्याः शौक्ल्यम् । नियमार्थमिति । विशेषणमित्येव सिद्धे नियमोयमिति भावः । विशेषणमित्यस्यैवायं नियमः । तेन पञ्चगुः पञ्चगवमिति च सिद्ध्यति । पूर्वसूत्रमित्यादौ सञ्ज्ञात्वाभावे ऽपि कालवाचकत्वात्समासः । एवं देशवाचकेनापीति बोध्यम् ॥ तद्धितार्थे । वैषयिके आधारे सप्तमी । विषयत्वञ्चानेकप्रकारैरित्याह । विषये इत्यादि । तद्धितार्थे वाच्ये इति तु नोक्तम् । पाञ्चनापितिरित्यादौ समासेनोक्तत्वात्तद्धितानापत्तेः । अत एव द्विगोस्तद्धितस्य लुग्वचनं चरितार्थम् । तद्धितविषये इत्येव सिद्धे ऽर्थग्रहणं स्पष्टार्थम् । मत्वर्थे नायमनभिधानात् । तदर्थे परेण बहुव्रीहिणास्य बाधाच्च । समाहारः समूहः । भावघञन्तत्वात् । अत एव पञ्चानां खट्वानामिति नियमेन षष्ठ्यामेकविभक्त्यन्तत्वेनोपसर्जनत्वाद्ध्रस्वे ऽदन्तद्विगुत्वात्पञ्चखट्वीत्यत्र ङीप् । स चावयवाभिन्नो बुद्धिकल्पितभेदवानपि । समूहस्य तद्धितार्थत्वे ऽपि सामूहिकस्य लुकि पञ्चगवमित्यत्र गोरतद्धितलुकीति टज् न स्यात्पञ्चकुमारिरित्यादौ लुक् तद्धितलुकीति स्त्रीप्रत्ययलुक् स्यादिति पृथग्ग्रहणम् । तत्सामर्थ्यादेवात्र वाच्ये इति व्याख्यातम् । उदात्त इति । सतिशिष्टत्वात्तत्पुरुषप्रयुक्तसमासान्तोदात्तत्वेनेति भावः । विकल्पे प्राप्ते इति । महाविभाषयेति भावः । ततश्च पक्षे टजभावे पञ्चगोधन इत्याद्यपि स्यादिति भावः । स्पष्टञ्चेदं भाष्ये । एवञ्चोभयत्रापि नित्यत्वमात्रबोधकं वार्त्तिकमिति बोध्यम् । अत एवैतद्वार्त्तिकमुक्त्वा किं प्रयोजनं समुदायवृत्तावयवानां कदाचिदप्यवृत्तिर्मा भूदित्येव प्रयोजनमुक्तं भाष्ये । तत्र तत्पुरुषो बहुव्रीह्यवयवोत्तरपदे इव तत्पुषावयवोत्तरपदेऽपि । अत एवोत्तरपदेन परिमाणिना द्विगोः सिद्धये इत्युक्तम् । द्वन्द्वस्तु बहुव्रीह्यवयवोत्तरपदे एव । वाग्दृषद्प्रिय इत्यादौ प्रियशब्देनोभयोः सामानाधिकरण्यं न द्वन्द्वावयवोत्तरपदे । चतुर्णां द्वन्द्वे होतृपोतृनेष्टोद्गातार इति प्रयोगेण तदनभिधानात् । पदयोर्निष्कृष्यैकार्थीभावाभावे ऽपि समासादिप्रवृत्तिरस्तीति निरूपितम् । एवन्तयोर्निष्कृष्य सामानाधिकरण्याभावे ऽपि यथाकथञ्चित्सामानाधिकरण्यमादायैव तत्प्रवृत्तिरत एव पश्चिमशालाप्रिय इत्यादौ पुंवत्त्वसिद्धिः । पुंवत्त्वे यथाकथञ्चित्सामानाधिकरण्यं नियामकं समासे तु निष्कृष्यैवेत्यत्र न विनिगमकम् । अस्य प्रत्याख्यानपक्षे एकविंशतिभरद्वाजवंश्याः प्रियाः

यस्येत्यादिबहुव्रीहौ अव्ययीभावादि तु नानभिधानात् । वस्तुतो नित्यत्वांशो ऽपि न्यायसिद्धः । त्रयाणामेकार्थीभावे द्वयोर्व्यपेक्षाया दुरुपपादत्वादित्यन्यत्र विस्तरः ॥ गोरत ॥ तत्पुरुषस्येति । राजाह इत्यतष्टच्चानुवर्तते । गोन्तस्य तत्पुरुषस्य समासस्यान्तष्टजित्यर्थस्तत्फलितमाह । गोन्तादिति । न त्विति । न तु तद्धितलुग्विषये इत्यर्थः । तेन पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यत्र न । एकापूपीत्यत्रापि समाहारे द्विगुः । एकमप्यपूपं कश्चित्कृपणो ददनेकं मन्यत इति तत्रारोपितबहुत्वाश्रयसमाहारसत्त्वात् । एकभित्तीति तु नानभिधानात् ॥ द्विगुरे ॥ वचनमिति कर्त्तरि ल्युट् । सामान्ये नपुंसकम् । इदं सूत्रं समाहारद्विगावेव । अनुवादत्वे लाघवात् अत एव पञ्चफलीनामेकशेषे न । अनुवादफलन्तु द्विगुवाच्यस्य समाहारस्य न कदाप्युद्भूतावयवभेदविवक्षेति बोधनम् । तेन द्वन्द्ववाच्ये तथा विवक्षाया अपि बोधनम् । उद्भूतावयवभेदः समाहार एवेतरेतरयोगपदेनोच्यते । स नपुंसकमित्यत्र तच्छब्देन समाहारद्विगोर्द्वन्द्वस्य च परामर्शस्तदाह । स नपुंसकमितीति ॥ कुत्सितानि ॥ वर्त्तमाने क्तो व्याख्यानात् । कुत्सनैरिति । करणे ल्युट्, दुर्दुरूढो दुष्टकर्मकर्त्तरि रूढः । लाक्षणिकमिति । अत एव समानाधिकरणाधिकारस्याबाधः । येन वस्त्वन्तरं स्ववृत्तिधर्मवत्त्वेन परिच्छिद्यते तदुपमानम् । सामान्यवचनत्वं चोपमानोपमेयसाधारणधर्मविशिष्टोपमेयवचनत्वम् । परे तु स्वसमभिव्याहृतनिष्ठमुपमानत्वमिवादिद्योत्यम् । साधारणधर्मसंबन्धस्योभयत्र बोधे तात्पर्यग्राहकता च । एवञ्चोपमानश्यामघनाभिन्नः श्याम उपमेय इति बोधः । अत एवोपमानोपमेययोः समानविभक्तिकत्वनियमः । समासे त्वस्यार्थस्य समासशक्तिबलाद्बोधः । उपमानानीत्यस्योपमानत्वेन बोधकानीत्यर्थः । अन्यथा ससंबन्धिकत्वात्सामान्यवचनैरित्येव तेन समासलाभे तद्वैयर्थ्यं स्पष्टमेव । एवमुत्तरसूत्रे उपमितमित्यप्युपमेयत्वेन बोधकमित्यर्थकम् । एवमेव भाष्यस्वरस इत्याहुः ॥ उपमितम् ॥ उपमेयत्वमुपमानपरिच्छेद्यत्वम् । उपमानोपमेययोः समभिव्याहारे उपमानस्य हि विशेषणतैव तदाह । विशेष्यस्येति । एतच्चोपमितमित्येतस्वारस्यात्तस्योपमानेन नित्यसाकाङ्क्षत्वाच्च व्याघ्रादीनामुपमानत्वे एव उभयोः समानलिङ्गत्वएव च प्रवर्त्तते । अत एव परवल्लिङ्गमिति सूत्रे द्वन्द्वैकदेशिनोरिति न्यासं कृत्वा तत्पुरुषग्रहणं प्रत्याख्यातम् । अन्यथास्य पूर्वपदार्थप्रधानस्य भाष्याब्धिरित्यादौ दृश्यमानपरवल्लिङ्गस्य सिद्ध्यर्थं तत्पुरुषग्रहणावश्यकत्वेन तदसङ्गतिः स्पष्टैव । भाष्याब्धिः क्वातिगम्भीर इत्यादौ सामान्यधर्मप्रयोगे ऽपि लिङ्गभेदे ऽपि मयूरव्यंसकादित्वात्सिद्धम् । स च राजान्तरमि-

स्यापि शत्रुत्वेन स्त्रीविशेषएव रूढिः । अत्राप्युक्तभाष्यमेव मानम् । तच्च भाष्यं कैयटेनैवं व्याख्यातम् । सपत्नप्रकृतिकसपत्नीशब्दाभावं मन्यमानस्य सपत्नीशब्दादणि सापत इति प्राप्नोतीति पूर्वपक्षः । प्रकृत्यन्तरात्सपत्नशब्दाच्छार्ङ्गरवादिङीनि निष्पन्नसपत्नीशब्दादणि पुंवत्त्वेन सापत्नसिद्धिरित्युत्तरमिति । परे तु एवं सति तृतीयादप्यणो दुर्वारत्वेन सापतो दुर्वारः । न च शिवादौ रूढस्यैव ग्रहणम् । तृतीयस्यापि स्त्रीविशेषे रूढिसत्त्वात् । न च सापते इष्टापत्तिरिति कैयटाशयः शार्ङ्गरवादिगणपाठाद्यज्ञानकल्पनमपेक्ष्य सापत इत्यस्यापि प्राप्तिरित्येवं शङ्काभाष्यव्याख्याया औचित्येन तस्या अयुक्तत्वात् । सपत्नशब्दस्य भाष्यतोणनिरूपित प्रकृत्यन्तरत्वमेव लभ्यते इति तस्यान्यथा व्याख्याने मानाभाव एव । तस्माच्छिवादौ सपत्नीति पाठः तत्र सपत्नप्रकृतिकसपत्नीशब्दादणि सापत्नसिद्धावपि तृतीयादणि सापतोपि प्राप्नोतीति पूर्वपक्षः । उत्तरं सापत्न इत्यादि । अन्या प्रकृतिर्यस्य सप्रकृत्यन्तरस्तत्वात्सपत्न एव सिद्धः प्रकृत्यन्तरं सपत्न इति । एवञ्च त्वदुक्ता सपत्नीति प्रकृतिः शिवादिगणे न पठ्यते किं तु सपत्नेति । एवञ्च ततो ऽणः प्राप्तिरेव नेति न सापतप्राप्तिः । सपत्नेति पाठे ऽपि लिङ्गविशिष्टपरिभाषया ङीनन्तादप्यण् । बाध्यसामान्यचिन्तया चायमण् स्त्रीभ्यो ढकोप्यपवाद इति तद्भाव इत्याहुः । तद् ध्वनयन्नाह । आद्ययोरिति । सपत्नशब्दतत्प्रकृतिकसपत्नीशब्दयोरित्यर्थः । लिङ्गविशिष्टेति । एवञ्च ण्यादयोर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेनेति ण्य इति भावः । यदि तु द्व्येति सूत्रे दैतेयादितेययोः सिद्धये लिङ्गविशिष्टपरिभाषाभावस्याकरे उक्तत्वेन तत्साहचर्यात्पत्युत्तरपदांशे ऽपि तदप्रवृत्तिस्तदा सापत्नेयोन्यथा मूलोक्तम् । रूढयोरेवेति । सपत्नशब्दतत्प्रकृतिकङीनन्तयोरित्यर्थः । यत्तु मूलोक्तत्रयाणां मध्ये आद्ययोरित्युभयत्र प्यर्थं इति । तन्न । तृतीयस्यापि रूढेर्मनोरमायामुक्तत्वात् । द्वितीयस्यानतिप्रसक्ततया रूढौ मानाभावाच्च । सापत्न्यमित्यपि सपत्नप्रकृतिकाद्ब्राह्मणादित्वात्ष्यञि बोध्यम् । अस्मात्तु पत्यन्तलक्षणयकि पुंवत्त्वे यस्येतिलोपे सापत्यमेवेति दिक् । ठक्ठसोश्चेति । अभत्वादारम्भः । भावत्का इति । ठावस्थायामेव पुंवत्त्वे इकादेशं बाधित्वा तान्तलक्षणः कः इकादेशे तु कादेशः संनिपातपरिभाषया ठादिष्वकारस्योच्चारणार्थत्वेनाल्विधित्वेन स्थानिवत्त्वाभावाच्च दुर्लभ इति भावः । भाष्यकारेष्टेति । अष्टाध्याय्यामपाठात् अन्यवार्तिकानामिवात्र प्रकरणे ऽपाठात् अन्यकर्तृकत्वानुक्तेश्च भाष्यकारीयत्वमेवकल्प्यतइति भावः । इदञ्च दक्षिणोत्तराभ्यामिति सूत्रे भाष्ये स्पष्टम् । गतार्थत्वादिति । न चैकशब्दादकचि त्वादौ एकित्व-

मित्यादौ पुंवत्त्वे इकारो न श्रूयेत पाचकजातीयेतिवत् । ह्रस्वे तु प्राप्तजीविकवत्तच्छ्रवणमित्येकतद्धिते चेति न गतार्थं एकेत्यविभक्तिकनिर्देशो न लोपः प्रातिपदिकान्तस्येतिवन्न स्वरूपविवक्षार्थं इति वाच्यम् । तादृशप्रयोगाणामनभिधानमित्यभिमानात् । सर्वमये तत आगत इत्यर्थे मयट् । अत्यन्तस्वार्थिको वा । दृष्टौ मात्रग्रहणाद्यस्य क्वचित्सर्वनामत्वं दृष्टं तस्य वृत्तौ पुंवत्त्वमित्यर्थः । अत एवोत्तरपूर्वायै प्रथमद्वितीयकत्ययोरित्यादि सिद्धम् । तृतीयासप्तम्योरित्यादावतिसर्वापुत्र इत्यादौ च न । सञ्ज्ञोपसर्जनयोः कदापि तत्त्वादर्शनात् । तेनाक्चीति । उपलक्षणमेतत् तद्धितरादेः । कुक्कुट्यादीनाम् ॥ जातिमात्रपरायां नोदनायां जात्यन्तरनिवृत्तिपरत्वात् कुक्कुटादिशब्दैरेव समासेन सिद्धेरिदं प्रत्याख्यातं भाष्ये कुक्कुट्यादिशब्दैस्तु न समासोऽनभिधानात् । एतायतइति । कर्त्तुः क्यङि पुंवत्त्वे ऽकृत्सार्वेति दीर्घः । अत्र क्यङः प्रत्ययस्य निमित्तत्वात्पूर्वः कार्यी यस्मात्स विहितः स गृह्यते तेन पट्वीमृद्वीशब्दात्क्यङि न पुंवत्त्वम् । प्रकृतिभूतस्य समुदायस्य भाषितपुंस्कत्वाभावात् । मृद्वीशब्दस्य तत्प्रकृतित्वाभावात् । प्रत्ययस्य निमित्तत्वे पूर्वो यस्मात्स विहितस्तदादि गृह्यते इत्यङ्गस्येति सूत्रे भाष्ये स्पष्टम् । मानिन्ग्रहणमसमानाधिकरणार्थमस्यर्थार्थञ्चेत्युदाहरति । स्वभिन्नामित्यादि । मन इति णिनिर्नान्तत्वान्ङीप् । न कोपधा ॥ सौत्रोपसंख्यानिकपुंवत्त्वमात्रस्य निषेधोयम् । तेन विलेपिकाया धर्म्यं वैलेपिकमित्यादौ भस्याढइति पुंवत्त्वं न । इष्टेस्तु न निषेधः उत्तरनिषेधास्तु सौत्रमात्रप्राप्तिविषयका इति बोध्यम् । तदुक्तं भाष्ये न कोपधाया इत्ययं योगः पुंवद्भावमात्रस्य विषये तत उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषय इति । आद्यस्येति पाणिनीयस्येत्यर्थः । एतद्भाष्यप्रामाण्याद्वार्तिकानामपि सूत्रसंमतत्वमाहुः । तदुक्तमभियुक्तैः । सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके इति । यत्तु तृतीयाचहोश्छन्दसीति सूत्रे किमर्थमिदं कर्मणि द्वितीयासिद्धेः सुपां सुपो भवन्तीति तृतीयायाश्च सिद्धिरित्याशङ्कासत्येतस्मिन्सुपां सुपो भवन्तीति तृतीयायोगमारम्भ इति भाष्ये उक्तम् । तस्य तस्मिन् बुद्धावसतीत्यर्थः । न हि पाणिनेः सूत्रकरणकाले कात्यायनवचसोभाव इति कैयटस्यापि तद्वचसो नियमेन बुद्धौ भाव इत्यर्थः । एवञ्चोपायान्तरपरमिदं सूत्रमिति तद्भावः । पाणिनिश्च तज्ज्ञानेप्यन्याभ्यान्तस्य वाच्यत्वात्स्वयं वार्तिकभाष्योक्तानर्थानोक्तवानिति सांप्रदायिकाः । पाचिकेति । ण्वुलकादेशटाबित्वानि । रसिकेति । अत इनीति ठन् । तद्धितवु इति । तद्धितग्रहणं वुग्रहणञ्चेत्यर्थः पाका । बाला । पञ्चमीपाशेति । याप्ये पाशप् । तसिलादिष्विति प्राप्तिः । वृद्धिशब्देनेति । वृद्धिशब्द आवर्त्तेत इति

भावः । सैाघ्नीति । भवार्थेणि ङीप् । मध्यमेति । भवार्थे मध्यान्मः । काण्ड-लावेति । कर्मण्यण् । क्रुद्वयम् । तावद्वार्ये इति । तत्परिमाणमस्या इत्यर्थे तच्छब्दाद्वतुपि श्रा सर्वनाम्न इत्याकारो न वृद्धिशब्दविहित इति भावः । काषायीति । कषायेण रक्तेत्यर्थेण हेम्नो विकारे ऽनुदात्तादेश्चेत्यञ् । फलो-पधेति । व्याख्यानादेतल्लाभ इति भावः । अत एव प्रवाहणस्य परस्य वृद्धिर्न पूर्वस्य तु वेत्यर्थके प्रवाहणस्येति सूत्रे प्रवाहणेयीभार्य इत्यत्र वृद्धि-निमित्तस्येति पुंवत्त्वनिषेधो न प्राप्नोति माभूदेवं जानेरिति भविष्यतीति भाष्ये उक्तम् । तेनार्धप्रस्थिकीभार्य इत्यत्रायं निषेधोनात्र हि नातः परस्ये-त्युत्तरपदवृद्धिनिषेधात् पूर्वस्य वैकल्पिकत्वेनाभावाच्च । फलोपधानञ्च यां काञ्चित् वृद्धिं प्रति बोध्यम् । तेन पारिषद्याभार्येयं निषेधः । अन्यथा परि-षदोण्यस्य यावद्वृद्धिं प्रति फलोपधानाभावेन दोषः स्यात् । वैयाकरणभार्य इति । ऐचोस्तु न वृद्धिशब्देन विधानं नाप्यैचौ प्रति तद्धितो निमित्तम् । निषे-धर्मनियोगशिष्टतयैवातिप्रसङ्गभङ्गादिति भावः । स्पष्टश्चायं प्रयोगो न य्वा भ्यामित्यत्र कैयटे । परे तु भाष्ये तावद्वार्ये दोषवारणाय वृद्धेर्निमित्तं यस्मिन्नि-त्यर्थाश्रयणं कृतम् । निमित्तग्रहणसामर्थ्यादेव व्यपदेशिवद्भावानाश्रयणमिति शब्दव्यापाराश्रयणे न मानम् । ऐचौ प्रति च तद्धितस्य निमित्तत्वमस्त्येवा-धिकारप्राप्तत्यागे मानाभावात् । किंचैतत्सूत्रे वृद्धिपदानुवृत्त्या ऐचोरपि वृद्धिशब्देन विधानमस्ति । अत एव दाविकीभार्य देविकाशिंशपेत्यात्वे पुंव-त्वनिषेधः । भाष्ये देविकेत्यस्य प्रथमाध्याये करणेनैषामाकारस्य वृद्धिसञ्ज्ञां विधाय तद्धितेष्वचामादेरित्यनेन तद्विधानमिति पक्षान्तरस्योक्ततया तदेक-फलत्वाय तत्र वृद्धिपदसंबन्धसत्वात्सूत्रभेददूषणमात्रेण च तद्दूषितमित्य-न्यत् । एवञ्चैज्विधायके ऐज्अंशे ऽपि तत्संबन्ध इत्यर्थायातम् । मण्डूकानु-वृत्तौ मानाभावात् । एवञ्च वैयाकरणभार्य इत्येव सत्यभिधाने । अत एव न य्वाभ्यामिति सूत्रे यद्यपि नित्यत्वादैचि वृद्धिस्तयोरेव स्यादिति निषेधवै-यर्थ्यमाशङ्क्य विषयार्थं दाध्यश्विरिति समाहितम् । तत्पक्षे पुंवत्त्वनिषेधला-भात् । यद्यप्यपवादो वृद्धेरयमिति वृद्ध्यप्राप्त्यैव निषेधवैयर्थ्यं वक्तुं युक्तं तथापि विषयभेदाच्चापवादत्वमसंभवे एवापवादत्वमिति वार्तिकमते एवमु-क्तम् । किंच वृद्धिरादैच्सूत्रे आदैज्मात्रग्रहणपक्षे वैयाकरणभार्य तावद्वार्य इव निषेधानापादनेन तत्र तत्प्रवृत्तेरिष्टत्वमनुमीयते । किंचात्र पुंवत्त्वं दृष्टे निषेधवारणाय शब्दव्यापाराश्रयणस्यावश्यकत्वेन वृद्धिरादैच्सूत्रे तावद्वार्ये दोषवारणाय व्यधिकरणबहुव्रीहिपर्यन्तं भाष्यकृतो धावनं विफलं स्यात् । एतेन तद्भावितानामेव सञ्ज्ञेति पक्षे ऽत्र पुंवत्त्वप्रतिषेधाप्राप्तिरूपदोषानुद्धा

वनेनात्र तन्निषेधो ऽनिष्ट इत्यपास्तम् । मदुक्तरीत्यास्यापि तद्भावितत्वे-नैतद्दोषानुपन्यास इत्यस्य वक्तुं शक्यत्वादित्याहुः । तदन्ता स्त्रीति । तदन्तस्य स्त्रीवाचकस्य शब्दस्येत्यर्थः । स्त्रिया इति षष्ठ्यन्तानुवृत्तेरेवमे-वौचित्यात् । सुकेशीति । स्वाङ्गाच्चेति ङीष् । अमानिनीति निषेधो दीर्घ-मुखमानिनीत्यादावपि । लिङ्गविशिष्टपरिभाषया मानिन्ग्रहणेन मानिनीश-ब्दस्यापि ग्रहणात् । यतो यो विहितस्तद्विशिष्टस्यैव तेन ग्रहणमिति नियमे मानाभावादिति ध्वनितं भाष्ये तद्धनयन्नाह । सुकेशमानिनीति । जातेः पर इति । स्वाङ्गादित्येतत्साहचर्यात् व्याख्यानाच्च जातेरित्येषा पञ्चमीति भावः । अत एव दारदिकेत्यत्रायं निषेधो न । स्त्रियाः पुंवदिति सूत्रेऽनूङ्इ-त्यस्य पर्युदासत्वे ऐडबिडभार्य इत्यादौ दोषानुद्भावनं ऐडबिडवृन्दारिकेत्या-दावेतदुद्भावनन्तु पुंवदिति सूत्रेप्येतदनुवृत्ति तत्रापीदृशार्थकत्वमेवेति ध्वन-यितुं न तु पुंवत्वाप्राप्त्या । यत्तु तत्र जातेश्चेति निषेधः पुंवत्कर्मधारयेति तु निषेधविषय एवेति तदाशय इति । तन्न । इडबिडादीनामनन्तरापत्यप-रत्वे भाष्यमते जातित्वाभावादिति दिक् । यत्त्वत्रापि अमानिनीत्येव कठमा-निनीति वृत्तावुक्तं, तत्तु भाष्ये ऽनुपलम्भान्मूलकृतोपेक्षितं । सौत्रस्यैवायमिति । न कोपधाया इति सूत्रव्यतिरिक्तः सर्वोपि निषेध इत्यर्थः । उपदशा इति । दशसमीपवर्त्तिन इति बोधः । दशसमीपाश्चाभिधानस्वाभाव्यात् स्ववृत्तिद-शत्वसमीपसंख्यावन्त एव तदाह । नवैकादश वेत्यर्थ इति । अत एव नित्य-वहुवचनान्तोयम् । आसन्नविंशा इति तिलोपे पररूपम् । समुदायस्य पद भिन्नस्यान्ते ऽकारसत्वात् । यस्येति लोपस्तु न । आभीयतया तिलोपस्यासि-द्धत्वात् । द्वौ वेति । संशयविषयो हि नियमेन परस्परप्रतिक्षेपको ऽत एव संशये परस्परस्परप्रतिक्षेपकानेकधर्मवत्त्वं धर्मिणि गृह्यते । तदेव विषयनिष्ठं वार्थः अयं स्थाणुर्न वा व्रीहिभिर्यवैर्वेत्यादौ संशयात्मक एव बोधः । स च परस्परप्रतिक्षेपकतत्तद्वस्तुमानित्याद्याकारः । तत्र क्वचित् बलवत्प्रमाणेनैकाको-टिर्बाध्यैव । यत्र तु न तथा बाधकं तत्र क्वचिदैच्छिकं पाक्षिकानुष्ठानं क्वचि-द्व्यवस्थितं लक्ष्यानुरोधादित्यन्यत् । एवञ्च नियमतः पञ्चास्मादुपतिष्ठन्त इति बहुवचनम् । वस्तुतो द्वियन्यतरा इत्यादिरीत्या बोधः । अत एव वा-र्थप्राधान्यात्पूर्वसूत्रेणैव सिद्धमिति भाष्योक्तं सङ्गच्छते । द्विरावृत्ता इति । शब्दशक्तिस्वभावात्सुजर्थान्तर्भावेण पूर्वपदस्य वृत्त्याश्रयणात्सुचोप्रयोगः । द्वि-त्वसंख्योत्पत्तिकावृत्तिविषया दशेति बोधः । न चात्र संख्येयं वार्थश्चान्यपदार्थ इति पूर्वसूत्रेणैव सिद्धमिति वाच्यम् । अधिकदशा इत्यर्थं सूत्रसत्वात् । कब-भावार्थमस्यावश्यकत्वाच्च शेषाधिकारस्थेनानेकमिति सूत्रेण समास एव कप्-

प्रवृत्तेः । शेषादिति सूत्रे बहुव्रीहौ सक्थ्यक्ष्णोरित्याद्यपेक्ष एव शेष इति भाष्ये स्पष्टम् । एवंच इच्विषये पूर्वसूत्रेण समासे पाक्षिकः कबिष्ट एवेति बोद्धम् । संख्ययेति किम् । चत्वारो विप्राः । अव्ययेत्यादि किम् । विप्राः पञ्च । संख्येये इति किम् । अधिका विंशतेर्गवां संख्येति । अन्तराले इति । अन्तरालशब्देन दिगेव प्रत्यासत्तेः । अत एवास्य नित्यस्त्रीलिङ्गता । इदं सूत्रमसमानाधिकरणार्थं कबभावार्थंञ्च । दक्षिणपूर्वेति । सर्वनाम्नो वृत्तिमात्रइति पुंवत्त्वम् । तत्र तेनेदम् ॥ सप्तम्यन्ते इत्यादीनि प्रथमाद्विवचनान्तानि ग्रहणविषये इत्यादेर्ग्रहणक्रियाद्यन्तर्भावेण वृत्तिमापन्ने इत्यर्थः । इदं युद्धमित्यर्थे इति । तत्र विशेष्ये इत्यर्थः । अत एव केशाकेशि युद्धमिति सङ्गच्छते । यत्र न तदुपादानं तत्राध्याहारः इदं क्रियामात्रोपलक्षणं भाष्ये क्रियाभिधानादित्युक्तेः । ग्रहणप्रहरणेत्यप्येवमत एव "कर्णाकर्णि प्रथितमयशः" हस्ताहस्तिमिपात्स्पृशन्कुचतटीमित्यादि सङ्गच्छते । अयं विषयविशेष इति । ग्रहणादिरूपोन्यपदार्थक्रियारूपः कर्मव्यतिहाररूपश्चेत्यर्थः । इति शब्दश्चात्र प्रकाशे तत्त्वं च लोकप्रसिद्धत्वम् । तदुच्यते इति शब्दो लौकिकीं विवक्षामनुसारयतीति । कर्मव्यतिहारः परस्परग्रहणादिरूच् कर्मव्यतिहारइति । समासान्तस्यैतद्विषयतैव । इतिशब्दबलेन तत्रास्य प्रतिपदोक्तत्वात् । इतीति । तुरापाडित्याद्यर्थमावश्यकेनानेन सूत्रेणेत्यर्थः । तिष्ठद्गुवित्ति । अत्र च वृत्त्यादि प्रमाणम् । द्विदण्ड्यादिपठिते उभाभ्यां हस्ताभ्यामित्यर्थके उभयाहस्तीत्यादौ विभक्त्यश्रवणायाव्ययत्वं केशाकेशि कुर्वन्नित्यादौ पराङ्गवत्त्वायाव्ययीभावत्वमव्ययानां नेति निषेधस्याव्ययीभावे ऽभावादिति बोद्धम् । केचित्तु इच्प्रत्ययस्य स्वरादिषु पाठादप्यव्ययत्वमव्ययीभावत्वफलांशे न दृढतरं मानं नापि तत्प्रयोगः प्रतीत इत्याहुः । गृहीत्वेति । क्त्वाप्रत्ययो ऽध्याहृतस्थित्यादिक्रियामादाय बोद्धः । केशेषु केशेषु गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमित्यर्थात् । ग्रहणकर्मत्वं प्रत्यासत्त्या केशादिविशिष्टपुरुषाणां बोद्धम् । युद्धस्यानेककर्तृकत्वात् । इदं सूत्रं वैयधिकरण्यार्थम् । सरूपत्वात्प्राप्त एकशेषश्चानवकाशेनानेन बाध्यते । ओरोदितीति । ओरवित्यस्याप्युपलक्षणमिदम् । संज्ञापूर्वेति । इदं कैयटहरदत्ताद्यनुरोधेनोक्तम् । भाष्ये तु न दृश्यते । स्वयंभुव इदमित्यर्थे ऽणि स्वायंभुवो लोके ऽसाधुरेव भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात् । भाष्याविचारितप्रयोजनकानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् । शौवादंष्ट्रो मणिरित्यत्र श्वादेरिञीति सूत्रस्यभाष्यप्रयोगादर्श । एवमेवागमशास्त्रमनित्यं नञ्घटितमनित्यमातिदेशिकमनित्यं सर्वविधिभ्यो लोपविधिर-

द्विधिश्च बलवानित्यादि भाष्यानुक्तं बोध्यम् ॥ तेन सहेति ॥ तुल्ययोगएकेन गमनादिना योगस्तद्द्योतकं सहेत्येतदित्यर्थः ॥ वोपस ॥ अत्रोपसर्जनस्येति मत्वर्थीयाच्प्रत्ययान्तमुत्तरपदेन संनिधापितस्य समासस्यावयवद्वारकं विशेषणं लक्ष्यानुसारिव्याख्यानात्सर्वत्र च कश्चिदवयव उपसर्जनमेवेति विशेषणसामर्थ्यादुपसर्जनसर्वावयवकस्येत्यर्थस्तदाह । बहुव्रीह्यवयवस्येति । व्यधिकरणा षष्ठीति भाष्यस्तेनेह न । सहकृत्वा । राजनि युधि कृञः सहे चेति क्वनिबुपपदसमासः । सहकृत्वप्रिय इत्यत्रापि न । उपसर्जनसर्वावयवके च बहुव्रीहौ यदुत्तरपदं प्रियशब्दः सह शब्दस्य तत्परत्वाभावात् । सहशब्देन द्वन्द्वस्तु नास्त्येव चार्थे वृत्तेरभावात् । अनभिधानाच्च । व्याख्यानाद्धेवोपसर्जनपदेन शास्त्रीयं लौकिकं च गृह्यते । तेन सपुत्रादेरप्युपसर्जनसर्वावयवकत्वं बोध्यम् । व्यधिकरणत्वात्पूर्वेणाप्राप्तौ वचनं कबभावार्थश्च । सपुत्र इति । सप्तमीविशेषण इति न पुत्रस्य पूर्वनिपातः । प्रथमानिर्दिष्टमित्यनेनोपसर्जनत्वाद्यत्र पूर्वनिपातानियमप्रसक्तिस्तत्रैव तत्प्रवृत्तेः । प्रायिकमिति । इतिशब्दादिदं लभ्यम् । सकर्मक इति । स्वार्थे कः । अत एवार्थेन सह निवृत्त इत्यर्थकः सार्थको निवृत्त इति द्वन्द्वसूत्रस्यभाष्यप्रयोगः संगच्छते । एतच्च प्राचामनुरोधेन । परे तु सकर्मक इत्यादौ विद्यमानवाची कर्मादिसमानाधिकरणः सहशब्दस्तत्र च पक्षपवादतृतीयाया असंभवाद्वानेन समासः । सहैव पुत्रैरित्यादौ विद्यमानतावाची तेषां विद्यमानत्वे ऽपीत्यर्थ इति न दोषः । प्रकृते तु न सः । कर्मणो विद्यमानत्वे इत्यर्थानुभावात् । एवञ्चानेकमन्यपदार्थं इत्येव समासः । सपूर्वाया इत्यादिनिर्देशैश्चोपसर्जनस्येत्यत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या सादेशः सुलभः । सपूर्वेत्यत्र सर्वनामसंख्ययोरित्यस्याप्रवृत्तिरनित्यत्वादत एव संहितशफेति सूत्रे सहोरूरित्यस्य सहविद्यमानावूरूयस्या इति विग्रहप्रदर्शनं कैयटादिभिः कृतमित्याहुः ॥ प्रकृत्याशि ॥ सपुत्रस्य यजमानस्यैश्वर्याभिवृद्धिरस्त्वित्याद्याशीर्वचनमसाध्वेवेति बोध्यम् ॥ बहुव्रीहौ सं ॥ संख्येये वर्त्तमानसंख्याशब्दान्तो यो बहुव्रीहिरित्यर्थः । पञ्चम्यर्थे सप्तमीत्याह । तस्मादिति । उपगणा इत्यत्र डचि सत्यसति च रूपे विशेषाभावादाह । स्वरे इति । डच्यन्तोदात्तम् । अन्यथा पूर्वपदप्रकृतिस्वर इत्यर्थः । बहुगणयोर्यदा चतुरादिबोधकता तदा तत्समीपत्र्यादीनां बहुत्वाद्बहुवचनम् । अत्र प्रतिपदोक्तपरिभाषा न प्रवर्त्तते । तेन नवदश येषामित्यनेकमिति समासे ऽपि नवदशा इति भवतीति ध्वनितं संख्ययेति सूत्रे अशिष्यः संख्योत्तरपदः संख्येयार्थाभिधायित्वादित्यनेन, तत्प्रत्याख्याने तु संख्येये वर्त्तमानबहुव्रीहेरित्यर्थाच्च दोषः । मूले ऽपि संख्येये यो बहुव्रीहिरि-

त्यनेन सूचितमिदम् । स्पष्टं चेदं समर्थसूत्रे संख्ययाव्ययेति सूत्रे च भाष्यकैयटयोः । अत्र पक्षे कन्नपि । भाष्येनन्तरबहुव्रीह्यपेक्षया शेषस्य ग्रहणात् । अत एव बहुव्रीहौ सक्थ्यक्ष्णोरिति प्रकरणे एवेदं न कृतम् । संख्याया इति । अव्ययादेरिति बोध्यम् । तेन गोविंशतिरित्यादौ न । स्पष्टं चेदमत्रैव भाष्ये । अत्रान्यत्राधिकलोपादित्यपि भाष्ये उक्तं द्व्यधिका विंशतिरिति चोदाहृतम् । तत्तु वार्त्तिककृतोक्तरीत्योक्तम् । भाष्यकृता तु तत्र द्वन्द्वस्यैवाङ्गीकारात्तद्रीत्या तदनावश्यकम् । तत्पुरुषे हि पूर्वपदप्रकृतिस्वरासिद्ध्या द्वन्द्व एवात्रेति भाष्यकृतोक्तम् । द्वन्द्वसूत्रे द्व्यधिकेत्यादावव्ययादित्वाभावाच्च अव्ययादेरित्याश्रित्यान्यत्राधिकलोपादिति न वक्तव्यमिति चात्र भाष्ये उक्तमित्याहुः । व्यत्ययेन षष्ठीति । सप्तम्यप्येवन्तदाह । बहुव्रीहेरिति । स्वाङ्गमद्रवं मूर्त्तिमदित्यादि । षचः षो ङीषर्थस्तदुदाहरति जलजाक्षीति । चित्त्वमन्तोदात्तत्वाय तेन पूर्वपदप्रकृतिस्वरो न । स्थूलाक्षेति । अत्यच्च पर्यवस्थिः । षचि हि ङीष् स्यात् । अङ्गुलीसदृशेति । दारुणोऽप्राणितया मुख्याङ्गुल्यसंभवादिति भावः । द्व्यङ्गुलेति । मात्रचो द्वयसचो वा द्विगोर्नित्यमिति लुक् । तत्पुरुषस्याङ्गुलेरित्येतत्तु अदारुणि चरितार्थमिति भावः । द्वन्द्वाव्ययीभावव्यावृत्तिरप्येतत्फलम् । द्वित्रिभ्याम् ॥ षचि प्रकृते षविधानं द्विमूर्धं इत्यादौ द्वित्रिभ्यां पाद्दन्मूर्धस्विति पाच्चित्कान्तोदात्तत्वाभावे पूर्वपदप्रकृतिस्वरार्थम् । षचि हि चित्त्वसामर्थ्यात्पूर्वपदप्रकृतिस्वरं बाधित्वा नित्यमन्तोदात्तत्वं स्यात् विकल्पस्तु अनित्यतया समासान्ताभावे चरितार्थः । अनित्यत्वञ्च मूर्द्धस्विति निर्देशादेव ज्ञायते । अन्यथा प्रक्रमाभेदाय मूर्द्धष्विन्त्येव वदेदिति द्वित्रिभ्यामिति सूत्रे भाष्यकैयटयोः स्पष्टम् । द्वित्रिभ्यामित्यस्य ताभ्यां परा यो मूर्द्धन्शब्दस्तदुत्तरपदकबहुव्रीहेरित्यर्थात्समासान्ते कृते ऽपि तत्प्रवृत्तिरित्यलम् । अन्होऽदन्तादित्यन्तग्रहणाज्ज्ञापकाद्दच प्रकरणे वर्णग्रहणे तदन्तग्रहणं नास्तीत्याशयेनाह पूर्वपदस्यादिति । समानपदे इत्यस्या खण्डपदे इत्यर्थात्समासे ऽप्राप्तौ विध्यर्थमिदम् । भाष्ये इति । प्रागयनं स्वभवनमित्यादीनान्त्वनभिधानमिति भावः । रघुनाथादिशब्दे तु णत्वे सञ्ज्ञात्वभङ्गापत्तेर्न णत्वम् । णत्वेन चेत्सञ्ज्ञारूढ्यर्थो गम्यतइति सूत्रार्थः । तदुक्तं भृञोऽसञ्ज्ञायामिति सूत्रे भाष्ये यएते सञ्ज्ञायां विधीयन्ते तेषु नैवं विज्ञायते सञ्ज्ञायामभिधेयायामिति किं तर्हि प्रत्ययान्तेन चेत्सञ्ज्ञा गम्यते इति । प्रत्ययान्तेन यदि रूढिर्गम्यते ततः प्रत्यय इति कैयटः । रूढिः रूढार्थः । भाष्ये प्रत्ययान्तेनेति तत्तच्छास्त्रविधेयकार्योपलक्षणम् । एतन्मूलकमेव पठ्यते ऽभियुक्तैः । सञ्ज्ञाशब्दा अनादिप्रयुक्तनियतानुपूर्वीका एव सिद्धास्तत्र-

दानीं कस्तद्विपरीतं प्रयोक्तुमर्हतीति ॥ खुरखराभ्याम् ॥ अस्यादेशस्यैव स्थानिद्वारा समासान्तत्वेनाशेषत्वात्केपाद्विभाषेति कबत्र विषये न । पक्षे ऽजपीति । भाष्ये त्वेतन्न दृश्यते ॥ उपसर्गाद ॥ अनोर्त्किम् । प्रनो मुञ्चतमित्यत्र णत्वं मा भूदिति । तद्बहुक्त्वेति । अनोत्पर इत्यपनीय बहुलग्रहणं कृत्वेत्यर्थः । अन्यथा प्रणोनयेत्यादावव्याप्तिः प्रनः पूपेत्यादावतिव्याप्तिश्च स्यादिति भावः । अत्राप्युपसर्गग्रहणं प्राग्वदेव । प्रणस इति । प्रगता नासिका यस्येति विग्रहः । विगतया नासिकयेति । तत्र च पद्दन्निति नसादेश इति भावः । सुप्रातादौ अव्ययानां भमात्रइति टिलोपः । शारिकुक्षे यस्येति लोपः । कुक्षीतीकारान्तपाठस्त्वपाठः अच्प्रकरणविरोधात् । चतुरश्रेति तालव्यमध्यः । एणीपदादिषु पद्भावो निपातनात् । अहल इति । अस्य वैकल्पिकत्वेप्यनुक्तसमासान्तत्वाभावादत्र न कप् ॥ नित्यम ॥ सस्येत्ववारणाय वस्त कृतः । अकारोच्चारणं सुप्रजसावित्यर्थम् । नित्यग्रहणं स्पष्टार्थमिति भाष्यस्वरसः ॥ धर्माद ॥ केवलात्किमिति । बहुव्रीहिणा पूर्वपदाक्षेपे तस्य च समासप्रथमावयवे रूढत्वेन ततः परत्वाभावेनैव त्रिपदबहुव्रीहौ न दोष इति प्रश्नः । उत्तरन्तु पूर्वपदशब्दस्य तत्प्रथमावयवे रूढौ न मानं तदाहापेक्षिकमिति । परमस्वधर्म इत्यत्र स्वशब्दस्य सर्वनामसंख्ययोरिति पूर्वनिपातो नाहिताग्न्यादित्वात् । एवमेव जहत्स्वार्थेत्यत्रापि । केवलत्वञ्च सजातीयान्याभाववत्त्वम् । इदञ्चेजादेरिति सूत्रे भाष्ये स्पष्टम् । अनिचोकारो ऽदृष्टार्थः । कृतसमासान्तमिति । अनिजन्तमित्यर्थः ॥ धनुषश्च ॥ ज्ञु साहचर्यात् ङित्करणाच्चास्यादेशत्वं निश्चित्याह । नङादेश इति । लोपो व्यो ॥ वलादौ प्रत्ययइति त्वयुक्तम्, प्रत्ययस्याप्रकृतत्वात् गौधेर इत्यसिद्धेश्च । पूर्वोत्तरसाहचर्यादिकार आदेशः । समासान्ता इत्यधिकारादादेः परस्येति न प्रवर्त्ततइत्याशयेनाह, अन्तादेश इति । एकदेश इवेति । तदेकान्तग्रहणमिति वार्त्तिकम् । गुणसमुदायो द्रव्यमिति पतञ्जलिमते गन्धो ऽवयव इति तद्भाव इत्यन्ये ॥ अल्पाख्या ॥ अल्पशब्दोल्पत्वपरः । तथा च लेशवाचिनो गन्धशब्दस्य ग्रहणमित्याशयेनाह । सूपस्य गन्धो लेश इति । तत्र प्रमाणं कोशमाह । गन्धो गन्धकइति । नन्वभावस्य कथं समासान्तत्वमत आह । स्थानिद्वारेणेति । पादस्य पादिति नोक्तम् । प्रतिपदोक्ततयास्यैव पादः पदित्यत्र ग्रहणापत्तौ पादयतेः क्विपि पद इत्याद्यनापत्तेः ॥ कुम्भपदी ॥ बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थावगतिः । स्त्रीलिङ्गानामेव गणे पाठादाह । स्त्रियामिति । यदिहोपमानपूर्वं संख्यापूर्वञ्च तस्य सिद्धे लोपे नित्यं ङीबर्थं वचनम् । अष्टापदीत्यत्र निपातनाद्दीर्घत्वम् । द्विदचिति । शिशुत्वावस्थाप्रतीतिः । समदन्तीति । नासि-

कोदरेत्यादिना ङीप् । श्यावः कपिशः । अरोको ऽदीप्तिरच्छिद्रो वा ।
ककुदस्या ॥ कालाहोरादिकृता अवयवोपचयादयो वस्तुधर्मा अवस्थेत्युच्यन्ते ।
अजातककुत्त्वेन बाल्यम् । पूर्णककुत्त्वेन तारुण्यं गम्यते । अवस्थायां किम् ।
श्वेतककुदः । सञ्ज्ञायेति । एवञ्च पर्वत इत्यस्य तद्विशेष इत्यर्थः । व्यूढं
विशालं तद्धितत्वात्कस्य नेत्वम् । सोपदादाविति सः । प्रियसर्पिष्क इगः
षः । एकवचनान्ता इति । सर्वत्र गणे निर्विभक्तिकपाठस्यैव दृष्टत्वेन केषा-
ञ्चित्सविभक्तिकानां पाठस्तद्विवक्षार्थस्तदाह । द्विवचनेत्यादि । अनुक्तसमा-
सान्तादिति । समान्यतः समासान्तापेक्षयैव शेष इत्यभिमानस्तद्वुद्ध्यति । प्रि-
यपथ इति । परे तु नैव कबपेक्षं शेषग्रहणं नापि समासान्तापेक्षं किन्त्वर्हेऽनन्तरो
बहुव्रीह्यधिकारः सोपेक्ष्यते इति भाष्योक्तेस्तदपेक्षयैव शेषो ग्राह्यः । समासा-
न्ताश्च कबभावे सावकाशा इति समासान्तैः स्वस्वविषये कपो बाधेनोपपत्तौ
शेषग्रहणं व्यर्थमिति न वाच्यम् । एवञ्च प्रियपथिक इत्यपि । अत एव
बहुव्रीहौ संख्येये इत्यस्यान्यत्र पाठः सार्थक इत्यन्यत्र विस्तर इत्याहुः ।
शेषाधिकारेति । इदं संख्ययेत्यादौ कबभावार्थमिति भाष्योक्ते ज्ञायते । सकृ-
दुच्चारितार्थद्वयलाभो संभवीत्यत आह तन्त्रादिनेति । उच्चारयित्रा तन्त्रेणो-
च्चारितं बोद्धुरावृत्त्या बोध इति बोद्ध्यम् ॥ आपोन्य ॥ न कपीत्यतः कपीत्य-
नुवर्त्तते । अनन्तरस्येति न्यायाच्छेषादित्यस्यैव निषेध इत्याह । शेषादितीति ।
विश्वे इति । विश्वाख्यदेवगणविशेष इत्यर्थः । उद्भूतावयवभेदत्वाद्बहुवचनं
विग्रहे । विश्वदेव इति । विश्वेदेव इति त्वपाठः । न सञ्ज्ञयसोरित्येव वक्तव्ये
योगविभागसामर्थ्यादीयसश्चेति नद्यृतश्चेत्यस्यापि निषेधकमित्याह । न क-
पीति । ईयसो बहुव्रीहौ पुंवदिति वचनं, ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्री-
हौ विद्यमानस्य पुंवत्पुंवद्विषयकस्योरस्य यथा न ह्रस्वस्तथा ऽस्यापीति तद-
र्थस्तदर्थतः पठति ईयस इत्यादि । अत्र सूत्रे ईयस उपसर्जनस्त्रीप्रत्ययस्य दी-
र्घत्वं वक्तव्यं न वक्तव्यं पुंवद्वचनात्सिद्धमिति भाष्योक्तेरनेन नपुंसकह्रस्व-
स्यापि निवृत्तिरन्यथा वचनेन वचनप्रत्याख्याना सङ्गतिः । मम तु नपुंसकह्र-
स्वनिवृत्त्यर्थमावश्यकेन युज्यते प्रत्याख्यानमिति दिक् । बहुश्रेयसीति । लिङ्ग-
विशिष्टपरिभाषया निषेधः । नद्यृतश्चेति नित्यं कप् प्राप्तः । अभिवादनस्तु-
तिरूपोभयार्थकवदिधातुनोभयसाधारणपूजा लभ्यतइत्याशयेनाह. । पूजित-
इति । एतेन स्तुत्यर्थकस्यैवात्र ग्रहणमिति वृत्त्यादिध्वनितं निर्बीजमिति
सूचितम् । सुभ्रातेति । नद्यृतश्चेति कप् प्राप्तः । स्त्रीप्रत्ययान्तत्वाभावादि-
ति । अवितृस्तृतन्त्रिभ्य ईरित्यौणादिकत्वादिति भावः । ल्युडिति । प्रीयते-

स्यामित्यधिकरणे इति भावः। समाप्तवान इति। समाप्तं वानं वयनक्रिया यस्येत्यर्थः। सप्तमी वि॥ सप्तम्यन्तस्य कर्त्राद्यन्वयद्वारैव क्रियान्वयाद्विशेषणत्वेन सिद्धे वैयधिकरण्येपि समासज्ञापनार्थं सप्तमीग्रहणम्। विशेषणपदञ्च ब्राह्मणवसिष्ठन्यायेन तदतिरिक्तविशेषणपरं तदाह। अत एवेति। चित्रगुरिति। उभयोरपि प्रथमानिर्दिष्टत्वेन एकविभक्तित्वेन वा नियमे प्राप्ते उत्तरपदार्थविशेषणस्यैव पूर्वनिपातार्थं विशेषणग्रहणमिति भावः। सर्वनामसंख्ययोरिति। श्वेतशुक्लयोरुदाहरणे विशेषणत्वं बोध्यम्। वन्येतरो हस्तदक्षिण इत्यादौ राजदन्तादित्वात्परनिपातः। सर्वश्वेत इति। वचनसामर्थ्यात्क्वचिदपूर्वगत्या सर्वनामत्वं बोध्यम्। त्रिशुक्ल इति पाठः। द्विशुक्ल इत्यादौ द्विशब्दस्य सर्वनामत्वादेव सिद्धेः। शब्दपरेति। अत एव वार्त्तिके ऽल्पाचोपि परनिपातः। संख्याया इति। संख्यावाचकानां समासे ऽल्पार्थवाचिकाया इत्यर्थः। द्वन्द्वेपीति सूत्रे पठितमपीदं द्वन्द्वाद्वन्द्वसाधारणं तदाह। द्वित्रा इति। द्वादशेति च। सहस्राणां शतमित्यर्थे ऽपि शतसहस्रमित्येव। स्पष्टञ्चेदं तदस्मिन्नधिकमित्यत्र भाष्ये। वा प्रियस्येति। इदं बहुव्रीहावेव तेन सहेत्युदाहरणे सहप्रिय इत्यत्र न, सप्तमीविशेषणे इत्यत्रोपसंख्यानात्। गड्वादयाहिताग्नी आकृति गणौ। अत्र वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादाह। क्वचिदिति। एतद्वृत्तौ स्पष्टम्। कृतकृत्ययोः क्रियाशब्दत्वादनियमे प्राप्ते वचनम्। चारुस्मितेत्याहिताग्न्यादित्वात्साधु। जातिकालेति। जातिकालसुखादिभ्योनाच्छादनात् क्त इत्यन्तोदात्तविधायकेन ज्ञापितम्। वाग्रहणानुवृत्तेराह। प्रायिकमिति। क्वचिन्नेति। तेषामाहिताग्न्यादित्वमिति भावः॥ इति बहुव्रीहिः॥

चार्थे॥ अनेकमन्यत्यतो ऽनेकमित्यनुवर्त्तते तत्फलं स्रग वाग्दृषदं होतृपोतृनेष्टोद्गातार इत्यादौ यथायथं समासान्तानङोर्मध्ये प्रवृत्तिर्न, अन्ते एव च प्रवृत्तिः। अत्र वदन्ति। द्वन्द्वः प्रथमान्तानामेव न परिनिष्ठितविभक्त्यन्तानां चैत्रेण मैत्रेण च कृतमिति वाक्ये ऽवयवकर्तृत्वस्यैव प्रतीतेश्चैत्रमैत्राभ्यां कृतमिति समासे समुदायकर्तृत्वस्यैव प्रतीतेस्तस्य वाक्यस्य समाससमानार्थत्वाभावेन तस्य तद्वाक्यत्वाभावात्। अत एव यदग्नये च प्रजापतये चेत्यादौ व्यस्ते प्रत्येकं देवतात्वप्रतीतिरग्नीषोमाभ्यामित्यादौ समुदाये देवतात्वप्रतीतिरिति व्यवस्था सिद्ध्यति। तस्यापि तद्वाक्यत्वे तु समास इव तत्रापि समुदाये देवतात्वप्रतीतिरेव स्यात्। अत एव न ङिसंबुद्ध्योरिति सूत्रे भाष्ये ङिसंबुद्ध्योरनुत्तरपदे इति वार्तिके संबुद्धिग्रहणं न कार्यं राजवृन्दारकेत्यादौ संबुद्ध्यन्तानां न समास इह तावत्समाससमानार्थकेन वाक्येन भवितव्यम्। समासेन च यश्चेहार्थो वाक्येन गम्यते नासौ जातु-चित्समा-

सेन गम्यते अवयवसंबोधनं वाक्येन गम्यते समुदायसंबोधनं समासेनेत्युक्तम् । संबोधनविभक्त्यन्तस्याभिमुखीभावफलकत्वेन प्रत्येकमेवाभिमुखीभावप्रतीत्या क्रियान्वयेन परस्परमसामर्थ्यमिति तद्भावः । यदा समानाधिकरणस्थले ऽपि समासो न तदा व्यधिकरणानान्द्वन्द्वः सुतरां नेति परिनिष्ठितविभक्त्या समासे ऽपि राजपुरोहिताविति न तदुदाहरणमेवञ्च व्यधिकरणतृतीयाद्यन्तानामपि क्रियादावेवान्वयेन क्रियाजनकत्वरूपकारकत्वस्य प्रत्येकमेव बोधेन वाक्यसमासयोर्न समानार्थत्वम् । एतेन कटं भीष्ममित्यादौ प्रत्येकं कर्मतयोभयोः क्रियान्वयेपि पार्ष्णिकपरस्परान्वयेन सामर्थ्यमादाय समास इति मीमांसकनव्योक्तमपास्तं राजवृन्दारकेत्यादावपि पार्ष्णिकान्वयेन सामर्थ्यमादाय समासापत्तौ भाष्यासङ्गतेः । तिङ्समानाधिकरणे प्रथमा अभिहिते प्रथमेति न्यासे ऽपि समुदायद्वारावयवानामपि तिङ्सामानाधिकरण्येन समुदायकर्तृत्वोक्तावयवकर्तृत्वस्याप्यभिहितत्वेन समुदायप्राधान्येप्यवयवेभ्यः प्रथमा भवत्येवात एव तत्र चैत्रो मैत्रश्च गच्छतः स्तः पचत इत्यादि नित्यद्विवचनाद्यन्ताख्यातप्रयोग एवेति दिक् । परस्परनिरपेक्षस्येति । तत्त्वं चैकस्य क्रियान्वयोत्तरमपरस्यावृत्त्या तदन्वयात् । अनेकस्येति । तेनैकस्य सापेक्षत्वेपि न दोष इति भावः । समुच्चये चशब्देन स्वसमभिव्याहृतपदार्थे इतरसापेक्षत्वं बुध्यते तदसमभिव्याहृते तु न । अत एवात्रैकचशब्दप्रयोग एव । एकस्मिन्निति । एकधर्मावच्छिन्ने इत्यर्थः । अन्वय इति । यत्रैवमन्वयस्तत्र समुच्चयश्चशब्दार्थ इत्यन्वयः । न त्वन्वय एव समुच्चय इति भ्रमितव्यम् । अन्वयो विशेष्यतया विशेषणतया वा, तत्रान्त्यो वक्ष्यमाणोदाहरणे । आद्यस्तु देवदत्तः पचति हसति चेत्यादौ क्रियासमुच्चये, आनुषङ्गिकत्वमनुद्देश्यत्वम् । अन्यस्य प्राधान्यञ्च तत्संबन्धिक्रियाया अवश्यकर्त्तव्यत्वरूपम् । अन्वाचये आनुषङ्गिकत्वं व्याप्यत्वञ्च समभिव्याहृतक्रियागतञ्चार्थः । मिलितानामिति । परस्परापेक्षाणामुद्भूतावयवभेदसमूहरूपाणामित्यर्थः । अन्वय इति । एकधर्मावच्छिन्नेनान्वय इत्यर्थः । तेन नीधातोः संयोगजनकव्यापारानुकूलव्यापारवाचकतया द्विकर्मत्वेप्यजाङ्ग्रामं नयतीत्यादौ न चकारप्रयोगो नापि समास, एकधर्मावच्छिन्ने ऽन्वयाभावात् । अत एवात्रानेकचकारप्रयोगः । यत्रैवमन्वयस्तत्रेतरेतरयोगस्तादृशसमूहश्चार्थ इत्यन्वयः । समूहे उद्भूतावयवभेदत्वञ्चावयवगतसंख्यारोपवत्त्वं प्रत्यवयवं समूहरूपत्वारोपो वा । समूह इति । अनुद्भूतावयवभेदः समूह इत्यर्थः । तत्रेतरेतरयोगे उद्भूतावयवभेदसमूहस्य प्रतीत्या प्रत्येकवृत्तिधर्मरूपमेव प्रवृत्तिनिमित्तम् । समाहारे त्वतिरिक्तत्वेनैव समूहस्य भा-

नात्समूहत्वं प्रवृत्तिनिमित्तमिति विशेषः। असामर्थ्यादिति। अनेकसुबन्तानां चार्थे वृत्त्यभावेनैकार्थीभावरूपसामर्थ्याभावात्। किंच तत्र चार्थस्य समभिव्याहृते विशेषणम्। समासस्त्वन्यपदार्थप्राधान्ये इव चार्थप्राधान्ये एव स्पष्टश्चेदं सर्वमत्र सूत्रे भाष्ये, तत्र हि चार्थस्यासत्त्वभूतत्वात्तदर्थसमासस्याप्यलिङ्गसंख्यता प्राप्नोतीत्याशङ्क्य स्वभावेन परिहृतम्। गुणवचनवद्यद्द्रव्याश्रितः समासार्थस्तद्द्रव्यलिङ्गसंख्यायाहक इति च समाहितम्। अतो नेदं भाष्यं समाहारविषयं तस्य समूहिद्रव्यलिङ्गादियाहित्वाभावात्। नन्वेवं परवदिति सूत्रस्यावयवावेवापेक्षितपरस्परौ द्वन्द्वार्थौ न तु तद्व्यतिरिक्तः समुदायोऽस्तीति कैयटग्रन्थस्यासङ्गतिरिति चेन्न तस्यात्यन्तव्यतिरिक्तो नेत्यर्थात्। अपेक्षितपरस्परावित्यनेन च समूहरूपता उद्भूतावयवभेदता च दर्शिता। अत एव यद्वाऽवयवव्यतिरिक्तः समुदायोऽर्थः स चावयवलिङ्गेन लिङ्गवान् इति तदुक्तपक्षान्तराद्बोधाविशेष इत्यन्यत्र निरूपितम्। अहरहर्नयमानो गामश्वं पुरुषं पशुमित्यादौ न समासः। अहरहःपदेन विनिगमनाविरहात्परस्परसाहित्यावगतावपि तस्य चकारावाच्यत्वात् यत्र विग्रहे चेनैव द्योत्यं साहित्यं तत्रैव समासो नान्यत्रेति स्पष्टं भाष्ये। चार्थबलादेव सति तात्पर्ये समभिव्याहृतक्रियायामेककालिकत्वादि गम्यते इति दिक्। प्राच्यभरतेष्विति निर्देशात्सामान्यशब्दस्योपात्तविशेषातिरिक्तपरत्वे सहविवक्षासंभवेन द्वन्द्वो भवत्येव। तेन गोबलीवर्दमित्यादि सिद्धिः॥ राजदन्तादिषु॥ इदं सर्वसमासविषयम्। षष्ठीसमासकर्मधारयद्वन्द्वानां तत्र पाठात्। धर्मादिष्विति। द्वन्द्वएवेदम्। राजदन्ताद्यन्तर्गणसूत्रमेतत्। जम्पतीति। अभ्यर्हितत्वात्पत्युः पूर्वनिपातः प्राप्तः। निपात्यतइति। राजदन्तादिगणे पाठेनेति भावः। अयं राजदन्तादिरित्यर्थः॥ अल्पाच्तरम्॥ यथाकथंचिदतिशयमारोप्य गरीयांसमित्यादिभाष्यप्रयोगे ईयसुनिवेह तरप्। अत एवातन्त्रन्तरनिर्देश इति भाष्यं सङ्गच्छते। उच्चैस्तरामिति सूत्रे च भाष्ये स्पष्टमिदम्। तत्प्रयोगश्चादृष्टार्थः। अत एव स्वरितात्संहितायामनुदात्तानामिति सूत्रे ऽनुदात्तानामित्यत्र शब्दसंस्कारार्थमेव बहुत्वं विवक्ष्यते न तु तत्कार्यान्वयीति कैयटः। मृदङ्गशङ्खपणवा इत्यादौ द्वन्द्वोत्तरपदो द्वन्द्व इति बोध्यम्। तन्त्रं तरनिर्देश इति भाष्योक्तपक्षान्तरे मुख्यातिशयोऽर्थ इत्यर्थः तदापि प्रकृतसूत्रे ऽतिशय एव विवक्षितो न तु द्वयोरित्यंशः। तेन शङ्खदुन्दुभिवीणानामिति बहुष्वपि सिद्ध्यति। यदेतदल्पाच्तरमिति तदल्पाजिति वक्ष्यामीति भाष्यस्य यतः कुतश्चित्सर्वस्याप्यल्पाच्त्वात्सामर्थ्यादतिशयार्थे भविष्यतीत्यर्थः। अत्र पक्षे ऽल्पाच्त्वं यत्किंचिदपेक्षयातिशयस्तूपात्तापेक्षया। अतन्त्रपक्षे तु अतिशयः

सर्वथा ऽविविक्षित एवाल्पाच्त्वस्योपात्तापेक्षयैवेति स्पष्टं भाष्ये । तत्र पक्षे ऽपि द्वयोरित्यंशाविवक्षणादतन्त्रपक्षस्यैव ज्यायस्त्वमत्र । अस्यात्यन्तस्वार्थिकतरप्ज्ञापकत्वमिति तु न युक्तम् । तन्त्रातन्त्रविचारस्य भाष्ये ऽसङ्गत्यापत्तेः । न हि सर्वथार्थाभावे एवं विचारः संभवति मम तु आरोपितत्वे ऽतन्त्रत्वं मुख्यत्वे तन्त्रत्वमिति तत्सङ्गतिः । कुत्वचुत्वयोरभावश्च निपातनात् । अत्रापि बहुप्वनियमः । आनुपूर्व्येणेति । ऋतूनामानुपूर्व्यं प्रादुर्भावकृतं नक्षत्राणान्तूदयकृतं बोद्ध्यम् । अनित्यमिदं प्रकरणं लक्षणहेत्वोरिति निर्देशात् । घ्यन्तादिति । अजाद्यदन्ताच्चाल्पाच्तरं लघ्वक्षरं ऋतुनक्षत्राणामित्यभ्यर्हितस्येति भ्रातुर्ज्यायस इति च विप्रतिषेधेन । सर्वतोऽभ्यर्हितं पूर्वम् । वासुदेवार्जुनाभ्यामिति निर्देशात् ॥ द्वन्द्वश्च ॥ अत्र तूर्याङ्गशब्देन वादका एवेति अल्पाच्तरमित्यत्र भाष्ये ध्वनितम् । अङ्गशब्द आद्यन्तयोरवयवपरो मध्ये तूपकारकपरः । अङ्गशब्दस्य प्रत्येकमन्वयः । तत्रैकप्राण्याद्यङ्गकद्वन्द्वासंभवेनान्याग्रहणस्यावश्यकत्वे प्रत्यासत्त्या तत्तद्वाक्योपस्थितप्राण्यङ्गाद्येव द्वितीयं गृह्यते तेन मार्दङ्गिकाश्वारोहाविति सिद्धम् । एवमेवाध्वर्युक्रतुरित्यादौ बोद्ध्यम् । एकवचनशब्दश्च योगेनैकत्वविशिष्टबोधकपरस्तदाहैकवदिति । एकार्थबोधकपदवदित्यर्थः । पाणिपादमिति । प्राण्यङ्गत्वेन प्राणित्वाज्जातिरप्राणिनामित्यनेन न सिद्धिः । नियमार्थमिति । एतच्च विभाषा वृक्षेति सूत्रे भाष्यकैयटयोः स्पष्टम् । न चैतानि इतरेतरयोगएकवद्भावविधानार्थानि कुतो न भवन्ति पाणिपाद इति च तत्फलमिति वाच्यम् । द्विगुरेकवचनमिति साहचर्येण व्याख्यानेन चानुवादत्वस्यैवौचित्येनात्रत्यद्वन्द्वपदस्य समाहारद्वन्द्वपरत्वात् तत्र तदनुवादेनैकत्वविधाने फलाभावात् । प्राण्यङ्गाद्यनुवादेन एकवचनद्वन्द्वविधयो नियमार्था एतेषां समाहारएवेति तदाह । समाहारएवेति । ध्वनितं चेदं विशिष्टलिङ्ग इत्यादौ समाहारे द्वन्द्वः स्यादिति व्याख्यानेन द्विगुरेकेति सूत्रे ऽनुवादफलन्तु तत्रैवोक्तं विपरीतनियमाभावबीजन्तिष्यपुनर्वस्वोरिति सूत्रे उक्तम् । अनुवादे यदा प्रतिपत्ता प्रमाणान्तरावगतमप्यर्थं कार्यान्तरार्थं प्रयोक्ता प्रतिपाद्यते तदानुवादस्तदाह सिद्धस्येति । प्रकृते चोदयप्रतिष्ठयोरनुवादः । असिद्धज्ञापने तूदगुः कठकालापा इत्यपि । चरणशब्दोऽत्र शाखाध्येतृपरः । स्थेणोरिति । लुडन्तस्थेणोः प्रयोगे सतीत्यर्थः ॥ अध्वर्युक्रतुरिति ॥ षष्ठ्यर्थे इयं प्रथमा । अविप्रकृष्टेति च्छेदस्तदाह । प्रत्यासन्ना इति । अध्ययनगता प्रत्यासत्तिरध्येये तद्द्वारा तदध्येतरि चारोप्यत इति भावः । पदक्रमशब्दयोस्तु जातित्वादेव सिद्धमिति तदध्येतृपुरुषवाचकस्य प्रवृत्तिः ॥ जातिर ॥ षष्ठ्यर्थे प्रथमा तदाह । जातिवाचिनामिति । यद्यपि क्षतप्ररोहणादिना वृक्षादीनामपि प्राणित्वं तथापीह लो

कप्रसिद्धमनुष्यादय एव प्राणिशब्देन गृह्यन्तइति विभाषा वृक्षेति सूत्रस्थभाष्यस्वरसः । जातिः किम् । नन्दकपाञ्चजन्यौ । हरेः खड्गो नन्दकः । शङ्खश्च पाञ्चजन्यः । एकव्यक्तिवृत्तित्वान्न जातिः । द्रव्येति । अप्राणिनामिति पर्युदासादेतल्लभ्यते । जातिप्राधान्येति । प्राधान्यञ्च तज्जात्याश्रयसकलव्यक्तिबोधनरूपम् । द्रव्यविशेषेत्यस्य नियतद्रव्यविशेषेत्यर्थः । इदञ्च तस्यादितत इत्यत्र कैयटे यद्वा प्राधान्यं नाम विशेष्यत्वम् । तदा द्रव्यं विशेषणं बाह्यार्थान्वयः परम्परया जातौ तत्र तात्पर्यग्राहकमेकवचनम् । द्रव्यप्राधान्ये त्वितरेतरयोगोपीति बोध्यम् । क्षीरोदके संपृक्ते इत्यन्तादिवच्चेति सूत्रभाष्यप्रयोगोऽत्र मानम् । बदरामलकानीति । फलत्वस्याप्यजातिवचनावेतौ ॥ विशिष्टलिङ्गो ॥ अग्रामा इति पर्युदासः । ग्रामभिन्नसर्वावयवग्रहणमत्र इह ग्रामपदेन ग्रामो नाध्येयं उदीच्यग्रामाच्चेत्यादाविव नगरं न गृह्यते व्याख्यानात् तेन मथुरापाटलिपुत्रमित्येव । अत्र नदीदेशविषये तु वाक्ये तत्र द्वन्द्वश्चेति सूत्रोक्तरीत्या नद्यादिसर्वावयवग्रहणमतो गङ्गापाटलिपुत्रे इत्यादौ न तदाह । ग्रामवर्जेति । नदीग्रहणेन नदस्यापि ग्रहणम् । अत एव तत्र भिन्नलिङ्गत्वसम्भवः । शश्वच्छब्दस्त्रैकाल्ये ततो भवार्थे निपातनाट्ठञि टिलोपकादेशयोरभावः । अस्य सन्धिवेलादिषु पाठाच्छाश्वतमपि । स्वाभाविक इत्यर्थः । परत्वादिति । पशुशकुनिद्वन्द्वावकाशो गोमहिषहंसचक्रवाकादिः । अस्यावकाशोऽहिनकुलादिः । अत्र विरोधो वैरं न तु सहानवस्थितिस्तेन छायातपाविति सिद्धम् । पात्रादिति । यैर्भुक्ते स्मृत्युक्तसंस्कारेण पात्रं न शुद्ध्यति ते निरवसिता इत्यर्थः । यथोच्चारितानीति । गणपाठे रूपमेषां विवक्षितं न तु पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यं तेन पररूपपक्षे गोश्वं गोश्वा इति । दासीदासमित्यत्रात एव निपातनात्पुमान्स्त्रियेत्येकशेषो न । गवाश्वे पशुद्वन्द्वविभाषाप्राप्ते [illegible]ञ्चिद्बहुप्रकृत्यर्थः पाठः केषांचित्सामान्यतः प्राप्ते नियमार्थः । वृक्षादौ विशेषाणामेवेति । स्वं रूपमिति सूत्रे भाष्ये तथोक्तेरिति भावः । आदिना मृगादिपट्कम् । प्रागुक्तरीत्या मृगादिसर्वावयवकसमुदाये एवैतद्बोधितत्तद्वाक्यप्रवृत्तिः । व्रीहिकुशप्लक्षमित्यादौ तु जातित्वान्नित्यमेव । फलसेनेति । बहुप्रकृतिर्बहुवचनान्तावयवक इत्यर्थः । अत्र वनस्पतिशब्देन वृक्षग्रहणम् । इदं प्रकरणशेषभूतम् । एवञ्चैकवचनद्वन्द्वविषयं यच्छास्त्रं प्राप्नोति तद्बहुवचनान्तावयवकसमुदायस्यैव तेनाबहुप्रकृतेरितरेतरयोग एव । एतेन सङ्ग्रामं हस्त्यश्वरथपदातिभिरिति येनविधिरितिसूत्रस्थभाष्यप्रयोगः, पातितैरथनागाश्वैरिति चोपपन्नं तदाह । जातिरिति । सेनाङ्गत्वान्नित्यं प्राप्तइति । विकल्पार्थमित्यनुषज्यते । गोमहिषमित्याद्युदाहरणन्तु प्राप्तिमात्रा-

भिप्रायेण । चार्थे द्वन्द्व इत्येव सिद्धेः । परे तु फलसेनेति वार्तिकव्याख्यानभाष्ये एषां द्वन्द्वो विभाषैकवद्भवति बहुप्रकृतिरिति व्याख्यानाद्बहुप्रकृतिकद्वन्द्वस्य वैकल्पिकैकवत्त्वं फलादिविषयेपि । अत एव बदरामलकं बदरामलकानीत्युदाहृतं भाष्ये एवं चोक्तप्रयोगाः सर्वथा निर्बाधा एवात एवैतद्वचनं विभाषापदानुवृत्तयेत्र पठितं न तु द्वन्द्वश्चेति सूत्रे इत्याहुः । नन्वेवं मृगशकुनिग्रहणं व्यर्थं चार्थइत्यनेनैव सिद्धेरत आह । मृगाणां मृगैरेवेति । तेषामन्तैरेवैकवचनो द्वन्द्वः नान्यैः स च विभाषेति नियम इति भावस्तदाहान्यैस्त्विति । एवमिति । पूर्वापरशब्दयोरधरोत्तरयोः परस्परमेव समाहारद्वन्द्वोन्यैस्त्वितरेतरयोग एवेत्यर्थः ॥ विप्रतिषिद्धञ्चा ॥ विरोधोत्र सहानवस्थानलक्षणः । अद्रव्याणान्तस्यैव संभवात् । अधिकरणं द्रव्यम् । चो विभाषानुकर्षणार्थः । अद्रव्येति । अद्रव्यवाचिनाञ्चेद्विरुद्धार्थानामेवेति विपरीतनियमस्तु न । व्याख्यानात् । इतरेतरयोग एवेति । विरुद्धार्थानाञ्चेदेकवचनद्वन्द्वो ऽद्रव्यवाचिनामेव स च वेति वचनव्यक्तेरिति भावः । भवत्येवेति । विप्रतिषिद्धग्रहणाभावे तु स न स्यात्सामान्यतो ऽद्रव्यवाचिनामेवेति नियमादिति भावः । सूत्रोदाहरणन्तु शीतोष्णं शीतोष्णे सुखदुःखं सुखदुःखे इत्यादि । विप्रतिषिद्धमेतावन्मात्रोक्तौ शीतोष्णे जले इत्यत्रोभयापत्तिः । नन्दकपाञ्चजन्यं नन्दकपाञ्चजन्यावित्यादौ समाहारद्वन्द्वानापत्तिश्चेति बोध्यम् ॥ न दधिपय ॥ नियमप्रक्रमेपि नानेन नियमस्यैव निषेधः । ब्रह्मप्रजापत्यादिषु नियमाप्राप्तेः । तत्साहचर्यात्प्रकरणाच्च चार्थे द्वन्द्व इति सूत्रविहितसमाहारद्वन्द्वस्य नियममात्रस्य च निषेधः । गणे द्विवचनान्तानामेव पाठाच्च । तदाह नैकवदिति । यद्यदेकवचनद्वन्द्वविषयशास्त्रं विधायकं नियामकं वा प्राप्नोति तन्नेत्यर्थः । तेन दधिपयसी इत्यादौ जातिरप्राणिनामित्यपि नेति बोध्यम् ॥ अधिकरणे ॥ नियमो नेति । पूर्वसूत्रवत्सामान्यतोन्यनिषेधे मानाभावान्नियमप्रकरणाच्च नियमस्यैव निषेधः । किं च वर्त्तिपदार्थस्य संख्याविशेषे बोधनीये सापेक्षत्वेनासामर्थ्यात्समाहारद्वन्द्वप्राप्तेरेवाभावेन तन्निषेधो व्यर्थः । प्रधानस्य सापेक्षत्वादितरेतरयोगस्तु भवत्येव मम तु प्राण्यङ्गादिनियमादितरेतरयोगस्याप्राप्तौ तद्विधानेन चारितार्थ्यं स्पष्टमेवेति भावः । परे तु इतरेतरयोगेप्युद्भूतावयवभेदसमूहस्यैव भाष्यरीत्या समासार्थत्वेन तस्यापि सापेक्षत्वादप्राप्तिः । किंच दन्तोष्ठद्वारकसंबन्धेन दशत्वस्य समाहारे ऽन्वयविवक्षायामस्त्येव समाहारे द्वन्द्वप्राप्तिः । किंच समाहारद्वन्द्वस्याप्राप्तौ द्वन्द्वश्चेत्यस्याप्यत्राप्राप्तिरिति कस्यानेन निषेधः । नियमेन तत्प्राप्तिविषये एवेतरेतरयोगनिषेधनात् । तस्मात्पूर्व-

सूत्रवदयमप्युभयोर्निषेधः । अत एवोत्तरसूत्रविषये समाहारद्वन्द्वसिद्धिः । सामर्थ्येनासामर्थ्ये समासकल्पनापेक्षयैवमन्वयकल्पनस्यैवौचित्यात् मूले नियमो न स्यादित्यस्य सोपि नेत्यर्थः । समाहारे साक्षाद्दशत्वान्वये तु दन्तौष्ठानीति । समीपइत्यस्य सामीप्येन परिच्छेदे लक्षणानुवृत्तस्य च षष्ठ्या विपरिणाम इत्याह । त्वस्य सामीप्येनेति । उपदशमिति । नवैकादश दन्तोष्ठसमूह इत्यर्थः । तत्र समाहारद्वन्द्वे समानलिङ्गवचनत्वादव्ययीभावस्यैवानुप्रयोगः । अत एवोपदशन्दन्तोष्ठस्येति सिद्धम् । तत्र सामानाधिकरण्यन्तु समीपसमीपिनोरभेदविवक्षया बोद्ध्यम् । इतरेतरयोगे तु बहुव्रीहेरेवानुप्रयोगस्तस्य समीपिप्रधानत्वात्समानलिङ्गवचनत्वाच्चेति बोद्ध्यम् ॥ आनङ्ऋतो ॥ विद्यायोनीत्यतो विद्यायोनीत्याद्यनुवर्त्तते । ऋदन्तानामिति । ऋत इत्यनुवर्त्तमाने पुनर्ऋत इत्युक्तिः सर्वावयवद्वारा द्वन्द्वविशेषणार्था तेन पितृपितामहादौ नानङ् । नकारोच्चारणमुरण्पर व्यावृत्त्यर्थम् । अत्र ऋकारस्य निर्दिश्यमानत्वेऽपि ङकारो मित्रावरुणावित्यादौ देवताद्वन्द्वविषये ऽन्त्यादेशार्थः । उत्तरपदइति चाधिकारः । होतेति । एषां विद्याद्वारकैकयज्ञर्त्विक्कृतः संबन्धः । उत्तरपदाक्षिप्तपूर्वपदशब्दः केवलयौगिक इति ध्वनयन्नाह । होतृपोत्रिति । मातेति । अत्र योनिकृतः । मण्डूकेति । अत एव मद्ये न संबन्धः । वाक्यभेदेन च संबन्धः । तदन्तस्य पुत्रे आनङित्यर्थः । तेन तातपुत्रावित्यादौ न । इत्यादाविति । स्कन्दविशाखावित्यादि आदिशब्दार्थः ॥ अग्नेः स्तुत् ॥ सात्पदाद्योरित्यस्यापवादः ॥ इद्वृद्धौ ॥ देवताद्वन्द्वे वृद्धिरूपोत्तरपदासंभवात् । सौत्रलोपेन लुप्तमत्वन्तं वृद्धिपदमित्याह । वृद्धिमतीति । नन्वन्तरङ्गत्वात्पूर्वमानङीत्वे स्यातामत आहालौकिके इति । तद्धितालौकिकइत्यर्थः । परिनिष्ठितात्तद्धितोत्पत्तेः । वृद्धिमत्त्वञ्चोत्तरपदस्य भाव्येव निमित्तमित्यर्थः । अग्नावैष्णवमिति । इत्वाभावादानङ् । द्यावा क्षामेति । द्यावा क्षामा रुक्मो अन्तर्विभातीत्यत्रत्यमिदम् । तत्र द्वन्द्वे द्यावादेशे षष्ठ्याः सुपां सुलुगिति डादेशः । देवताद्वन्द्वे चेति पूर्वोत्तरपदयोः प्रकृतिस्वर इति वेदभाष्ये स्पष्टम् । द्यावाचिदस्मै इति । द्यावाचिदस्मै पृथिवी संनमेते इत्यत्रत्यमिदम् । चिदस्मै इत्यनेन व्यवधानात्समासाभावनिर्णयः । इतरेतरापेक्षया द्विवचनम् । प्रतिमित्रयोर्वरुणयोरितिवत् । अत एव पदकाले पृथिवी इतीति प्रगृह्यं पठन्ति । वा छन्दसीति पूर्वसवर्णः अन्ये त्वत्र द्योशब्दस्यैव द्विवचने णित्वे सुपां सुलुगित्याकार इत्याहुः ॥ मातरपितरौ ॥ एकशेषस्य वैकल्पिकत्वाद् द्वन्द्वः । अत्र पूर्वपदे ऽनङादेशो निपात्यते । उत्तरपदाधिकारात् । उत्तरत्र तु ऋतोङीति सिद्धम् । पदद्वयेपि तन्निपातनमित्यन्ये ॥ इति द्वन्द्वः ॥

अपवादसङ्गत्याहाथेति । युवप्रत्ययमात्रेति । गोत्रयुवत्वप्रतीतिमात्रेत्यर्थः । तेन गर्गाश्च गार्ग्यायणाश्च गर्गा इति सिद्ध्यति । मात्रपदेन प्रत्ययार्थकुत्सनादेः प्रकृत्यर्थस्य च प्रतीतेर्व्यवच्छेदः । तदाह । कृत्स्नमिति । एतदेवकारलभ्यन्तत्कृत एव विशेषश्चेत्तु तत्कृतातिरिक्त इत्यर्थात् । तल्लक्षणंक्रिमिति । तल्लक्षण एवेति क्रिमित्यर्थः । भागवत्तिके कुत्सने ठक् । कृत्स्नंक्रिमिति । एवकारेण प्रकृत्यर्थस्यापि व्यावृत्तिः क्रिमर्थेति प्रश्नः । तल्लक्षणविशेष इत्येव सामर्थ्यात्तल्लक्षण एवेति लब्धे चेदेवग्रहणं स्पष्टार्थम् । स्त्रीपुम् । स्त्रीत्वस्य वैरूप्यकारणस्याधिक्यात्पूर्वेणाप्राप्तौ वचनम् । तल्लक्षणश्चेदित्यादीहापि संबध्यते । तेन भागवित्तिश्च भागवित्तिकश्च गार्गी च वात्स्यायनश्चेत्यादौ न । अर्थे पुंवत्त्वातिदेशे फलमाह । अनुवर्त्तमाने इति । तद्राजस्य बहुष्वित्यतः ॥ पुमान् स्त्रिया ॥ अत्र विभक्तावित्यनुवर्त्तते । विभक्तौ तद्भिन्नकृतविशेषविरहश्चेदित्यर्थः । अत एव जननीपरिच्छेत्तृवाचकमातृशब्दयोर्नैकशेषः । हंसाविति । स्त्रीव्यक्तेरपि हंसत्वेन स्त्रीत्वानालिङ्गिताया एव बोधेन नात्र ङीप् । ब्राह्मणीवत्सश्च ब्राह्मणवत्सा चेत्यादौ तु नेदम् । प्रधाने कार्यसंप्रत्ययात्प्रधानस्त्रीमात्रकृतविशेषे एवैतत्प्रवृत्तेः ॥ नपुंसकम् ॥ अन्यतरस्यामित्येकवच्चेत्यनेनैव संबद्ध्यते आनन्तर्यात् त्वर्थचशब्दाच्चेत्याह । तच्च वेति । अनपुंसकेनेति किम् । शुक्लश्च शुक्लञ्च शुक्ले । अस्य ग्रहणमस्यैवैकवद्भाव इति बोधनार्थम् । तेनान्यसूत्राणां समाहारद्वन्द्वविषये न प्रवृत्तिः । घटघटमित्यादि त्वनभिधानात्र । एवञ्चानभिधानस्यावश्यकत्वेन द्वन्द्वमात्रस्यैकशेषविषये तदाश्रित्यैकशब्दस्यानेकार्थत्वञ्चाश्रित्यैकशेषप्रकरणं भाष्ये प्रत्याख्यातमन्यथैकशेषारम्भे ऽपि गार्ग्यावित्यतो गार्ग्यगार्ग्यायणबोधो न स्यात्तस्य तदर्थकत्वाभावादिति दिक् । गुणे शुक्लादिपदानां पुंस्त्वाद्गुणिपरताप्रकटनाय पटादिपदोपादानम् । एवञ्च गुणपरतायां नीलो रूपमित्याद्येव प्रयोगः । गुणिपरतायान्तु विशेष्यनिघ्नता गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यमरोक्तेस्तद्वतीत्यस्य द्रव्ये विशेषणतायाः इत्यर्थ इति प्रामाणिकाः । तल्लक्षण एवेति किम् । हिमहिमान्यौ । अत्र महत्त्वादिकृतोऽपि विशेषः । मातापितराविति । पितुर्दशगुणं माता गौरवेणातिरिच्यते इत्युक्तेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः । ऋत इत्यानङ् । श्वश्वा अपि मातृतुल्यत्वोक्तेरभ्यर्हितत्वम् । त्यदादीनि सर्वैः ॥ त्यदादिभिरन्यैश्चेत्यर्थः । यत्परमिति । गणीयमत्र परत्वम् । अत्र द्विपर्यन्तानामिति नियमो नास्ति । अहञ्च भवांश्चावामिति भाष्योक्तेः । पुंनपुंसकत इति । स्त्रीशेषेऽपीति भावः । पुंनपुंसकयोस्त्वति । तयोः सहोक्तौ पुंनपुंसकत इति वचने परत्वान्नपुंसकं शिष्यतइत्यर्थः । इदं कैयटादौ स्पष्टम् ।

अत एव नपुंसकमिति सूत्रे भाष्ये शुक्लं च वस्त्रं शुक्लश्च कम्बलस्तदिदं शुक्लन्ते इमे शुक्ले इत्युदाहृतं सङ्गच्छते त्यदाद्यन्तर्गतयोरपि एकद्व्योर्नैकशेषोऽनभिधानात् । ध्वनितञ्चेदं सरूपसूत्रे भाष्ये । द्वन्द्वोऽप्येतयोर्न । एकादिनवान्तानां द्वन्द्वाभावस्य चार्थे इति सूत्रशेषे भाष्ये ध्वनितत्वात् । एवञ्च एकद्विकरणे हेतू महापातकपञ्चके । तृणवन्मन्यते कोपकामौ यः पञ्चकारयन् इति नैषधपद्ये एकद्विकरणे इत्यसाध्वेव । अनेकपद षष्ठीतत्पुरुषोऽप्यसाधुरेवेति दिक् । अस्यापवादमाह । द्वन्द्वेति । कुक्कुटमयूर्याविति । द्वन्द्वतत्पुरुषयोः परपदलिङ्गत्वेन तदधीनतैव विशेषणस्येति बोध्यम् । तत्पुरुषेऽर्धपिप्पल्यस्ता इत्यत्र विशेषो बोध्यः । तच्चितोर्योग इत्यादौ तदित्यव्ययम् ॥ ग्राम्यप ॥ अत्रानपुंसके वेत्यनुवर्त्तते । तदाह । पुमानिति । एतौ गावाविति । सङ्घशब्दश्च बहूनां समुदाये शक्त इति भावः । वत्सा इति । अपत्यमात्रवाचिनो वत्सशब्दस्य प्रकरणादिना तरुणपरत्वे इदं बोध्यम् । बर्करा इमे इति प्रत्युदाहरणं बर्करस्तरुणः पशुः । एकशेषे कृतइति । अन्तरङ्गत्वाद्विभक्त्युत्पत्तेः प्रागित्यर्थः । तेनेति । द्वन्द्वत्वसमासत्वयोरभावेनेत्यर्थः । एकवदिति । द्वन्द्वश्च प्राणीत्येतत्कृतो नियम इत्यर्थः । पन्थानाविति । इतोदिति सूत्रन्तु पन्था इत्यत्र मथिन्नादौ च चरितार्थम् । कृतद्वन्द्वानामेकशेषे हि द्वन्द्वालौकिकविग्रहवाक्ये ऋक्पूरित्यनेन तत्प्राप्तिर्दुर्वारैवञ्च वैरूप्यादेकशेषो न स्यात् । एकं पथीति अपरं पथेति न चोत्तरमनर्थकम् । विशिष्टरूपोपादानाभावेन सरूपसूत्रेऽर्थवत्परिभाषाया अप्रवृत्तेः । एवञ्चैतद्भाष्ययोजनार्थमुत्तरपदावयवत्वस्वीकारः कैयटोक्तो विफल एव । किञ्चैवं विरूपाणामपीत्येकशेषस्य दुर्वारत्वाद्भाष्यासङ्गतिः । मम तूत्तरखण्डस्यानर्थकत्वान्न तत्प्राप्तिरिति भावः ॥ इत्येकशेषः ॥

प्रसङ्गादाह कृदिति । परार्थाभिधाने करणेल्युट् सामान्ये नपुंसकम् । परशब्दस्तदर्थपरस्तेन युक्तोऽर्थः परार्थः । एवञ्च परस्यार्थेन संबद्धो यः स्वार्थस्तस्याभिधाभिर्योपस्थितिस्तत्करणमित्यर्थः । इतरार्थान्वितस्वार्थस्यैवोपस्थितिर्यद्घटकैरिति यावत् । यद्वा परेण प्रधानशब्देन शब्दान्तरार्थस्याभिधानं विशेषणत्वेन ग्रहणं तत्करणमित्यर्थः । यत्रत्यप्रधानपदेनेतरविशेषणकस्वार्थस्यैवोपस्थितिरिति यावत् । मञ्जूषायाञ्चेदं विस्तरेण निरूपितम् । यद्वा परेणाप्रधानशब्देन शब्दान्तरार्थस्य विशेषत्वेन ग्रहणमित्यर्थः सा चावयवशक्तिसहकृतसमुदायशक्तिसाध्या अवयवशक्तिर्लोकसिद्धा शास्त्रकल्पिता च अन्त्या तद्धितादिप्रत्यये समुदायस्य वृत्त्याश्रयत्वेनैषामौपचारिको वृत्तिव्यवहारः प्राचाम् । सा च समर्थः पदविधिरिति परिभाषाबललभ्या तत्र समासतद्धि-

तयोः पदोद्देश्यकविधित्वस्य स्पष्टत्वेन मानान्तरसिद्धैकार्थीभावस्य च सत्त्वेन परिभाषाप्रवृत्तिः स्पष्टैव। कृतामप्युपपदनिमित्तकानां पदविधित्वं स्पष्टमेव । तत्साहचर्याच्चान्यत्रापि । अत एव पाचकादीनां क्रियाकारकभावसंबन्धप्रवृत्तिनिमित्तकत्वमूलकः क्रियाशब्दत्वव्यवहारः कृत्कृदन्तः तद्धितशब्दस्तद्घटितसमुदायपरो ऽतएव बहुकचोर्न दोषः । एकशेषेपि द्वन्द्व इत्यनुवृत्त्या तद्विषये एतद्विधानेनैकार्थीभाव आवश्यकः । चार्थान्तर्भावेण बोधार्थ इत्यभिमानः वस्तुत एकशेषे परार्थान्वितस्वार्थोपस्थापकत्वाभावाद्वृत्तित्वे न मानं शिष्टपदेन स्ववृत्त्यैव तत्तत्समूहरूपार्थोपस्थानस्य भाष्ये स्पष्टमुक्तत्वात् । अत एव समर्थसूत्रस्याधिकारत्वपक्षे एकशेषासङ्ग्रहो भाष्ये नोक्त इति बोद्धुम् । सनादिषु क्यजादेः पदविधित्वं स्पष्टमेव । सनि स्वभावत एव वृत्त्यवृत्त्योः सिद्धत्वाद्वा वचनं न कार्यमिति तत्प्रत्याख्यानपरभाष्यप्रामाण्यात्सः । प्रातिपदिकप्रकृतिकणिच्यपि सः । मुण्डयति माणवकमित्यत्र सापेक्षत्वेनासामर्थ्याद्वृत्त्या न भाव्यमित्याशङ्क्य मैापरमुण्डमण्डशब्दात्प्रत्ययः तस्य च साध्यत्वेन प्रतीयमानतया क्रियात्वात्कारकैर्नित्यसाकाङ्क्षत्वान्न दोष इति भाष्यात् सर्वमेव व्याकरणं सूत्रयतीत्याद्युपपद्यते । सूत्रशब्दस्य सूत्रणक्रियावचनत्वेन व्याकरणे तन्निरूपितकर्मत्वोपजननात् । षष्ठी तु न । सूत्रेण क्रियाया ण्यन्तार्थत्वे ऽपि कृत्प्रकृत्यर्थत्वाभावात् । क्रियापरत्वञ्चैषां वृत्तिविषयमेव । मैाण्ड्यार्थकादिच्छाक्यच् तु नानभिधानात् । वृत्त्यर्थबोधकमिति । "आख्याततद्धितान्तस्य यत्किंचिदुपदर्शकम् । गुणप्रधानभावस्य तत्र दृष्टो विपर्यय" इति न्यायेन सर्वत्र विग्रहे वृत्तिसमान एव विशेष्यविशेषणभाव इति भावः । हरिकारिकायां तत्रेत्यस्याख्याते इत्यर्थः स्वरसतः प्रतीयते स्पष्टश्चायमर्थस्तद्धितीति सूत्रे समर्थसूत्रे च भाष्ये इति निरूपितं मञ्जूषायाम् । वाक्यमिति । तत्र तत्समासघटकपदानान्तत्तत्समासप्रवृत्तियोग्यविभक्त्यन्तानां पृथक्प्रयोगरूपमित्यर्थः । सञ्ज्ञाविषयसमासे वाक्येन सञ्ज्ञानवगमे ऽपि वृत्तिघटकपदज्ञापनाय समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव नित्यसमासत्वव्यवहारस्तु तस्य वाक्यस्य वृत्तिसमानार्थत्वाभावेन गैाणो । बोद्धुः लैाकिक इति शब्दतत्सदृश इत्यर्थः एतेन तदर्थोपदर्शकं न लोके प्रयुज्यते । पचतीति पाचक इत्यादेः पाककर्त्ता पाचकपदबोद्ध्य इत्यादिक्रमेणार्थादिति परास्तम् । अविग्रह इति । लैाकिकविग्रहरहित इत्यर्थः । नित्याधिकारीयसमासे समासघटकपदानां व्यपेक्षाया अभावेन लैाकिकवाक्याभावादिति भावः । एवञ्च वृत्तिवैकल्पिकत्वबोधनं वृत्तिघटकपदस्वरूपबोधनं तदर्थबोधनञ्च विग्रहप्रदर्शनफलं बोद्धुम् । अस्वपदेति । समस्यमानयावत्पदाघटित इत्यर्थः । दन्तोष्ठमिति । समाहारस्य

प्रधानत्वात् । यद्यपि इतरेतरयोगे ऽपि समूहस्यैव प्राधान्यं तथापि तत्र तस्योद्भूतावयवभेदस्यैव भानादुभयपदार्थप्रधानत्वमिति भावः । अत एव तत्र वार्त्तिपदार्थस्य नोपसर्जनत्वं तद्रूपेणैव तस्य भानादत एव द्वन्द्वे चेति सर्वनामसंज्ञानिषेधः सार्थकः । समाहारद्वन्द्वेतूपसर्जनत्वादेव तदभावः सिद्ध इति बोध्यमिति केचित् । अनुवादकमेव द्वन्द्वे चेति । अत एव कुक्कुटमयूर्याविमाविति द्वन्द्वे उपसर्जनह्रस्वत्वमाशङ्क्य द्वन्द्वे नेति वचनेन परिहृतमेवञ्चेतरेतरयोगे ऽपि बहुव्रीहिलक्षणातिव्याप्तिरित्यन्ये । अनेकेति । त्र्यादीत्यर्थः । क्वचित् । द्व्यन्हजातादौ । समासविभाजकोपाधिगणनावश्यकी चेत्तत्राह । सुपां सुपेति । सुपामिति सर्वत्र संबध्यते ऽयतिङामिति यावत् । अत्र सुपान्तिङेत्यनेनैव तिङा सुबन्तेनेत्यस्य सङ्ग्रहात्पञ्चविधत्वमेव युक्तम् । उभयत्रापि सुप्तिङ्घटितत्वस्याविशिष्टत्वादिति चिन्त्यम् । यद्वा ऽऽद्येन सुबन्तपूर्वपदकस्य ग्रहणमन्त्येन तिङन्तपूर्वपदस्येति भेदः । आद्यास्तिस्रो वृत्तय इमा अभिधानलक्षणाः, अभिधानलक्षणाः कृत्तद्धितसमासा इत्यकर्त्तरि चेति सूत्रे भाष्योक्तेः अभिधानञ्च शिष्टानां ततोर्थबोधरूपं तद्विपरीतमनभिधानमिति तदस्य तदस्मिन्त्स्यादितीति सूत्रे भाष्ये स्पष्टम् ॥ इति सर्वसमासशेषः ॥

अ इति । लुप्तविभक्तिकः सौत्रो निर्देश इति भावः । अक्षे या धूरिति । अक्षसंबन्धिनी या धूरित्यर्थः संबन्धिनोधिकरणत्वविवक्षया सप्तमी सूत्रे । अर्धर्च इति । अर्धर्चा इति पुंस्त्वम् । अद्ध्येतर्यवेति । अद्ध्येतृत्वयोग्यतावतीत्यर्थः अद्ध्ययनञ्चोपस्थितत्वादृक्संबन्ध्येव । अनृक् सामेति । पक्षे कबपि अनृक्कमित्यादि । अन्तरीपमित्यादेरन्तर्गताः प्रतिकूलाः सङ्गताश्चापोस्मिन्निति विग्रहः । द्व्यन्तरु ॥ उपसर्गग्रहणञ्च प्राद्युपलक्षणम् । समा आप इति । एवञ्चाप्रादित्वान्नेत्वमिति भावः । स्वविति । न पूजनादिति समासान्तनिषेधः कृष्णोदक्पाण्डुति संख्याया इति चाच्प्रत्यन्ववेत्यत्राजिति योगविभागसिद्धाभियुक्तोक्तिरिति बोध्यम् । संख्याया इत्येतच्चदीभिश्चेति विहितसमास एवेत्याहुः । भाष्ये योगविभागस्यादर्शनात् पृषोदरादित्वेनेदं सिद्धमिति कश्चित् । करणल्युडन्तदर्शनशब्दो योगरूढिभ्यां चक्षुःपरस्तत्पर्युदासे ऽक्षिपदन्तत्सदृशपरमित्याशयेनाह गवामक्षीवेति । धेन्वनडुहाविति । समाहारे तु द्वन्द्वाच्चुदेति टचैव सिद्धमिति भावः । द्वन्द्वो निपात्यते इति । विरूपाणामपीत्येकशेषं बाधित्वेति भावः । सरजसमिति । अव्ययीभावे चेति सहस्य सः । तत्पुरुष एवेति । उत्तरपदार्थप्रधान इत्यादि । निःश्रेयानिति । बहुव्रीहिरीयसश्चेति निषेधान्न कप् । निष्क्रान्तः श्रेयस इति तत्पुरुषो वा । पुरुषस्येति । षष्ठीसमासएवेदम् । शुन इति । अव्ययीभावए-

वेदम् । उत्तरपदार्थप्रशंसामिति कर्मधारयः । श्रेयःशब्दोऽपि प्रशंसार्थ एव । आशीर्विषयमिति षष्ठीतत्पुरुषः विषयशब्दो नित्यपुल्लिङ्गः एवञ्च श्वसशब्द उत्तरपदार्थप्रशंसाया आशीर्विषयत्वद्योतक इति फलितं, एतच्चैतद्वृत्तिविषयमेव । एवञ्चाशीर्लिङन्तप्रयोगएवास्य साधुत्वमिति वृत्तिः । सप्तमीस्यादिति सप्तम्यर्थवृत्तेरित्यर्थः । अनुगवमिति । गोदैर्घ्यसदृशदैर्घ्यवद्यानमिति बोधः । द्विस्तावा ॥ द्विरावृत्ता तावतीत्यर्थे ऽसुच् । आवृत्तिक्रियाजन्मगणने सुच् निपातनफलमाह । यावतीति । यत्र सकलाङ्गोपदेशः सा प्रकृतिः आवृत्तिक्रियान्तर्भावेण पूर्वपदस्य वृत्तिः द्विगुणेति तु फलितार्थकथनम्, प्रत्युदाहरणे द्विस्तावतीति भिन्ने पदे ॥ उपसर्गाद ॥ इदं प्राद्युपलक्षणम् । किंराज इति । किमत्र प्रश्ने । षष्ठीसमासः कर्मधारयो वा ॥ नञस्त ॥ नञ्पूर्वपदकादित्यर्थः । अपथमिति । नस्तद्धित इति टिलोपः पथःसंख्याव्ययादेरिति नपुंसकत्वम् । अपथं वर्त्तत इति । अर्थाभावेऽव्ययीभावः ऋक्पूरिति समासान्तः नञाव्ययीभावं स्वीकुर्वतां मतमिदम् ॥ इति साधारणाः समासान्ताः ॥

उत्तरपदे इति । उत्तरपदशब्दः समासचरमावयवे रूढः । पदे इत्येव सिद्धे उत्तरग्रहणात् अयं न विधिः पञ्चम्यास्तोकादिभ्य इत्यारभ्यात्तदाहाधिकार इति । स्तोकान्मुक्त इति । द्विवचनान्तादिभिर्न समासो ऽनभिधानात् । समासफलमैकपद्यादि । प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रं, अप्रगीतमन्त्रसाध्यन्तच्छस्त्रं सुप्सुपेति समासस्तदाह शस्त्राणीति । ओजसेति । कर्त्तृकरणे इति समासः । पुंसानुज इति । यस्य पुमानग्रजः स पुंसा हेतुना ऽनुज इत्यर्थः । जनुषा जन्मना । पूरणे इति । स्वरितत्वबलात् तदधिकारविहितप्रत्ययग्रहणमत्र यद्यप्युत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणं हृदयस्य हृल्लेखेत्यत्र ज्ञापयिष्यते तथापीहात्मन् शब्दात्पूरणे प्रत्ययासंभवेन तदन्तग्रहणमित्याह पूरणप्रत्ययान्त इति । उदाहरणे हेतुत्वात्प्रकृत्यादित्वाद्वा तृतीया सुप्सुपेति समासः । यथाश्रुतभाष्यस्वरसस्तु आत्मनश्च पूरणे इत्यस्य वार्त्तिकत्वे । एवं हि भाष्यं, आज्ञायनि च ॥ आत्मनश्च पूरणे आत्मनश्चपूरणे उपसंख्यानं कर्त्तव्यमिति वैयाकरणाख्यायामित्यत्र तु वार्त्तिकस्यस्यैवात्मन इत्यस्यानुवृत्तिर्बाध्या काम्ये रोरित्यादेरिव, यद्वा परस्य वेत्यनेनैकं सूत्रञ्चेन परप्रतिद्वन्द्वितयात्मशब्दस्य ग्रहणमिति तदाशयः । योगविभागादिति । सुप्सुपेति समास इत्युचितम् ॥ गवि युधिस्थिरशब्द उणादिकिरप्रत्ययान्तः सात्पदाद्योरिति निषेधे प्राप्ते इदमन्तरङ्गानपीति न्यायेनावादितः पूर्वं लुक्प्राप्त्या हलदन्तादित्यस्याप्राप्तेराह वचनादेवेति । हृदिस्पृगिति । अलुग्विधे ज्ञापकात्कर्मणि सप्तमीति भाष्यं, अमूर्धमस्तकादित्यनेन तु न सिद्धिस्तत्र सञ्ज्ञायामित्यनुवृत्तेः । काट्-

तान्नि ॥ नामग्रहणं स्पष्टार्थं सञ्ज्ञायामित्यनुवृत्त्यैव सिद्धेः। कारनाम्न्येवेति प्राग्देशनाम्नि चेत्कारनाम्न्येवेतीदं वृत्त्यनुसारेण, भाष्ये त्वयं नियमो नोक्तः। अभ्यर्हितपश्वादेः सञ्ज्ञात्वमेवनेति कारनाम्नीति स्पष्टार्थमिति तदाशयः। अविशब्दात्संघाते कटच्। उरणो मेषः। नद्यामिति। नद्युत्तारणे तात्कालिको देहः कार इत्यर्थः। वणिक्पशुपालकर्षकेभ्यो राजग्राह्यो भागः करः स एव कार हलादावित्यादिग्रहणं स्पष्टार्थम्। तत्र यूथपश्वादय उदग्देशे काराः हले द्विपदिकादयो ऽविकटोरणश्च प्राग्देशे। प्राचामेवेति नियमो ऽपि कैयटाद्यनुसारेण। भाष्ये तु पूर्वेण नित्यं प्राप्ते कारनाम्नि प्रचामिति विकल्पार्थत्वेन मुकुटेकार्षापणं मुकुटकार्षापणमित्याद्युभयम्। हलादाविति योगविभागेन नियमार्थम् तेनाजादौ लुगेवेति स्थितम्। कारनाम्नि वावचनार्थं चेदनजादावतिप्रसङ्गः नैषदोषः योगविभागात्सिद्धम्। कारनाम्नि च प्राचाम्, ततो हलादौ इदमिदानीं किमर्थं नियमार्थम्। हलादावेव कारनाम्नीति अविकटोरणा इति हि भाष्यम् ॥ बन्धे च ॥ उत्तरसूत्रस्थतत्पुरुषपदमिहापकृष्यते बन्धइति घञन्तं, अन्यत्र नेन्सिद्धेति निषेधः स्पष्टं चेदं सर्वं भाष्ये बहुलग्रहणेनैव सिद्धे हलदन्तादित्यनुवृत्तिर्व्यर्थेति ध्वनयन्नाह। क्वचिन्न कुरुचर इति। अत एव गोपुचरः सिद्धः ॥ विभाषा वर्षे ॥ लिङ्गविशिष्टग्रहणाद्वर्षासुजो ऽपि ॥ घकाल ॥ घशब्देन तरतमौ। कालेति स्वरूपग्रहणं तनः सतुट्कस्त्यप्तुलौ। पूर्वाह्णेतरे इति प्रकृत्यर्थप्रकर्षविवक्षया द्रव्यप्रकर्षसत्त्वादाम्न कृतः। सायंचिरमिति सूत्रभाष्ये प्राह्णप्रगयोरेदन्तत्वनिपातनं व्यर्थमलुका सिद्धेरित्याशङ्क्य यदा सप्तम्यन्त्या विभक्तिः प्राह्णः सोढो यस्येत्यर्थं तदित्युक्तेर्विभाषेत्युक्तिर्वृत्त्यनुरोधेनेति बोध्यम्। विभाषा पूर्वाह्णेति सूत्रे दोषातनमित्यादावव्ययादिति लुको ऽनेनालुकमाशङ्क्य समानकालस्य प्रत्ययनिमित्तलुक एवायमलुक् अव्ययादिति त्वन्तरङ्ग इति समाधानपरभाष्यादत्र हलदन्तादित्यस्यानुवृत्तिः। अतिप्रसङ्गस्त्वनभिधानाचेति बोध्यम् ॥ अपो योनि ॥ यन्मतुष्विति। अयं पाठो हरदत्तानुसारेण मतिष्विति युक्तः पाठः। एकवच्चेत्यस्यातिप्रसङ्गत्याजेनाप्सुचरादिवदस्य भाष्ये उपन्यासात् न ह्यप्सुमन्तावित्यत्र तस्य प्रसङ्गोस्ति शब्दपरतया तस्यैकत्वमात्रार्थत्वात्। किं तु मतुष्विति पाठे फलं चिन्त्यम्। अस्य वामीयमित्यादाविव लुकोप्राप्तेः। चक्रबद्ध इति। सप्तम्यन्तेन निष्ठान्तस्य साधनं कृतेति समासः ॥ स्वे च ॥ अयं निषेधो ऽनन्तरस्येति न्यायात्तत्पुरुषे कृतीत्यस्यैव। अत एवामूर्द्धमस्तकादित्यलुकि कण्ठेस्थः कालो यस्येत्यनेकमिति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते। पश्यतोहर इति। पश्यन्तमनादृत्येत्यर्थः षष्ठीचानादरइति षष्ठी। देवानामिति। मूर्खाणामित्यर्थः मूर्खश्च मूर्खप्रिय एवेत्यजेर्वीत्यत्र

कैयटः । निन्दायामिति । आक्रोशइत्यनुवृत्त्या लब्धमिदं स्पष्टञ्चेदमानङ् ऋत इत्यत्र भाष्ये एवञ्चारम्भसामर्थ्यादेव विकल्पे सिद्धे ऽन्यतरस्यामिति स्पष्टार्थम् । पितुः पुत्र इति । प्रख्यातात्पितुरुत्पन्न इत्यर्थः । तत्पूर्वेति । विद्यायोनिसंबन्धवाचकान्यतरपूर्वोत्तरपदक इत्यर्थस्तेन होतुः पुत्र इत्यादि सिद्धम् । मातुःपितुर्भ्यामिति रेफान्तानुकरणं विसर्गादावप्येकदेशविकृतन्यायेन तत्त्वम् ॥ इत्यलुक्समासः ॥

घरूप ॥ घशब्देन तरतमौ । प्रत्ययेष्विति । लिङ्ग्रहणेनोत्तरपदाधिकारे क्वचित्प्रत्ययग्रहणे तदन्ताग्रहणज्ञापनादिति भावः । ननु बिम्बी बदरी आमलक्यादयो भाषितपुंस्का इति नपदान्तसूत्रभाष्याल्लभ्यतइत्यस्वरसादाह कुवलीति ॥ नद्याः शे ॥ भाषितपुंस्कादितीह न संबध्यते तदाह स्त्रीतरेति । उगितः परेति । विहितेति शेषः । तेनेपुमतोऽपत्यं स्त्री ऐषुमती ततस्तरे ऐषुमतितरेत्यत्र नित्यं ह्रस्व इति युवोरनाकावित्यत्र भाष्ये स्पष्टम् । पञ्चमीसमासेनाचः परस्मिन्निति स्थानिवत्त्वेन व्यवधानं तु न । बहिर्भूततरनिमित्तस्य ह्रस्वस्य स्थानिवत्सूत्रदृष्ट्या सिद्धत्वेन तत्र तदप्रवृत्तेः । निर्मूलमिति । न हि स्वयमप्रवर्त्तमानो ऽपि ह्रस्वः पुंवत्त्वं बाधतइति न्याय्यमिति भावः । शमिनीतरेति घिनुणसूत्रभाष्यप्रयोगे तु तात्कालिकानां रूढिशब्दतया सञ्ज्ञाशब्दतया सञ्ज्ञापूरण्योश्चेति निषेधान्न दोषः । ज्ञापकमिति । उत्तरपदं विशेष्यं कृत्वा तदन्तविधिर्नेत्यर्थः । एवञ्च तदंशउत्तरपदे इत्यस्यासंबन्ध इति बोध्यम् । हृच्छब्देन सिद्धे हृदयलेख इत्यादिनिवृत्त्यर्थमिदम् । सौहार्द्दमिति । ब्राह्मणादित्वात् ष्यञ् हृद्भगसिन्ध्वन्तइत्युत्तरपदवृद्धिः । प्रपञ्चार्थमिति । प्रयोगद्वयमेष्वेवान्यत्र हृदयशब्दप्रयोग एवेति व्यवस्थार्थमिति भावः । पादस्य पदा ॥ उत्तरसूत्रे पद्ग्रहणात्पदेत्यदन्तं लुप्तविभक्तिकं तदाहादन्त इति । पादशब्दस्य स्वाङ्गशिटामित्याद्युदात्तत्वेप्ययमन्तोदात्तो निपातनात् । पद्या इति । विध्यत्यधनुषेति यत् । पाद्ये पादार्घाभ्याञ्चेति यत् । पादस्येत्यत्र पादशब्दः प्राण्यङ्गवाच्येव व्याख्यानात् । इके इति । पर्पादिषु पादः पच्चेत्यनार्षम् । पत्काषीति । सुप्यजाताविति णिनिः । पद्धतौ कर्मणि क्तिन् ॥ ऋचः शे ॥ अत्र चतुर्थांशवाचिपादग्रहणम् ॥ उदकस्यो ॥ प्रसन्नोदं सर इति त्वसाध्वेवोदकपर्यायोदशब्दाङ्गीकारे एकहलादावित्यस्य वैयर्थ्यम् ॥ समुद्र त्विति । सञ्ज्ञात्वादिति भावः ॥ एकहला ॥ सञ्ज्ञायान्तु पूर्वविप्रतिषेधेन नित्यमेव । एकशब्दो ऽसहायवाची सहायश्च तुल्यजातीयो हलेव व्यवच्छेद्यतइति बोध्यं प्रसिद्धत्वादेकशब्दः संख्यावाच्येव सर्वस्यापि शब्दस्यैकहलादित्वात्सामर्थ्यैनैकं हलमुच्चार्य यत्राजुच्चार्यते तत्रैवैतत्प्रवृत्तिरिति भाष्ये स्पष्टं असहायवाची तु आकिनिज्मात्र-

विषय इति तद्भावः । पूरयितव्यं पूरणार्हम् । शुक्लीभाव इति । ऊर्यादिच्वीति निपातत्वे ऽव्ययत्वम् । उवङ्भावित्वान्निषेधे प्राप्ते आह अभ्रू इति ॥ एकत ॥ एकशब्दान्त्यस्य ह्रस्व इत्यर्थेन पुंनपुंसकयोर्विशेषाभावादाह एकस्या इति । रेवतिपुत्र इति सञ्ज्ञा । छन्दस्याहाजक्षीरमिति । अजक्षीरेण जुहोतीति प्रयोगः ॥ त्वे च ॥ सञ्ज्ञाया असंभवाच्छन्दस्येवेदम् । अनुत्तरपदार्थं वचनम् ॥ ष्यङः सं ॥ अनुबन्धद्वयोच्चारणं पाशादिभ्यो यस्य ष्यञो वृद्धेदिति ष्यङश्च व्यावृत्त्यर्थम् । संप्रसारणस्य ॥ ढ्लोपइत्यतो दीर्घ इत्यनुवर्त्तते उत्तरपदइत्यधिकारः हल इत्यनेन तु नात्र दीर्घः संप्रसारणात्पूर्वस्य हलः संप्रसारणनिमित्तनिरूपिताङ्गावयवत्वाभावात् प्रत्यासत्त्या तादृशाङ्गावयवस्य तत्र ग्रहणात् । अत एव निरुतमित्यादौ न सः । कुमुदगन्धेरपत्यं स्त्रीत्यर्थे ऽणो ऽणिञोरिति ष्यङि यङश्चाप् । पूर्वान्तवत्त्वेन ष्यङन्तत्वात्संप्रसारणे पूर्वत्वे चाल्विधावपि दीर्घविधिसामर्थ्यात्स्थानिवत्त्वेन संप्रसारणत्वात् दीर्घः । ह्रस्वो नेति । इको ह्रस्व इत्यनेन प्राप्तः । परे तु ग्रामणिकुलमित्यत्रेक इति ह्रस्वस्यावकाशः ह्रस्वस्य वैकल्पिकत्वेनाभावे कारीषगन्धीपुत्र इत्यादौ संप्रसारणस्येति सावकाशं, ह्रस्वप्रसङ्गे उभयप्राप्तौ परत्वात्संप्रसारणदीर्घत्वमेवेत्यत्रैव भाष्ये स्पष्टमित्याहुः । अतिकारीषेति । अत्यादय इति समासे षष्ठीतत्पुरुषे ष्यङन्तं न पूर्वपदमिति भावः । मातजादेश इति । स च कबभावपक्ष एव । ननु नङ्कृत इति नित्यं कपः प्राप्त्या तदभावपक्षो दुर्लभो ऽत आह कब्विकल्पश्चेति । अयं मातजादेशो संबुद्धावपि कारिषगन्धीमातरिति भाष्योदाहरणात् । बहुव्रीहाविवेति । तत्रैव भाष्ये उदाहरणात् । चित्वेति । मातच इति शेषः ॥ इष्टकेषी ॥ असञ्ज्ञाच्छन्दोर्थं वचनम् । उत्तरपदाक्षिप्तं पूर्वपदं विशेष्यीकृत्य तदन्तविधिरित्याह तदन्तानामिति । इष्टकचिते साधनं कृतेति समासः ॥ कारे स ॥ अरुर्द्विषदित्यतो मुमनुवर्त्तते । सत्यंकार इति सत्यस्याशपथे वृत्तौ तु डाजेव । तत्रोपपदमिति सूत्रे च्व्यन्ते उपपदे ऽण् भवति न वेति विचारे सापेक्षत्वाच्चेति भाष्योक्त्या च्वेः प्रत्ययोत्पत्तेः पूर्वमुत्पत्तिरित्यर्थलाभेन तद्वदेव ततः पूर्वं डाचः प्राप्तेः । न हि तदा मुमः प्राप्तिरुत्तरपदपरत्वाभावात् च्व्यन्ते ऽपि समासप्रवृत्तिकालएव डाचः प्रवृत्तिरित्याहुः । धेनुंभव्येति । मयूरव्यंसकादित्वात्समासो ऽतो भव्यस्य परनिपातः । लोकं पृणतीति विग्रहे कर्मण्यण् स्यादत आह मूलेति ॥ रात्रेः ॥ अत्र प्रकरणे प्रत्ययग्रहणे तदन्तविध्यभावे ऽपि रात्रेः कृतो ऽसंभवात्कृदन्तइत्यर्थः नित्यमेवेति स्पष्टं चेदमत्र भाष्ये । रात्रिंमन्य इति । आत्ममाने इति खश्यत्र ॥ सहस्य ॥ सादेशो निपातनादुदात्त इति भाष्ये । सहयुध्वेति । सहे चेति क्वनिप्युपपदसमासः । समुहूर्त्तमित्यन्तवचनेव्ययीभावः मुहूर्त्तादिशब्दानां

कालवाचिनामेव तत्प्रतिपादके ग्रन्थे कालत्वारोपेण प्रवृत्तेरव्ययीभावे चेत्यनेन सोऽकाल इति निषेधात्। ज्योतिषमिति । ज्योतिष इदमित्यर्थः ॥ द्वितीये चानु ॥ उपाख्यं प्रत्यक्षं तद्भिन्ने अनुमेये सहायवाचिनि उत्तरपदे इत्यर्थः । अप्रधाने सहाये द्वितीयशब्द इति हरदत्तः । सराक्षसीकेति । बहुव्रीहिर्नेमृतश्चेति कप्। योगो विभज्यते इति । छान्दसमपीदमेतदर्थमेवात्रोपन्यस्तम् । विभक्ते वोपसर्जनस्येत्यतो वेत्यनुवृत्त्यां व्यवस्थितविभाषाश्रयणात् समानजातीयाद्यपीत्याहुः । योगविभागस्य भाष्यानुक्तत्वादाहाथवेति । सदृशवचनइति। अयं वृत्तिविषयएव तदाह । तेनायमस्वपदेति । तेन सहशब्देन समासे ऽयं वत्तमाग इत्यर्थः। वोपसर्जनस्येति सादेशः। अत एव विभाषोदर इति चरितार्थम्। अन्यथा कर्मधारये सोदरसमानोदराभ्यां सपक्षादिवद्योगविभागेन सिद्धाभ्यां यतो रूपद्वयसिद्धौ तद्वैयर्थ्यं स्पष्टमेव । सदृशार्थकसहशब्दस्य तु तत्र सादेशो दुर्लभोऽत्र पक्षे समानशब्देन समासे समानजातीयाद्येवेत्याहुः । ब्रह्मचारीति। व्रतइति सुप्यजाताविति वा णिनिः । समानः स इति। तस्य समानत्वं वेदस्य व्रतस्य वा समानत्वात् तस्य तत्त्वं चाध्येतृभेदाद्वेदभेदं व्रतभेदं वा परिकल्प्य बोध्यमनेन समानवेदाध्ययननिमित्तब्रह्मचारीत्यर्थः। समानं ब्रह्मवेदाध्ययनार्थं व्रतं चरतीत्यर्थो भाष्याल्लभ्यते । तीर्थे ये ॥ अकारो ऽत्र विवक्षितः यशब्दे विवक्षिते इत्यर्थः निरनुबन्धकपरिभाषा तु नात्र । तीर्थान्तान्निरनुबन्धकस्या संभवात् स च प्रत्यय एव संभवतीति ध्वनयन्नाह यादाविति । समानतीर्थे इति। सादेशेप्येकदेशविकृतन्यायेन समानतीर्थशब्दत्वमेवञ्च सतिशिष्टत्वाद्यत्स्वर एवोदाहरणे तदर्थमेव विवक्षित इति व्याख्यातम् । विभाषोद ॥ अत्र ये इति वर्त्तते विवक्षितसप्तमीत्वादत्रापि सतिशिष्टतया प्रत्ययस्वर एवान्यथा सादेशस्वरः स्यात् । तत्र सादेशपक्षे सोदराद्यः समानोदरे शयित इत्यर्थे प्रथमोच्चारिताद्यो भवति स च सोदरात्पर इति तदर्थः सादेशाभावे तु समानोदरे शयित इति यत् । सोदरोपीति प्रयोगस्तु समानमुदरं यस्येत्यर्थे अथवेत्याद्युक्तरीत्या सपक्षवत्सभावे बोध्यः । वोसर्जनस्येति विकल्पात् यत्र भ्राता सहोदर इत्यपि सिद्धम्। दृक्के इति। सदृक्षास इति भाष्योदाहरणादस्य छान्दसत्वे ऽपि सन्दर्भशुद्ध्यर्थमिहोपन्यासः त्यदादिषु दृशोनालोचनेकञ्च समान्ययोश्च दृशेश्चेति कञ्क्विन्क्साः । दीर्घ इति । अन्त्यस्यात्वे कृते सवर्णदीर्घ इत्यर्थः इदं पूर्वपरान्वयि । अमूदृगिति। अःसेरिति व्याख्यानेप्येवमेव अकारेणाकारस्यापि ग्रहणात् । समासेङ्गलेः सङ्गः भीरोः स्थानं ज्योतिषः स्तोम आयुषः स्तोम इत्याद्यर्थे प्रत्यासत्त्या तयोः पदयोः समासे सस्य ष इत्यर्थस्तद्ध्वनयन्नत्युदाहरति ज्योतिष इति। एवं हि सङ्ग इत्यादिप्रथमानिर्देश आञ्जसो भवति।

अयम् । सुषामादिराकृतिगण इत्यर्थः तेनैतयोर्गणसूत्रत्वमिति सूचितम् । अप-सृतृतीयेति । नञ्द्वयोपादानं स्पष्टार्थम् ॥ कूष्ट्रे बहुव्रीहिः इदमेव तत्पुरुषग्रहण-मत्र प्रकरणे ऽप्रतिपदोक्तसमासस्यापि ग्रहणं ज्ञापयति तद्वक्ष्यति । अथिशब्देन बहुव्रीहिर्वेति । कापथे कुगतीति समासः ऋक्पूरित्यः पथः संख्येति नपुंसकत्वम् । अनीपदर्थमिदम् । पूर्वविप्रतिषेधादिति । भाष्यानुक्तमपि वृत्तिप्रामाण्यादुदाहृ-तम् । पृषोदरा ॥ आदिशब्दः प्रकारे यथोपदिष्टमित्युक्तेः । उपदिष्टमिति कर्म-णिक्तः उपदेश उच्चारणन्तस्य कर्त्राकांक्षायां शिष्टैरित्यध्याहारलभ्यं शिष्टाश्च शब्दतत्त्वसाक्षात्कारवन्तो योगिन इति भाष्ये स्पष्टं, उत्तरपदाधिकारात्समा-सविषयमिदम् । हंससिंहयोर्दृष्टान्तार्थमुपादानं यथा तयोरुणादित्वात्साधुत्वं तथा गूढोत्मादेः पृषोदरात्वादित्यर्थ इत्येके । परे तु इदन्तद्धितविषयमपि । पुराणशब्दे ऽनेन तलोप इति सर्वादिसूत्रे कैयटात् एवञ्च हंसादेरुणाद्य-न्तत्वे शास्त्रान्तरोक्तस्यापि अनेन साधुत्वं सर्पिषेत्यादौ षत्वमप्यनेनैवेत्याहुः दूडाशादौ रेफस्योत्वे सवर्णदीर्घः ध्यशब्देन प्रत्ययान्तस्य ग्रहणं आगन्तुना-कारेण धीशब्दस्य च ग्रहणान्तेन सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नास्मान्मा वधीदि-त्यर्थकं मानः समस्य दूळ्भ इति सिद्धं दुष्टं ध्यायतीति विग्रहे कारकपूर्वक-त्वाद्गुण श्रुतौ कप्रत्ययान्तं ङस्स्यानिकस्वन्तन्तु नान्तस्वरितासङ्गतेरिति दिक् । संहितायाम् ॥ एतत्फलं द्व्यचस्तिङन्तस्यातो दीर्घः स्यादित्यर्थकेन द्व्यचो-तस्तिङीत्यनेन विद्माहित्वा गोपतिं शूरगोनामित्यत्र संहितायामिव विद्म हित्वेति पदकाले न दीर्घः । एतदधिकारस्यान्यशास्त्राणान्तूत्तरपदाधिकारा-त्समासएव प्रवृत्त्या तत्र च संहितायानित्यत्वात्र तेष्वस्याधिकारस्य फल-मिति बोद्ध्यम् । कर्णेलक्षणस्य ॥ पशूनां स्वामिविशेषसंबन्धज्ञानार्थं दात्रा का-र्णादिचिन्हं क्रियते तदिहलक्षणम् । तेन लम्बकर्णसिद्धिः । अष्टकर्ण इत्यादे-रष्टसंख्यलिपिचिह्नकर्ण इत्यादिरर्थः तत्संख्यरेखाचिह्नकर्ण इति वा । म-र्माविदिति । व्यधेर्ग्रहिज्येति सम्प्रसारणम् । सा च व्यवस्थितेति एतच्च प्रचु-रलक्ष्यदर्शनादास्थितं केचित्तु यथोपदिष्टमित्यनुवृत्त्यान्यत्र तंबारयन्ति । एभ्य एवेति । कृतदीर्घेभ्य इत्यर्थः कृतदीर्घाणामिति वा ख्यानात् अत एव विपरी तनियमो न । अन्योत्तरपदे एषां दीर्घान्तत्वासंभवाच्च । नियमार्थ इति । पूर्वपदात्संज्ञायामित्येवसिद्धे दीर्घस्य सञ्ज्ञायामेव विधानादस्य णत्वस्य स-ञ्ज्ञायां प्रवृत्तेः । विद्ध्यर्थ इति । अयेवणशब्दस्यासञ्ज्ञात्वात् इति भावः पुरगा-वणमित्यत्राग इति प्रतिषेधस्तु न । अगकारान्तपूर्वपदादित्यर्थात् । असिप-त्रवनमिति । नरकविशेषस्य सञ्ज्ञा । वलप्रत्यय इति । यथोपदिष्टमित्यनुवृत्तेरिति भावः तेनाजन्ते वलधातौ न । अण इत्येव । नेह भ्रातृवलः । रजःकृषीत्यत्रान्येभ्यो

ऽपि दृश्यत इत्युक्तेर्वलच् प्रत्ययः उदाहरणे रजः कृषीति वलच् । संज्ञायामेवेदम् । तेन पुत्रवल इत्यादौ न । प्रत्ययनिमित्तत्वे ऽपि संदर्भशुद्धये एषामुपन्यासः । शरादिराकृतिगणः । इकोवहे । वहेः पचाद्यच् । उपसर्गात् घञोऽसंभवेन तदन्तविधिरित्याह घञन्त इति । इकः काशे इति पचाद्यजन्तार्थम् । अन्येषामपीति सूत्रस्याभियुक्तोक्तं प्रपञ्चमाह शुनो दन्तेति । तत्प्रपञ्चत्वादेव श्वपुच्छमित्याद्यपि । यथा दृश्यते तथा साध्विति तदर्थात् श्वा च वराहश्च श्वावराहं येषाञ्चविरोध इत्येकवत् । प्रनिरन्तः ॥ सञ्ज्ञायां वनं पुरगेति नियमादप्राप्तेऽसञ्ज्ञायां पूर्वपदात्सञ्ज्ञायामित्युक्त्या ऽप्राप्ते वचनं शरादीनामोषधिवनस्पत्यन्यतरत्वादुत्तरेण विकल्पे प्राप्ते वचनम् । असञ्ज्ञायामपीति । अस्येत्यतः सञ्ज्ञायामिति नानुवर्त्तत इति तात्पर्यम् । विभाषौ । ओषध्यः फलपाकान्ताः वनस्पतिरत्र वृक्षमात्रं व्याख्यानात् ध्वनितं चेदं लुपि युक्तवदिति सूत्रे भाष्ये । आरोप्येति । अनेन वाह्यस्याचेतनत्वन्ततुल्यत्वं वा बोधितम् । उह्यत इति सूत्रे भूतकालो ऽविवक्षितस्तेन वाह्यवदनारोपितं संनिहितमात्रं तदपि भवतीति भावः तदुक्तं भाष्ये आहितोपस्थितयोरिति वक्तव्यमिति तथा वाहनं वाह्यादिति वक्तव्यं यदा हि गर्गाणां वाहनमपविद्धन्तिष्ठति तदा मा भूत् गर्गवाहनमिति । यदा गर्गा वाह्यत्वेन विवक्षिता भवन्ति तदा णत्वं भवत्येवेति कैयटः । कर्मणि ल्युडिति । बाहुलकादिति भावः । देशेकिम् । दाक्षीणां पानं दाक्षिपानं देश इत्यस्य देशवासिष्वित्यर्थः । क्षीरपानमिति । नपुंसकेभावे करणे वा ल्युट् । सर्पिष्पानमित्यादौ तु न । षात्पदान्तादिति निषेधात् । तस्य हि पदपरतो यः षकारस्ततः परस्य नस्य णो नेत्यर्थः अन्तग्रहणसामर्थ्यात् तेन सुसर्पिष्केणेत्यादौ णत्वं भवत्येव सर्पिष्पानमित्यादौ सुबुत्पत्त्यनन्तरमेव समासः । अत एव निष्पानमिति तदुदाहरणं भाष्ये सङ्गच्छते पदपदं पदत्वयोग्यपरं वा व्रीहिवापाणीति कर्मण्यण् घञन्तेन बहुव्रीहिर्वा जसः शिरदन्तत्वाच्नुम् । अत एवेति । पूर्वपदाक्षिप्तेनोत्तरपदेन प्रातिपदिकस्य विशेषणादेवेत्यर्थः । उत्तरपदशब्दस्य समासचरमावयवे रूढत्वान्माषवापिणावित्यादावुत्तरस्य पदत्वं नेति न शङ्क्यम् । ज्ञापकं शिथिलमित्याह किंचेति । पूर्वपदाक्षिप्तसमासप्रतिपादिकान्तस्येति व्याख्याने नुम्ग्रहणं भाष्ये न प्रत्याख्यातमिति तत्र णत्वस्येष्टत्वानुमानादिति भावः भाष्ये समासरूपप्रातिपदिकान्तस्येत्यर्थकरणादङ्गस्येत्यादि तदुपपादनग्रन्थो ऽपि चिन्त्य एवेति णत्वार्थमेवेत्यर्थः । प्रेन्वनमित्यादौ त्विति । प्रत्ययसंबन्धिनस्येव धातुमध्यवर्त्तिनुमो ऽपि नस्येत्यर्थः । एवं समुदाया एव तत्र पाठ्या इति द्वयोरपि नयोर्णत्वाभावसिद्धिरिति नुम्व्यवायेनुस्वाराभावे णत्वप्रतिषेधो वक्तव्य इति न कार्यमिति

भावः। युवादेर्नेति। समस्ताः शब्दा युवादिषु असमस्ताः क्षुम्नादिष्विति भावः अत एव युवादेर्नेति प्रातिपदिकान्तेति सूत्रे भाष्ये पठितम् । उभावप्याकृतिगणौ । वृत्रहणाविति । वृत्रं हतवन्तावित्यर्थे ब्रह्मभ्रूणेति क्विप् । वृत्रहणीत्यप्युदाहरणम्। हरिमाणीति। मानयतेः क्विपि समासे ङीप्। क्षीरपेणेति । पिबतेः कर्मण्युपपदे आतोनुपसर्गे इति कः आतोलोपः । रम्यविणेति । रम्यश्चासौ विणश्चेति विग्रहे आङोना । नन्वन्तर्वर्त्तिविभक्त्या विशब्दस्य पदत्वात्पदव्यवायेपीति निषेधस्यादिति चेन्न । अतद्धित इति वार्त्तिकैकवाक्यतया णत्वाश्रयातिरिक्त तद्धितभिन्ने परतः पदेन व्यवायेनेत्यर्थेनादोषात् व्यवधायकपदस्य णत्वाश्रयातिरिक्ततद्धितभिन्नपरत्वेनेति यावत् । तत्प्रत्याख्याने तु पदेव्यवाय इति सप्तमीसमास इत्यदोषः। अत एव प्रत्यख्यानारम्भयोः समफलता। कुमति च ॥ क्वादावित्यर्थ भिया काविति नोक्तम् । अनेकाजुत्तरपदार्थमिदम् । अत्र कवर्गवदुत्तरपदादिप्रसमासस्य विभक्त्यादिप्रप्रकृतिश्च प्रत्यासत्यैकत्वाश्रयणेऽपि चित्रगवीणामित्यादौ णत्वं भवत्येव लिङ्गविशिष्टपरिभाषया विभक्तिप्रकृतौ समासत्वात् णत्वरहितपाठस्तु लेखकप्रमादात् । पदेनेति । निमित्तनिमित्तिनोर्मध्ये पदेन व्यवधाने इत्यर्थः। पदेनेति किम्। चतुर्बहूङ्गिणा। बहुजयं प्रत्ययः। माषकुम्भवायेनेति। नच माषकुम्भस्य वापश्चत्वार्यङ्गानियस्य तेन योग इति विग्रहे उत्तरपदत्वेचेति निषेधादङ्गकुम्भयोः पदत्वं दुर्लभमिति वाच्यम् प्रत्यासत्योत्तरपदस्य कार्यित्व एव तत्प्रवृत्तेः अपदादिविधाविति पर्युदासेन पदान्तविधावेव तत्प्रवृत्तेश्च । नचैवमपि माषकुम्भस्येत्यादेर्वापादिनिरूपित कारकत्वाद्गतिकारकोपपदानामित्यनेन वापादिभ्यः सुबुत्पत्तेः प्राक्समासतेषां पदत्वं दुर्लभमिति सप्तमीसमासेन व्याख्याने णत्वनिषेधासिद्धिरिति वाच्यन्तस्यानित्यत्वेनाच सुबुत्पत्यनन्तरमेव समासेनादोषात् । यत्तु कुमतिचेत्यत्र भाष्ये माषकुम्भवापेनेत्यत्र षष्ठीतत्पुरुषोत्तरपदकषष्ठीतत्पुरुषे कुमति चेति नित्यणत्वेन भवितव्यं षष्ठीतत्पुरुषपूर्वपदकषष्ठीतत्पुरुषे प्रातिपदिकान्तेति विभाषयेत्युक्तं तत्प्राप्तिनिरूपणं बोद्धम् यत्तु एतद्भाष्यादयं निषेध उपसर्गादसमासेपीत्यादेस्तेन प्रावनद्धमित्याद्युदाहरणमिति तन्न । पदव्यवायेपीत्येतच्छेषभूतस्यातद्धितइति वार्त्तिकस्यार्द्रगोणमयेत्यादि भाष्योक्तोदाहरणासङ्गत्यापत्तेः अतद्धित इति व्यवधायकस्य पदस्य णत्वाश्रयातिरिक्ततद्धितभिन्नपरत्वे निषेध इत्यर्थः । उदाहरणे गोशब्दः पदम् । सूत्रे नपुंसकनिर्देशात्कुस्तुंबुरित्ययुक्तमत आहातन्त्रमिति । बहुत्वञ्चैवमिति बोद्धम् । गोष्पदं से ॥ असेविते सामर्थ्यान्नञ्पूर्वकमुदाह-

रत्यगोष्पदानीति । असेवित इति बहुव्रीहिस्तेन गवां सञ्चारो यत्र नैव-कदाचित्तत्रैव नञ्पूर्वे सुडिति भाष्ये स्पष्टम् । गोष्पदं तेत्रमिति । तेत्र-स्याल्पप्रमाणत्वमनेन बोध्यते तेन गोष्पदात्तेत्रस्याधिकत्वे ऽपि न क्षतिः आत्मयापनं शरीरत्तणमित्यर्थे तत्फलकस्थानलाभः प्रतिष्ठा प्रकृते लाभविप-स्थानं तथायथास्पदमनेन लब्धं शरीरत्तणाय स्थानं लब्धमित्यर्थः। अद्भुतेति अनित्यत्वेन कदाचित्कतयाद्भुतं लक्ष्यते इति भावः विकिरग्रहणमिति। विष्किरः शकुनौ विकिरेर्वेति तन्मते सूत्रपाठः । तस्यापि। विकिरशब्दस्यापि। भाष्येति । तत्र हि शकुनौ विकिरो वेति वाच्यं विष्किरः शकुनौ वेत्युच्यमाने शकुनौ तत्तुल्यजातीयेचान्यत्रार्थे नित्यमेव विष्किरः स्यात् सिद्धशब्दस्य विक-ल्पायोगाच्छकुनौ वा अन्यत्र वेत्यधिकरणविकल्पस्यैव प्रतीतेरित्युक्ता न वक्तव्यं न वा वचनेन शकुनिरूपमधिकरणं संबध्यते किंतु निपातनं विष्किर इत्येतच्छकुनौ वा निपात्यतइत्युक्तं एवञ्चान्यत्र विकिरस्येष्टत्वं स्पष्टमेव लभ्यते दृश्यते च विकिरं वैश्वदेवकर्मिति प्रयोग इति दिक् । कृधातोरिगुप-धज्ञाप्रीकिर इति के ऽनेन सुट् परिनिर्विभ्य इति षत्वम् । कशेरेव कशेति । कशाधातोरेव कशाशब्द इत्यर्थः। इह च गमेः प्रतिरुपसर्गो न कशेरिति भावः। अमन्त्रार्थमिति । मन्त्रे तु ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रइत्येव सिद्धमिति हरिश्च-न्द्रोराजर्षिः सुडिति वेणौ इनिश्चेति परिव्राजके । चात्सुडपि । इदंवृत्त्यनु-सारेण अयं नाकरोदयं नाकरोदतोमाकृतकर्माणि शान्त्याकामकर्महानिद्वारा सकलकर्मपरिहानिर्युष्माकं श्रेयसीत्युपदेष्टा । मस्करी परिव्राजकः माङुपपदा-त्कृञ इनिर्माङो ह्रस्वः सुट् निपात्यत इति भाष्यकैयटयोः इदमेव युक्तं वृत्ति-मत्ते मस्करशब्दादिनौ योगरूढ्या परिव्राजकबोधे सिद्धे मस्करिपरिव्राजकग्रहण-वैयर्थ्यापत्तिरिति बोध्यम् । कातीरे ईषदर्थे चेति कोः कादेशः कारस्करे दिवावि-भेति टः । केचित्त्विति। अत्रारुचिबीजन्तु पारस्करादिषु प्रत्ययतोदर्शनं प्रकरणा-द्विसर्गस्थाने एव तेन सत्वविधानं चेति । न सूत्रेष्विति । न गणसूत्रेषु इत्यर्थः एवञ्च पारस्करादयन्तर्गणसूत्रमिदमिति बोध्यम् । पारंकरोतीति । कृञोहेत्विति टः पारस्करोदेशो नगरञ्च । तद्बृहतोरिति । प्रायस्येति च गणसूत्रे । करप-त्योस्तु सुडिति अतो न रुत्वम् । तद्बृहतोः सेत्यादेशे तु तत् दुर्वारम् । बृहस्पतिरिति । बृहत्याः पतिरिति कुक्कुट्यादीनामण्डादिष्विति पुंवत्त्वं वाग्वै बृहती तस्या एषपतिरिति दर्शनात् तत्प्रत्याख्याने तु बृहतो वाक्समूहस्य पतिरिति विग्रहो बोध्यः। प्रायस्येति । निर्देशादकारान्तपुंलिङ्गस्तपोवाचीप्राय-शब्दः प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यत इति स्मृतेः प्रायः पाप-मिति स्मृत्यन्तरात्पापवाच्यपीति सर्वेष्टसिद्धिः ॥ इति समासाश्रयविधयः ॥

अवसरसङ्गत्या तद्धितप्रकरणमारभते। समर्थानाम्॥ पदत्रयमिति। तेन प्रत्येकं पदानां स्वरितत्वाद्धुत्यस्य प्राग्दिश इत्युत्तरमपि संबन्धः। अवधिप्रदर्शनन्तु विशिष्टस्येति बोद्धम्। तद्धितानामेकार्थीभाव एव प्रवृत्तिः समर्थः पदविधिरित्युक्तेरित्युक्तम्। समर्थानामिति। समर्थशब्दः शक्तपर्यायः शक्तत्वन्त्वर्थप्रतिपादकत्वं तच्च परिनिष्ठितस्यैव तदाह कृतसन्धीति। न हि सु उत्थित इत्यस्य कल्पनयाप्यर्थवत्त्वम्। समर्थानामिति निर्धारणे षष्ठी। समर्थानां मध्ये प्रथमादित्यर्थः। तत्तत्सूत्रेषु प्रथमोच्चारितशब्दप्रतिपाद्यत्वञ्च प्रथमत्वम्। एवञ्चानेकसमर्थसंभवे एवास्य संबन्धः। शेष इत्यत्रापि तत्तत्समर्थविभक्त्यन्तविशिष्टोर्थ एव शेष इत्यनेकसमर्थसम्भवः। स्वार्थिकेष्वनेकसमर्थसंभवात्प्राग्दिश इत्युत्तरं नास्य संबन्ध इति बोद्धम्। प्राग्दीव्यतो॥ तेनदीव्यतीति सूत्रपठितदीव्यतिशब्दैकदेश दीव्यच्छब्दोऽत्र गृह्यते। तेन चैकदेशविकृतमनन्यवदिति न्यायेन दीव्यत्यर्थ उपस्थाप्यत इत्यर्थस्यात्रधित्वम्। अयमेव च निर्देशस्तस्य ज्ञापक इति बोद्धम्। एवञ्चावधिमन्तोप्यर्थः एवेत्यत इञित्यादौ नास्य संबन्ध इति बोद्धम्। आदेरच इति। तेन निर्दिष्टस्यानिकत्वादिस्परिभाषाया अप्रवृत्तिरिति बोद्धम्। प्रामादिकमेवेति। गणपतिक्षेत्रपत्यादीनामश्वपत्यादिषु पाठादिति भावः। क्षेत्रपत्यञ्चरुंनिर्वपेदिति तु छान्दसम्। दित्यदि॥ पत्यन्ताद्धिति नोक्तम्। परमप्रजापतिशब्दादव्याप्तेः। उत्तरपदग्रहणे तु यं समासरूपं प्रातिपदिकं प्रति पतिशब्द उत्तरपदन्तस्यैव ग्रहणाच्च दोषः प्रत्ययविधौ तदन्ताग्रहणेन परमादितिशब्दाव। ण्यादीनां पूर्वविप्रतिषेधेन पराऽणपवादबाधकत्वान्ङीपन्ताभ्यामपि लिङ्गविशिष्टपरिभाषयाण्यस्य प्राप्तेर्दैतयादितेयावसाधू। न च लिङ्गविशिष्टपरिभाषाऽनित्या। अत्राप्रवृत्तौ मानाभावात्। दितिवनस्पतिभ्यामपत्यसमूहयोर्ण्यस्यैवेष्टताया भाष्याल्लाभाच्च तयोः ङ्णिचि तदन्ताङ्ङीपि च दृढप्रमाणाभावाच्च ञ्याप्सूत्रे भाष्ये लिङ्गविशिष्टपरिभाषादोषेष्वस्यानुक्तेश्च दोषाः खल्वपि साकल्येन गणिता इति भाष्योक्त्या ऽन्यत्रानित्यत्वे मानाभावाच्च। अकार इति। अश्वत्याम्नोपत्यादीत्यर्थेयम्। लुग्वक्ष्यत इति। अन्तः पूर्वपदादित्यत्र भाष्ये इति भावः। लुग्वाच्य इति क्वचित्पाठः। लोम्न इति। केवललोम्नोपत्येन योगाभावात्तदन्तविधिः। अभिव्यक्तपदार्थाये इति न्यायेन सञ्ज्ञाभूतस्य ग्रहणं न। अपत्यार्थस्यापि स्याम्नोकारानुवृत्त्यनुरोधेन साधारणप्रत्ययेषु कथनम्॥ इति साधारणाः प्रत्ययाः॥ स्त्रीपुंसाभ्याम्॥ ननु प्रकृता त्रसंनियोगेनाकारसहितनगागमोस्तु। अकारसा हत्याच्च नस्तद्धितइति टिलोपो न। एवञ्चाजन्तत्वाद्देवङीपि सिद्धे नञ्स्नञीकगिति वार्तिके नञ्-

स्त्र्यग्रहणं न कार्यम् । नच गोत्रस्त्रीत्वविवक्षायाञ्जातेरिति ङीबिष्टोऽत्रपदे तु ततः परत्वाच्छाङ्गरवाद्यञ इति ङीन्प्रसङ्ग इति वाच्यम् । यञञोश्चसङ्घाङ्कष्विवत्यत्रैव जातिलक्षणे ऽपि ऋष्यपत्यस्यैव गोत्रस्य ग्रहणेन ङीप एव तत्रापीष्टत्वात् । यत्र त्वन्यत्रापि जातिकार्यमिष्यते तत्र तदारोपेण साधुम् । अत एव स्त्रैणा इत्यत्र यञञोश्चेति लुङ् न । स्त्रैणानां सङ्घ इत्यर्थे सङ्घाङ्कत्यण् च न । तादृशस्त्रीविवक्षायामेतत्प्रकृतिकप्रयोगानभिधानाच्चेति चेत्र । विवक्षितान्त्याकारविशिष्टागमस्यासिद्धेः । नञेव तु न कृतः । पौंस्ने संयोगान्तलोपापत्तेः । न च स्त्रिया नञ्भवनात्पुंसो भञ्चेति कार्यम् । लाघवाभावात् । आकडारस्यत्वाभावेनानया पदत्वबाधस्य न्यायेनाप्राप्तेश्चेत्यलम् । द्विगोरिति । हेतुहेतुमद्भावे षष्ठीत्याह । द्विगोर्निमित्तमिति । नचैवं पञ्चकपालीति समाहारद्विगोः संस्कृतमित्यर्थे पाञ्चकपालमिति स्यादिति वाच्यम् । अनभिधानात्ततः प्रत्ययानुत्पत्तेः । गोत्रेलु ॥ अन्यस्यासंभवात्तद्राजस्य बहुष्विति प्रकरणविहितलुकोयमलुक् । असंभवश्च तत्र तत्र वक्ष्यते । अत एव जनपदशब्दादिति सूत्रे तद्राजलुकोप्ययमलुगुक्तो भाष्ये । विवक्षित इति । तेन गर्गाणां छात्र इत्यर्थ विवक्षायां वृद्धत्वनिमित्तप्रत्ययसिद्धिः । अत एव भाष्ये ऽलुकः पूर्वमन्तरङ्गत्वाल्लुकमाशङ्क्य यद्य भूम्नि प्राप्तस्य लुको ऽजादौ तद्धिते ऽलुकं शास्ति तज्ज्ञापयति समानकालावलुग्लुकाविति । विषयसप्तमीति तद्भावः । गोत्रं चात्र पारिभाषिकमेव यूनि लुगिति सूत्रस्य युवशब्दसाहचर्यात् । ण्यक्षत्रियेतिविहितस्य तु नायमलुक् । यूनो गोत्रत्वाभावात् प्राग्दीव्यतीय इति विषयलाभार्थं द्वितीये नेदमकारि । आपत्यस्य ॥ सूर्यतिष्येत्यतो य इत्यनुवर्तते हलस्तद्धितस्येत्यतो हल इत्यादि । आभीयत्वाद्यस्येति लोपासिद्धत्वं तु नारम्भसामर्थ्यात् । आपस्येति किम् । सांकाश्यकः । संकाशादिभ्यो भवाद्यर्थे ण्यस्ततो योपधत्वाद्वुञ् । तद्धिते इति किम् । गार्ग्यः । अनातीति किम् । गार्ग्यायणः । गर्गीयमिति । प्राक् क्रीताच्छः । यूनि लुक् । विवक्षितइति । तेन ग्लौचुकायनाच्छो न । वक्ष्यमाण इति । प्राचामवृद्धादित्ययमित्यर्थः । अजादौ किम् । ग्लौचुकायनरूप्यम् । प्राग्दीव्यतीये इति किम् । ग्लौचुकायनीयम् । हिते छः । पैलादि ॥ ण्यक्षत्रियेत्यतो यूनि लुगित्यनुवर्त्तते । इञः प्रा ॥ इञन्ताद्युवप्रत्ययस्य गोत्रार्थकादेवसंभवेनाह । गोत्रे य इति । तच्चेदिति । प्राचां ग्रहणं न विकल्पार्थं व्याख्यानादिति भावः । न तौल्व ॥ एते इञन्ताः । अनन्तरस्येति न्यायात्पैलादिलुको नायं बाधक इत्याशयेनाह । यूनि लुगिति । वेत्यधिकारेप्यन्यतरस्याङ्ग्रहणं द्विगोर्लुगित्यादौ तदसंबन्धज्ञापनार्थम् । कात्यायने गर्गादियञन्तकतशब्दाद्यञिञोश्चेति फक् ।

कातीये आपत्यस्येति यलोपः । तस्यापत्यम् ॥ तत्संबन्ध्यपत्यमित्यर्थे सूत्रे समर्थानां मध्ये प्रथमात्प्रातिपदिकादणादय इत्यर्थः । घकालतनेष्विति ज्ञापकात्स्वार्थे परिसमाप्तस्यैवार्थान्तरान्वयेन सुबन्तात्तद्धितोत्पत्त्या व्यवहितं ततः परत्वम् । यत्तु प्रातिपदिकादिपदलक्षणप्रकृतिके लाक्षणिकमिति । तन्न । जघन्यवृत्तिकल्पनाया अन्याय्यत्वात् । सुप् च तस्यपदेन उपस्थितषष्ठ्येव तत्फलितमाह । षष्ठ्यन्तादिति । तस्येति सामान्यशब्दोऽपि बुद्धिस्थत्वेन सर्वविशेषबोधक इति उपग्वादिभ्य उत्पत्तिर्न विरुद्धा । आदिवृद्धिरिति । स्वविषयइति शेषः । तेन व्यसोर्भावो वैयसवं व्यापदिभवं वैयापदमित्यादौ न दोषः । तत्रापि वृद्धिप्राप्त्या विषयसत्त्वात् ऐज्विधायके न निषेध इत्यन्यत् । बाधतइति ॥ अनुशतिकादिषु पुष्करसच्छब्दपाठात् । स हि पौष्करसादावुभयपदवृद्ध्यर्थष्ठगादिस्तु ततो नानभिधानादिति भावः । परत्वाद्बाध इति न युक्तम् । युगपत्कार्यद्वयासंभवे एव विप्रतिषेधप्रवृत्तेः । नापि तक्रकौण्डिन्यन्यायेनापवादत्वम् । उभयोरपि गौः पाचकः सौश्रुत इत्यादौ चारितार्थ्यात् । स्पष्टं चेदं भाष्ये । तस्येदमिति । सामान्ये सर्वविशेषान्तर्भावादपत्ये ऽपि तस्येदमित्येव सिद्धत्वात्तस्यापत्यमत इञित्येव कार्यं व्यर्थं योगविभाग इति प्रश्नः । परिहरति । बाधनार्थमिति । भानवादौ छस्येति शेषः । नन्वशैषिकेणानेन स्वविषये ऽप्राप्तस्य छस्य कथं बाधः । किं च तस्येदमित्यपत्येपीति पूर्वपक्षोप्यसङ्गतः । अशैषिकविषये शैषिकेणासिद्धेरिति तृतीयस्याशङ्कां समाधातुमाह । उत्सर्ग इति । योगविभागाभावे प्रकृतिविशेषसंबद्धात्यापत्यार्थस्य शेषत्वमिति न दोषद्वयम् । योगविभागे त्वणादिविधावपत्यत्वेनापत्यस्योपयोगाच्च शेषत्वमिति छस्याप्राप्तिरेवात्र बाधः । इदंशब्दो हि इदन्त्वेन सर्वविशेषबोधकस्तदुक्तं शेषइति सूत्रे भाष्ये इदंविशेषा ह्येते अपत्यं निवासः समूह इति । इदंपदार्थप्रवृत्तिनिमित्ताश्रयाव्यक्तिविशेषा इति तदर्थः । तत्र शेष इति विशेषणादपत्यादीनामिदंत्वाश्रयतया न ग्रहणमिति बोध्यम् ॥ शेषपदसंबद्धेनेदंपदेन प्रागनुक्तानामेवेदंत्वेनग्रहणमित्येतद्बोधयितुमेव उत्सर्गः शेष एवासावित्युक्तम् । येत्विदन्त्वेनबोधे शैषिकमिच्छन्ति वार्त्तिकन्तु शब्दबोधकृतविशेषानादरेण प्रवृत्तमिति वदन्ति तेषामेतद्विरोधः स्पष्ट एव । किंच भानोरपीदन्त्वेनापत्यबोधे छस्य तत्त्वेष्टत्वेनास्य तद्बाधकत्वोक्तेः स्वारस्यासङ्गतिः । आपत्यं वा गोत्रमिति वार्त्तिकप्रयोगे शिवादित्वादण् बोद्ध्यः । दाशरथायेत्यादित्वसाध्वेवेति वार्तिकस्वरस इति विभावनीयं सद्भिः । कृतसन्धेः, किमिति । अन्तरङ्गत्वात्सन्धिकार्यात्तरमेव प्रत्ययोभविष्यतीति समर्थानामिति व्यर्थमिति प्रश्नः । उत्तरयति । अकृतेति ।

यद्यप्यत्रैकादेशप्रवृत्तिसमये न वृद्धेः प्राप्तिः कृते एकादेशे जायमानया वृद्ध्या च न तन्निमित्तविनाशस्तथापि निमित्तविनाशसंभावनैव तत्परिभाषाप्रवृत्तौ निमित्तम् । सा चात्रास्त्येव । यदि दीर्घो न स्यात्तदा वृद्ध्या निमित्तविनाशः स्यादितीति भावः । वस्तुतो ऽन्तरङ्गन्यायलब्धार्थानुवाद एव समर्थानामिति । विपुण इत्यादावकृतसन्धेरपि प्रत्ययदर्शनेनान्यत्रापि तथाशङ्कावारणाय अत एव विप्रतिषेधसूत्रे भाष्येऽन्तरङ्गं बलीय इत्यस्य सौत्थितिर्वैक्षमाणिरित्युदाहरणं दत्तम् । पदस्य विभज्यान्वाख्याने सुउत्थित इसु इति स्थिते परत्वादादिवृद्धिः प्राप्नोति च कैयटः । अकृतेति परिभाषा तु भाष्याव्यवहृतत्वान्नास्त्येवेत्यन्यत्र विस्तरः । वस्त्रमुपगोरिति । यद्यपीदन्तत्संबन्ध्यपत्यमित्यर्थे प्रत्यय इत्यर्थेन प्रत्यासत्त्या वारयितुं शक्यं तथापि ऋद्धस्यौपगव इत्यादिवारणाय सावश्यकीति तत्त्वम् । पष्ठ्यर्थे इति । उपगुरपत्यमस्य देवदत्तस्येत्यर्थे औपगवो देवदत्त इति माभूदित्यर्थः । तस्यापत्यमित्यादौ लिङ्गवचने अविवक्षिते इति बोध्यम् ॥ अपत्यं पौ ॥ यद्यपि प्रवराध्यायप्रसिद्धं लोके गोत्रं तथापि प्रवराध्यायाप्रसिद्धस्यापि सञ्ज्ञार्थमिदं पौत्रादेरपत्यत्वाव्यभिचारादपत्यपदसामर्थ्यादाह । अपत्यत्वेन विवक्षितमिति । तेन पौत्रप्रभृतेस्तत्त्वेन विवक्षायां न गोत्रत्वं पौत्रापत्यशब्दयोः ससंबन्धिकतया यदीयं पौत्रप्रभृति अपत्यन्तं प्रत्येव तस्य गोत्रत्वमित्याङ्गिरसः पौत्रे गर्गस्यानन्तरेवाच्ये न गर्गशब्दाद्यञ् । अत्र समर्थानां प्रथमादित्यनुवर्त्य विभक्तिविपरिणामेन समर्थानां प्रथमस्य प्रकरणादपत्यप्रत्ययप्रकृतेर्यत्पौत्रप्रभृति अर्थात्तत्प्रत्ययवाच्यतयापत्यत्वेन विवक्षितं तत् गोत्रमित्यर्थात् पौत्रपरगर्गापत्यादिशब्दान्न यूनि प्रत्यय इति भाष्ये स्पष्टमेवञ्च गोत्रप्रत्ययान्तेभ्योऽप्यपत्यत्वेनैव बोध इति सूचितम् । अत एव गर्गस्यापत्यं गोत्रमित्यर्थं प्रदर्शयन्ति गार्ग्य इत्यादेर्वृद्धाः । अत एवाऽपत्यं वा गोत्रं परमप्रकृतेश्चापत्यः आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसञ्ज्ञः सचास्त्रियामित्येतद्वार्त्तिकसमुदायेन प्रत्यययोरेव गोत्रयुवसञ्ज्ञाविधानम् । अपत्यस्यापत्यमापत्यम् । शिवादेराकृतिगणत्वादण् तेन च तद्बोधकप्रत्ययस्वरूपं लक्ष्यते । आपत्य आपत्यादित्यनयोस्तदर्थकत्वावश्यकत्वात् । गोत्रसञ्ज्ञासूत्रे क्वचित्पुस्तके आपत्यो वा गोत्रमिति पाठो दृश्यते स च युक्ततरः । स्त्रीपुंसाधिकारे ऽपत्यान्ता इत्यमरोक्तेः । अत एवापत्य इति द्वितीयवार्त्तिके पुंलिङ्गप्रयोगः । नत्वापत्ये भव इत्यर्थेणन्तः सः । छप्रत्ययापत्तेः तदुक्तं युवसञ्ज्ञासाहचर्येणास्या अपि प्रत्ययनिष्ठताया एवौचित्याच्च । वार्त्तिकमतेप्यर्थस्य गोत्रसञ्ज्ञायां सूत्रोक्तार्थादविशेषेण वा शब्दासङ्गतिश्च न्यायलाघवमात्रेण वा शब्द आपत्यो गोत्रमिति वेति वदेत् ।

आपत्यो वेति न्यासेन सञ्ज्ञाविकल्पस्यैव लाभात् । आपत्यादित्यादेरापत्यबोधकप्रत्ययान्ताज्जीवद्वंश्यबोधकात्स्वार्थे द्वितीयो युवसञ्ज्ञः प्रत्ययो भवतीत्यर्थ इति स्पष्टमेवेति दिक् । पौत्रेति । पौत्र्यादेरप्युपलक्षणम् । जीवति तु ॥ युवसञ्ज्ञमेवेति । समावेशे त्वौपगवस्य गोत्रस्यापत्यमौपगविरित्यादावेकोगोत्र इति नियमादिञ न स्यात् । गोत्राद्यूनीत्यस्याप्राप्तविधायकत्वे तु गर्गस्य चतुर्थं जीवद्वंश्ये विवक्षिते गार्ग्य इत्यस्याप्यापत्तेः । गोत्रादेव यूनीति नियमाभावात् । किंच समावेशे द्वितीयाध्यायस्यलुङ्मात्रस्य मध्येपवादन्यायेन गोत्रेलुगचीत्यलुक् स्यात् । तथा च पीलाया अपत्यं पैलः तस्यापत्यं युवाणो ञ्च इति फिञः पैलादिभ्यश्चेति लुकि पैलस्य च्छात्राः पैलीया इत्यत्र गोत्रेलुगिति अलुक्प्रसङ्गः । असमावेशे युवप्रत्ययविषयेस्याप्राप्तिस्तेन न्यायेन भूम्नि प्राप्तस्येत्यर्थादस्याप्राप्तौ अन्तरङ्गत्वात्पैलादिलुगेवेति सिद्धमिति दिक् ॥ भ्रातरि च ॥ भ्रातुरवंश्यत्वादारब्धम् । बहुपुपुत्रेष्वेतदुपपन्नं भवत्ययं मे ज्येष्ठोयं मे मध्यमोयं मे कनीयानित्याद्यन्तवत्सूत्रभाष्यप्रयोगे बहूनां निर्धारणे पीयसुन् दर्शनाद्विभागमात्रमीयसुनादिनिमित्तन्द्वित्वादि तु सूत्रेऽविवक्षितं तद्ध्वनयन्नाह । ज्येष्ठे इति । अत एव बहुष्वपि पुत्रेषु मृतेष्वपि पित्रादावग्रजे जीवति द्वौ गार्ग्यायणाविति गार्ग्यस्य द्वौ पुत्रौ तयोः कनीयान् गार्ग्यायण इति चोपपद्यते । वान्यस्मि ॥ सप्तपुरुषावधिपितृकुले सपिण्डाः । मातृकुले पञ्चपुरुषावधि । प्रकृते भ्रातुरन्यस्मिन्निति पर्युदासादाद्यमेवगृह्यते इति वृत्तिरन्त्यमपि गृह्यते इत्यन्ये । अन्यस्मिन्नित्यस्य ज्येष्ठभ्रातुरन्यस्मिन्नित्यर्थः । तच्च भ्रातृरूपसपिण्डे जीवति जीवतः परत्वाद्विकल्पव्यावृत्त्यर्थम् । जीवतीत्यनुवर्त्तमाने जीवतीति व्यर्थमत आहैकमिति । तिङन्तं तदिति भावः । द्वितीयमिति । शत्रन्तात्सप्तम्यन्तमिति भावः । ननु ज्यायसीत्यनुवृत्त्यैव सिद्धे तरबन्तं व्यर्थमत आह । तरप्निर्देश इति । तरबन्तनिर्देश इत्यर्थः । उभयोरिति । स्थानवयसोरित्यर्थः । स्थानं पदं पितृव्यत्वादिकं तद्रूपेणैव तेषां पूज्यत्वात् । यद्यपि भ्रातृत्वेन न पूज्यता कनिष्ठभ्रातर्यपि तत्सत्वादेवञ्च भ्राता न स्थानत उत्कृष्ट इत्यनेनैव व्यावृत्तिसिद्धावन्यस्मिन्निति व्यर्थं तथापि अन्यस्मिन्नेव सपिण्डे जीवति विकल्पः भ्रातृसहिते ऽन्यसपिण्डे जीवति जीवतो नित्यमेवेत्यर्थन्तत् । न च ज्यायसीत्यस्यानुवृत्त्या ज्यायसि स्थविरे इत्याभ्यामुभयप्रकर्षलाभे तरप् व्यर्थ इति वाच्यम् । स्पष्टार्थत्वात् । मातामहभ्रातरीति । मातृसापिण्ड्यमपि गृह्यत इति मते इदम् । क्वचित्तु पितामहभ्रातरीति पाठः । स्थानवयोन्यूने इति । स्थानन्यूनः स्वज्येष्ठो भ्रातृपुत्रादिः । जीवतीति किमिति । सूत्रोपात्तमनुवर्त्तमानं च किमर्थमिति

प्रश्नः । मृते सपिण्डे । मृतश्चतुर्थादिः । वृद्धस्य चेति यूनश्चेति वार्त्तिके । तत्र भवानिति पूजागमकम् । युवसञ्ज्ञकानामल्पवयस्त्वेन वृद्धाधीनत्वेन सुखितया च पूजा तास्वगोत्रभूतस्तृतीयोपि मन्यते । अत्र युवसञ्ज्ञाविधानसामर्थ्यात्स्वार्थे युवप्रत्ययो बोध्यः । जाल्म इति । जीवद्वंश्येन हि वृद्धाधीनेन भाव्यम्, यस्तु वृद्धाननादृत्य स्वातन्त्र्यं कुरुते स एवमुच्यते ॥ एको गोत्रे ॥ गोत्रइति । अभिधित्सित इत्यर्थः । एक एवेति । संख्यावाची एकशब्दोऽधिकारलब्धापत्यप्रत्ययश्च विशेष्य इति भावः । अत एवानन्तरापत्यप्रत्ययान्ताच्चापत्यप्रत्ययः । अपत्यग्रहणानुवृत्तिस्तु अनन्तरापत्यप्रत्ययान्ताद्गोत्रप्रत्ययवारणाय । अन्यथा नियमस्य तुल्यजातीयतया गोत्रप्रत्ययान्तादेव गोत्रप्रत्ययो वार्येत । उपगोरण् गर्गादिभ्यो यञ् नडादिभ्यः फक् । तत्तत्पितृसंबन्ध्येवापत्यं 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वे पत्यन्तोऽकन्तयोः समे' इत्यमरात् तयोः पुत्रदुहित्रोः । अत एव पितामहोत्सङ्गे आसीनं दारकं कश्चित्पृच्छति कस्यायमिति स तत्पितरमेव व्यपदिशति नात्मानं तदाह । गोत्रे इति ॥ उपगोस्तृतीये वाच्ये औपगवादिञि अनिष्टा प्रत्ययपरंपरैव प्राप्नोति न तु कदाचिदप्यौपगव इत्यणविशिष्टमिष्टं सिध्यति । एवं गर्गस्य तृतीये वाच्ये गर्गादिभ्य इत्याद्यारम्भसामर्थ्यात्परंपरापत्यापत्यवत्संबन्धे प्रवृत्त्येष्टसिद्धावपि गर्गादिञि ततः प्रत्ययान्तरे प्रत्ययद्वयपरंपरानिष्टापि प्राप्नोतीति भावः । यद्यप्यनन्तरेणादीष्टमेव तथाप्यनिष्टघटकत्वात्सोप्यनिष्टः परंपरेत्यस्य प्रसज्यत इत्यनेनान्वयः । नन्वत्र पक्षे उपगोस्तृतीये ऽणविध्यर्थत्वमस्य वाच्यं, प्रत्ययमालाव्यावृत्तये नियमार्थत्वञ्चेति गौरवम् । न च गोत्रपदेन गोत्रागोत्रसमुदायो लक्षणीयः । एकपदञ्च सामर्थ्यात्सावधारणं विधिमात्रार्थत्वे हि तद्व्यर्थमेव । गोत्रे इत्युक्त्यैवोपगवादिभ्योणादिविधानेनेष्टसिद्धेः । एवञ्च पुत्रे एकः पौत्रे परस्तदपत्ये चापर इति गोत्रागोत्रसमुदाये बहूनां प्राप्तौ एक एवापत्यप्रत्यय इति नियमेनैकाभ्यनुज्ञाद्वारा परमप्रकृतेर्विधिरपि परंपरापत्यापत्यवत्संबन्धे प्रवर्तत इत्यनुमीयत इति वाच्यम् । ग्रहणसार्थ्येनैकाभ्यनुज्ञानादिरूपपूर्वोक्तार्थकल्पनापेक्षया पितामहादीनामप्यपत्यमित्येतत्कल्पनस्यैव युक्तत्वादत एवापत्यं पौत्रप्रभृतीति सूत्रं स्वरसतः सङ्गच्छते दशसु पुरुषेषु यस्य कुले विवाहिता शूद्रा नास्ति स सोमं पिबेदित्युक्त्या यथा एकस्य पाते सर्वेषां पातस्तथा तद्रहितस्यैकस्य सर्वान्त्यपातहेतुत्वेनापत्यमपि युक्तमिति स्पष्टं भाष्ये । जरत्कार्वाद्युपाख्याने च स्पष्टमेवैकस्य सर्वान्त्यपातहेतुत्वम् । अपतनादपत्यमिति च पङ्क्तीति सूत्रे भाष्ये स्पष्टम् । पत्यं

तोक्तं तयोः समे इत्यमरस्य तु तयोस्तद्घटितसन्तानपरंपरयोरित्यर्थ इति नासङ्गतिः । पितामहोत्सङ्गे स्थितस्य दारकस्य विषये कस्यायमिति प्रश्नो जनकविषय एवेति । तत्र पितृव्यपदेशिनोत्तरस्य नासङ्गतिरित्यरुचेराह । यद्वेति । स्वद्यूनेति । स्वङ्गोत्वं तदपेक्षया द्व्यूनसंख्येभ्यः प्रकृतिभूतेभ्योनिष्टप्रत्ययोत्पत्तिरित्यर्थः । उपगोस्तृतीये एकस्मादौपगवादिञनिष्टः प्राप्नोति चतुर्थे द्वाभ्यामित्यादीति भावः । अनिष्टोत्पत्तिस्तन्मात्रं न त्विष्टासिद्धिरित्यर्थः । अत्र पक्षे उपगोरणेष्टसिद्धावप्यौपगवादिञो निवृत्तये नियमार्थमेवेदम् । नन्वेवमप्यनन्तरापत्यप्रत्ययान्ताद्गोत्रे प्रत्ययो दुर्वारः । गोत्रे एकस्यैव कृतत्वेन नियमाबाधात् । न च गोत्रपदेनापत्यसमुदाय लक्षणया स परमप्रकृतेरेवेति वाच्यम् । अपत्यमित्यनुवृत्त्यैव सिद्धौ गोत्रग्रहणवैयर्थ्यापत्तेरिति चेन्न । भाष्ये प्रत्याख्यातत्वनेष्टापत्तेः । यद्वा गोत्रे बोधनीये एक एव शब्दः प्रत्ययप्रकृतिर्नानेक इत्यर्थः । यदि च प्रत्ययान्तात्प्रत्ययः स्यात् नैकःप्रत्ययप्रकृतिः स्यादिति । यद्वा एकशब्दः प्रथमवाची प्रथमः शब्दो गोत्रे प्रत्ययमुत्पादयतीत्यर्थः । प्रथमत्वञ्च सर्वमूलत्वं सर्वं नैतद्भाष्ये स्पष्टम् । तद्ध्वन्ये । आद्ये इष्टासिद्धेः प्रत्ययमालायाश्च निवृत्तये, ऽन्त्ये निष्टमात्रनिवृत्तये तत्राद्यो ऽयुक्त इत्युक्तम् । तृतीये इति । तृतीयत्वं मूलपुरुषापेक्षया । यजमानपञ्चमा इत्यादौ विजातीयेनापि संख्यापूरणदर्शनात् । औपगवादिति । तस्मादेवेत्यर्थः । न तूपगोरण तृतीयस्य तं प्रत्यपत्यत्वाभावादिति भावः । एवमिति । पितामहादीनामपीति सिद्धान्तपक्षे पञ्चमादौ यूनि तृतीयादुत्पत्तौ गार्ग्यायण इतीष्टे सिद्धे ऽपि मूलप्रकृत्यनन्तरापत्ययुवप्रत्ययान्तादनिष्टमपि प्राप्नोतीति यूनि गोत्रादेव न तूक्तेभ्य इति नियमार्थं गोत्राद्यूनीति । आद्ये तु पक्षे पञ्चमे यूनि चतुर्थात्प्रत्ययान्तादेव प्रत्ययः स्यात् न तु तृतीयवाचिगोत्रप्रत्ययान्तादिति विध्यर्थमेवेदं स्यान्न तु नियमार्थमिति पितामहादीनामपीति पक्ष एव ज्यायानिति बोध्यम् । स्त्रियान्तु नेति । अस्त्रियामिति योगं विभज्य तत्र यूनीत्यनुवर्त्य द्वे अपि प्रथमयाविपरिणमय्य स्त्रीयुवानेत्यर्थ इति भावः ॥ अत इत्यनेनाधिकृतप्रातिपदिकस्य विशेषणात्तदन्तविधिरित्याहादन्तमिति ॥ अस्यापत्यमित्यादौ व्यपदेशिवद्भावादिञ् बोध्यः । व्यासव ॥व्यासोत्र वेदव्यास एव प्रसिद्धत्वात् । न य्वाभ्याम् ॥ ननु वृद्धेरपवादावेताविति नैतद्विषये वृद्धेः प्रसक्तिः । न च विषयभेदे कथमपवादत्वं विषयभेदेप्यचिरादेशेन नुटो बाधस्य भाष्ये शङ्कितत्वात् । न तिसृचतसृ इति निषेधेन नुटो न रादेशेन नुटो बाध इति समाहितमित्यन्यत् । एवञ्च नेति व्यर्थमिति चेन्न । यत्र य्वाभ्यां परस्य प्रसक्तया वृद्धेर्निषेधस्तत्रैवैचावित्यैचोर्विषयनिर्देशार्थन्तत्सत्त्वात् । तेन दाध्यश्व-

रित्यादौ न । अयञ्च निषेधो येन नाप्राप्तिन्यायेन तद्धितेष्वचामादेरिति वृद्धेरेव तेन द्व्याशीतिके संख्यायाः संवत्सरेति वृद्धिर्भवत्येव । पदान्ताभ्यां किम् । एतीति यत् तस्य छात्रा याता इत्यादौ माभूत् । पूर्वौ । पूर्वावयवौ । अभक्तत्वे हि इश्चाजश्च यजन्तस्मादणन्ताच्छो न स्यात् प्रातिपदिकस्यावृद्धत्वादिति हरदत्तः । गोत्रेकु ॥ गोत्रे बोधनीये तत्सम्बन्ध्यपत्यमित्यर्थे कुञ्जादिभ्यः परः प्रत्यय इत्यर्थः । च्फञि ञकारः कौञ्जायनीत्यादौ वृद्ध्यर्थः । चकारो व्रातच्फञोरित्यत्र विशेषणार्थः । व्रातच्फञो ॥ पूगाञ्ञ्योऽग्रामणीपूर्वादित्यतो ञ्योऽनुवर्त्तते । तद्राजत्वादिति । ञ्यादयस्तद्राजा इत्यनेन । लुगिति । तद्राजस्य बहुष्वित्यनेन ञ्यस्येति भावः । स्त्रियामिति । ञ्यप्रत्यये हि योपधत्वान्ङीष्न स्यात् टाप् च स्यादित्यस्त्रियामित्युक्तमिति भावः । यञिञो ॥ अधिकृतं गोत्रइति यञिञोर्विशेषणं फलं तु यूनि । गोत्रे किम् । सुतङ्गमादिभ्यश्चातुरर्थिके इञि सौतङ्गमेरपत्ये माभूत् । शरद्वच्छु ॥ भृगुवत्सपदे तदपत्येषु भृगुत्वाद्यारोपेण प्रयुक्ते । अन्यथा भृगुवत्सयोः शरद्वच्छुनकपूर्वभावित्वादसङ्गतिः स्पष्टैवेति केचित् । अन्यः कृत्रिमपुत्रादिः । आग्रायणो नडादिफगन्तः । दार्भिरिति । अस्य ऋषित्वे तु बाह्वादित्वादिञ् । शरद्वच्छुनकौ विदादौ ताभ्यां फको ऽभावे ऽञ् । अनादिरिति । भारतप्रसिद्धोऽस्मदाद्यज्ञेयादिकाल इत्यर्थः । अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिष्विति हर्युक्तेः । अभिव्यक्तेत्यनेनाद्यर्थाभिधायित्वम् । तेन विशिष्टरूपोपादाने पदकार्ये एव चायम् । स्वतन्त्रा इत्यनेन गौणनिरासः लोकविश्रुता इत्यनेनाप्रयुक्तं निरस्तम् । तदुक्तिषु तत्सदृशेषु, बह्वादिभ्यश्चेति सूत्रे भाष्ये ऽपि । बाह्वादिप्रभृतिषु येषां दर्शनं लोकविदितादिपुरुषत्वरूपे लौकिके गोत्रभावे ततोऽन्यत्र प्रतिषेधः । बाहुनाम्न आधुनिकस्यापत्यं बाहव एव । सम्बन्धिशब्दानां कार्यं तत्सदृशात्प्रतिषेध इति चोक्तम् । तत्र गोत्रभाव इति प्रकृताभिप्रायेण तदेव ध्वनयताऽवयुत्यानुवादेन संबन्धिशब्दानामित्याद्युक्तम् । एवञ्चायं न्यायः सर्वविषय इति बोद्धव्यम् । बाह्वादिसूत्रे पाठात्तद्धितविषय एवेति कश्चित् । अनृष्या ॥ अनृषीति लुप्तपञ्चम्यन्तम् । आनन्तर्य । अनन्तरापत्ये । इदं वृत्त्यनुसारेण । भाष्ये तु ऋषिभ्योऽनन्तरे नेत्यर्थोऽसमर्थसमासेन दर्शितः ये त्वत्रानृषयः पठन्ते तेभ्योऽनन्तरेऽपीति चोक्तम् । निषेधसामर्थ्यादेवात्र गोत्रइत्यस्यासंबन्ध इति तद्भावः । यूनि तु गोत्राद्यूनीति नियमान्न दोषः । गर्गादि ॥ रामो जामदग्न्यः पाराशर्यो व्यास इत्यनन्तरे गोत्रत्वारोपाद्बोध्यम् । यञञोः ॥ ण्यक्षत्रियेत्यतो लुगिति तद्राजस्येति सूत्राद्बहुषु तेनैवास्त्रियामिति यस्कादिभ्य इत्यतो गोत्रइति चानुवर्त्तते । प्रवराध्यायप्रसिद्धगोत्रवाचित्वं

यञञोर्नास्तीत्यत आह । यञन्तमिति । निर्दिश्यमानपरिभाषालुक्सञ्ज्ञाभ्यां लब्धमर्थमाह । तदवयवयोरिति । प्रवरेति । एतदेव च लौकिकं गोत्रम् । एतत्सर्वं यूनि लुक् गोत्रावयवात्स्त्रीपुंसाभ्यामित्यादौ भाष्ये स्पष्टम् ॥ लोहितादिकार्यमिति । स्त्रियां ष्फ इत्यर्थः । आङ्गिरस इत्येवेति । तत्र यञेवेत्यर्थस्तदाहानाङ्गिरसे त्विति । आङ्गिरसएवेति नियमस्तु न गर्गादिपाठस्य वैयर्थ्यापत्तेः । स्त्रियां लुक्सत्त्वेन यञो ऽकार इति व्याख्यानेन चास्य लोहितादिकार्यार्थं पाठ इति न वाच्यम् ॥ शिवादिगणे पाठे मानन्तु लुक् स्त्रियामित्यनेन वतण्डाच्चेत्यस्य विभाग एवेति बोद्धयम् । विहितस्येत्यनन्तरस्येति न्यायलभ्यमिदम् । वक्ष्यमाण इति । अणिञोरिति सूत्रेणेत्यर्थः । तत्र प्रतिपदोक्तपरिभाषया ऋष्यण एव ग्रहणमिति न युक्तम् । इञंशे तदसंभवेन तत्साहचर्यादणंशे ऽपि तदप्रवृत्तेः । परे तु वतण्डाच्चेति सूत्रं मास्त्वित्याशयेन किमर्थमिदमुच्यते न गर्गादिभ्य इत्येव सिद्धं लुक् स्त्रियामित्यपि तत्रैवोच्येतेत्याशङ्काङ्गिरस इति विच्छिद्यतेत्युक्तं भाष्ये । तदाशयस्तु पूर्वपक्षे सम्यगेव तत्र पूर्वसूत्रे आङ्गिरस इत्युक्त्यानाङ्गिरसे यञभाववत्तदत्रापि तदभाव एवोचितः विधित्वस्यैवौचित्यात् योगविभागसामर्थ्येन कपिबोधयोरिवास्यापि गणे पाठाभाव एवानुमीयते गणे पाठे तु आङ्गिरस इत्येतद्विच्छेदेनानाङ्गिरसे ऽपि यञ् स्यादिति शिवादिगणपाठो ऽपि यदि प्रमाणिकस्तदा ऽनाङ्गिरसे चरितार्थस्य तस्याङ्गिरसे यञा बाधः । एवञ्चानाङ्गिरसे वातण्डायनीति चिन्त्यमेवेत्याहुः । निवृत्तमिति ॥ इदं वृत्त्यनुरोधेन । यूनिलुक्सूत्रभाष्ये गोत्रसञ्ज्ञासूत्रपर्यन्तं गोत्राधिकार इति ध्वनितत्वात् । तत्र भाष्ये ऽपत्याधिकारात्परं शास्त्रीयगोत्रग्रहणे गार्ग्यायणादिभ्यो युवप्रत्ययान्तेभ्यः समूहादौ गोत्रत्वप्रयुक्तो वुञ् न स्यादित्याशङ्क्यापत्याधिकारात्परं प्रवराध्यायप्रसिद्धरूपलौकिकगोत्रग्रहणे गोत्रोक्षोष्ट्रेति सूत्रे राजन्यमनुष्यग्रहणं ज्ञापकमित्युक्तम् । अनन्तरापत्ये गार्ग्यादि तु जामदग्न्यादिवदारोपेण साधु । न चैवं गार्गीप्रभृतिभ्यो यूनि ठक् न स्यात् । यूनो गोत्रत्वाभावात्सूत्रन्तु दाक्षीयीत्यादौ चरितार्थमिति वाच्यम् ॥ उदीचां वृद्धादिति सूत्रे ऽगोत्रादित्युक्तिसामर्थ्येनेतश्चेति सूत्रे निज इत्युक्तिसामर्थ्येन च गोत्रप्रत्ययान्तप्रकृतिभ्योप्येषां विशिष्य विधानेन तत्सामर्थ्यादणिञोश्चेति वक्ष्यन्युत्पत्तिसिद्धेः । शास्त्रीयगोत्रञ्च युवत्वानाक्रान्तपौत्रप्रभृत्यपत्यरूपम् । तदर्थकत्वञ्च वास्तवं शास्त्रप्रक्रियानिर्वाहाय शास्त्रकल्पितं वा । परत्र लौकिकग्रहणमपि यत्र शास्त्रीयग्रहणे गमकाभावस्तत्रैवात एव कण्वादिभ्योगोत्रे इत्यत्र अणिञोरित्यादौ च शास्त्रीयस्यैव ग्रहणम् । राजन्यमनुष्यशब्दयोर्लोके जातिप्रकारकबोधजनकत्वे ऽपि प्रक्रियादशायां राजश्वशुरादि-

त्यादेर्गोत्राधिकारे पाठात् कल्पितं शास्त्रीयगोत्रार्थकत्वम् । अत एव राज्न्यादिभ्य उदीचां वृद्धादिति फिञ् न । अत एव ग्लुचुकस्य युवापत्यं ग्लौचुकायन इत्यत्र फिञन्ताद्यूनि फिञ् न, वृत्तिमते तु स दुर्वारः । लौकिकञ्च प्रवराध्यायप्रसिद्धम् । लोके तत्रैव गोत्रव्यवहारात् । अणिञोः स्त्रीपुंसाभ्यामिति सूत्रस्थभाष्यस्वरसाच्च । न च शिवादिभ्य इत्यत्राण् ग्रहणं व्यर्थम् । न च बाधकबाधनार्थमिञ एव विधिरयं स्यादतोण् ग्रहणम् । तद्बाधकस्यैवाभावात् । तत्रेञ्बाधनार्थं शिवादिभ्यो यथा विहितमित्येवाण्सिद्धेरिति प्रकृतसूत्रभाष्योक्तमसङ्गतं स्यात् । शिवादिभ्यो गोत्रएवेञ् नान्यत्रेति नियमेन चारितार्थ्येनाण्ग्रहणं विना तदसिद्धेरिति वाच्यम् । विधिनियमसंभवे विधेरेवज्यायस्त्वेन विधित्वानुरोधेनाण एव विधिरिति भाष्याशयात् । अण्ग्रहणंत्वत्र पठितादृष्टिषेण शब्दादिञ्बाधकस्य सेनान्तलक्षणण्यस्य सत्वेनेञ एव विधानं स्यात्त्वण इत्तोति भाष्ये एव स्पष्टम् । यत्तु खण्डिकादिसूत्रे जनपदशब्दात् क्षत्रियादित्यधिकारस्यप्रत्ययान्तद्वन्द्वरूपात् क्षुद्रकमालवाद्गोत्रेति वुञि क्षौद्रकमालवकमित्युक्तं तत्तत्र लौकिकगोत्रत्वारोपेण निर्वाह्यं अतिप्रसङ्गस्तु आरोपे सति निमित्तानुसरणमिति न्यायेन परिहार्यः । अपत्याधिकारात्परमिति भाष्ये परशब्दो ऽन्यपर्यायः ततः पूर्वस्मिन्यञञोश्चेति लुग्विधायके स्त्रीपुंसाभ्यामिति सूत्रभाष्येण लौकिकगोत्रग्रहणस्योक्तत्वादित्यन्यत्र विस्तरः । ऋष्यृद्धभ्य इत्यादेर्विशेष्यं प्रकृतिभ्य इति नदीमानुषीभ्य इत्यप्यर्थद्वारकं तद्विशेषणं तदाहाद्वृद्धेभ्य इत्यादि ॥ ऋष्यन्धक ॥ अन्धकादयस्त्रयो वंशा ऋषयो मन्त्रद्रष्टारः ऋषिर्वेदस्तत्द्रष्टृत्वाच्च तेषां तत्त्वम् ॥ मातुरुत् ॥ अर्थगतं स्त्रीत्वं शब्दे आरोप्य पूर्वाया इति निर्देशः । मातृशब्दस्य जननीवाचिन एव ग्रहणमभिव्यक्तपदार्थकत्वात् । द्वैमातुरे द्वयोर्मात्रोरपत्यमिति तद्धितार्थेति समासः । तेन धान्येति । इदं चिन्त्यं तादृशस्त्रीवारणायाभिव्यक्तेत्यस्यावश्यकत्वात् लिङ्गविशिष्टपरिभाषयाप्राप्तिः । वैमात्रेय इति । एवञ्च विमातृशब्दो न प्रत्युदाहार्य इति भावः । अनूढाया एवेति । न त्वक्षतयोनित्वं कन्यात्वमिति भावः । वत्सादीनां मूलपुरुषत्वाद्विकर्णादीन्प्रत्यपत्यत्वासंभवाद्वत्सादयस्तदपत्ये आरोपितप्रवृत्तिनिमित्तका इत्याशयेनाह । वात्स्यश्चेदिति । पक्षे इञिति । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः ॥ स्त्रीभ्यो ॥ स्त्रीशब्दः स्वर्यते तेनाधिकार्थावगतिरित्याशयेनाह । स्त्रीप्रत्ययेति । तदन्तप्रातिपदिकादित्यर्थस्तदन्तस्य प्रातिपदिकत्वञ्च लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वादीनां तद्विशिष्टे बोधनादक्षतन्तेच टाबादय एव व्याख्यानात् एतेन दरदोपत्यं दारद इत्यत्र न ढक् तत्र दरदो ऽपत्यं स्त्रीत्यर्थे ऽणि स्त्रीप्रत्ययोत्पत्तेः प्राग-

वाणो ऽतश्चेति लुक् । परे त्वत्र स्त्रीभ्य इत्यर्थग्रहणमेव अत एव पितृष्वसृमातृष्वसृभ्यां ठकि लोपविधानं सङ्गच्छते । दरत् इडविट् पृथगुशिभ्यो ऽनभिधानात् ठगभावः शिवादिपाठाद्वा ध्वनितञ्चेदं वृष्ण्यन्धकेति सूत्रे भाष्ये इत्याहुः । निरूपितञ्चेदं भाष्यप्रदीपोद्योते । वाग्रहणनिवृत्तये पुनर्ढग्रहणम् । शिवादित्वादिति । तत्र सपत्नेति पाठे ऽपि लिङ्गविशिष्टपरिभाषया सपत्नीशब्दादपि बाह्वसामान्यचिन्तया ढकं बाधित्वाणिति बोद्धम् । तस्येदमितीति । शिवादिपाठादित्युचितं तस्याकृतिगणत्वात् ॥ इतश्च ॥ अनिञः किम । दाक्षायणः । इतः किम् । दाक्षिः ॥ प्रवाहणस्य ॥ उत्तरपदस्येत्यधिकारः । अर्द्धात्परिमाणस्येत्यतः पूर्वस्य तु वेति चानुवर्त्तते तदाह । शब्दस्योत्तरपदेति । शब्दस्येत्यवयवषष्ठी । प्रवाहणः शुभ्रादिः । उत्तरपदस्य वृद्धिमत्त्वे ऽपि तद्विधानं पूर्वपदस्य वृद्ध्यभावे ऽपि वृद्धनिमित्तस्येति पुंवत्त्वप्रतिषेधार्थं जातेश्चेति निषेधस्तु अस्मादेव ज्ञापकादनित्य इति बोद्धम् ॥ तत्प्रत्य ॥ तच्छब्देन ढः परामृश्यते प्रवाहणस्येति च वर्त्तते । बाह्लीति । स चेत्, इत उत्तरं विकर्णेत्यादिर्भावेय इत्यन्तो ग्रन्थो विपरीतलेखस्तु लेखकप्रमादात् ॥ कल्याण्यादि ॥ ढकि सिद्धे पीनङर्थमिदम् ढक्तु नित्य इति । वृत्त्यादिव्याख्यानादिति भावः । पूर्वेण । स्त्रीभ्य इत्यनेन । अत्र इनङ्विधौ । पक्षे इति । तदभावे ढगित्यर्थः ॥ कुलटाया ॥ चादुत्तरपदस्य । महति सौभगायेत्यादौ तूद्गात्रादित्वादञि छान्दसत्वाचोत्तरपदवृद्धिः स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादत आह चटकस्येति । एवञ्च सूत्रे चटकाया इति व्यर्थमित्याह लिङ्गविशिष्टेति । अजादित्वादिति । अत्र सामान्येन द्वयोरनुकरणमिति भावः ॥ क्षुद्राभ्यो ॥ अर्थनिर्देशोयन्तदभिधायिप्रकृतिभ्यश्चायं प्रत्ययः । शीलहीना अनियतपुंस्का दास्यादयः, अङ्गहीनाः काणादयः । अत एवेति । शुभ्रादिपाठकल्पनद्वारेति भावः प्रकारान्तरमपि प्रागुक्तम् ॥ मातृष्व ॥ चात्पितृष्वसुरित्यनुकृष्यते षष्ठ्या च विपरिणम्यते इत्याशयेनाह पितृष्वसुरिति । ठकोरिति । इदन्तेभ्य इतश्चेति ठक् प्राप्तः । ठञिति । गृष्ट्यादित्वात् । इति युलोप इति । ठेलोप इत्यस्य तु न प्राप्तिः परेणेयादेशेन बाधात् । अपत्यप्रत्ययस्येति । प्रवराध्यायप्रसिद्धघटकस्येत्यर्थः अपत्याधिकारादन्यत्र लौकिकं गोत्रमिति भावः । यस्कस्यापत्यं यास्कः शिवाद्यण् तदन्ताद्यूनि अणो द्व्यच इति फिञि यास्कायनय इत्यत्र युवप्रत्ययस्य तु न लुक् । विहितविशेषणाश्रयणात् । वस्तुतो ऽत्र शास्त्रीयं गोत्रम् । भाष्यरीत्या यस्कादिभ्यः शास्त्रीयगोत्रएव प्रत्ययविधानात् । अत एव वान्यस्मिन्निति सूत्रे गोत्रयूनोः समावेशे यास्कायनय इत्यत्र दोषः शङ्कितो भाष्ये अन्यथा सिद्धान्ते ऽप्यस्य समाधेयत्वेन

तत्रैवाशङ्कापरभाष्यासङ्गतेरित्यलम्। तद्राजस्येति सूत्राद्बहुष्वित्यादिवर्त्तते। तत्कृतेतिकिम्। प्रिययास्काः। बहुत्वे किम्। यास्कः॥ अत्रि॥ अत्रिशब्दादितश्चेति ढक् अन्येभ्य ऋष्यणिति बोध्यम्। बहुत्वे इति। तत्कृते न तु स्त्रियामित्यपि बोध्यम्॥ युधिष्ठिरा इति। बाह्वादित्वादिञ् भरतानां प्राच्यत्वादेव सिद्धे पुनरुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणार्थन्तेनेञः प्राचामिति लुक् भरतयूनोर्न यौधिष्ठिरिः पिता यौधिष्ठिरायणः पुत्र इति। अन्तर्गण इति। गोपवनादयश्च विदादौ प्राक् हरितात् बोध्याः, इदमत्रैव भाष्ये स्पष्टम्। गर्गभार्गविकेति समुदायोऽत्र पठ्यते इति तद्राजस्येति सूत्रभाष्ये गोत्रेलुगचीति सूत्रभाष्ये च ध्वनितम् तत्फलं तद्राजस्येतिसूत्रे निरूपयिष्यामः॥ तिककित॥ अत्र पूर्वोत्तरपदयोरुभयोरपि लुगविशेषात्॥ उपकादिभ्यो॥ अद्वन्द्वे इत्यस्य द्वन्द्व इति नानुवर्त्तते इत्यर्थस्तदाह। द्वन्द्वे चाद्वन्द्वे चेति। भाष्ट्रकिकापिष्ठलय इति। इदं भाष्ये स्पष्टं, एतेन भाष्ट्रककापिष्ठलोऽपि तिककितवादिषु पठ्यतइति वृत्त्युक्तमपास्तम्॥ आगस्त्य॥ अगस्त्यशब्दादृष्यण् इति सूर्यतिष्येति सूत्रे कैयटे स्पष्टम्। अगस्तिप्रकृतिकगर्गादियञन्ते तु यञञोश्चेति लुकासिद्धम्। कुण्डिनपर्यायनान्तकुण्डिन् शब्दात्तस्य भार्येत्यर्थे ङीपि निष्पन्नकुण्डिनीशब्दाद्गर्गादियञि भस्याढे इति पुंवत्त्वे प्राप्ते ऽत एव निपातनात्पुंवत्वाभाव इति भस्याढे इत्यत्र भाष्ये स्पष्टम्। एतेन कुण्डिन्प्रकृतिकगर्गादियञन्तस्याप्यत्र ग्रहणमित्यपास्तम्। कुण्डिनीत्येव गर्गादिषु पाठात्ततो यञभावाच्च। लुगिति। तेनागस्तीनां छात्रा इत्यर्थविवक्षायाङ्गोत्रे लुगचीति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टादेशनिवृत्तौ वृद्धत्वाच्छे आगस्तीया इति सादिवृद्धिरिति बोध्यम्॥ येचा॥ प्रकृत्यैकाजित्यतः प्रकृत्येत्यनुवर्त्तते। तत्र नेति वाच्ये प्रकृत्येत्युक्त्यानन्तरस्येति न्यायं बाधित्वा ऽल्लोपेन इति लोपोऽपि निवार्यते इति षपूर्वेति सूत्रे भाष्ये स्पष्टं तदाह राजन्य इति। शूद्राद्धाविति। तज्जातीयस्त्रियामित्यर्थः टिलोपो नस्तद्धित इति प्राप्तः। अल्लोपस्याप्युपलक्षणमिदम्। राज्ये पुरोहितादित्वाद्यक्॥ संयोगादिश्च॥ इनण्यनपत्य इत्यत इनणीति वर्त्तते ऽनपत्य इति च निवृत्तम्॥ ब्राह्मो॥ एकयोगत्वे अजातौ ब्राह्म इति निपात्यते इत्यर्थेऽपि ब्राह्मणो न सिद्ध्येत् अनिति तु नमपूर्व इति निषिद्धमत आह योगविभाग इति। निपातनस्यासाधारणं प्रयोजनं क्वेत्यत आहानपत्ये इति। ब्राह्मो नारद इत्यादावपत्ये न मपूर्व इति प्रकृतिभावनिषेधाट्टिलोपः सिद्धः एवाञ्चात्र निपातनसामर्थ्यादपत्य इति न संबध्यते। अजाताविति असमर्थसमासः अत्र मण्डूकप्लुत्यापत्य इति संबध्यते। तदाहापत्येजाताविति। जातौ किम्।

ब्राह्मणो नारदः । औक्ष्ण इति । ननु प्रकृतिभावादल्लोपोऽपि न स्यादत आह षपूर्वेति । तार्क्ष्णो तक्ष्णोऽण उपसंख्यानमित्यण् । तात्तण्ये कारितक्षणो ण्यः तत्रात् घ इति स्वरूपग्रहणं व्याख्यानात् । लिङ्गादिति । अन्यथा प्रत्ययविधौ तदन्तविधिनिषेधात्तदर्थं स्यादिति भावः । आढ्यकुलीन इति । एवञ्च ईकारउदात्तः कुले चाढ्यत्वप्रतीतिः कुलीनशब्देन समासे तु तदप्रतीतिरिति भावः । बहुकुल्य इति । बहुच्प्रत्ययः । पक्षे ख इति । तेनादिवृद्धिरहितमपि । पूर्ववदिति । अन्यतरस्यामित्यनुवृत्त्येति शेषः । शत्रुरिति । अपत्ये इति कल्पितार्थेनान्वाख्यानमात्रमिति भावः । सपत्नशब्दे सह युद्धाय पततीति विग्रहे पतेर्नप्रत्ययः सहस्य सादेश इत्याहुः । अङ्गस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यते तदाहाऽङ्गादिति । तेनाठचष्ठस्य न, अत्र ठस्येत्यागन्तुनाकारेणोच्चारणार्थेन निर्देशः वर्णमात्रं स्थानि । ठगादिप्रत्ययेष्वपि वर्णमात्रं प्रत्ययः उच्चारणार्थोकारः आदेशस्त्वकारान्तः अत एव वर्णग्रहणपक्षे कर्मठ इत्यत्र दोषवारणायाङ्गस्य निमित्तं षष्ठकार इति भाष्ये व्याख्यातं, यद्यपि सङ्घातग्रहणपक्षेऽपि भाष्ये उक्तः अव्युत्पत्तिपक्षाश्रयणेन कण्ठादिपूर्णादिषु न दोषः मार्थितिकेऽपि पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावात्र दोषः सन्निपातपरिभाषया वा कर्मठ इत्यत्रार्थवत्परिभाषया न दोषः तथापि लघुत्वाद्वर्णग्रहणपक्ष एव युक्त इति बोध्यम् । पुंवद्भावादिति । वृद्धिनिमित्तस्येत्यादिनिषेधः सौत्रस्यैव न भस्याढे इत्यस्येति भावः । स च प्रत्ययोत्पत्तेः प्रागेवेत्याह । गार्ग्यशब्दादिति । पुंवत्त्वेनार्थस्य निवृत्तावपि भूतपूर्वगोत्रस्त्रीवाचकत्वं गृहीत्वाऽत्र ण ठकौ तद्विवक्षामुपजीव्यैव पुंवत्वप्रवृत्तेः । स्त्रियाः किम् । औपगवस्यापत्यं युवौपगविः प्रकरणादिगम्यात्र कुत्सा । गोत्रेति किम् । कारिकेयः । णस्य णित्त्वं ग्लुचुकायन्या अपत्यं ग्लौचुकायन इत्यादौ वृद्ध्यर्थम् । वतण्ड्या अपत्यं वातण्डो जाल्म इत्यत्र तु पुंवद्भावेन ङीब्लुकौ निवृत्तौ सा सिद्धेति बोध्यम् ॥ वृद्धाट्टक् ॥ गोत्रेत्येकदेशोत्रानुवर्तते । सौवीरेष्विति प्रकृतिविशेषणं भागवित्तितार्णविन्दवाकशायेभ्य एवायमिति वृत्तिः । फिञन्तस्यासौवीरत्वाद्वृद्धादेरिति चिन्त्यप्रयोजनमेतदेव ध्वनयितुं वृद्धसञ्ज्ञासूत्रं नेहोपन्यस्तम् । फिञन्तस्य सौवीरगोत्रस्याभावादाह । फिञन्तादिति । तैकायनिः सौवीरोऽसौवीरश्च तेनात्र प्रत्युदाहरणत्वन्तैकायनीय इति भाष्योदाहृतञ्च सङ्गच्छते । फाण्टाहृ ॥ अत्रापि सौवीरगोत्र इति संबध्यते मिमतेन तु तस्य न संबन्धो व्याख्यानात् गोत्रत्वाभावाच्च वृत्त्युक्तमसङ्गतमित्याह । भाष्येत्विति । पूर्वनिपातव्यवस्था तु नावश्यं सर्वत्र शास्त्रे आश्रीयते इति तदनाश्रयणेन यथासंख्याभावसूचकमिति कैयटः । णस्य णित्वन्तु भाष्ये प्रत्याख्यातमेव पक्षे । इति । प्राचांमते इत्यर्थः ॥ तिकादि-

भ्यः ॥ तिकादिगणे कौरव्यः पठ्यते सच कुरुनादिभ्य इति व्युत्पन्न : क्षत्रियगोत्र-वाच्येव तत्र गृह्यते । न तु कुर्वादिभ्य इति व्युत्पन्नो ब्राह्मणगोत्रवाचीति एयत्त-त्रियेति सूत्रस्यवृत्तिस्वरसः । परमप्रकृतेरिति । कोशलशब्दात्कमोरशब्दाच्चेन्यर्थः विकृतनिर्देशस्तर्हि व्यर्थः स्यादत आह । प्रत्ययेति । सूत्रे च कौशल्यायन्यादि-प्रयोगे श्रूयमाणप्रकृतिभागानुकरणं आभ्यां परः फिञ्साधुरित्यर्थः अन्ये तु आयनादेशोत्तरं प्रत्ययस्य युडागमो निपात्यते अन्यथा प्रत्ययादित्वाभावात्स न स्यादित्याहुः । कोशलस्यापत्यमिति सूत्रे दन्त्य पाठ इत्यन्ये । छागेति । अपि-नादगोरपि । कार्त्रायणिरिति । कर्त्तृशब्दात्रः कार्त्रस्तस्यापत्यमिति विग्रहः अट्कु-प्वाङिति णत्वम् । कर्त्तुरपत्ये तु कुर्वादिगणे कर्त्तृ हर्त्रिति पाठात् एय एव एतदुत्तरं त्यदादीनां वा फिञ् वाच्यस्त्यादायनिस्त्याद इति क्वचिद्दृश्यते सो ऽयन्यः त्यदादीनि चेत्यनेन तेषां वृद्धत्वादुदीचां वृद्धादित्यनेन सिद्धः । भाष्ये तस्याभावाच्च । औपगविरिति । यूनीत्येवेति भावः ॥ वाकिनादीनां ॥ यदिह-वृद्धमगोत्रं ततः फिञि सिद्धे आगमार्थमिदं अन्येषामुभयार्थं, उदीचामित्यनु वर्त्तते इत्याशयेनाह वेति । वृद्धादित्यनुवर्तत इत्याशयेनाह वा फिञ् सिद्ध इति ॥ प्राचाम ॥ प्राचामिति पूजार्थम् । अवृद्धात्किम् । राजदन्तिः । बहुलग्रहणादिह दाक्षिः ॥ मनोर्जा ॥ जातौ किम् । मानवी प्रजा ॥ जनपद ॥ जनपदवाचकः सन्यः क्षत्रियवाचक इत्यर्थः । जनपदेति किम् । द्रुह्योर्द्रौह्यवाः अत्राणेव । क्षत्रियसमा नेति । क्षत्रियवाचकशब्देन समानो यः शब्दो जनपदवाचकस्ततः षष्ठ्यन्ताद्राज-न्यर्थेऽपत्यवत्प्रत्यय इत्यर्थः । इदञ्चात्रैव सूत्रे वार्तिकं तच्च प्राचामनुसारेणाह अन्वर्थसञ्ज्ञेति । भाष्ये त्वस्यास्तत्वं नोक्तम् । किंच तत्वे ऽपत्यवाचकत्वे सा न स्यात् ज्यादीनाञ्च सा न स्यादित्यन्ये ॥ साल्वेय ॥ साल्वेय साल्वावव्युत्पन्नौ देशक्षत्रियोभयवचनौ अत्र प्रकरणे सूत्रपाठात् । वृद्धेत् ॥ इदिति तपरकरणात्कु-मार्याः कौमारः जनपदक्षत्रियोभयवाच्ययम् । उदुम्बरादय इति । उदुम्बरास्ति-लखलामद्रकारयुगन्धराः । भूलिङ्गाः शरदण्डाश्च साल्वावयवसञ्ज्ञिता इति कुरुमगधेति सूत्रभाष्याद्गुधाजमीढाजक्रन्दा अपि बोद्ध्याः । बहुष्ववर्थेष्विति । बहुत्ववदर्थेषु विद्यमानं यत्तद्राजान्तं तदवयवप्रत्ययस्य लुगित्यर्थः तेनाङ्गश्च वाङ्गश्च कालिङ्गश्चेति विग्रहे ऽङ्गवङ्गकलिङ्गा इत्यादौ लुक्सिद्धिः । द्वन्द्वे प्रत्येकमन्यसंख्याप्रतिपादकविभक्त्यभावेन बहुत्वेनैव सर्वेषां प्रतीतेः यद्वा तद्राजार्थसमूहगतं बहुत्वे तद्राजस्य लुगिति न दोषः । तदर्थेति । तद्राजान्त-मात्रार्थाश्रितमिति यावत् । तेनाङ्गचैत्रमैत्रा इत्यादौ न तत्र चैत्रादावप्य-न्वयेन बहुत्वस्य तदर्थमात्राश्रितत्वाभावात् अत एव गार्ग्यकाश्यपगालवा-नामिति निर्देशाः । तत्र गालव ऋष्यणन्तः अन्यथा यञञोश्चेति लुक् स्यात् ।

भृगुवत्साग्रायणेष्विति निर्देशात्क्वचिल्लोपस्य लोऽपि द्वन्द्वविषये तेनैवेत्यङ्गवैकल्येऽपि प्रवृत्तिः आग्रायणोऽत्रालोपी । भृग्वात्रिभृग्विति ऋष्यणो लुक् वत्से यञोश्चेति यञो लुक् । तद्राजान्तेति व्याख्यानात् पाण्डस्य पाञ्चालस्यापत्यं माणवकाः पाण्डवः पञ्चाला इत्यादौ युवप्रत्ययस्य ण्यक्षत्रियेति लुकि युवबहुत्वे वर्त्तमानतद्राजप्रत्ययस्य लुक्सिद्धिः । वक्ष्यमाणरीत्या युवप्रत्ययस्यैवाजादिप्राग्दीव्यतीयस्य विषयसत्वात् प्राप्तौ गोत्रेऽलुगचीत्यलुक्तु न । गोपवनादिषु गर्गभार्गविकाशब्दपाठेन यून्युपसङ्क्रान्तस्य तेनालुगभावज्ञापनात् तस्य हि ऋष्यणन्तभार्गवाद्युवबहुत्वे इञो ण्यक्षत्रियेति लुकि युवबहुत्वे भार्गवस्य वृत्तेरत्रिभृग्विति प्राप्तलुको निषेधाय गोपवनादिषु पाठः अन्यथा गोत्रेलुगचीत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । गर्गभृगूणां मैथुनिकेत्यर्थः । विशिष्टस्यैव गणे पाठाद्गर्गादियञो लुको न निषेधः । अस्य विशिष्टस्य पाठेऽत्रत्यभाष्यकैयटौ मानम् न चैवमाङ्गप्रतिङ्कतय आङ्गा इत्यत्र लुगापत्तिः यञोश्चेत्यत्र लौकिकगोत्रग्रहणात्प्रत्यासत्याऽपत्यबहुत्वे वर्त्तमानस्यैव तेन लुगङ्गीकारेण तत्साहचर्येणास्यापि अपत्यतद्राजार्थान्यतरगतबहुत्वे एव प्रवृत्तेरदोषात् । पाञ्चालापत्ययौगिकपाञ्चालशब्दाद्बहुवचनान्ताद्युवप्रत्यये एकत्वद्वित्वयोः पाञ्चालः पाञ्चालावित्यत्र गोत्रेलुगचीत्यलुक् युवप्रत्ययस्य ण्यक्षत्रियेति लुक्यपि प्रत्ययलक्षणेनाजादिप्राग्दीव्यतीयविषयसत्वात् । न लुमतेति निषेधस्तु नाऽस्य प्रत्ययोद्देश्यकत्वेऽप्यङ्गोद्देश्यकत्वाभावात् । प्रत्ययलक्षणसूत्रस्य नियमार्थत्व तु गोत्रे लुगचीत्यत्राच् पदस्य हलादिभिन्नलाक्षणिकत्वं बोध्यम् एतेनात्राल्विधित्वात्तत्पक्षे स्थानिवत्वस्याप्राप्तिरित्यपास्तम् । लक्षणायां स्थानिभूतालाश्रयविधिताया अस्याभावेन तत्प्राप्तेः ध्वनितं चेदञ्जनपदशब्दादिति सूत्रे भाष्ये प्रकृतसूत्रे च अस्त्रियां किम् आङ्ग्यः स्त्रीत्वं प्रधानमेवात्र गृह्यते तेन पञ्चभिर्वाङ्गीभिः क्रीतः पञ्चवङ्ग इत्येव बहुत्वन्त्वप्रधानमपि व्याख्यानात् तेनाङ्गानतिक्रान्तो ऽत्यङ्ग इत्येवेति स्पष्टमत्रैव भाष्यकैयटयोः । कथमिति । बहुत्वे लुकः प्राप्तेरिति भावः । अतद्राजत्वाच्च लुगित्युत्तरम् । रघूणामिति । रघुयदुशब्दयोर्जनपदसमानशब्दत्वाभावादिति प्रश्नः । लक्षणयेति । यद्यपि व्याकरणशास्त्रस्य साधुत्वनियामकतया तत्संबन्ध्यपत्यमित्यर्थे प्रत्यायान्तस्यापत्यादिपदघटितसमासस्य च साधुत्वबोधनेन केवलप्रकृतेस्तदर्थे लक्षणयाप्यसाधुत्वमेवोचितं तथापि लक्षणयेत्यस्य रघुत्वारोपेणेत्यर्थः । एवञ्च रघुत्वेनैव ततो बोध इति नासाधुता तत्संबन्ध्यपत्यमित्यर्थे त्वसाधुतैवेति स्पष्टं परश्च पुंयोगादिसूत्रे भाष्ये ॥ कम्बोजाल्लुक् ॥ अबहूर्थमिदम् । अवन्ती कुन्तिरिति । अत्र ङीप् ॥ ङेर्लुक् तद्धितलुकीति

लुक् न अनुपसर्जनत्वात् ॥ अतश्च ॥ तपरकरणं स्पष्टार्थं स्त्रियामित्यस्य स्त्र्यपत्यार्थकस्येत्यर्थः। शूरसेनीति । अतो लुकि जातेरिति ङीष् नियतङ्गोत्र-त्वारोपात् । एते प्राच्या इति। क्षत्रिया इत्यर्थः। जन्यजनकभावेति। दाम्पत्य-लक्षण एव पुंयोगस्तत्र गृह्यते इति मते गौरादित्वात् ङीषिति बोध्यम् । लुकि त्विति। ञ्यादय इत्यञस्तद्राजत्वं योधेयादिग्रहणादेव पाञ्चमिकानाम-प्यतश्चेति लुक् तेन क्षत्रियजनपदोभयवाचिपर्शुशब्दाद् द्व्यचो ऽणि तस्यात-श्चेति लुकि अनेन स्वार्थिके ऽणि तस्याप्यनेन लुक्यूङि पर्शूरित्यादिसिद्धिरे-तेनानन्तरत्वाच्चातुरर्थिकानामेव लुगित्यपास्तम् । ङीपीति । योपधत्वान्न ङीष् । अस्योकार इति व्याख्यानाच्च न ङीनिति भावः । उदात्तनिवृत्तीति। अनुदात्तस्य च यत्रेत्यनेन ङीबुदात्तः स्यात् सिद्धान्तेत्वञन्तत्वान्ङीन्याद्युदा-त्तत्वमिति भावः ॥ अणिञोः ॥ अत्र पारिभाषिकं गोत्रं गोत्रावयवादिति सूत्रारम्भसामर्थ्यात् तद्धनन्तरापत्यार्थकं गोत्रादवयुतोनन्तरो दैवदत्त्या याज्ञदत्त्येति भारद्वाजीयोक्तिपरभाष्यात् शास्त्रीयगोत्रपृथक्भूते तत्सदृशे ऽनन्तरापत्यप्रत्ययान्ते विध्यर्यन्तेन युवापत्ये न, अतिप्रसङ्गस्त्वनभिधानान्नेति कैयटः । यदि तु अनन्तरापत्यप्रत्ययान्तदैवदत्त्यायाज्ञदत्त्ययोः क्रौड्यादिपाठं कृत्वा गोत्रावयवादिति प्रत्याख्यायते तदा लौकिकगोत्रग्रहणे ऽपि न दोष इत्यन्ये । ङकारो यङश्चावित्यत्रास्यापि ग्रहणार्थः षकारः सामान्यग्रहणावि-घातार्थो ऽन्यथैकानुबन्धत्वादस्यैव ग्रहणं स्यात् न तु ष्यङः न च टापा सिद्धिः अन्तोदात्तत्वानापत्तेः। अयञ्चादेश एव । न तु प्रत्ययः औदमेघ्याया अपत्ये स्त्रीभ्यो ढगिति ढकि औदमेघ्या सिद्धेति भाष्ये स्पष्टम् । अठे इत्युक्त्या पुंवत्वाप्राप्तिः अस्यापत्यार्थकत्वाभावेनापत्यस्येति यलोपाप्राप्तेश्च स्त्रियामिति विशिष्योक्त्या स्वार्थिकत्वे ऽपि स्त्रीस्वरूपस्वार्थार्थकतैवास्य । गोत्राणान्ता-भिजित्शब्दादत्यन्तस्वार्थिकयञस्तु विशेषानुक्तेः सकलस्वार्थबोधकतेति अपत्यार्थकत्वात्ततो गोत्रचरणादिति वुञि आपत्यस्येति यलोपे आभिजित-कसिद्धिरिति तदाशयः । नन्वादेशत्वे हस्तिशिरसोपत्यं हास्तिशीर्षिर्वाह्वादि-त्वादिञ् अचि शीर्षे इति शीर्षादेशस्तत इञः ष्यङ् हास्तिशीर्ष्या अत्र शीर्षस्य स्थानिवत्त्वेन शिरस्शब्दत्वाद्ये च तद्धित इति शीर्षन्नादेशः प्राप्नोति टिलो-पस्तु न येचाभावकर्मणोरिति प्रकृतिभावात्स्पष्टञ्चेदं ये च तद्धित इत्यत्र भाष्ये इति चेन्न, ये च तद्धिते इति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वात् । अत एव प्रकृतसूत्रे भाष्ये आदेशपक्षमुपक्रम्यैषपक्षो निर्दोष इत्युक्तमेवञ्च ये च तद्धित इति सूत्रे पूर्वपद्युक्तप्रयोगयोरनभिधानमेवेति तद्भावः यद्वा क्रौड्यादिगणे तयोः पाठादत्र ष्यङःप्रत्ययत्वमेवेत्यणिञ्भ्यां व्यवधानादत्र शीर्षन्नादेशाभाव

इत्याशयः ॥ गोत्रावयवा ॥ अवयवशब्दोऽन्त्यो ऽप्रधानवाची तेनाप्रधानं गोत्रं यत्कुलप्रतिष्ठाकरं तत् गृह्यते तदाह गोत्राभिमता इति । पुणिकभुणिकमुखरादि हि देशविशेषप्रसिद्धं कुलनाम पुणिकादयोऽत इञन्ताः किंच गोत्रादवयुतं पृथग्भूतमनन्तरापत्यन्तदर्थञ्चेदं भाष्यप्रमाण्यादर्थद्वये ऽपि सूत्रतात्पर्यम् । अनयोरुभयोरपि क्रौड्यादित्वकल्पने तु व्यर्थमेव सूत्रमिति बोध्यम् । क्रौड्यादिभ्य इति । पञ्चमीनिर्देशादत्र प्रत्ययत्वमेवेत्याह प्रत्यय इति । सूतेत्यादि । गणसूत्रे सूतशब्दाद्भोजशब्दाच्च प्रत्ययः सूत्याऽऽप्राप्तयौवना जातौ सूतीत्येव । एवमतत्त्रियाभोजैव । क्रौड्यादिपठितगौकक्षाशब्दस्य ष्यङन्तत्वे ऽपि गौकक्ष्यायाः प्रतिषेधः इति वचनात् । न संप्रसारणान्तेन गौकक्ष्यापुत्र इत्येव ॥ दैवयज्ञि ॥ देवा यज्ञा यष्टव्या यस्य तदपत्यमित्यर्थः । कण्ठे विद्धमस्य । काण्डे विद्धीति पाठे काण्डेन विद्ध इति समासे ऽत एव निपातनात्काण्डस्यैकारः । सत्यमुग्रमस्येत्यर्थे निपातनान्मुक् । अगोत्रार्थमिति । अनन्तरापत्यार्थमित्यर्थः गोत्रे शास्त्रीये । एवञ्चोभयत्रविभाषेयमिति भावः इदञ्च गोत्रावयवादित्यस्य पुणिकादिमात्रविषयत्वमिति वादिनां मते बोध्यम् । अन्यथा तु प्राप्तविभाषैवेति दिक् ॥ इत्यपत्याधिकारः ॥

तेन रक्तम् ॥ रागशब्दे करणे घञ् ॥ रागवाचकात्तत्करणकरञ्जनकमित्यर्थे प्रत्यय इत्यर्थः । कौमारेति पर्यन्तं तेनेति वर्तते । देवदत्तेनेति । रागादित्यस्याभावे कर्त्तृतृतीयान्तस्यापि ग्रहणं स्यादिति भावः । लाक्षागोरोचनाशब्देन समाहारद्वन्द्वः शकलं रागद्रव्यविशेषः । वृत्तिकार इति । भाष्ये तु नैतद्दृष्टम् । नक्षत्रेण युक्तः ॥ अश्विन्यादयः केवलनक्षत्रवाचकास्तद्युक्तचन्द्रवाचकाश्च तत्राद्ये ऽप्राप्तिपूर्वकप्राप्तिरूपयोगस्या संभवादन्त्यग्रहणम् । स च संकल्पवाक्ये प्रसिद्धः नक्षत्रशब्दो ऽप्येवं, अद्य किं नक्षत्रमित्यादिव्यवहारात् नक्षत्रयुक्तचन्द्रमसा युक्त इत्यर्थे प्रथमात्प्रत्ययो भवति यो युक्तः स चेत्काल इति सूत्रार्थः । स च नक्षत्रवाचकादेवाभिधानस्वाभाव्यात् । नक्षत्रेणेति किम् । चन्द्रेण युक्ता रात्रिः । कालः किं, पुष्येण युक्तं गमनम् ॥ अद्येति । अद्यतनमहोरात्रमित्यादाविव राहोः शिर इत्यादाविव कल्पितभेदमादायाधारत्वोपपत्तिर्बोध्या । पौर्णमास्यामिति । अन्यत्र तु पुष्यः पञ्चमीत्येव । अत एवेति । तत्र श्रवणेत्युक्तेरेव । अनेन च पौर्णमास्यां लुब्नेत्यस्यानित्यत्वं ज्ञाप्यते तेन श्रावणी अबाधकान्यपीति वृत्तिमतं तु न युक्तं बाधकान्येव निपातनानीति सर्वादिसूत्रे भाष्योक्तेः ॥ संज्ञायां श्रव ॥ विभाषेति सूत्रे श्रवणेत्युच्चारणात् ज्ञापकादेवैतद्विषये ऽपि श्रवणशब्दे युक्तवद्भावो न तेन श्रवणारात्रिरिति सिद्धम् । द्वन्द्वाच्छः ॥ अत्राविशेष इति नानुवर्त्तते ऽस्वरितत्वात् । कलेर्ढगिति वार्त्तिकम् ।

परिवृतो ॥ तेनेति वर्त्तते । समन्ताद्वेष्टितः परिवृत इत्युच्यत इत्यपाठः पुत्रैः परिवृत इति प्रयोगात् तदेकान्तग्रहणं कर्त्तव्यमिति वार्त्तिकाच्च ॥ द्वैपमिति । प्राणिरजतादिभ्योऽञ् ततोऽणपवादोऽञ् स्वरे विशेषः । अपूर्वत्वे इति । अपूर्वं उच्यते येन प्रवृत्तिनिमित्तेन तदपूर्ववचनं तत्रत्यवरार्थे इति भावः तच्च प्रकृत्यर्थगतं अपूर्वश्च पतिरेव रूढेः योग्यतावशाद्वितीयान्तात्प्रथमान्ताद्वा प्रत्ययः । आद्ये उपयन्तरि द्वितीये तूपयमनविशिष्टे स्वार्थे इति बोध्यम् । द्वितीयान्तस्येदमित्यणापि सिद्धम् । अपूर्वपतिमित्यादिर्बहुव्रीहिः । तत्रोद्धृ ॥ तत्रेति सास्मिन्नित्यतः प्रागनुवर्त्तते । तेन निधाननिरूपिताधिकरणत्वेन उद्धरणे स्यात्यवधिः । अष्टाकपाल इति । द्विगोर्लुगित्यणोलुक् । संस्कृतमिति । भोजनादिरूपोपयोगफला क्रिया संस्कारः न तु गुणाधानमेव । उषेति । वसेः क्विपि संप्रसारणे तृतीयान्तमेतत् । दोष इति । भाष्यकारीयमेतत् । न त्विति । अत्र वृत्तिः शरणम् । सञ्ज्ञायामितीति । तेन सावनातिरिक्तमासार्द्धमासयोरेवानेन प्रत्यय इति बोध्यम् । प्रज्ञादेरिति । साचाय्यानुज्ञावरेत्यादिपाञ्चमिकवार्तिकं नापूर्वमिति भावः । सास्यदे ॥ संबन्धित्वेन प्रदेयं मन्त्रश्च प्रत्ययार्थः प्रकृत्यर्थस्य देवतात्वं वृत्तिस्वभावबललभ्यम् । तत्र संबन्धित्वेन बोधे ऽपि विशेषरूपेण बोधाय दध्यादिपदप्रयोगो ऽपि ऐन्द्रं दधीत्यादेरिन्द्रदेवतासंबन्धीति बोधः । मन्त्रस्तुत्या चेति । अत्रार्थे देवताशब्दस्य रूढिः । दिवेरैश्वर्यकर्मणो देवता, तेन पितरोदेवतेति सिद्धमिति देवात्तल्सूत्रे भाष्यात् । आग्नेय इति । अग्न्युद्देशेन ब्राह्मणत्यागाभाव इति शङ्का । ढगिति । अग्नेरयं भक्त इत्यर्थे इति भावः विश्वेभ्यो देवेभ्यः स्वाहेति लिङ्गाद्ब्रह्मस्तस्यैवदेवतात्वे ऽपि वैश्वदेव्यामित्तेत्यादौ तद्धितवृत्तिविषये समासो विश्वदेव इति बहुव्रीहिश्च साधुरिति बोध्यम् । कशब्दस्येति । ब्रह्मरूढस्यैवात्र ग्रहणं एवञ्च कायानुब्रूहीत्येव प्रैषः कस्मा अनुब्रूहीति कल्पसूत्रोक्तमार्षमित्याहुः । परे तु किमोप्यत्र तन्त्रेण निर्देशः शब्दपरत्वेपि किमः कादेशः त्रिय इत्यादावियङ्वत् । किंशब्दोऽपि प्रजापतिवाची अत एव कस्मै देवाय हविषा विधेमेति श्रुतौ प्रजापतये इत्यर्थकं कस्मा इति सङ्गच्छते एवञ्च कस्मादित्यपि प्रैष उक्तश्रुतिमूलकः शाखाभेदेन व्यवस्थितः विष्णुसहस्रनामसु च एकोनैकः सवः कः किं यत्तत्पदमनुत्तममित्युक्तम् । न च सञ्ज्ञात्वादस्य सर्वनामत्वाभावे कथं स्मायादिः सर्वनामसञ्ज्ञाप्रतिषेधे आधुनिकसञ्ज्ञाया एव ग्रहणात् । अत एव विश्वेषां देवानामिति सिद्धं तदुक्तं भाष्ये अथयत्कायं हविः कथं तत्प्रैषः कर्त्तव्य इति । कल्पकारविप्रतिपत्त्या संशय इति कैयटः श्रुतिविप्रतिपत्त्या संशय इत्यन्ये । यदितावत्सूत्रे किमः कादेशः कस्मा अनुब्रूहीति भवितव्यमथ न किमः काया-

नुबूहीति भवितव्यमिति। अत्राथ न किम इत्युक्त्वा तन्त्रेणोभयनिर्देशे सन्देह एव नेति पूर्वपक्षिणैव सूचितमिति सिद्धान्तिना न किमप्युक्तं तदुत्तरमुभयथा कस्मा इति कशब्दस्यापि सर्वात्मकप्रजापतिवाचकत्वेन सर्वनामत्वात्। गणपाठस्तु प्रपञ्चार्थः सकलकृत्स्नादीनां त्वनभिधानाच्च सर्वनामकार्यमपर आह किमो ऽपि कायेत्येवसञ्ज्ञात्वेनासर्वनामत्वादिति भाष्ये उक्तं तद्द्वयमप्येकदेश्युक्तिः सर्वादिप्रकरणस्यभाष्याद्यसंमतत्वादन्त्ये स्मैभावाभाववत्कादेशस्यापि कायेत्यादावभावापत्तिरित्याहुः। परत्वादिति। उत्कृष्टत्वादित्यर्थः तत्त्वञ्चेकारविधानसामर्थ्येन बलवत्त्वं आयमित्यत्र तु परत्वाद्बाध इति बोध्यं, केचित्तु णौ चङीति सूत्रे नाग्लोपिग्रहणाद्वृद्धेर्लोपो बलीयानित्युक्तं भाष्ये तच्च सामान्यापेक्षमित्यत्रापि वृद्धेर्ल्लोपोबलीयान् अत एव स्त्रीपुंसाभ्यामिति सूत्रे ञ्ञ्प्रत्ययो विधेयो नुगागमश्च कार्यो नञ्स्नञ्ग्रहणञ्च व्यर्थमित्याशङ्क्य टिलोपः स्यात् न च नुग्विधानसामर्थ्यं स्त्रैणे यं विधिं प्रतीति न्यायेन तद्विधानसामर्थ्यात्तदभावे ऽपि पौंस्ने दोष इत्युक्तम्। त्वद्रीत्या स्त्रैणेनुक्येव टिलोपप्राप्तिरन्यथा वृद्ध्याबाधात्तदप्राप्तिरिति भाष्यासङ्गतिः स्पष्टैव। मम तु न सा। वृद्धेर्लोपस्य बलवत्त्वात्। आयमिति तु यद्यार्षं प्रमाणसिद्धं तदा वर्णव्यत्ययेन साध्यं लोके त्वसाध्वेव। अत एव किमः कायमिति भाष्योक्तं सङ्गच्छते। अन्यथा तत्पक्षे मस्येत्वे परत्वाद्गुणादाङ्गस्य बलवत्त्वाच्च लोपसवर्णदीर्घौ बाधित्वा त्वद्रीत्या वृद्धौ पूर्वस्य यणादेशे तदसिद्धिः स्पष्टैव। मम तु वृद्धिं बाधित्वा यस्येति लोपे पूर्वकारस्य वृद्धौ तत्सिद्धिः कादेशस्तत्र दुर्लभः विभक्तिपरत्वाभावात्। एतेन द्वारादीनाञ्चेति सूत्रे परस्य वृद्धिर्नेत्यनुवृत्तौ शौनं मांसमित्यत्र टिलोपे एजागमो न प्राप्नोति। आनुपूर्व्यात्सिद्धमेतत् नात्र कृते ऐजागमे टिलोपः प्राप्नोति प्रकृत्यैकाजिति प्रकृतिभावेन भवितव्यमिति भाष्यमुपादाय तत्कैयटे नोक्तमिष्टेमेयः सु प्रकृतिभावः तथा च त्रादेवतास्य त्रः स्थालीपाक इत्यत्र न भवति तस्मात्परिहार इदिरोषा परत्वाट्टिलोपं बाधित्वा वृद्धिः प्राप्ता प्रतिषिध्यत इति भवत्यैजागम इत्यत्र परिहार इति तदपास्तम्। भाष्यकारेण तु दुष्टपरिहारोक्त्यानुवृत्तिपक्षो दुष्ट इत्येव बोध्यते। तेन स्त्रीपुंसाभ्यामिति सूत्रस्थं स्त्रैणे दोषाभावपरं भाष्यं कस्येदिति सूत्रे लोपस्येकारविधानसामर्थ्येन वारणपरं भाष्यञ्च चिन्त्यमेवेति यत्कैयटेनोक्तं तदेव चिन्त्यमिति दिक्। सखियोगेनेति। अपीनपत्रे स्वाहेत्यादि तु छान्दसम्। रीङ्॥ अङ्गवृत्तपरिभाषयाकृत्सार्वेति च्वौ चेति च दीर्घाप्राप्तेर्दीर्घोच्चारणं वस्तुतस्तत्परिभाषायाः फलाभावात्स्पष्टार्थमेव तत्। ईगागमेन यथा सिद्धौ रीवि-

धानं प्रक्रियालाघवार्थम् । अनिर्दिश्यमानसर्वादेशत्वभ्रमवारणार्थं च ङित्त्व-मिति संप्रदायः । द्यावा ॥ अणपत्युत्तरपदण्ययोरपवादः । मरुत्वानिन्द्र अग्नी-षोमे । इदग्नेः सोमेतीत्वम् । वास्तोष्पती वाचस्पतिदिवस्पतिवत्तत्पुरुषे कृतीत्यत्र बहुलग्रहणादलुक् । कस्कादित्वादात्वम् । महाराजो वैश्रवणः । प्रोष्ठपदात्पूर्वेण नक्षत्राणि प्राप्ते वचनम् । सौमेन्द्र इति । नन्वन्तरङ्गत्वादाद्गुणे उभयत आ-श्रयणे ऽन्तादिवत्त्वाभावेन पूर्वपदात्परेन्द्रशब्दाभावेन निषेधोऽव्यर्थः किंच वृ-द्धिरप्यत्र न प्राप्नोति पूर्वान्तत्वेनैकादेशविशिष्टे पूर्वपदत्वेन्द्रशब्दस्यैकदेशवि-कृतन्यायेनोत्तरपदत्वे ऽपि तस्यानच्कत्वात् । एकस्यैकादेशेन परस्य नित्येन यस्येतिलोपेनापहारात् न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवा-स्त्विति तत्सम्भव इति वाच्यम् । उत्तरपदाद्यज्निमित्तकत्वाद्वृद्धेरप्राप्तेस्ता-द्रूप्यानतिदेशात् । एतेन सामर्थ्यादन्त्यवृद्धेरेव निषेध इत्यपास्तम्, मरुदादिभि-रिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपात इतिचेन्न । अनेनैव निषेधेन पूर्वोत्तरपदनि-मित्तकार्यात्पूर्वमेकादेशाभावज्ञापनादित्यन्तादिवत्सूत्रे विप्रतिषेधसूत्रे च भाष्ये स्पष्टम् । पूर्णमासादिति । यद्यपि पूर्णो मासो येनेति पूर्णमासश्चन्द्रस्तस्येय-मिति पौर्णमासी सिद्धा तथापीदृशे एवार्थे साधुत्वमेवं व्युत्पत्तिज्ञानपूर्वकप्र-योग एव चाभ्युदय इति भावः । पितृव्ये नित्प्रत्ययस्त्विद्धेति बहुश्रुतैर्विचार्यम् । मातुरिति । भ्रातरीति वर्त्तते मातरपित्वेति गौरादिषु मातामह्यादिशब्दपाठो ऽसांप्रदायिक इति भावः । सकारपाठेति । प्रत्ययेष्विति शेषः । उदाहरणेषु भाष्ये षत्वाकरणात्सकारप्रयोजनान्तरानभिधानमिति भावः । दुग्धे इति । सप्तमीस्था-निनोऽधिकरणत्वविवक्षयेति दुग्धस्य स्थाने एते आदेशा इति तु चिन्त्यं प्रत्य याभवन्तीति भाष्ये वाक्यशेषात् । तिलान्निष्फलादिति । निष्फलबोधकात्तिलश-ब्दादित्यर्थः प्रत्ययस्तु स्वार्थे । यौवनमिति । अनिति प्रकृति भावः । शत्रन्ता-दिति । प्रत्ययस्वरेण मध्योदात्तत्वादनुदात्तादिरयम् ॥ ऊर्णायुरित्यादिव्याख्याने आहानुनासिकयोरिति । ल्युप्रभृतिषु सोनुनासिको नान्यत्र । युवोरितीतरेतर-योगद्वन्द्वः । उत्तरपदे सौत्रत्वाद्वलोपः ल्युण्वुलादिषु उकारो ऽननुनासिक एवा-देशेनैव तदपहारसिद्धेरिति प्रकृतसूत्रे भाष्ये स्पष्टम् । अह्नः ख इति वार्त्तिकम् । क्रतौ वर्त्तमानाहन्शब्दात्समूहे ख इत्यर्थः । एवञ्च सुत्यासमूहे रूढो ऽही-नशब्दस्तत्फलितमाहाहर्गणेत्यादि ॥ यञ्छाविति । यथासंख्यमत्र ठगणाविति केशादचित्तत्वेन ठक् अश्वादणित्यर्थः ॥ वात्येति दिग्भेदेन । बुद्धिकल्पितवा-तभेदाश्रयः सामूहिकः । इनित्र ॥ योगविभागो यथासंख्यार्थः ॥ विषयो ॥ देशग्रहणाद्विषयशब्दोऽत्र ग्रामसमुदायवाचीति वृत्तिः विषयः स्वत्ववान्

निवासस्तु न नियमेन तथेति तयोर्भेदः देशोत्र प्रकृतिप्रत्ययसमुदायशक्यतया प्रत्ययोपाधिः क्वचिद्देशप्रयोगस्तु नानार्थत्वात्सन्देहवारणाय । देवदत्तस्य विषय इति । तेनात्यन्तपरिशीलित इत्यर्थः । भौरिक्याद्यै ॥ यथासंख्यमत्र ॥ सङ्ग्रामे प्र ॥ सोस्येति । एवञ्च प्रथमैवात्र समर्थविभक्तिः प्रयोजनयोद्धृभ्य इति पञ्चमीनिर्देशात्तद्वाचकस्यैव प्रकृतित्वं सङ्ग्रामे इति सप्तमी षष्ठ्यर्थे इति तदस्येति प्रत्ययार्थविशेषणम् । सङ्ग्रामे इति किम् । सन्तोषः प्रयोजनमस्य भोजनस्य । प्रयोजनेत्यादि किम् । सुभद्राप्रेक्षिकास्य सङ्ग्रामस्य । तदस्याम् ॥ प्रथमान्तात्प्रहरणोपाधिकात् क्रीडारूपसप्तम्यन्तार्थे ण इत्यर्थः । घञः ॥ सेति स्त्रीलिङ्गं क्रियापेक्षम् । गतिकारकेति । तत्फलं श्यैनंपातादावादिवृद्धिः । ञप्रत्ययेति । ञस्य पातशब्देन व्यवधानम् । येन नाव्यवधानन्यायेन सह्यते इति सर्वत्र लौकिकविवक्षानुसरणाय तेन यथाभिधानमेव साधुत्वम् । तदधी ॥ शब्दपाठो ऽध्ययनं तदर्थज्ञानं वेदनम् । द्विस्तच्छब्दोपादानं स्पष्टार्थम् । कर्तृकर्मणोरिति सूत्रस्थभाष्यपर्यालोचनया तद्धितार्थस्य क्रियात्वाभावेप्यलौकिके द्वितीयान्तात्प्रत्ययविधानसामर्थ्यादेव द्वितीया । एवं तत्र भव इत्यादि विषये सप्तम्याद्यपि अधीते इत्यादीनां लौकिकप्रयोगे क्रियाप्रधानत्वेप्यत्र कारकप्रधानतेत्यन्यत्र प्रपञ्चितम् ॥ तत्प्रतिपादकेति । उभयोः सहाधिकारेणोत्तरसूत्राणामर्थद्वये ऽपि प्रवृत्तिरिति भावः । अध्येतरीति । तत्रापीत्यर्थः । ग्रन्थविशेषः । औक्थिक्यंकाख्यप्रातिशाख्यम् । लक्षणया उक्थत्वारोपेण औक्थिक्यशब्दात्तु नानयोः प्रत्ययोनभिधानात् । नेष्यत इति । ठको ऽनभिधानमात्रे भाष्यस्वरसः । वृत्तिम् । संहिताम् । इत्यादीति । अनुसूर्यन्यविशेषः आनुसुकः इसुसिति के केण इति ह्रस्वः । सूत्रान्तात्त्विति । एतच्च कैयटे स्पष्टं साङ्ग्रहसूत्रिके समाहारद्वन्द्व इति कश्चित् द्विगौ तु तद्धितलुक्स्यादत आह त्रिविधेति । पदोत्तरपदादिति । पदशब्दोत्तरपदकादित्यर्थः । शतषष्ठेरिति । ताभ्यां परो यः पथिन्शब्दस्तदन्तादित्यर्थः । प्रोक्तादिति । स्वरितत्वबलात्तदधिकारस्थप्रत्ययपरम् । प्रोक्तादिति वक्तव्ये ऽयं सौत्रोनिर्देश इति भाष्ये स्पष्टम् ॥ इनण्यनपत्य इत्युक्तेरापत्यार्थं वचनङ्गाथिविदथीति । गयत्तत्रिय ॥ गयादयः सर्वे गोत्रप्रत्यया एव गृह्यन्ते गोत्राद्यूनीत्युक्तेः । क्षत्रियगोत्रेति । क्षत्रियवाचिनो गोत्रप्रत्ययान्तादित्यर्थः । आर्षेति । ऋषिप्रकृतिकप्रत्ययान्तादित्यर्थः । कौरव्य इति ब्राह्मणगोत्रमेतत् । वामरथ्यस्येति । वामरथः कुर्वादिस्ततो वामरथ्यस्य कण्वादिवत्स्वरवर्जमित्युक्तेर्जातस्य कण्वादिभ्यो गोत्रे इत्यणो न लुगिति भावः । ऋष्यण एवेति । ऋष्यणप्रकृतिकाणिञोरित्यर्थः । पथिन् शब्दात्तु न ऋष्यण् किन्त्वौत्सर्गिक एव । यत्र ह्यौत्सर्गिकस्येञाबाधः प्राप्तस्तत्रैव तद्बाधनार्थं ऋष्यण् प्रवृत्तेरिति भावः । इदं

प्राचामनुरोधेन । परे तु वान्यस्मिन्निति सूत्रे ऽत्रिशब्दादितश्चानिञ इति ढकि तत इञि यथत्तन्निथेति लुको भाष्ये उक्तत्वेनेदं चिन्त्यं, तस्मादत्र प्रतिपदोक्तपरिभाषा ऽप्रवृत्तिरेव । पणिन्शब्दो यौगिको न तु रूढः लुग्विधौ ऋषिवाचकस्य रूढस्यैव ग्रहणमित्याहुः । वृद्धाच्छ इति । तत्र विवक्षिते इञो यूनि लुगिति लुक् । जइश्चेति प्रत्ययलक्षणेनेञन्तत्वादिति भावः । गोत्रे इति । यथा तत्र पारिभाषिकगोत्रस्यैव ग्रहणं तथा वक्ष्यते । स्वरे इति । असत्यणो लुकि प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां ङीप् च स्यादिति भावः । छन्दोब्राह्मणानि च ॥ छन्दःपदेन गायत्र्यादिछन्दोयुतमन्त्राणामेव ग्रहणमिति ब्राह्मणग्रहणं जुष्टार्पिते च छन्दसीत्यत्र छन्दःपदस्य ब्राह्मणे लक्षणा नित्यं मन्त्रे इत्युत्तरसूत्रे मन्त्रग्रहणात् । चेन पुराणप्रोक्तेष्विति सूत्रविषयभिन्ने कल्पे सूत्रे च तद्विषयतेष्यते इति भाष्ये स्पष्टम् । अनन्यभावे विषयशब्दस्तेन प्रोक्तप्रत्ययान्तेभ्यः सुबुत्पत्तेः पूर्वमेवाध्येतृप्रत्यये।तः काश्यपिन इत्यादौ उत्तरपदत्वे चेति वार्त्तिकारम्भेऽप्यवान्तरसुपा पदत्वमाश्रित्य नलोपोन । प्रोक्तादित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणम्यते । तद्विषयाणीति तच्छब्दो ऽध्येतृवेदित्रर्थकप्रत्ययपरामर्शी । अर्थमात्रपरामर्शे कठं महदिति वत्कठमधीतइत्यस्यासाधुतानापत्तिरिति दिक् ॥

तदस्मिन् ॥ मत्वर्थापवादः । इति शब्दः प्रत्ययान्तश्चेत्प्रसिद्धदेशनाम तदैव यथा स्यादित्यर्थम् । जनपदे लुबिति तु न्यायसिद्धानुत्पत्त्यन्वाख्यानमेव तत्र प्रत्ययान्तस्य देशनामत्वाभावेन प्रत्ययानुत्पत्तेः । तेन नि ॥ इति देशइत्येष्वपि सम्बध्यते तेनेति कर्त्तरि तृतीया । अदूरं निकटं तत्र भवमिति समासः । त्रयोर्या इति । व्याख्यानादिति भावः । चातुरर्थिकत्वमिति । चतुर्णां सूत्राणामर्थाश्चतुरर्थास्तत्र भवश्चातुरर्थिकः । ओरञ् । सुवास्त्वादिभ्यः प्रागञधिक्रियते । मत्वन्तेति । सामानाधिकरण्यस्य न्याय्यत्वाद्भावत्यन्तु स्ववानिति स्यात् तथा चाहिमतमित्यादावतिप्रसङ्ग इति भावः । रोणी ॥ लुप्तपञ्चम्यन्तमेतत् । येन विधिरिति सूत्रस्थभाष्यात्प्रत्ययविधावपि तदन्तविधिः । वुञ्छ ॥ यथासंख्यानुरोधात्कुमुदशब्दयोरेकशेषो न कृतः । पक्ष इति । पक्षाद्यन्तर्गणसूत्रम् । विशेष्यानुरोधि लिङ्गवचने प्राप्ते आह लुपीति । प्रत्ययार्थेन नित्यसंबद्धार्थत्वाद्युक्तं प्रकृतिः लुपि लुबन्तार्थे प्रकृत्यर्थे इव व्यक्तिवचने लिङ्गसंख्ये भवत इत्यर्थः । लिङ्गातिदेशफलं कटुबदर्या अदूरभवो ग्रामः कटुबदरीति । व्यक्तीत्यादिकिम् । शिरीषाणामदूरभवो ग्रामः शिरीषाः वरणादिभ्यश्चेति लुप् तस्य वनं शिरीषवनमत्र वनस्पतित्वातिदेशे विभाषौषधीति णत्वापत्तिः । तदेतत्पाणिनिः प्रत्याचष्टे । तदशिष्यमिति । सञ्ज्ञानां लोकव्यवहाराणामेव तत्र प्रमाणत्वं न तु

तदंशे शास्त्रव्यापार इत्यर्थः । यथा दारादिभिः शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्य भानं तथा लुबन्तैरपि शास्त्रीयप्रकृत्यर्थगतलिङ्गसंख्याविशिष्टस्यैव स्वार्थस्य भानमिति भावः । एवञ्च लुबपि व्यर्थ इत्याह । लुब्योगेति । योगोवयवार्थस्तस्याप्रख्यानादप्रतीतेरित्यर्थः । नह्यङ्गसंबन्धिनिवासत्वेनाङ्गा इत्यादितो बोध इति भावः । प्रत्ययस्वीकारे बाधकमप्याह । योगप्रमाणे चेति । पञ्चालादौ योगस्यावयवशक्तेः प्रमाजनकत्वे इत्यर्थः । तदभावे क्षत्रियसंबन्धाभावे पञ्चालादीनां जनपदे प्रयोगो न स्यादित्यर्थः । प्रसङ्गादन्यदपि पूर्वाचार्यपरिभाषितं प्रत्याचष्टे । प्रधानेति । यत्पूर्वाचार्यैः प्रधानोपसर्जने प्रत्ययप्रकृत्यर्थावित्येवं वचनं कृतं तच्च न कार्यमिति सूत्रार्थः । अतीतायाः रात्रेरिति । अतीतरात्रेरन्त्ययामेनागामिरात्रेराद्ययामेन च सहितो दिवसो ऽद्यतन इति लुङ्सूत्रे भाष्यकैयटयोः । विशेषणानाञ्चा । अत्र लुपीत्यनुवर्त्तते तदाह लुबर्थस्येति । लुबन्तार्थस्येत्यर्थः यद्यपि लुबन्तार्थस्य तत्त्वातिदेशात् तद्विशेषणानामपि सिद्धम् बदरी वृक्ष इत्यादाविवात्रापि जातिरूपविशेषणे तदभावः सिद्धस्तथापि जातिभिन्नविशेषणानां युक्तवद्विशेष्यवल्लिङ्गादीत्यर्थेन गुणवचनानामाश्रयतो लिङ्गवचनानीत्येतत्सिद्ध्यर्थमिदमिति भाष्यकृतः । आश्रयतो विशेष्यतः । इदमपि वाक्यसंस्कारपक्षे आश्रयविशेषस्य पूर्वं प्रक्रमेण विशेषणानामपि तल्लिङ्गसंख्यत्वं न्याय्यमिति न्यायसिद्धार्थानुवादः आश्रयत इत्युक्तेर्वाक्यसंस्कारे एवास्य प्रवृत्तिः अत एव विभक्त्यर्थसंबन्धस्य बहुव्रीह्यर्थत्वे लिङ्गाद्यनुपपत्तिमाशङ्क्यानेन न्यायेन परिहृतमनेकमन्यपदार्थे इत्यत्र भाष्ये स्पष्टञ्च तत्रैव कैयटे । संस्कृतं भक्षा इत्यादि तु पदसंस्कारपक्षे एव साधु तत्पक्षे ऽस्य वाचनिकस्याङ्गीकारे तु समासस्याकडाराकभाष्यरीत्या तद्वचनत्वाभावादेतद्वचनाप्रवृत्तौ भाष्यासङ्गतिः स्पष्टैवात एव भाष्ये गुणवचनवल्लिङ्गवचनानीत्युक्तं गुणवचनत्वे हि वति निर्देशासङ्गतिरिति दिक् । लुपीति सूत्रस्य विषयविवेकमाह । हरीतकीति । व्यक्तिः सैवेत्यर्थः । हरीतक्यादिभ्यश्चेति लुप् । वचनमिति । तदेत्यर्थः । खलतिको वनादिः । विशेषणानां चेत्यस्य प्रतिषेधमाह । मनुष्येति । चञ्चाभिरूप इति । सञ्ज्ञायामिति कनो लुम्मनुष्य इति लुप् । नचैवं विशेष्यगतलिङ्गादिनिषेधे सामान्ये नपुंसकं युक्तमभिरूपपदे इति वाच्यं लुबन्तार्थे ऽतिदिष्टलिङ्गस्य तद्विशेषणे विशेषणानामिति प्राप्तस्य निषेधे ऽपि वस्तुतो विशेष्यस्य पुंस्त्वात्तदन्ततः प्रत्याख्याने तु लोकत एवात्र पुंस्त्वं बोध्यम् । कुमुदादाविति । ऋश्याद्यनन्तरे इत्यर्थः । वायहणेति । अन्यथा तत्र पाठसामर्थ्यादेवठच्कको विकल्पेन लोपे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । षडिति । ऋश्यादावपि पठतां मते सप्तेति बोध्यम् ।

नद्यां मतुप् ॥ सामान्येन मतुपि सिद्धे ऽर्थान्तरे विधानार्थम् । नद्या अपि देशत्वेन तदस्मिन्निति प्राप्ताणो बाधनार्थं चेदम् । मध्वादिष्विक्षुशब्दपाठस्तु ओरञिति सूत्रस्थभाष्यविरुद्धः । तत्र हि ओरञ्विधेर्नद्यां मतुप् विप्रतिषेधेनेत्यस्येक्षुमतीत्युदाहरणं दत्तम् । कुमुदन ॥ अयं मत्वर्थ एवेति न पदान्तसूत्रे भाष्यकैयटयोः । वेतस्वानित्यादौ रुत्तु न अल्लोपस्य स्थानिवत्त्वात् । नपदान्तेति निषेधस्तु न पदे परतश्चरमावयवे कर्त्तव्ये परपदस्याजादेशस्यैव तन्निषेधप्रवृत्तेः । न च पूर्वत्रासिद्धीये न स्थानिवदिति निषेधः न पदान्तसूत्रे दत्तोत्तरत्वात् । अन्तरङ्गासिद्धत्वन्तु नात्र कार्यकालपक्षे ऽपि त्रिपाद्यामप्रवृत्तेः । झय इति । नडे प्राप्तियोग्यतामात्रेणैवमुक्तं वस्तुतो झय इत्यस्यासिद्धत्वान्नडे ऽपि मादुपधाया इत्येवोचितम् । प्रकरणे प्रकरणमसिद्धमिति पक्षस्तु भाष्ये एव दूषित इति दिक् । ङित्त्वन्तु टिलोपार्थं पित्वन्तु नद्विषयत्वेनाद्युदात्तकुमुदशब्दे ऽनुदात्तनिवृत्तिस्वराप्राप्त्या मतोरनुदात्तत्वार्थम् । महिष्मानिति । अत्र प्रत्यये भाषायामित्यनुनासिको न मकारसवर्णानुनासिकाभावात् । अनुनासिकविधौ सवर्णग्रहणापकर्षेण सवर्णानुनासिक इत्यर्थात् । शादौ दोपधः । नडाद्यन्तरिति । नडाद्यन्तर्गता बिल्वादयः कृतकुगागमा उच्चारणार्थाकारसहिताः सूत्रे निर्दिष्टा, व्याख्यानात्कान्तगणपाठाभावाच्चेति भावः । छस्य किमिति । तेभ्यः परस्य छस्यैव संभव इति प्रश्नः । सन्नियोगेति । तेषामन्यतरापाये उभयोरप्यपाय इति न्यायेनेत्यर्थः । अस्य चेदमेव ज्ञापकम् । अत एव पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ ङीषो लुक्यानुको निवृत्तिः । लुग्ग्रहणमिति । ठलोप इत्यनुवर्त्तमाने इत्यर्थः । लोपग्रहणानुवृत्तावुपधाया इति वर्त्तते न वा तत्र आद्ये आह । यमात्रस्येति । अन्त्यत्वादेः परस्येतीकारलोपापत्तिरिति बोद्धम् ॥ इति चातुरर्थिकाः ॥

अन्योर्थे इति । विशेष्यतया भासमान इत्यर्थः । एवञ्चेदंत्वेन भासमानमपत्याद्यपि न शेषः । ध्वनितं चेदं तस्येदमित्यपत्येपीति वार्त्तिकेन । लवणं चेत्यादि । शैषिकान्मतुबर्थीयादित्यस्य विषयलाभार्थमावश्यकमिदं तस्येदमित्यादावपत्याद्यर्थस्याग्रहणायाधिकारोप्यावश्यकः ॥ आजन्तमिति । अव्ययसाहचर्यात् न तु टाबन्तो दक्षिणाशब्द इति भावः । अत एव दाक्षिणात्य इत्यत्र न पुंवत्त्वम् । केचित्तु ठक्छसोश्चेति वार्त्तिकारम्भेण भाष्यकृता सर्वनाम्न इतीष्टा तदप्रत्याख्यानेन चेष्टेरनित्यत्वादनव्ययस्य ग्रहणे ऽपि न दोषः । अत एवानव्ययात्प्रत्ययान्तरेण रूपान्तरं नेत्याहुः ॥ राङ्कवको मनुष्य इति । मनुष्यतत्स्थयोरिति वुञ् । रङ्कुः कच्छादिः । राङ्कवो मनुष्य इति

क्वचित्कोपपाठः रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात्परत्वा च तेन मनुष्ये ष्फगणोर्बाधसिद्धेः तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वात् । अण्ग्रहणानर्थक्यञ्च कच्छादिभ्यो ऽण्विधानादिति वार्त्तिकादतस्तत्पाठसमर्थने नाभिनिवेष्टव्यमित्यलम् । वर्णुरिति । अदूरभवश्चेत्यर्थे सुवास्त्वादित्वादणो जनपदे लुप् । वर्णुः सिन्धुनदः । पदान्तत्वात्षत्वाप्राप्तेराह । ह्रस्वात्तादौ ॥ अरण्याण्णः ॥ अणि हि ङीप्स्यादिति भावः । वक्ष्यमाणाविति । सायंचिरमित्यादिना । काकतीरमिति । ककतीरः प्रकृतिः । काखतीरमिति पाठन्तरम् । सञ्ज्ञाभूताया इति । सूत्रे पञ्चम्यर्थे सप्तमीति भावः । उदीच्यग्रा ॥ उदीच्यग्रामात्किम् । माथुरः । मध्यदेशग्रामोयम् । बह्वचः किम् । ध्वञ्जी ङीबन्तस्तस्य ध्वाञ्जः । अन्तोदात्तात्किम् । शार्करीधानम् । अयं कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । प्रत्युदाहरणेष्वण् प्रत्ययः स्वरे विशेषः । प्रस्योत्तरप ॥ उदीच्यग्रामलक्षणाञोपवादः तस्यात्रानुवृत्तेः । शास्त्रीयमिति । सूत्रद्वयेपीत्यर्थः । यूनिलुगिति सूत्रभाष्ये तथोक्तत्वात् । कण्वादीनां गर्गाद्यन्तर्गणत्वेन तत्र शास्त्रीयगोत्रएव प्रत्ययसत्वात् । अर्थाधिकारादत्रापि तदेवेति भावः । अपवाद इति । प्रतिषेध इत्यर्थः । लिङ्गमिति । तेनौद्दालकिः पिता औद्दालकायनः पुत्र इत्यत्रेञः प्राचामिति भरतेभ्यो न लुक् । वृद्धिर्य ॥ अचामिति जातौ सौत्रं बहुवचनम् । तेन शालीयसिद्धिः । व्यपदेशिवद्भावात् ज्ञीयसिद्धिः । आदिरिति किम् । सभासंनयने भवः साभासंनयनः । वृद्धिरिति किम् । यस्याचामादिर्हलित्यर्थः सामर्थ्यात्स्यात् । एवञ्च रक्षितस्यायं राक्षित इत्यादावेव स्यान्न त्वौपगवीयादौ यस्येति सञ्ज्ञिनोऽपदेशाय । अचामिति किम् । तदभावे यस्यादिर्वृद्धिरित्यर्थे औपगवीयादावेव स्यान्न गार्गीयादौ । एङ् प्रा ॥ प्राचामिति विकल्पार्थं व्यवस्थितविभाषा चेयन्तेन शैषिकेष्वेवेदम् । अप्राग्देशवाचिकोडदेवदत्तयोश्च शैषिके ऽपि न । देवदतीय इति । अत्र देवदत्तो मनुष्यनाम । काश्यादिगणे च प्राग्देशवाचि देवदत्तस्यैव ग्रहणमिति नातष्ठञ्ञिठौ । अत एवात्र देवदत्तीया इति भाष्ये उदाहृतम् । वा नामधेयस्य । अत्र नामशब्देनाधुनिकसङ्केतितमेव । अत एवेङ्प्राचां देश इति सार्थकं, घटीयादि तु गहादित्वात्साध्विति केचित् । अन्ये तु रूढ्या बोधकशब्दत्वमेव नामत्वं पशुनामभ्यः कारनाम्नीतिवत् । एङ्प्राचामिति तु देशवृत्तेश्चेदेङादेरेवेति नियमार्थं घटीयाद्यनेनैव साध्वित्याहुः । उच्चारणार्थ इति । विधेयघटकत्वे ऽपि तदतिरिक्तफलाभाव इत्यर्थः । वृद्धात्प्रा ॥ अत्रेद्देश इति संबध्यतइत्याह वृद्धादेवेति । विपरीतनियमस्तु न व्याख्यानात् । धन्व । मरुदेशः । धन्वविशेषेति । व्याख्यानात्स्वरूपपर्यायाणामग्रहणमवृद्धत्वाच्चेति ।

भावः । देशवाचिन इति । अत एव धनुर्वाचकधन्वशब्दस्य न ग्रहणम् ॥ उत्तरेणेति । रोपधत्वादिति भावः ॥ ईकारेति ॥ व्याख्यानाद्दीर्घग्रहणमिति भावः । जनपदत ॥ तदवधिरिति कर्मधारयस्तेन स जनपद एवावधित्वञ्च सन्निधानाज्जनपदम्प्रत्येव जनपदत्वेन सिद्धावपि उत्तरसूत्रेण त्रिगर्त्तशब्दे परमपि गर्त्तोत्तरपदच्छं बाधित्वा वुञर्थं तदाह त्रैगर्त्तक इति । दार्वेक इति । दार्वा इति बहुवचनान्तोयं जनपदे । कालञ्जरका इति । कलञ्जरेषु भवा इत्यर्थः । कच्छाग्निव ॥ जनपदेत्यादि निवृत्तं देश इत्येव । केवलस्यापि कच्छस्य देशे वृत्त्या तदर्थमुत्तरपदग्रहणम् । अन्यत्र सामर्थ्यादेव तदन्तविधिः सिद्ध्यति । दारुकच्छ कुण्डाग्निसिन्धवत्कबहुवर्त्ताः प्रकृतयः । गर्त्तेति पाठो जनपदतदवध्योश्चेति सूत्रस्यभाष्यविरुद्धः । नागरा ब्राह्मणा इति । कच्यादिषु माहिष्मतीसाहचर्यात्सञ्ज्ञाशब्दस्यैव नगरस्य ग्रहणमतोत्र न ठञ् । प्राचां ग्रामनगराणामिति सूत्रे नागरा इति भाष्योदाहरणादिति भावः । विभाषा कुरु ॥ कुरोः कच्छादिपाठसामर्थ्यात्पक्षे ऽणि सिद्धे युगन्धराथां विभाषा कुरुयुगन्धरौ जनपदौ ताभ्यामवृद्धादपीति नित्यं प्राप्ते विकल्पः । कोपधाद । प्रस्थोत्तरेत्यनेन सिद्धे जनपदवुञ्बाधनार्थमिदम् । तत्तु उदीच्यग्रामलक्षणाञ् बाधनार्थम् । महिषिका महिषका वा जनपदः । वुञादेरिति । सिन्धोरौर्देशे ठञः । नियमार्थमिति । साल्वादेवेति विपरीतनियमस्तु न व्याख्यानात् । मुखेत्यादि चत्वारि महाद्यन्तर्गणसूत्राणि । दैवकीर्यमिति । नूनमत्र दैवानुग्रहइति भाष्यात् देवस्येदमित्यर्थे देवाद्यञञावित्यपीति कश्चित् । स्वकीयमिति । स्वार्थिककप्रत्ययान्ताच्छ इत्येके राज्ञः कच ॥ देशइति न संबध्यते असम्भवात् । ब्राह्मणको नाम इति । कोपधत्वादण् प्राप्तः । आयोमुखीयमिति । वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ प्राप्तौ । ठञ्ञिठादेरिति । नगरान्ते रोपधेतोरिति वुञादिशब्दार्थः । विभाषा मनुष्ये ॥ अमनुष्यशब्दोत्र यौगिको व्याख्यानात् । कृकणपर्णाद्भारद्वाजे ॥ देशवाची भारद्वाजशब्दः प्रकृतिविशेषणं व्याख्यानात् । युष्मदस्म ॥ अत्र सूत्रत्रये ऽपि न यथासंख्यमस्वरितत्वात् । न चैक एव खो ऽनेन विधीयते चेन तस्य ससहायता द्योत्यते सा च प्रकरणाच्छेनेति यथासंख्याप्राप्तिरेवेति वाच्यं, ससहायताद्योतने ऽपि तस्याः संबन्ध्यन्तरसाकाङ्क्षतया द्वितीयोपस्थितिं विनार्थापर्यवसानेन तत्प्राप्तेः । न चैवमपि प्रत्ययत्रयविधानात्र तत्प्राप्तिरिति वाच्यम् । विकल्पार्थानां पक्षे ऽभावमात्रार्थत्वे ऽप्यन्यभावार्थकत्वाऽभावात् । प्रकृते च महाविभाषयावाक्यस्य सिद्धत्वादन्यतरस्याङ्ग्रहणबोधितऽतदभावेणेवेत्यस्य लक्ष्यसंस्कारवेलायां ज्ञाने ऽपि विध्यर्थप्रमिति काले त्रयाणामनुपस्थित्या तत्प्राप्तेरिति दिक् । चाच्छ इति । विधेयसन्निहितचस्य

विधेयसमुच्चायकत्वमिति भावः । तस्मिन्न ॥ पूर्वसूत्रे साक्षान्निर्दिष्टत्वेन प्राधान्यात् खञ एव तच्छब्देन परामर्श इत्याह । खञीति । एकवचने इति यौगिकं षष्ठ्यर्थे च प्रथमाद्विवचनमत आहैकार्थवाचिनोरिति । प्रत्ययोत्तर ॥ उत्तरपदे त्वत्पुत्र इत्याद्युदाहरणम् । कालाट्ठञ् ॥ कालग्रहणे यथाकथंचिदपि कालबोधकानां ग्रहणम् । तदस्य परिमाणं संख्याया इति सूत्रे यो यः काले वर्त्तते स स कालशब्द इति भाष्योक्तेः, रमणीयादिष्वतिप्रसङ्गस्त्वनभिधानादित्यपि तत्रैवोक्तम् । अत एव सायंप्रातिक इत्यत्र ठञ् सिद्धः । अन्यथा स्वाङ्गसमुदायस्य स्वाङ्गवाचकत्वाभाववत्कालसमुदायस्य कालवाचकत्वाभावाट्ठञ्न स्यात् । मम तु यथाकथंचित्कालबोधकत्वमस्त्येव । सायंप्रातिकः पौनःपुनिक इत्यत्र तदन्तत्वेन स्थानिवत्त्वेन चाव्ययत्वेप्यनभिधानाट्ट्युट्युलौ न भवतः, नस्तद्धितइति सूत्रे भाष्ये तथा प्रयोगात् । इति यावदिति । न च ठञ् नतन्त्राणो ठञ् ट्युट्युलोश्च विप्रतिषेधपरस्य त्यप्सूत्रस्थभाष्यस्यासङ्गतिः ॥ तावत्पर्यन्तं कालाधिकारे हि परत्वेन ठञबाधकठञपवादतयोत्कृष्टबलानामणादीनां दुर्बलेन ठञा संप्रधारणायोगः तदधिकाराभावे हि तदपवादत्वमेव नेति न दोष इति वाच्यम् । तेषां ठञबाधकठञपवादत्वे ऽपि परस्परपरिहारेण चारितार्थ्यपूर्वकयुगपदसंभवस्यैव संप्रधारणबीजत्वेनादोषात् । श्राद्धे श ॥ श्रद्धाशब्दात् प्रज्ञाश्रद्धेति सप्तम्यर्थे णे पित्र्यकर्मविशेषे रूढोयम् । द्वारादीनाञ्च ॥ अत्र परस्य वृद्धिरिति नानुवर्त्ततइति कस्येत्सूत्रे निरूपितम् । इह तदादिग्रहणमपि स्वञ्च स्वग्रामस्वाध्याययोः पाठो नियमार्थः स्वशब्दादेतयोरेवेति तेन स्वार्थिकाः स्वाभाविकं स्वाराज्यमिति सिद्धमिति द्वारादीनाञ्चेति सूत्रे भाष्ये ध्वनितम् । तत्र स्वाध्याये सर्वेभ्यो यणभ्यः पूर्वं नैच् । ग्वामादेरित्यनुवर्त्य तदनन्तरयोर्य्वोः पूर्वावैचाविति व्याख्यानात् । सन्धिवेला ॥ अणग्रहणं पौर्णमास्याश्ठञं बाधितुं वचनन्तु यथाप्राप्तठञ्बाधनेन चरितार्थं सन्धिवेलादिग्रहणे शश्वतो वेति पाठाच्छाश्वतिकशाश्वतौ सिद्धाविति नस्तद्धितइति सूत्रस्थभाष्यस्वरसः । तत्राद्ये कादेशाभावटिलोपाभावौ येषाञ्चविरोधः शाश्वतिक इति निपातनात् शाश्वते चास्मादेव निपातनादव्ययानां भमात्रे इत्यस्यानित्यत्वाट्टिलोपाभावेत एवारातीयः सिद्धः । तेषमिति । तिष्ययुक्ते काले भवमित्यर्थः । प्रावृष ॥ नहिवृतीति प्रशब्दस्य दीर्घः । ऋत्वणोपवादः । सर्वत्राण्च ॥ छन्दसीत्यस्य निवृत्त्यैव सिद्धे सर्वत्र ग्रहणं स्पष्टार्थम् । तुटः प्रागिति । अन्यथान्तरङ्गत्वात्तुटि अङ्गात्परस्येत्यर्थे निर्दिश्यमानयुशब्दस्य ततः परत्वाभावाद्यदागमा इति न्यायेन तद्विशिष्टस्य ग्रहणे ऽपि तस्यानिर्दिश्यमानत्वानादेशप्राप्तिरिति भावः । वस्तुतो ऽङ्ग-

सञ्ज्ञानिमित्तयोरित्यर्थः । यदागमा इति न्यायेन तद्विशिष्टस्य ग्रहणेऽपि निर्दिश्यमानपरिभाषया तयोरेवादेश इति न दोषः । अत्रार्थ एव स निर्देशो लिङ्गमिति बोध्यम् । एवं शौवस्तिकेप्यङ्गसञ्ज्ञानिमित्तठस्येति व्याख्यानात् पूर्वन्तुट्यपि न दोषः । सायन्तनमित्यादि । सायञ्चिरयोर्मान्तत्वं निपातनादिति भाष्ये स्पष्टम् । सायमित्यव्ययेषु पठितादव्ययत्वेनैव प्रत्ययसिद्धौ सायं ग्रहणं भाष्ये प्रत्याख्यातं, घञन्तसायशब्दस्तु सायाह्नसायतरशब्दयोः साये इति सप्तम्यन्ते च कालपरः साधुर्नान्यत्रेत्यनभिधानान्न ततष्ठञिति तद्भावः । सायमण्डनमित्यादि त्वसाध्वेव । अत एव यथान्यासे कालाधिकाराबाधः । ननु चिरमित्यस्याप्यव्ययेषु पाठात्तद्ग्रहणमपि व्यर्थञ्चिरशब्दाट्टञस्तुप्रत्ययेनैव बाधसिद्धेः । न चाव्ययत्वप्रयुक्तट्युट्युलोरनित्यत्वज्ञापनार्थन्तत् तेन सायं प्रातिकादिसिद्धिरिति वाच्यम् । सायं ग्रहणस्यापि तत्त्वसंभवादिति चेत्सत्यमव्ययेषु तस्याप्रमाणिकत्वात् ॥ परुत् पूर्ववत्सरे । परारि पूर्वतरे । सञ्ज्ञायां श ॥ प्रकृतिप्रत्ययसमुदायेन चेत्सञ्ज्ञागम्यत इत्यर्थः । नेह शारदं शस्यम् । उत्तरपदस्य ॥ अधिकारोयमिति । अत एवोत्तरपदवृद्धौ सर्वं चेति स्वरविधायके उत्तरपदाधिकारविहितवृद्धिपरिग्रहः सिद्ध्यति । पूर्ववार्षिके वर्षाणां पूर्वं इत्येकदेशिसमासः आदिवृद्धिस्तु न उत्तरपदवृद्धेस्तदपवादत्वात् । अत एव हृद्भगेति सूत्रे पूर्वपदस्य चेति चरितार्थं सत्यपि संभवे बाधात् । पूर्वास्विति । तद्धितार्थेति समासः । ऋतोरिति । ऋतुवाचकाद्वृद्धिनिमित्तप्रत्ययविधौ तदन्तविधिर्वक्तव्यो ऽवयववाचकानां पूर्वपदत्वे इत्यर्थः । पूर्वत्र । उदाहरणे । तेन तत्र वर्षाभ्यष्ठक् सर्वत्राणचेति ठगणौ सिद्धौ । इह तु । प्रत्युदाहरणे । तेन तत्र कालाट्ठञेव । वृद्धिमद्विधौ किम् । पौर्वप्रावृषं, इह प्रावृष एण्यो न । वाचनिक एवायं तदन्तविधिः । जनपदेति । तदधिकारे ऽवृद्धादपीत्यनेनेत्यर्थः । सुसर्वार्धेति । जनपदवाचिनः शब्दस्यान्तरे प्रत्यये विधीयमाने तदन्तविधिर्यदि सुप्रभृतिभ्यः परः सम्भवतीत्यर्थः । अयमपि वाचनिक एव । पौर्वपञ्चाल इति । अत्र पूर्वशब्दो देशवाची । कालवाचीत्यपि कश्चित् दिक्शब्दपदेन च दिग्वाचकशब्दस्यैव ग्रहणमतोत्र तदन्तविधिविषयाभावाच्च वुञ् । शब्दग्रहणन्तु स्पष्टार्थमेव । पौर्वमद्रे मद्रेभ्योञित्यञ् वृद्धिविधायके प्रतिपदोक्तत्वाज्जनपदतदवध्योश्चेति प्रत्ययस्यैव ग्रहणेन तत्रैव तज्ज्ञापितोयं तदन्तविधिरित्ययुक्तम् । अमद्राणामित्यस्य वैयर्थ्यापत्तेः । उत्तरार्थं इति । प्राचां ग्रामेत्युत्तरसूत्रे दिश एव संबन्धो यथा स्यादित्यर्थमित्यर्थः । सुसर्वार्द्धा । दिशोजनपदस्यामद्राणामित्युक्ते स्वादिभ्यः परस्यापि मद्रस्य पर्युदासः सम्भाव्येतेतीहार्थोपि स इत्यन्ये ॥ प्राचां ग्रा ॥ प्राचामिति

देशनिर्देशः । यद्यपि नगरस्यापि ग्रामत्वमस्ति तथापि नगराणामित्युत्तरपदविशेषणं ग्रामाणामित्यङ्गविशेषमित्यर्थमुभयं पूर्वेषुकामशम्यादिः समुदायो ग्रामनामधेयं पूर्वपाटलिपुत्रादावुत्तरपदमेव नगरमाहेति वृत्तिः । भाष्ये तु ग्रामत्वादेव सिद्धे नगरग्रहणं प्रत्याख्यातं पूर्वेषुकामशम्यादौ पदैकदेशन्यायेनोत्तरपदस्यापि ग्रामनामधेयत्वमस्त्येवेति तदाशयः तदत्रमूले ऽपि ध्वनितं तदाह । दिश इत्यादिना । पूर्वेषुकामशमेरण् प्रकृतेः सञ्ज्ञात्वाद्विक्पूर्वपदादिति ञो न । पूर्वपाटलीति । पाटलिपुत्रशब्दस्तदवयवे वर्त्ततइति समानाधिकरणसमासः ॥ अमावास्याया वा ॥ पक्षे सन्धिवेलाद्यण् । सूत्रे दीर्घपाठ इत्यत्र सूत्रे ऽमावस्यदन्यतरस्यामिति सूत्रे च भाष्ये स्पष्टम् । नक्षत्रवाचिभ्य इति । नक्षत्रयुक्तचन्द्रवाचिभ्य इत्यर्थः ॥ लुक् ॥ अप्रधानमिहोपसर्जनं न शास्त्रीयमसम्भवात् । चित्रेति । लुक्तद्धितेति लुकि जाताद्यर्थस्त्रीत्वप्रतिपादनाय पुनष्टाप् । पिप्पल्यादेरिति । अन्यथा रेवतीरोहिणीनक्षत्र इति गौरादिषु पाठान्नक्षत्रवाचित्वाभावेन स न स्यादिति भावः । टानाविति । विधानसामर्थ्यान्नानयोर्लुक् । स्त्रियामित्येवेति । फल्गुनी अषाढेति भाष्योदाहरणात् । अस्त्रियामपीति । श्राविष्ठीय इत्यादि भाष्योदाहरणात् । अत्र चित्रारेवतीत्यादि लुग्वचनं भाष्ये नक्षत्रेभ्यो बहुलमित्याश्रित्य प्रत्याख्यातम् । स्थानान्तगो ॥ सूत्रे समाहारद्वन्द्वपूर्वपदकसमाहारद्वन्द्वः । तेन स्त्रीलिङ्गयोर्गोशालाखरशालाशब्दयोर्ग्रहणम् । विभाषेति । अस्य यद्यपीत्यादिस्तथाप्येकदेशविकृतन्यायेन तत्रापि लुगिति शेषः । एतेन कृतनपुंसकह्रस्वानामेवद्वन्द्वः गोशालाखरशालयोस्तु लिङ्गविशिष्टपरिभाषया सिद्धमिति हरदत्तोक्तमपास्तम् । कृतह्रस्वस्य लिङ्गप्रत्ययवैशिष्ट्यासंभवात् । प्रतिप्रसूत इति । कालाट्ठञानिवर्त्तित औत्सर्गिकोण् पुनः सन्धिवेलादिसूत्रेणाभ्यनुज्ञात इत्यर्थः ॥ कालात्साधुपुष्प्यदिति ॥ पुष्प्यदिति पुष्पविकसनइति दैवादिकाच्छतरि रूपम् । तत्र भव इति यावत्कालादिति वर्तते । उप्यन्त इति । सूत्रे भूतकालो ऽविवक्षित इति भावः । आश्वयुजी अश्विनीयुक्ता पौर्णमासी । कलाप्य ॥ तत्रेत्येतत्सहितदेयमृणइत्यर्थान्वयाय कालादित्यनुवृत्तस्य संबन्धाय च कलाप्यादयः काले लाक्षणिका इत्याह यस्मिन्काले इति । फलमिति । अश्वत्थस्य वृक्षादित्वेन तेन फले विहितस्य विधानसामर्थ्याल्लुगभावे ऽप्युपचारादिति भावः । एतद्वृत्तिविषयश्चायमुपचारः ॥ ग्रीष्मावरसमाद्विति ॥ समाहारद्वन्द्वः । आवरसमकमिति । आगामिवर्षाणामाद्ये वर्षे देयमित्यर्थः । अवरशब्दस्यादिकृशब्दत्वादसञ्ज्ञायामप्यत्र कर्मधारयः ॥ तदस्य ॥ प्रथमान्तात्सोढोपाधिकात्षष्ठ्यर्थे ऽणादयः क्रियाकारकभावमूलकसंबन्धस्यैव विव-

त्तणादस्येति षष्ठी । सोऽढमभ्यस्तम् । कालस्य स्वरूपेण सहनायोगात्त-त्सहचरितक्रियायां लक्षणेत्याह निशासहचरितमिति ॥ तत्र भवः ॥ भवनमत्र सत्ता ॥ प्राचाम् ॥ प्राग्देशीयनगरवाचियन्नगरान्तमङ्गं तत्रेत्यर्थः ॥ जङ्गलधेनु ॥ उत्तरं उत्तरपदं विभाषितं विभाषितवृद्धिकमित्यर्थः । परिमुखमिति । वर्जनार्थेऽपपरीति समासः । एषां पञ्चानामिति । आदेश्चोविशेषणं तत्फल-माह । देविकाकूले इति । सौदेविके तु नात्वन्देविकादेर्वृद्ध्यप्राप्तेः । अत्र वृद्धिपदानुवृत्त्या वृद्धिसञ्ज्ञकाकारविधानाद्भाविकोभार्य इत्यादौ पुंवत्वनि-षेधसिद्धिरित्युक्तम् । क्रतुय ॥ पाकयज्ञोऽल्पयज्ञः वैश्वदेवहोमो वा । नवयज्ञः आग्रयणम् । अनन्तोदात्तार्थं इति । कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तवा-जपेयाद्यर्थं इत्यर्थः । तदर्थमावश्यकमिदमन्तोदात्तपाकयज्ञादावपि परत्वात् प्रवर्तते इत्यभिमानः । यज्ञार्थमन्त्रब्राह्मणकल्पेषु लाक्षणिकत्वेन व्याख्यातव्य-नामत्वं बोध्यम् ॥ अध्यायेष्वेवेति ॥ एवकारः स्पष्टार्थः । ततष्ठनिति । पौरोडाशिकं काण्डमिति तु पुरोडाशमधिकृत्य कृतं पौरोडाशन्तदेव पौरोडाशिकमिति विनयादित्वाट्टक्कि साधु । कार्कणे कृकणपर्णादिति छः प्राप्तः । तैर्थ इति । धूमादित्वाद्वुञ् प्राप्तः । अदेशवाचित्वेत्वायस्यानठक् प्राप्तः । अणग्रहणं तूदपानादुत्सादेर्यथाविहिताञं बाधित्वाणर्थम् । अन्यथायस्यान-ठकं बाधित्वा स एव स्यात् । गोत्रादम् ॥ तत आगत इत्यर्थे । आशौच-मिति । अशुचेरागतमित्यर्थ इत्यभिमानः । अशुचौ भवमिति वा । आत्रेत्रना-दयोप्येवम् । अनैश्वर्यं ब्राह्मणादित्वात्ष्यञ् एते सर्वे भावार्थकप्रत्ययान्ता एवेति तन्मते ऽत्रैतत्सूत्रलेखो लेखकप्रमादात् । प्रभवति ॥ प्रभवः प्रथमप्रका-शो नोत्पत्तिः । जाताद्भेदेन निर्देशात् ॥ विदूरा ॥ वालवायपर्यायोविदूरशब्द एव वृत्तिविषयः । शारीरकमिति । जीवमित्यर्थः । शरीरशब्दात्तस्येदमित्यणि स्वार्थे कः । सौभद्रो यायात इत्यप्यस्योदाहरणम् । निपातनादिति । सभाराजेति सूत्रे ऽमनुष्यशब्दो रूढ्या रक्षः पिशाचादीनाहेत्युक्तेरिति भावः ॥ सोस्यनि ॥ निवास इत्यधिकरणे घञ् । अस्येति कर्तुः शेषत्वविवक्षायां षष्ठी । स्रुघ्नाभिन्ननिवाससंबन्धीत्यर्थः । स्रुघ्नाधिकरणकवासकर्तेति फलति ॥ आयुधजी ॥ क्रियार्थोपपदस्येति चतुर्थी आयुधजीविनोभिधातुमित्यर्थः । पर्वते इति प्रकृतेर्विशेषणम् । पर्वतादिति सूत्रे पाठान्तरम् । पर्वते इति किम् । सांकाश्यका आयुधजीविनः । योपधत्वाद्वुञ् ॥ तूदीसला ॥ शलेति तालव्यपाठो वृत्तौ ॥ अचित्ताद ॥ अत्र स्वरूपग्रहणं न । अदेशकाला-दित्यस्य वैयर्थ्यापत्तेः । गोत्रोक्ष ॥ लौकिकमिहगोत्रम् । वृद्धाच्छमिति ।

औपगव इत्यादौ । आख्याग्रहणात् क्षत्रियः शूर इत्यादौ शूरशब्दात्र । पाणिन इति । अस्य प्रवराध्यायप्रसिद्धत्वरूपलौकिकगोत्रत्वाभावादेव सिद्धे-र्बहुलग्रहणस्य प्रयोजनान्तरं मृग्यं, क्षत्रियांशे पौरवीय इति वा तत् ॥ जनपदिनामिति ॥ स्वस्वामिसंबन्धे मत्वर्थीयं दर्शयति । स्वामिवाचिना-मिति । सर्वशब्दार्थमाह । प्रकृतिश्चेति । तत्फलन्तु मद्राणां राजा माद्रः वृद्धमगधेत्यण् स भक्तिरस्येत्यर्थे मद्रकसिद्धिः । अतिदेशान्मद्रशब्दत्वेन मद्रवृज्योः कन् । अङ्गा जनपद इति । दृष्टान्तार्थं अवृद्धादपीति वुञ् । पञ्चाला ब्राह्मणा इति । अभेदोपचारोऽत्र बोध्यः । पौरव इति । पुरुः पूर्वो न जनपदः । बहुवचने इति किम् । एकवचनद्विवचनयोः सत्यपि शब्दभेदे-ऽतिदेशार्थं तत्करणम् । यो यज्जनपदवाची ततस्तज्जनपदप्रत्ययो यथास्या-ज्जनपदान्तरप्रत्ययो माभूदिति हरदत्तः ॥ तित्तिरिव ॥ इतआरभ्य वक्ष्यमाण-प्रत्ययास्तेनैकदिगित्येतत्पर्यन्तं छन्दसि वाच्ये इष्यन्ते । शौनकादिभ्यश्छन्द-सीत्यतश्छन्दोग्रहणस्य पूर्वमपकर्षादुत्तरत्रानुवृत्तेश्च तदाह । छन्दोब्राह्मेति । तेन तित्तिरिप्रोक्तः श्लोक इत्यत्र न । तित्तिर्यादिभ्यश्छणेव स च छन्दस्येवेति नियमद्वयाश्रयणमत्र । न छन्दः शब्देन कल्पसूत्राण्यपि । तत्र स्वरितत्वप्रति-ज्ञयाधिकारावगतेः । काश्यपकौ ॥ आभ्यां कल्पे ऽपि तद्विषयतेष्यते । कलापिवै ॥ हरिद्रुश्छगली तुंबुरुलपश्चत्वारः कलाप्यन्ते वासिनः ॥ द्वितीया-नव आलम्बि कलिङ्ग कमल ऋचाभारुणि ताण्ड्य श्यामायन कठ कलापि-नः । कलाप्यन्ते वासिनां वैशम्पायनशिष्यत्वादेव सिद्धे तद्ग्रहणाच्छिष्यशिष्याणां न ग्रहणम् । याज्ञवल्कानीति । कण्वादिभ्य इत्यण् । ते हि पाणिन्यपेक्षया आधुनिका इत्यभिमानः । भाष्ये तु शाट्यायनादि तुल्यकालत्वाद्याज्ञवल्क्या-दिभ्यः प्रतिषेधस्तद्विषयता च नेति वचनमेवारब्धम् । शौनकादिभ्यश्छन्दसि ॥ छन्दस्यभिधेये एभ्यो णिनिः । छन्दसिकिम् । शौनकीया शिक्षा । अस्य वेदमात्रविषयत्वमित्युक्तिर्भ्रान्त्या कलापीति सूत्रस्थभाष्यविरोधात् । कला-पिनो वचनसामर्थ्यादणसिद्धौ पुनरण्ग्रहणमन्यतो ऽपि विधानार्थम् । तेन माथुरेण प्रोक्ता माथुरीवृत्तिरित्यादौ छादिकं न । भिक्षुसूत्रं भिक्षुत्वस-म्पादकं सूत्रम् । यथा नटसूत्रे नटसूत्रज्ञाने हि नटत्वसंपत्तिरेवन्तज्ज्ञाने ब्रह्मरूपत्वेन सर्वज्ञानात्कर्मस्वनादरेण भिक्षुत्वसंपत्तेः । वेदान्तान् विधिवत् श्रुत्वा संन्यसेदनृणो द्विज इति मनूक्तेः । स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेव-मेव तु । द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिरिति याज्ञवल्क्योक्तेश्च । विविदिषावाक्ये ऽपि तपआदीनां करणानां शब्दतो गुणभूते ऽपि अर्थतः प्रधानभूते वेदने एवान्वयः । कारकाणां तण्डुलानां काष्ठैः पाचक इत्यादौ

गुणभूतक्रियायामप्यन्वयदर्शनात् ॥ यद्वा ग्रामं ग्रामाय वा जिगमिषतीत्यादौ गमेर्ग्रामः कर्म इषेस्तु उभयमिति महाभाष्योक्तरीत्या वेदने इच्छायां चोभयत्रापि करणत्वमिति न तद्विरोधः । वस्तुत इच्छाया वस्तुसौन्दर्यबलेनैव सिद्धया तत्र करणापेक्षा नास्त्येव । एतरेयब्राह्मणे ऽपि । यस्य गार्हपत्याहवनीयावन्तरेणानोरथोवाश्वावा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति नैतन्मनसि कुर्यादित्याहुरात्मन्यस्य हितेभवन्तीति तच्चेन्मनसि कुर्वीत गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्निति । आत्मन्यस्य हिते इत्यस्य मय्येव ते कल्पिता इति पश्येदित्यर्थः । संन्यस्य श्रवणं कुर्यादित्यस्य संन्यस्य श्रवणमेव कुर्यादित्यर्थः । एतेन भिक्षुमात्राध्येयत्त्वाद्भिक्षुसूत्रत्वमस्येत्यपास्तम् । भिक्षव इति भिक्षुत्वयोग्या इत्यर्थः । णिनिर्मण्डूकप्लुत्यानुवर्त्तते । पाराशर्यो व्यासः । अनयोरपि तद्विषयतेष्यते । तेनैक ॥ तेनेति सहयोगे तृतीया तेन सहैकदिग्रूपाधिकरणस्यमित्यर्थः । सौदामनीति । अञिति प्रकृति भावः । तसन्तं तु स्वभावादधिकरणशक्तिप्रधानं तृतीयार्थप्रधानमिति कृन्मेजन्तसूत्रे कैयटः । स्वरादीति । तत्प्रकरणपठिततद्धितपरिगणने पाठादित्यर्थः । कुलालादिभ्यो । इदमग्रन्थे ऽपि ॥ क्षुद्राभ्र ॥ पादपाच्छापवादः । केचित्तु पदपेत्यवृद्धं पठन्ति । तस्येदम् ॥ अत्रेदमित्यनेन शेषभूतसर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययार्थत्वं बोधयति । अत्र परोक्षत्वप्रत्यक्षत्वे न विवक्षिते तेन प्रकृत्यर्थसंबन्धिमात्ररूपेर्थे ऽनेन प्रत्ययविधानं अपत्यादीनान्तु न केनापि रूपेणेदमर्थता शेषत्वाभावात् । भक्ष्येति । यत्रि भमिति सूत्रानन्तरं रणीति वक्तव्यमित्यर्थः । तेनाकडारस्यत्वात्पदत्व बाधसिद्धिः । अग्निमिन्धे इति । अन्तर्भावितण्यर्थात्रेन्धिः । सोप्याग्नीध्र इति । अस्माच्छरणेर्थेञ्क एव एतेनोत्तरेणाग्नीध्रीयं धिष्ण्यमिति व्याख्यातम् । पत्रपूर्वा ॥ पत्रेत्यर्थग्रहणम् । एवमुत्तरत्रापि तदाहाश्वरथस्येति । इदमपि रथाङ्ग एव । वाह्य इति । अर्थनिर्देशोयमत्रैव । द्वन्द्वाद्वु ॥ वैरे देवासुरेति वार्त्तिकपाठः द्वन्द्वे इति तु लेखकप्रमादः तथापाठे मैथुनिकायाव्याप्तिः । भाष्ये ऽत्र सूत्र वैर इत्येव पाठाच्च । द्वन्द्वे इत्येतद्विशिष्टन्तु शिशुक्रन्देति सूत्रे भाष्ये पठ्यते । दैवासुरं राक्षासुरमित्युदाह्रियते च देवासुराद्यधिकृत्य कृतमाख्यानमित्यर्थः ॥ गोत्रच ॥ गोत्रमिहलौकिकम् । ग्लौद्रुक मालवकमिति गोत्रत्वारोपात्साधु । इदं खण्डिकादिसूत्रे भाष्ये स्पष्टम् । धर्माम्नायेति । आम्नायः संप्रदायः शास्त्रमित्यन्ये । सङ्घाङ्क ॥ सङ्घादय इदमर्थविशेषणानि गोत्रग्रहणानुवृत्तेरञादीनामत्र गोत्रप्रत्ययानां ग्रहणम् । अत्र च लौकिकमेव गोत्रं न्वप्यपत्यरूपम् । वुञोप.

वादेयम् । परंपरेति । यथा गवादिनिष्ठं चिन्हं गोद्वारा स्वामिना संबद्धम् । साक्षादिति । यथा बिदानां स्थूणा । अखोक्ते इति । अणसंबद्धसङ्घादीनामनुवृत्तेरिति भावः । पक्षे इति । गोत्रचरणाद्वुञित्यस्योत्तरत्रानुवृत्त्या वाक्यभेदेन व्याख्यानसामर्थ्याच्चरणात् धर्माम्नाययोरित्युक्तावपि सङ्घादिषु तत्प्राप्तिरिति भावः । अन्ये तु पक्षे छमिच्छन्ति । लक्षणे क्लीबतेति । उत्सर्गोयं लक्षणे वैदीसूणेति भाष्यप्रयोगात् । न दण्डमा ॥ दण्डमाणवेत्यादि प्रत्ययार्थविशेषणम् । दाक्षा इति । दाक्षीणामिमे इत्यर्थः । गोत्रेति । वुञोनिषेधः । रैवतिकादयः सर्वे गोत्रप्रत्ययान्ता इत्याशयेनाह वुञोपवाद इति । निपातनादिति । अन्यथेञ् स्यात् । हास्तिपदे हस्तिन इव यादौ यस्येत्यर्थकहस्तिपादशब्दादपत्येण्यद्भावो निपातनात् । यस्येति लोपस्यासिद्धत्वेन पादः पदित्यस्याप्राप्तेः । अथर्वणा प्रोक्तमधीयान आथर्वणिकः । ततो ऽणि इकस्य लोपे ऽनिति प्रकृतिभावे आथर्वणः ॥ इति शैषिकाः ॥

आश्म इति । एवं चर्मणो विकारः कोशश्चार्मः । चर्मणः कोश इत्युपसंख्यानाट्टिलोपः । अवयवे च ॥ अयमधिकारः । चाद्विकार इति । तेन वक्ष्यमाणाः प्रत्ययाः प्राण्यादिभ्यस्त्रिभ्योर्थद्वये ऽन्येभ्यस्तु विकार एवेति बोद्धम् । मयूरो लघावन्त इति मध्योदात्तः । बिल्वादिभ्यो ॥ अत्र गणे कोपधपाठो मयट् बाधनार्थः । अण् ग्रहणं तु ङीषन्तपाटलीशब्दादनुदात्तादिलक्षणाञो बाधकमयट् बाधेनाणर्थम् । एभ्यो यथाविहितमित्युच्यमाने ऽञेव स्यात् । अञोपवाद इति । उवर्णान्तत्वादिप्रयुक्तस्येत्यर्थः । दैवदारवमिति । देवदारुः । पीतद्र्वर्थत्वादाद्युदात्तः । दाधित्यमिति । दधि तिष्ठतीति सुपिस्थ इति कः उपपदसमासे पृषोदरादित्वात्तस्य तः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तोयम् ॥ पलाशादि ॥ खदिरोत्र पठ्यते ॥ शम्याः ष्लञ् । ञ त्रटित्प्रत्ययः ञितश्चतत्प्रत्ययादिति सूत्रभाष्ये विकारविकारे ऽपि तद्विकारत्वमारोप्य तत्सूत्रं प्रत्याख्यातम् । अस्य षित्त्वे हि तत्प्रत्याख्याने षित्वान्ङीष् । आरम्भेत्वञन्तत्वान्ङीबिति फलभेदः स्यात् । उष्ट्रस्यावयव औष्ट्रकं चर्म । उष्ट्राद्वुञ् ॥ कंसीयस्य विकारः कांस्यं कंसीयपरशव्ययोरिति यञ् तयोर्विकारे औष्ट्रकोपानत् । कांस्या स्थालीत्यादौ सूत्रारम्भेप्यञादिपाठाट्टाबेवेति न फलभेदः । आश्मनमिति । अश्मनोवयवरूपमित्यर्थः । विकारे तु टिलोपः स्यात् । अधिकारादेवार्थलाभे सिद्धे एतयोरिति वचनं पुनर्विधानबोधनद्वारापवादविषये ऽपि पक्षे मयडर्थन्तेन बैल्वं बैल्वमयमिति सिद्धम् । मुद्गो घृतादित्वादन्तोदात्तः कार्पासी ङीषन्तत्वात् । नित्यं वृद्ध ॥ इह मयडिति भाषायामित्यादि चानुव-

र्तेते । आरम्भसामर्थ्यादेवास्य नित्यत्वे सिद्धे नित्यग्रहणं क्वचिदन्यत्रापि नित्यं विधानार्थमित्याशयेनाहैकाच इति । शरादिषु मृच्छब्दपाठस्त्वस्यानित्यत्व बोधनार्थः । वेदे मोषुवरुणमृन्मयं गृहमित्यादिषु प्राचुर्ये एव मयट् ॥ गोश्च । गोभुक्ताहारविकारे गोविकारत्वमारोप्य प्रकरणाबाधोऽत्रेति बोध्यम् । पुरोडाशे पुरोडाशरूपे विकारे इत्यर्थः । यावके विकारार्णान्ताद्यावादिभ्य इति स्वार्थे कन् ॥ तालादिभ्यो ॥ अणग्रहणं बाधकबाधनार्थन्तेन विकाराद्यर्थेऽञन्ते ताला-दिगणपठिते बार्हिणशब्दे नित्यंवृद्धेति मयट् न । तत्पाठस्तु ञितश्च तत्प्र-त्ययादित्यञो बाधेन चरितार्थः । तपनीयशब्दोऽनुदात्तादिः शुकवको प्राणि-नाङ्कुपूर्वाणामित्त्याद्युदात्तौ । बैल्वमयमिति । तस्यावयव इत्यर्थः । विकारत्व-स्यादनभिधानान्मयट् नेति भाष्यम् । क्रीतवत्प ॥ अत्र परिमाणशब्देन परि-च्छेदकमात्रं व्याख्यानात्तेन संख्याया अपि ग्रहणम् । अत एवाहादिसूत्रे ऽत्र-सूत्रे संख्याया इति वक्तव्यमित्युक्तम् । नैष्किके ऽसमासे निष्कादिभ्य इति ठक् । शतिके शताच्चठन्यतौ । अण् जाविति । उमेति तृणधान्यानामित्याद्युदात्तमूर्णे-त्यन्तोदात्तमिति भावः । एणे प्राण्यञ् ॥ गोपय ॥ गोग्रहणमेकाचो नित्यमिति मयट्बाधनार्थं द्रव्यशब्दो गुणैर्द्रूयते इत्यर्थे । चोयदिति यत्प्रत्ययान्तो गुणाश्रये भव्ये वस्तुनि च । मानेव । मानं प्रस्थादि । आमलकमिति । मयटो लुकि लुक्त-द्धितेति ङीपो लुक् लुकालुप्तत्वात्स्यानिवत्वाभावेन न यस्येतिलोपः ॥ न्यग्रोधस्य च । केवलस्येति किम् । न्यग्रोधमूलाः शालयः फलपाकेति । फलपा-केन ये शुष्यन्ति व्रीह्यादयस्तद्वाचिनामित्यर्थः ॥ व्रीहिमुद्गौ विल्वादौ । पाट-लिशब्दश्च तत्र । पुष्पाणीति । भाष्ये मूलानीति पाठः । शाल्वस्य वृद्धत्वे ऽपि वृत्तिप्रामाण्यात्पलाशादित्वं बिल्वादित्वं वा बोध्यम् ॥ कंसीयप ॥ अत्र यथासंख्यम् । लुक्शब्देन विधानाच्च प्रकृतेर्लोपः । प्रातिपदिकादित्याधिका-राच्च नैणादिकयोः । प्रातिपदिकात्परयोर्लुगित्यर्थात् । तेषामव्युत्पन्नत्वाच्च । यञञोस्तु न लुक् । विधानसामर्थ्यात् । एककालप्रतीतानामुद्देश्यविधेयभावा-संभवाच्च । वाक्यभेदे मानाभावात् च । कंसीयपरशव्ययोरिति षष्ठीनिर्देशस्य वैयर्थ्यापत्तेश्च ॥ तदाह छयतोरिति ॥ इति प्राग्दीव्यतीयाः ॥

तदाहेतीति । आहो प्रभूतादिभ्य इति वार्तिकारम्भसामर्थ्यान्माश-ब्देति समुदायादयं प्रत्ययः । तस्य च द्वितीयान्तत्वासंभवात्कर्ममात्रं परामृ-श्यते । तत्र पदसमुदायार्थ इति नापरामृश्यमानः स्फुटतया वचनक्रियायां कर्मभवतीत्याशयेनाह । माशब्दं कार्षीरिति य आहेति । वृत्तौ धात्वर्थो ऽन्त-र्भूत इति बोध्यम् । माशब्देति निर्विभक्तिकादयं प्रत्ययः । माशब्दः कारीति

पाठे न क्रियतामित्यर्थः ॥ स्वागता ॥ न कर्मेत्यतो नञनुवर्त्तते । स्वपताविति । स्वशब्दस्य द्वारादित्वादैचः प्राप्तिः वस्तुतोऽत्रास्य पाठो व्यर्थः स्वशब्दादेश्चेत्स्वाग्रामस्वाध्याययोरेवेति नियमेन स्वाराज्यादाविवात्राप्यैचो-प्राप्तेः । श्राहो । पृच्छताविव्यादौ धात्वर्थनिर्देशे इक्श्तिपौ ॥ तेन दीव्यति ॥ तेनेति करणे तृतीया । दीव्यत्यादौ कर्तुरुक्तेस्तत्साहचर्याज्जितयोगेऽपि सैव । अत्र तिङन्ते लौकिकप्रयोगे क्रियायाः प्राधान्येऽपि वृत्तौ तद्विग्रहे सूत्रे च कर्तृप्राधान्यमित्युक्तम् ॥ संस्कृतम् ॥ सत उत्कर्षाधानं संस्कारः । पर्पिकीति । षित्वान् ङीष् । इह पादः पच्चेति गणसूत्रमनार्षम् । इके चरतौ पद्भावोपसंख्यानात् । श्वादेरिति । इञिपरतो यत्किंचिन्निमित्तक ऐच् न । तेन श्वाभस्त्रेरिदं श्वाभस्त्रमित्येव । ननु द्वारादौ श्वन्शब्दपाठेऽपि तदादौ कथं प्राप्तिरत आह तदादीति । तत्फलं शौवहानं नगरमिति । निषेधविकल्पे विधिविकल्पस्य फलितत्वादाहैञ्चेति । श्वापदस्येति । अभिधानलक्षणाः कृत्तद्धितसमासा इत्युक्तेरनभिधानाच्छाभावेण । एवं शौवादंष्ट्रीपीत्यके । अन्ये तु श्वपुच्छवत् दीर्घाभावेणमाहुः । श्वापदिके पूर्वविप्रतिषेधेन नित्य एव निषेधः ॥ त्रेर्मप् ॥ त्रिलः त्रिरेव गृह्यते । न तु संख्यावाची त्रिशब्दो व्याख्यानात् । अत्र त्रेरिति भिन्नं वाक्यन्त्रिप्रत्ययान्तान्नित्यं निर्वृत्ते मबित्यर्थः । ततो नित्यं यो ऽयं निर्वृत्ते मप् स त्र्यन्ताद्भवत्येवेत्यर्थः । तेन निर्वृत्ते वाक्यं नान्यत्र च त्र्यन्तस्य प्रयोगो न, तदुक्तं भाष्ये त्र्यन्तमब्विषयमेव यथास्यात् केवलस्य प्रयोगो माभूदिति । एवञ्चाद्य वाक्येऽपि वेत्यस्यासंबन्ध एव । तृतीयान्तादिति । वृत्तिस्त्वलौकिकाभिप्रायातदर्थकादित्यर्थकावेति दिक् । पाकिममिति । कुट्टिमाद्यप्येवम् । व्यञ्जनैरुः ॥ सेचनेन मृदूकरणमुपसेकः । अन्नादिरसव्यञ्जकवाचकात्तृतीयान्तादुपसिक्तेर्थे प्रत्ययः । क्रियाविशेषणत्वादिति । अकर्मकधातुस्थलेऽपि फलव्यापारयोर्धात्वर्थत्वेन फलसामानाधिकरण्याद् द्वितीयेति भावः । क्रियाविशेषणत्वान्नपुंसकत्वम् । प्रथमान्तत्वञ्च युक्तम् । द्विगुणार्थमिति । औपचारिकादेवायं प्रत्ययोऽभिधानस्वभावात् । वृद्धेरिति । वृद्ध्यर्थे द्रव्ये वृद्धिशब्द औपचारिकः । निपात्यत इति । संख्यायास्तत्पुरुषस्येति वार्त्तिकं त्वव्ययादावेवेति भावः । दर्दुरो वाद्यभाण्डविशेषः ॥ परिपन्थम् ॥ अव्ययीभावो मयूरव्यंसकादित्वात्तत्पुरुषो वा । अत एव निपातनात्पन्थ्यादेशः चो भिन्नक्रमस्तदाह हन्तिचेत्यर्थ इति । माथः पन्थाः । आक्रन्दिक । आर्त्तत्राता । प्रतिकण्ठमिति । अव्ययीभावादेवेष्यते । अधर्मो धर्मविरोधिगुणविशेषजनकं कर्म । प्रतिपथमित्यव्ययीभावः । ऋक्पूरिति समासान्तः । वृत्तौ त्वेतद्विहितप्रत्ययो निदुक्तः ॥ समवायान्त्सम ॥

बहुवचनादर्थनिर्देशोयं तदाह । सामूहिक इति ॥ तस्यधर्म्यम् ॥ धर्मानुवृत्तआचारस्ततोनपेतमित्यर्थः । पण्यम् ॥ हट्टे विक्रयाय प्रसारितम् । किसरादि तालव्य मध्यपाठो वृत्तौ । शलालुके इसुसुक्तान्तात्कः । शिल्पम् ॥ अभ्यासपूर्वं क्रियासु कौशलं शिल्पम् ॥ प्रहरणम् ॥ आयुधम् । धानुष्के इसुसिति कादेशे इणः ष इति षः ॥ शक्तिय ॥ ईकाके दीर्घोच्चारणं स्पष्टार्थम् ॥ अस्तिनास्ति ॥ वृत्तिविषये स्वविषयमतिलाक्षणिकेभ्योऽस्यःदिभ्यः प्रथमा सप्तम्यर्थेभ्यः प्रत्यय इत्यर्थः । परलोक इत्यभिधानस्वभावलभ्यं, दिष्टशब्दोत्र दैव पर्यायो व्याख्यानात् । न तु कालवाची पुल्लिङ्गः । शीलं स्वभावः । तदस्येत्येव । अपूपादिशब्दाः स्वभक्षणे लाक्षणिकाः क्रियानन्तर्भावे तु न वृत्तिरनभिधानात् । ऐकान्यिक इति । एकमन्यदिति विग्रहे तद्धितार्थेति समासः । नियुक्तम् । नियतम् । सङ्घातेति । अत एव टिठन् करणं चरितार्थम् । अन्यथा ठञमेव विदध्यात् तद्धि ओदने वृद्धिवारणाय सङ्घातग्रहणे तु व्याख्यानमेव शरणं नियुक्ताधिकृतः । आकारः खनिः ॥ अध्यायिन्य ॥ अदेशेत्यादिकिम् । काश्यामधीते । पूर्वाह्णे ऽधीते । प्रस्तारसंस्थानौ सन्निवेशपर्यायौ । नैकटिक इति भिक्षुणा ग्रामात्क्रोशे वस्तव्यमिति शास्त्रं तदनादृत्य निकटे वसति । तत्रैवायं साधुः ॥ तद्वहति ॥ रथशब्दसाहचर्याद्युगशब्दो रथाङ्गवाच्येव प्रासङ्गे प्राङावुपसर्गौ 'प्रासङ्गो नोयुगाद्युगे' इत्यमरस्यायमर्थः । युगाद्रथाङ्गादन्यस्मिन्युगे स्कन्धवाह्ये काष्ठे इति । रूढत्वादस्यैवात्र ग्रहणमिति भावः । भस्येति । वोरुपधाया इत्यत उपधाया इति वर्त्तते । धुर्वीधातोर्भ्राजभासेति क्विपि राल्लोपे धूः सिद्धः । धौरेयक इति ढकञ् प्रत्यय इत्यन्ये मूलपाठे तु धौरेयक इति स्वार्थकवन्तम् । सर्वधुरैकधुरौ नपुंसकौ सूत्रनिर्देशाल्लोकाच्चेत्याहुः । एकधुर इति । अन्तरङ्गानपीति न्यायेन सवर्णदीर्घात्प्रागेव टापो लुक् ॥ सञ्ज्ञायां जन्याः ॥ जनीशब्दादित्यर्थः । जन्या जामातुर्वयस्या नववधू यानवाहाश्च जन्याः । जन्यो वरवधूज्ञातिप्रिय भृत्यहितेषु चेति तु विश्वः । जन्याः स्निग्धावरस्य ये इति त्वमरः । जन्यामातृवयस्या स्याज्जन्या जनिवरप्रिया । जननी जनयित्रीश्च जन्यं निर्वाद युद्धयोरिति तु धरणिः । भाष्ये तु जन्या इति किं निपात्यते जनन्या जनीभावो यच्च । जन्या इति पञ्चमीनिर्देशान्निपातनानर्थक्यमिति । तद्वहतीत्यनेनैव जनीशब्दात्प्रत्ययसिद्धेः । रूढिरपि पङ्कजमित्यादिवत्सिद्धेति तदाशय तत इदन्तर्हि प्रयोजनं सर्वकालप्रत्ययविद्ध्यर्थं कर्त्तव्यं सूत्रमित्युक्तम् । एवं चैतद्योगार्थानालिङ्गितेर्थे ऽस्य साधुत्वञ्चिन्त्यमिति भाति । जनवादे तु जन्यशब्दो मतजनहलादित्यनेन साधुः । युद्धे कृदन्तः । न चेत्तत्र

धनुरिति । करणमात्रोपलक्षणं धनुरिति । तेन चोरो विद्ध्यति खड्गेनेत्यादावपि न । न च तत्रासामर्थ्यं प्रधानस्य सापेक्षत्वेनादोषात् । प्रत्ययार्थैकदेशव्यधनस्य तदंशे नित्यसापेक्षत्वाच्च । चोरं विध्यतीत्यादौ त्वनभिधानाद्वारणीयः सत्यनिष्टत्वे । तदित्यनुवर्तमानद्वितीयान्तावाधायाह तृनन्तमिति । तद्योगे हि नलोकेति षष्ठीनिषेधाद् द्वितीया । तृजन्तत्वे हि षष्ठी स्यादिति भावः । सर्वस्यापि स्वेच्छानुसारित्वेन सामर्थ्यलभ्यमर्थमाह । परेच्छानुसारीति । पदमस्मिन् ॥ निर्देशादेवात्र प्रथमासमर्थविभक्तिः ॥ आबर्हि उत्पाटनयोग्यम् ॥ गृहपतिनासम् ॥ निर्देशादेव तृतीया समर्थविभक्तिः सञ्ज्ञायामित्यनुवृत्तेर्दक्षिणाग्न्यादौ न ॥ नौवयो ॥ मूलशब्दयोर्नैकशेषो यत्तदेतेभ्य इतिवत् । मूलान्तमूलादिद्वन्द्वयोः पुनर्द्वन्द्व इत्यन्ये । नावातार्यमिति । शक्यार्थे अर्हलोऽर्थेन् । करणे तृतीया तस्य स्वातन्त्र्यविवक्षायां कर्तरि वा । वयसा तुल्ये मित्रएवं वयस्यः । धर्म्यम् ॥ धर्मफलम् । वध्यो वधार्हः दण्डादिभ्य इत्यर्हार्थे यत् । मूलेनेति कर्तरि तृतीया । सीता । कृष्टक्षेत्रसमीकरणार्थः । काष्ठविशेषोमई इति मध्यदेशप्रसिद्धः । समितमिति । संपूर्वादिणः क्तः । धर्मादनपेतम् । यदनुष्ठानं धर्ममनुवर्त्तत एव तदित्यर्थः । निर्देशादेव पञ्चमी समर्थविभक्तिः ॥ छन्दसो ॥ निर्माणे इच्छायाः करणत्वेन तृतीयान्तात्प्रत्ययः । पुत्र इति । सञ्ज्ञाधिकारबललब्धं प्रीणातीति प्रियः । भावः साधनं चेति । ल्युट उभयोर्विधानादिति भावः । प्रतिजनमिति । जनं जनं प्रतीति विग्रहः । भाक्ता इति । भक्तोन्नं तत्र साधवस्त्रिष्पूतीकृता इत्यर्थः । योगविभागादिति । सर्ववेदपारिषदं हीदं शास्त्रमिति भाष्यप्रयोगादिति भावः । णस्यानुवृत्तेरुभयोर्विधानमित्यन्ये । समानतीर्थाधिकरणकवासकर्तत्यर्थे प्रत्यये इत्यर्थे प्रथमोच्चारितसमानतीर्थशब्दस्य प्रकृतित्वं वासीत्यस्य प्रत्ययार्थत्वम् । यदि प्रत्ययविवक्षायां पूर्वमेव तीर्थे ये इति सादेशेप्येकदेशविकृतन्यायेन समानतीर्थशब्दस्यात्प्रत्ययः । पूर्वापरप्रथमेति तत्पुरुषः । समानोदरेष्वेवम् ॥ समाप्ताश्चातुरर्थिकाः ॥

प्राक्क्रीता ॥ अर्थस्यैव व्याख्यानतोवधित्वमिति अर्थबोधकेष्वेवास्योपस्थितिरतः प्राग्वतेष्ठञित्यतः प्राक् छयतोः पूर्णावधिरित्ययुक्तमित्यपास्तम् । तदग्रिमाणां शास्त्राणामर्थबोधकत्वाभावेन तेष्वनुपस्थितेः । नभ्योक्ष इत्यादि । अत्र हितार्थे यत् । नभ्यं चक्रमिति तु नाभिरिवेत्यर्थे शाखादित्वात् ये साधु । सच्छिद्रश्चक्रावयवो नाभिः स यथा ऽक्षाख्यं काष्ठविशेषं धारयति परिवर्त्तते वाऽञ्जनाद्यपेक्षते च । तथा चक्रमपीति सादृश्यम् । एवं नाभ्यार्थो वृत्तोऽपि नभ्य एव तादर्थ्यात्ताच्छब्द्यन्यायेनेति स्पष्टं भाष्ये । वा च दीर्घत्वमिति ।

चेन प्रकृतिभावः समुच्चीयते तेन दीर्घतदभावयोष्टिलोपो न ॥ हविष्यमिति । हविःशब्दो गवादिः विभाषा हविरित्यत्र तु हविर्विशेषवाचकानामेवग्रहणम् । नस्येपद्वचेति नस् प्रभृतिग्रहणस्य प्रकारार्थत्वात् भाष्ये तु नासिकाया यत्तस् तुद्रेषु नसिति पठितम् ॥ येच त ॥ शीर्षश्छन्दसीत्यतः शीर्षन् इति वर्त्तते । शीर्षण्ये ये चेति प्रकृतिभावः ॥ खलयव ॥ वृषशब्दो ऽत्राकारान्तो व्याख्यानान्न तु नान्तः । वृषन्शब्देन वृष्णे हितमिति वाक्यमेव । एवं ब्रह्मन्पर्यायब्राह्मणशब्देन ब्राह्मणेभ्यो हितमिति वाक्यमेव न तु प्रत्यय इति स्पष्टं भाष्ये ॥ आत्मन्विश्व ॥ उत्तरपदग्रहणं भोगेनैव ससंबद्धं नान्येन व्याख्यानात् । भोगशब्दः शरीरवाच्यत्र । अहिरिव भोगैः पर्येतीति दर्शनादिति स्पष्टं भाष्ये । कर्मधारयादेवेति । पञ्चजनसर्वजनेष्वप्येवमेव । रथकारपञ्चमेषु चतुर्षु वर्णेषु प्रत्येकं पञ्चजनशब्दस्य रूढिः । मातृभोगीणे यथा णत्वं तथा रषाभ्यामित्यत्र निरूपितम् ॥ सर्वेषु ॥ यथासंख्यमत्र । पुरुषाद्घेति । वधादिषु त्रिषु सामर्थ्यात् षष्ठी समर्थविभक्तिः । कृते तु तेनेति निर्दिष्टैव । अजि प्राप्ते इति । पाक्षिकमयटोप्युपलक्षणं हिते तु पुरुषाच्छ एवेति बोद्धम् ॥ तदर्थं वि ॥ विकृतिवाचकादिति न चास्य न प्रथमत्वं प्रकृतावित्यर्थसमर्पकापेक्षया तत्त्वसम्भवात् । तस्मा इत्यनुवृत्तेराह । चतुर्थ्यान्तादिति । तदर्थमिति । सप्तम्याः स्थाने प्रथमा सामान्ये नपुंसकं तदाह तदर्थायामिति । प्रकृतिविकृतिशब्दावुपादानकारणतत्कार्यपरौ परस्परसमभिव्याहारात् । तदर्थग्रहणं स्पष्टार्थम् । शङ्कव्ये उपधादीति यत् । बालेया इति । बल्यवस्थायां यो लौहित्यादिगुणस्तद्राहिता बालेया इत्युच्यन्ते प्रकृतिविकृतिभावो ऽत्र यथाकथंचित् आर्षभ्य इत्यत्राप्येवं यो वत्स ऋषभावस्याप्राप्त्यर्थं पोष्यते स एवमुच्यते । पूर्वविप्रतिषेधेनेति । ञ्जपेक्षयेति शेषः । तदस्य तदस्मिन् स्यादिति ॥ तदर्थंविकृतेरित्यादि निवृत्तमिति कैयटः । लौकिकीमिति । लोकेऽत्र न प्रयोक्तास्मदादिस्तेन मृदुश्लक्ष्णरूपापभ्रंशप्रयोगस्यैव प्रायेण करणात् । तस्माच्छिष्टो लोकोऽत्र लोकशब्देन लौकिकीविवक्षा यत्र प्रायस्य संप्रत्ययः प्राय इति लोको व्यपदिश्यते इति भाष्यात् लोकः शिष्टो लोक इति तदर्थः प्रायस्य समग्रकल्पस्येति कैयटस्यापि समग्रशब्दार्थविषये समर्थस्येत्यर्थः । तादृशश्च शिष्टलोक एवेति बोद्धम् । प्रासादो देवदत्तस्येति ईदृशे ऽर्थे प्रासादीयो देवदत्त इति प्रयोगो लोके न दृश्यते इति भावः ॥ इति छयतोः पूर्णो ऽवधिः ॥

प्राग्वतेः ॥ अत्र वतिशब्देन तदर्थो लक्ष्यते तेनार्थबोधकेष्वेवास्योपस्थानसत्त्वेनापवादविषये न ॥ आर्हाद ॥ आत्रार्हतीति तिङन्तैकदेशशबन्ता.

तुकरणं व्याख्यानात् आङभिव्याप्तौ तदाह । तदर्हतीत्येतदभिव्याप्येति । यद्यपि उर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः । उर्ध्वं यन्मीयते तदुन्मानं सर्वतो मानमिति चातः परिमाणम् । आयामविवक्षायां प्रमाणमित्येतद्भवति । संख्या सर्वतो बाह्या भेदमात्रं ब्रवीत्येषा । नैषा मानं कुतश्च नेति । भेदोत्र वैलक्षण्यमिति कैयटस्तथाप्यत्र परिमाणशब्देनोन्मानमपीत्यसमासे इति सूत्रस्यभाष्यस्वरसः । प्रमाणन्तु न गृह्यते मानाभावात् । सप्तदशसूत्र्यामनुवर्त्ततइति संबध्यत इत्यर्थः । एतेन षोडशसूत्राणामेवानुवृत्तिविषयत्वमित्यपास्तम् ॥ परिमाणान्त ॥ इह परिमाणशब्देन परिच्छेदकमात्रं शाणपर्युदासात् । यद्यप्युत्तरपदस्येति सूत्रे भाष्ये तदधिकारस्यात्र सूत्रे प्रयोजनाभावप्रतिपादनाय परिमाणान्तस्येत्यत्र संख्याया इत्यनुवृत्तिरुक्ता तथापि तदनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन परिमाणान्तस्येत्यस्यासंख्यापूर्वपदे क्काचित्कत्वम् । अत एवात्र परमनैष्किकमिति भाष्योदाहृतं सङ्गच्छते । संख्याया इत्येतत् घटितवाक्यसाहचर्यात्परिमाणान्तस्येत्यस्याप्युत्तरपदे एव प्रवृत्तिरिति न तत्र तदधिकारप्रयोजमिति तदाशयः । यद्यपि कालोपि परिच्छेदकस्तथापि तस्य नेहग्रहणम् । परिमाणान्तेत्येवसिद्धे संख्यायाः संवत्सरसंख्यस्य चेति संवत्सरग्रहणेन परिमाणग्रहणे कालाग्रहणज्ञापनात् । न च संज्ञायां वृद्ध्यर्थं संवत्सरग्रहणम् । ज्ञापकपरभाष्यप्रामाण्येन तादृशसञ्ज्ञाया अभावकल्पनात् । एतेन संवत्सरस्य चेत्संख्याया एवेति नियमार्थं तदित्यपास्तम् । भाष्यप्रामाण्येन नियमव्यावर्त्यप्रयोगानभिधानेन ज्ञापकत्वस्यैवाङ्गीकारादिति दिक् । ज्ञापकमिति । न च परमनैष्किकमित्यत्रापरिमाणत्वात्पूर्वसूत्रप्राप्तठको निषेधार्थन्तदिति वाच्यम् । एतद्भाष्यप्रामाण्येन तत्र परिमाणशब्दनोन्मानस्यापि ग्रहणात् । ध्वनितञ्चेदं निष्कस्य परिमाणवाचित्वात्पूर्वेणाप्राप्तोनेन टक् विधीयत इति वदता कैयटेन । पणपादाद्यप्युन्मानरूपमेवात्र गृह्यते ज्ञापिते तु तत्संभावनामात्रेण तच्चारितार्थ्यन्तत्फलितमाह इतः प्रागिति । प्रत्यासत्त्या पाञ्चमिकेष्वेवेदन्तदाह । सुगव्यमित्यादि । अन्यथा प्रत्ययविधित्वात्तन्निषेधः स्यात् इदमुपलक्षणं व्यपदेशिवदित्यस्यापि तेन गव्यसिद्धिः । व्यपदेशिवद्भावनिषेधस्य सूत्रगृहीतान्तादिशब्दविषयकत्वाच्च । प्रतिषेद्धसम्पंकगोपुच्छादिषु तदन्तविधिव्यपदेशिवद्भावोस्त एव तन्निषेधस्य प्रत्ययविधिविषयत्वात् अन्तनिषेधस्योक्तयुक्त्याप्यप्रवृत्तिर्वाद्ध्या । इत ऊर्ध्वन्त्विति । वाचनिकमेवेदम् । असमासे इति सूत्रादूर्ध्वमार्हीयेनर्हीये चेत्यर्थस्तदाह । प्राग्वतेरिति । तच्चालुकीति लुगन्तायाः प्रकृतेर्नेत्यर्थः । क्रीतन्द्विशूर्पमिति ।

न तावदेषा लुगन्ताप्रकृतिरिति सङ्ख्यापूर्वपदाच्छूर्पादञन्यतरस्यामित्यञष्ठञो वार्द्धेति लुक् ॥ अर्धात्प ॥ जङ्गलधेन्विति सूत्रे विभाषितङ्ग्रहणस्योत्तरपदसंबद्धत्वात्पुनर्वा ग्रहणम् । तपरः किमिति । दीर्घस्य वृद्धिनिषेधे फलाभावात् प्रश्नः ॥ निषेधो न स्यादिति । पूर्वपदस्य वृद्ध्यभावपक्षे वृद्धिं प्रति फलोपहितनिमित्तत्वाभावादिति भावः । तस्य वृद्धिपक्षे तु तामादायैव निषेधः सिद्ध्यतीति बोद्ध्यम् ॥ शताच्च ॥ उत्तरसूत्रप्राप्तकनोपवादोयम् । अशत इति न प्रकृतेर्विशेषणमसम्भवात् । किंतु प्रत्ययार्थस्य तत्रापि यत्र प्रकृत्यर्थशतस्यैव प्रत्ययार्थत्वं तत्रैव निषेध इष्यते तदाह । तेन शतेन क्रीतं शत्यं शाकटशतमित्यादौ न निषेधः । वस्तु त इति । अभेद एव पारमार्थिको भेदस्तु काल्पनिक एवेति भावः । द्विशतेनेति । द्विगुणशतेनेत्यर्थः । तेन द्विगुत्वाभावात्कनो न लुक् । द्वाभ्यां शताभ्यां क्रीतमित्यर्थकलुगन्तद्विशतशब्दात्स्वलुक्रीति तदन्तविधिनिषेधात्प्राप्तिरेव नेति बोद्ध्यम् । संख्याया अति॥ सूत्रे द्वन्द्वगर्भबहुव्रीहिगर्भो नञ्तत्पुरुषः अन्तग्रहणमेकसप्रत्याक्रीतमित्यर्थनिषेधार्थमन्यथा प्रत्ययग्रहणपरिभाषाया न स्यादिति हरदत्तः ॥ वतोरि ॥ अत्रेट् न प्रत्ययो व्याख्यानात् । योगविभाग इति । अन्यथा त्रिंशतः शदन्तत्त्वाद् द्विशब्दस्य विंशादेशस्तिप्रत्यय इति पक्षे विंशतेस्त्यन्तत्त्वात्र स्यादिति भावः । विंशके तिविंशतेर्डितीति लोपे पररूपम् । त्रिंशके टेरिति टिलोपः । अधिक इति । अस्य भागवदपेक्षत्त्वे ऽपि नित्यसापेक्षत्वान्नासामर्थ्यम् ॥ अध्यर्द्धपू ॥ द्विगुसाहचर्यादध्यर्धपूर्वोऽप्यत्र समानाधिकरणसमास एव गृह्यते संख्यासञ्ज्ञासूत्रे भाष्ये ऽद्ध्यर्द्धपूर्वाद्विगोरिति पाठो दृश्यते । द्विगोश्च परस्येति । तन्निमित्तस्येति शेषः समाहारद्विगोर्द्विशूर्प्या क्रीतमित्यर्थे त्वनभिधानात्प्रत्यय एव नेति बोद्ध्यम् । असञ्ज्ञायामिति । द्विगुविशेषणं पञ्चकलायाः परिमाणमस्य पञ्चकलार्थं कृत्तद्धितलुगियं कस्य चित्सञ्ज्ञा तत उत्पन्नस्य न लुक् । तस्य द्विगुनिमित्तत्वाभावाल्लुकोप्राप्त्या भाष्ये प्रत्याख्यातमिदम् ॥ विभाषा का ॥ कर्षापणान्ता द्विगोरद्ध्यर्द्धपूर्वाच्चेत्यर्थः । अद्ध्यर्द्धप्रतिकमिति । आदेशस्य प्रत्ययसन्नियोगशिष्टत्वाच्च तत्पक्षे प्रत्ययलुगिति भावः ॥ द्वित्रिपू ॥ पूर्वग्रहणं स्पष्टार्थम् । अत एव द्वित्रिभ्यामिति यदुच्यते तद्वैयाग्यमिति भाष्ये उक्तम् । द्विनिष्कमिति ठञो लुक् बहुपूर्वादिति । इदं विस्ताच्चेति सूत्रे ऽपि बोद्ध्यमिति भाष्ये स्पष्टम् ॥ विंशतिकात्खः ॥ अत्र द्वित्रिपूर्वादिति न संबद्ध्यते ॥ खार्याई ॥ दीर्घोच्चारणं स्पष्टार्थम् । कन्प्रत्यये केण इति ह्रस्वेन च सिद्धे इकारोच्चारणसामर्थ्येन लोपबाधपूर्वकं सवर्णदीर्घकल्पने गौरवात् । खारीशब्दस्य स्वपर्यायपुल्लिङ्ग-

खारशब्दप्रकृतिकत्वे पुंवत्वेनेष्टासिद्धेश्च ॥ पणपादमा ॥ पणादिसाहचर्यात्पादशब्दः परिच्छेदकवाच्यत्र । त्रयोदशेति । ठञ्ठकौ २ ठन्यतौ ४ कन् द्वुन्टिठनः ७ अञ्शतमानादण् १० खईकनौ ११ पणादियत् १२ द्वित्रीति वार्तिकोक्ताण् १३ चेत्येवन्त्रयोदशेत्यर्थः । अनुवर्तते न तु नान्यत्वमिति भावः । तेन क्रीतम् ॥ क्रयो नाम द्रव्यदानपूर्वकं वस्त्वन्तरग्रहणम् । तेनेत्यनेन च प्रत्यासत्त्या क्रयघटकं द्रव्यमेव गृह्यते । सोस्यांशवस्नेत्यनेन तु न सिद्धः । यस्य शतं मूल्यं न भवति । अथ च कार्यवशात्तेन क्रीतं तत्र तस्याप्राप्तेः । धनपतिसंयोग इति । संयुज्यते येन पुरुषः फलेन ससंयोग इति भावः । अत एव संयोगोनाभेदं कृत्वेदमवाप्यते इति भाष्यं करणव्युत्पत्त्या यागादिरेवसंयोग इति कैयटश्च सङ्गच्छते ॥ गोद्व्यचो । ठकोपवादः ॥ तस्येश्वरः ॥ तस्येत्यनुवर्त्तमाने तस्य ग्रहणं निमित्तमित्यस्य निवृत्त्यर्थम् । यान्त्रिकीति । पित्वान्ङीष् ॥ तदस्मिन्वृ ॥ प्रत्येकमिति एकैककर्मकदानाधिकरणे ऽपि प्रयोगस्येष्टत्वाद्वृन्दुस्तु सौत्रत्वात्साधुरिति भावः । आयादिसाहचर्यात्स्नानवृद्धेरग्रहणम् । उपदेति टाबन्तम् । रक्षानिर्वेश इति । रक्षानिमित्तकभृतिरूप इत्यर्थः । उत्कोच इति । उपहार इत्यन्ये । रूपकस्येति रूप्यकार्षापणस्येत्यर्थः । अत्र मानं चिन्त्यम् । असामर्थ्यान्तु नित्यसापेक्षत्वांद्गमकत्वाद्वा वारयितुं शक्यं अर्द्धमित्युक्ते कस्यांश जिज्ञासायां रूपकस्येत्युत्तरमत एव सङ्गच्छते भारभूतेभ्य इति । वंशादिशब्दानां भारभूतत्वं तथाभूतार्थाभिधायित्वाद्बोध्यम् । सौत्रमेकवचनम् । अत्राद्यं व्याख्यानमेव युक्तम् । द्व्याठकिकीति । नय्वाभ्यामित्यस्यानन्तरस्येति वृद्धिनिषेधकत्वाभावादत्रैज् न । लुगभावे इति । अन्यतरस्यां ग्रहणमनुवर्त्तते इति इत्यनुरोधेनेदम् । वस्तुतस्तदत्र नानुवर्त्तते पुनः खग्रहणात् लुक्तु ठञ एव । खष्ठनोस्तु न लुक् । सहविधाने उद्देश्यविधेयभावासम्भवात् । द्वन्द्वेन च सहविधानस्य स्फुटत्वात् । अत एव भाष्ये ष्ठनश्चेनाप्यनुकृष्टस्य चानुवृत्तिं स्वीकृत्य लुक्खोचेति प्रत्याख्यातम् । तेन द्वैकुलिजिकीति चिन्त्यमेव तदस्य परिमाणं उत्तरेण योगविभागोत्र भाष्ये ध्वनितः । अत्र परिमाणशब्देन परिच्छेदकमात्रन्तेनोत्तरत्र संख्याया अनेन विशेषणं सङ्गच्छते । तेन षष्टिर्जीवितपरिमाणमस्य षाष्टिक इति सिद्ध । न्द्विषकुआदिभ्यस्त्वनेनानभिधानान्न प्रत्ययः । किंतु द्वैषष्टी भृत इत्यर्थे तमधीष्टो भृत इत्यनेन तस्य च न लुक् । अनार्हीयत्वात् । कालादित्यधिकारे ऽपि यथाकथंचित्कालवाचकानां तत्र ग्रहणान्न दोषः रमणीयादिभ्योनभिधानान्न प्रत्ययः । स्पष्टं चेदं सर्वमत्र भाष्ये अस्येति

वर्त्तमाने पुनस्तदस्येति तु स्पष्टार्थम् । तत्सामर्थ्यादार्हीयत्वनिवृत्त्या द्विपाष्ठिक इत्यादौ लुक्चेति तूक्तभाष्यविरोधादनादेयम् । काकवाशितेनेव तदस्येत्यनेनार्हीयत्वनिवृत्तेरशक्यत्वाच्चेति दिक् संख्यायाः ॥ सञ्ज्ञा अत्र तदन्तविधिः । ठञ्विधौ संख्यायाः प्रयोजनमिति येनविधिरिति सूत्रे वार्तिकात् । ठञ्विधायके संख्यया इति पदघटिते सूत्रे तदन्तविधिरिति तदर्थः । तेन द्विषष्टी परिमाणमस्य सूत्रस्य सङ्घस्य वा द्विषष्ठि तत्परिमाणमस्या ध्ययनस्य तद्विषष्टिकमिति सिद्धम् । अत्र द्वितीयस्य न लुक् द्विगुनिमित्तत्वाभावात् । पूर्वसूत्रमिति । तेन पञ्चगावोस्य सङ्घस्य धनमित्यादौ न ननु पञ्चादीनां संख्येयवृत्तित्वात्परिच्छेदकत्वाभावः पञ्चसंख्याकमस्यादिपरिमाणके तु नेष्यत इत्यत आह । तत्र सञ्ज्ञायामिति । यद्वेति वृत्तिविषये तन्धावर्त्तित्वमिति भावः । सङ्घे पञ्चक इति पञ्च परिमाणमस्य सङ्घस्येत्यर्थः । प्राणिसमूह इति । परे तु सङ्घः समूहः समुदाय इत्यनर्थान्तरमिति पङ्क्त्यादिसूत्रभाष्यात् समूहमात्रं सङ्घः परन्तु तस्य बहुसमुदाये शक्तिः पदद्वयात्मके केण इत्यादौ द्विकं सूत्रमित्यस्य सिद्ध्ये तदित्याहुः। पञ्चकमध्ययनमिति । पञ्चावृत्तयः परिमाणमस्येत्यर्थः । स्तोमे इ मन्त्रसमूहे स्तोमशब्दः शक्त इति कैयटः । समूहमात्रे प्रयोगस्तु लक्षणयेति तदाशयः । मन्त्रसमूहः प्रत्ययार्थः । स्तुतिः स्तोम इत्यत्र स्तुतिपदं स्तुतिकरणमन्त्रसमूहपरम् ॥ पङ्क्तिविंशति ॥ अत्र विंशत्याद्याः संख्यायां संख्येये च । उभयत्राप्येकवनान्ताः तेन विंशतिर्गवामित्यादि सिद्धम् । तत्र नवत्यन्तः स्त्रियां सह स्वादिवदेकत्र्यादिवच्चेमान्यप्यव्युत्पन्नानि इति वार्तिक इतः । एषां प्रदर्शनं तूदाहरणमात्रम् ॥ पञ्चद्दशतौ ॥ इत्यन्तौ निपात्येते । तदस्य परिमाणमित्यर्थे त्रिंशच्च । आभ्यान्तदस्य परिमाणमित्यर्थे अण्प्रत्ययो भवति ब्राह्मणेभिधेये समुदायेन चेत्प्रत्यासत्त्या ब्राह्मणसञ्ज्ञा गम्यत इत्यर्थः । लब्धुमिति । उपलक्षणमिदं क्रियामात्रस्य ॥ तेनोपवासं कर्तुं योग्यो भवतीत्याद्यर्थे औपवासिकादि सिद्ध्यति । नित्यमाभीक्ष्ण्यमिति । एतद्वृत्त्यनुरोधेन । वाक्यस्य दर्शनान्नित्यग्रहणमनर्थकमिति भाष्योक्तिस्तदर्थत्वानौचित्यम् । दण्डादियदिति । दण्डादिभ्यो य इति त्वपाठः ॥ पचात् ॥ अत्र नित्यत्ययः ॥ कडङ्कर ॥ कडमिति मदमित्यर्थकम् । कडङ्करं बुसं तत्कर्मार्हतीति । यद्यपि यज्ञर्त्विक्शब्दयोस्तत्कर्मवति लक्षणया सिद्ध्यति तथाप्यत्र प्रकरणे मुख्यार्थेभ्य एव प्रत्यय इति ज्ञापनार्थमिदम् । पारायणमिति । यद्यपि तत्गुरुशिष्याभ्यां निर्वर्त्यते तथापि शिष्य एवेष्यते अभिधानस्वभावात् तदाह । छात्र इति । एवं तौरायणिको यजमान एव

न तु चत्विजीति बोद्धम् । चान्द्रायणन्तपो विशेषः ॥ संशय ॥ संशयशब्द-स्तद्विषयत्वे लाक्षणिकः । अपच इति कर्तरि क्तः । ततोऽभिगमनमिति । पञ्चम्यन्तात्तसिल् । पन्थो ण ॥ पथः पन्थादेशो णश्च प्रत्ययः । णिति पाठस्तु छेदादिभ्य इति सूत्रस्थभाष्यासंमतः । नित्यं गच्छतीति । वृत्त्यनु-सारेण भाष्ये नित्यग्रहणप्रत्याख्यानात् ॥ कालात् ॥ कालग्रहणे यथाकथं-चिदपि कालबोधकस्य ग्रहणमिति तदस्य परिमाणमिति सूत्रे भाष्ये स्पष्टम् । अतिप्रसङ्गस्त्वनभिधानाच्च । आन्हिकमिति । अन्हष्टखोरेवेति नियमाच्च टिलोपः । तादृश एवेति । स्वसत्तया ऽव्याप्यमानकाल इत्यर्थः । तमधीष्ट इत्यत्यन्तसंयोगे द्वितीया । मुहूर्तमध्येपणे ऽपि तत्फलीभूताध्ययनक्रियाव्याप्त्या तद् व्याप्तत्वोपचारात् । यावत्कालमध्येपणभरणे क्रीयेते तावतः प्रत्ययो नेष्यते । भूतभाविनोरुभयोरुपादानसामर्थ्यात्कालान्तर्भावो बोद्धः ॥ मासाद्व ॥ निवृत्तादीनां पञ्चानामधिकारेऽपि भूत इत्येव संबध्यते । न ह्यर्थान्तरे प्रत्यये तदन्तेन वयोगम्यते तदाह मासं भूत इति ॥ यवपीति । अवयसीति सूत्रभाष्यात्तु अत्रापि यपोनुवृत्तिरेव लभ्यते । एवं हि तत्र भाष्यं अवयसि ठंश्चेत्यनन्तरस्यण्यतोनुकर्षः द्रष्ट्वं विजानीयात् यवप्यनुवर्त्तत-इति । यवप्यनुवर्त्तेत इत्यस्य पूर्वसूत्रे इति शेषः । अनन्तरस्येत्युक्त्या ऽनन्तरत्वं सूचितं तच्च पूर्वसूत्रे ऽननुवृत्तावेव भवतीति बोद्धं व्यवहितस्यापि क्वचिद-नुवृत्तिर्दृष्टा यथा द्वितीयाटौ स्स्वेन इत्यत्रैतद इवेदम एवमिहापि कश्चिद्वा-म्येदित्यर्थ इति वदता कैयटेन दृष्टान्तेन व्यवहितस्यापीत्युक्त्या च पूर्वसूत्र च तदसंबन्ध एवोक्तो मूलन्तु वृत्त्यनुसारीति दिक् । चाण्णयदिति । अवयसि ठनिति सूत्रद्वयन्तु न कृतं शब्दगौरवादपि योगविभागस्य गरीयस्त्वात् । पञ्चस्वर्थेष्विति । यथा योगमिति शेषः । द्व्यहीन इति । तद्धितार्थद्विगौ रूपम् । समाहारद्विगौ तु न खः समासान्ते कृते ऽहन्शब्दान्तद्विगोरभा-वात् ॥ संख्यायाः ॥ संख्यायाः परस्य संवत्सरसंख्याशब्दस्येत्यर्थः । द्विषष्ठीति । षष्ठिशब्दो ऽत्र तत्संख्याके ऽहरादिरूपे काले वर्त्तते ऽतः कालादित्यधिका-रस्थभृतार्थप्रत्ययः । संवत्सरग्रहणमिति । संख्यायास्तु न परिमाणग्रहणेन अप्रतिगमके ग्रहणम् । संख्यावाच्या तु सर्वत इत्युक्तेरिति भावः । वाऽ च लुगिति । वाक्यभेदेन तयोरेवेत्यर्थः । द्वैवर्षिक इति । अस्य व्याधिरिति विशेष्यम् । तेन न नित्यो लुक् । प्रतिषेधो नेति । भविष्यदर्थकप्रत्ययभिन्न जिदादावित्यर्थस्तदाह । गम्यते हीति । कर्म करिष्यतीत्यादिपदा न्तरसमभिव्याहारेणेत्यर्थस्तदाहाधीष्टो भृतो वेति । भूतो वेत्यपाठः । तत्र भविष्यत्वस्य कथमप्यनवगतेः द्विवार्षिको मनुष्य इति । चित्तवतीत्य-

स्यारम्भसामर्थ्यादेव नित्यत्वे सिद्धे पुनर्नित्यग्रहणाद्भूतरूपे ऽर्थे एव नित्यं लुक् तत्रैवाभिधानाच्चेति नात्र लुगिति हरदत्तः । परे तु नित्यग्रहणेन वाच्य-वृत्त्योक्तार्थालाभस्तस्मात् । अध्येषणमरणयोश्चेतनविषयकत्वेन तत्र लुको नित्यतया ञिदादिप्रत्ययपरत्वाभावेन तत्र वृद्धिप्राप्तिरेव न । नित्यग्रहणं तु वेत्यस्य निवृत्तये स्पष्टार्थमेव मूलन्तु वृत्त्यनुरोधेनेत्याहुः । परिमाणान्तस्या॥ व्याख्यातमिदं अत्रापि वृत्त्यादिलिखनन्तु प्रमादात् । के चित्पठन्तीति । अत्रारुचिबीजं कुलिजाल्लुक्खौ चेत्यत्र दर्शितम् ॥ षष्ठिकाः ॥ शालिविशेषऽ एवायं साधुर्न मुद्गेषु । एकवचनान्तप्रयोगादाह । बहुवचनमिति । परिजय्य इत्यस्य विवरणम् जेतुं शक्य इति । अस्येत्यर्थे इति । ब्रह्मचर्यञ्चेत्तत्काल-परिच्छेद्यमित्यपि बोद्ध्यम् । यद्वेति । अत्र पत्ते ब्रह्मचर्यञ्चेद्विशेष्यमित्यर्थः । मासोऽस्येति । अत्र मासस्य प्राधान्यात्प्रथमा । अत्यन्तसंयोगे द्वितीया तु विशेषणादेवेति भावः । भाष्यन्तु यद्वेति पक्षपात्येव । मासिको ब्रह्मचारीति त्वर्शआद्यजन्तं बोद्ध्यम् । महानाम्न्यो नामेति । अनेन रूढतया भाषित-पुंस्कत्वाभावात्पुंवत्वं नेति सूचयति । अत एव भाष्ये माहानाम्निकमित्यु-दाहृतम् । भाष्ये तु तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम् । महानाम्नीनं ब्रह्मचर्यं माहानाम्निकमित्युक्तं माहानाम्निक इति तु महानाम्नी सहचरितव्रतपरान्महानाम्नीशब्दात्तच्चरतीत्युपसंख्यानमिति वचनेन साधितं तस्य च दक्षिणा ॥ यज्ञवाचकेभ्यः षष्ठ्यन्तेभ्यो दक्षिणेत्यर्थे ठञित्यर्थः । अकालादपीति । परे तु यज्ञग्रहणादेवात्र कालवाचकादित्यस्यासंबन्धः । न हि द्वादशाहसाध्ययज्ञवाची स शब्दः कालशब्दः । अत एव भाष्ये आख्याग्रहणात्प्रसिद्धमग्निष्टोमाद्यप्रसिद्धं, पञ्चोदनादिकं पाकयज्ञादिच ये आचक्षते तेभ्यः सर्वेभ्यः प्रत्यय इत्यर्थकमुक्तम् ॥ तत्र च दी ॥ कालवाचिभ्यो दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्यया इत्यर्थः । प्रावृष एण्यः ॥ शारदे सन्धिवेलाद्यृत्वित्यण् इदं वृत्त्यनुरोधेन । भाष्ये तु चोभिन्नक्रमः दीयते इत्यनन्तरं बोद्ध्यः चकारेण च यज्ञाख्येभ्य इत्याकृष्यते । तत्र दीयते इत्यर्थे यज्ञाख्येभ्य ष्ठञ् भवतीत्यर्थः । अग्निष्टोमे दीयते भक्तमाग्निष्टोमिकम् । कार्यरूपार्थे एव भववदतिदेश इत्युक्तम् । व्युष्टमहर्मुखम् । व्युष्टे दीयते इत्यादिभाष्यरीत्याप्युत्तरत्रोभयोरधिकारः ॥ संपादिनि ॥ गुणोत्कर्षः सम्पादः सपत्तिस्तद्वदित्यर्थः । प्रभवतीति । समर्थ इत्यर्थः । काल्यमिति । प्रातःकालवाची काल्यशब्दस्तद्वाचिकल्पशब्दवदव्युत्पन्नं प्रातिपदिकं बोद्ध्यम् । ततः स्वार्थिकाणन्तं वा । इन्द्रमहः । इन्द्रोत्सवः । मन्थो विलोडनदण्डाधारः

काष्ठविशेषः । मन्थदण्डयोरूढाविती । चूडादिभ्य इति । इदं व्युष्टादिभ्योऽण् चतोरण् इत्यनयोरपि बोध्यम् । तेन यथादर्शनं व्यवस्था । अग्निपदे दीयते कार्यं वा आग्निपदं पैलुमूलम् । उपवस्त्राप्राप्तोस्य औपवस्त्रं प्राशितम् । भाष्ये ऽग्निपदादिभ्य इति पाठः ॥ ऐकागारिकट् ॥ चौर इति । तेन भिन्नो न । टित्वं ङीबर्थम् । अनुदात्तत्वमप्यत्र निपात्यते । अत एव ठञा सिद्धे निपातनानर्थक्यमिति भाष्ये उक्तम् । समानकालस्येति । एतदर्थमेव निपातनम् । अयमप्यानुदात्तः । आद्यन्तावुत्पत्तिनाशौ । आका-लाट्ठंश्चेति वार्तिकाच्चिदयम् । आकालिका समानकालिकाद्यन्ता चञ्चलेति यावत् चादाकालिकी ॥ तेन तु ॥ सूत्रे तुल्यमिति सामान्ये नपुंसकं प्रथमा-न्तञ्च । उदाहरणेष्वेवम् । व्यापारविशेषणत्वात् क्रियेति च संनिहितत्वा-त्समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययार्थविशेषणम् । यत्तुल्यं सा चेत्क्रिये-त्यर्थः । प्रकृत्यर्थविशेषणन्तु न । ब्राह्मणादिशब्दानां लक्षणयाध्ययनपरत्वेन क्रियोपमानत्वयोग्यार्थकत्वे ऽपि तत्र तृतीयार्थान्वयेन सत्त्वरूपतया क्रिया-त्वासम्भवात् । स्नातव्येन तुल्यं गच्छतीत्यादिप्रयोगसत्त्वे तत्रापि तृतीया-र्थान्वयेन सत्त्वरूपत्वमेव । पाकादीनान्तु सत्त्वरूपता स्पष्टैव । असत्त्वभूता-र्थक तिङन्तार्थानामुपमानत्वमेव न । नवेति ङन्तेनोपमानमस्तीति सन्सूत्र-स्थभाष्यात् । उपमेयत्वन्त्वस्त्येवात्त्वाद्यन्तानां क्रियान्वयनियमेन तुल्यशब्दार्थे ऽनन्वयात् । अत एव प्रकृत्यर्थविशेषणत्वे कथञ्च तृतीया समर्थं नाम क्रिया स्यादित्युक्तं भाष्ये । यस्यार्थस्य तिङन्तादिवाच्यत्वे क्रियारूपताभूत्स सम्प्रति सत्वभूतापि क्रियेत्याश्रयिष्यते इति कल्पने गौरवम् । नृत्यवद्गमनमि-त्यादावस्तीत्यध्याहृत्य सत्तयोरेवोपमानोपमेयभावेनादोष इत्यन्यत्र विस्तरः ॥ तत्र तस्येव ॥ यद्यपि मथुरायामिव पाटलिपुत्रे ऽधीते इत्यर्थे ऽपि पूर्वेणैव सिद्धं तस्य मथुरया तुल्यमधीते पाटलिपुत्रे इत्यस्य च तुल्यत्वात् । तथापि द्रव्यगुणादितुल्यार्थे आरम्भः । क्रियाचेदिति तु नानुवर्तते । किंचेवार्थस्योप-मानविशेषणतया तुल्यपदार्थस्य विशेष्यतया ततो बोधे भेदः । एवञ्च उपमानमथुराभिन्ने पाटलिपुत्रे मे गृहमित्यर्थे मथुरावत्पाटलिपुत्रे मे गृहमिति साध्वेव । उपमेयेनाभेदान्वयात्तत्समाने षष्ठी सप्तम्यावुपमानाद्भाष्ये । तदाह । मथुरायामिवेति । अत्र वाक्ये प्राकारादिपदाध्याहारेणैव बोधः । प्राकारयोरेव चोपमानोपमेयभावः । वृत्तौ तु मथुरादिपदानान्तत्संबन्धिप्रकारे वृत्तिरिति केचित् । परे तु षष्ठ्यर्थसप्तम्यन्तात्षष्ठ्यन्ताच्चायं साधुः । अधिकरण-सप्तम्यन्तात्तु नायमसामर्थ्यादत एवैतत्सूत्रे तत्र ग्रहणस्येवशब्दयोगे षष्ठ्यर्थे सप्तमी ज्ञापकतोक्ता भाष्ये । देवेष्विव मनुष्येषु नामेत्युदाहृतम् । तत्रैव

देववन्मनुष्येषु नामेति साधु । उपमानदेव संबन्धि नामाभिन्नं मनुष्यसंबन्धि नामेति बोधः । मथुरावत्पाटलिपुत्रे प्राकार इत्यस्य उपमानमथुरासंबन्धि-प्राकाराभिन्नः पाटलिपुत्रसंबन्धी प्राकार इत्येवं बोधे एव साधुत्वम् । अस्मादेव ज्ञापकादिवयोगे उपमानविशेषणादुपमेयविशेषणाच्च षष्ठ्यर्थे सप्तमीत्याहुः । तदर्हं ॥ तदिति द्वितीयान्तादर्हमित्यर्थे वतिरित्यर्थः । सूत्रे सौत्रत्वात् द्वितीया । विधिवदिति । विधिविषययोग्यताकर्तृद्दरिकर्मकं देवदत्तकर्तृकं पूजनमिति बोधः । विधिशब्देन तदुक्तः प्रकारः सादृश्याप्रतीतेः पूर्वेणासिद्धौ वचनं, विनीतवदागमनं विच्छेदकृतहस्तवदित्यादौ विनीतानामिदं योग्यमागमनं छतहस्तानामिदं योग्यच्छेदनमिति प्रतीतेरिति दिक् ॥ तस्य भावः ॥ भावे चाकर्मकेभ्यो, भावे इत्यादौ भावपदार्थस्यान्यादृशस्य प्रसिद्धेराह ; प्रकृतीति । भवन्ति अर्थबोधाय प्रवर्त्तन्ते अनेनेति भाव इति करणे घञिति भावः । प्रकार इति । मुख्यविशेष्यतानिरूपितविषयताश्रय इत्यर्थः । तेन राजपुरुषादौ राजादेः प्रकारत्वे ऽपि न क्षतिः । स च तच्छब्दप्रवृत्तिनिमित्तरूप एव । प्रवृत्तिनिमित्तत्वञ्च यत्र बुद्धिस्थे सतिविशेष्यभूतार्थबोधनार्थं शब्दस्य प्रवृत्तिः प्रयोगस्तत्त्वम् । क्वचित्प्रकारस्य तत्त्वं यथा घटादिपदे । क्व चित्संसर्गस्य यथौपगवराजपुरुषप्रकारकादौ प्रकार इति च मूले उपलक्षणम् । यद्वा । संबन्धस्यापि संबन्धतया प्रकारतया चेति द्वेधा भानम् । सञ्ज्ञाशब्दे च प्रायः शब्द एव प्रवृत्तिनिमित्तमिति केचित् । परे तु सञ्ज्ञाशब्दे प्रवृत्तिनिमित्तं नास्त्येव । डित्थत्वमित्यादौ विशेष्यभूतार्थ एव त्वार्थः । प्रकृतिश्चेदृशेषु शब्दपरा डित्थशब्दवानयं इत्यादिक्रमेणैव बोधः डित्थ इत्यादितः संख्यादिप्रकारकबोधाच्च निर्विकल्पकम् । कुत्वमित्यादेः कुशब्दार्थे कवर्गः इत्यादिरीत्या बोधः । अन्यथा कुत्वं कस्माच्च भवतीत्यादौ कुत्वशब्दार्थकुशब्दस्य प्राधान्याभावात्तस्य स्वार्थाश्रये लक्षणाश्रयणीयास्यादित्यादिभाष्यप्रदीपोद्योतादौ विस्तर इत्याहुः । भावत्त्वेन च प्रवृत्तिनिमित्तं शक्यम् । प्रकृतिजन्येत्यादि तदुपलक्षकम् । घटत्वमित्यादेर्घटसंबन्धी भाव इत्यादिक्रमेण बोधः भावप्रधाननिर्देशस्थले च तादात्म्येन व्यक्तिप्रकारकः स्वरूपेण जातिविशेष्यको बोध इति न तत्रासाधुत्वमत एव जात्याख्यायामेकस्मिन्निति चरितार्थम् । अपवादैरिति । अन्यथापवादविषयेस्यानुपस्थितिः स्याच्चिराकाङ्क्षत्वादिति भावः । चकार इति । अन्यथा पत्याद्यर्थप्रत्ययानामिवैतयोरपि तौ बाधकौस्यातामिति भावः । पुंस्त्वमिति । ह्रस्वात्तादाविति षत्वन्तु न सवनादिषु पाठात् ॥ न नञ्पूर्वात् ॥ अधिकारसूत्रमेतत् । तत्र गृह्यमाणप्रातिपदिकाद्विधीयमानानान्तदन्ते प्राधान्याभावादाह । पतित्वमिति ।

प्रत्यन्तेतीगन्ताच्चेति च क्रमेण यगणौ प्राप्तौ आपटवमिति । उत्तरो भावप्रत्ययो नञ्पूर्वाद्बहुव्रीहेर्नेष्यत इत्यादि भाष्यं प्रत्यन्तेति प्राक्तन- पृथ्वादिभ्य इत्यादिविषयमेवेति भाष्यप्रदीपोद्योते निरूपितम् । आचतुर्यमिति । नञ्पूर्वाणामेषामत एव पर्युदासाद्गणे पाठानुमानेन ष्यञ् बोद्ध्यः ॥ र ऋतो ॥ हलादेः किम् । ऋजिष्ठः । लघोः किम् । कृष्णिष्ठः । मेवरत्वमिति । तेन कृतयतीत्यादाविष्ठवद्भावाद्रभावो न ॥ यथातथय ॥ नञःशुचीत्यतो नञ इति वर्तते यथातथाशब्दो निपातसमुदायः । यथापुरमिति । पुराशब्देन पदार्थानतिवृत्तावव्ययीभावः । के. चिदिति । भाष्यानुक्तत्वमत्रारुचिः । वाणिज्यमपीति । अपिना दौत्यम् । यौवनमिति । मनोज्ञादित्वाद्यौवनकमपि । प्रकृत्याके राजन्येत्यादिना प्रकृतिभावः । सहायाद्वेति । पक्षे ब्राह्मणादि- त्वात्ष्यञ् । इदं भाष्ये क्वचिन्मृग्यम् । शैष्योपाध्यायिकेति । अस्यापि प्राप्तिरस्तीति भावः । गोपाल पशुपालिकेत्यादित्वस्योदाहरणं मुख्यम् ॥ गोत्रच ॥ श्लाघादयश्च पदान्तरोपात्ता एव प्रत्ययार्थान्वयिनो न प्रत्ययवा- च्या इति बोद्ध्यम् । गार्गिकयेति । स्वभावात्स्त्रीत्वन्तलोबाधनार्थमिति अधिकारवशाद्वोत्राभ्य इति भावकर्मणोः प्राप्तस्येति भावः एतेन कर्मणित्व- स्याप्राप्तेस्तदर्थेन्त्वयहणम् । किं च पूर्वसूत्रविहितस्य त्वादेरपि निषेधः स्यादि- त्यपास्तम् । शब्दोपात्तस्यैव निषेधात् ॥ इतिनञ्स्नञोरधिकारः समाप्तः ॥

धान्यानाम् ॥ निर्देशात्षष्ठ्यत्र समर्थविभक्तिः । अलौकिके तु प्रत्यया- र्थस्याक्रियात्वे ऽपि तद्धितविधावनुवादसामर्थ्येनैव सा बोद्ध्या । अलौकिके प्रथमाप्रवेशे ऽपि न क्षतिरिति कश्चित् । क्षेत्रशब्दस्तृणधान्यादीनामुत्पत्त्या- धारभूवचनः । भवतिश्चोत्पत्तिवाची परस्परमन्वययोग्यत्वात् ॥ तेनेहन मुद्गानां भवनं गृहभूतोयं कुसूल इति ॥ विभाषा ति ॥ अत्र पूर्वत्र च पञ्चमी षष्ठ्यर्थे इति । धान्यानामित्यस्य संबन्धात्षष्ठ्येव समर्थविभक्तिरिति केचित् । असामर्थ्ये- पीति । सर्वे इत्यस्य कृतेनान्वयेनोत्तरपदार्थे ऽनन्वयादसामर्थ्यमित्यर्थः । सर्वेण चर्मणा कृत इत्यर्थे तु तद्धितो नेष्यत इति भावः । निपातनादिति । प्रत्ययसंनियोगेनैवेदं निपातनं तदाह । सर्वश्चर्मणेति । सम्म सर्वमिति । आ- भिमुख्यार्थकसमित्युपसर्गपूर्वात्तु प्रत्ययो नेष्यत इति भावः । यथामुखीन इति । प्रतिबिम्बदर्शनाधिकरण इत्यर्थः । तत्सर्वादेः ॥ पत्रपात्रमिति पञ्चम्यर्थे प्रथमा सर्वादेरिति बहुव्रीहिस्तत्सामानाधिकरण्याय पथ्यादिभिस्तदन्तग्रह- णन्तदाह । पथ्याद्यन्तादिति । व्याप्तिक्रियाकर्मत्वलभ्यमाह । द्वितीयान्ता दिति । अनुरायामे इति । आद्ये पादसंबन्धिदैर्घ्यापलक्षितेत्यर्थः । अन्त्ये पादेन सदृशीत्यर्थः । सादृश्यन्तुल्यपरिमाणतया समर्थविभक्तिर्द्वितीयानि-

देशात् योग्यत्वाच्च । स्थलविशेष इति । अयः प्रदक्षिणगमनमनयो वामगम नमयः सहितोनयो ऽयानय इति । यद्यप्यसौ गतिविशेषे शक्तस्तथापि प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्नुभयादिपदे स्थितानां परकीयैः शारैस्तत्स्थानानामसंबन्धस्तद्बाधाभावरूपः ससहायस्य शारस्य परैर्नाक्रम्यते पदम् । असहायस्तु शारेण परकीयेण बाध्यते इति द्यूतशास्त्रात्तत्स्यानं लक्षणयोच्यत इति भावः । स्पष्टञ्चेदं सर्वं भाष्ये इत्यन्यत्र विस्तरः । तं नेय इति । प्रधानकर्मणि यत् । अप्रधाने द्वितीया । सन्नियोगेनैवेति । अत एव भाष्ये परांश्चावरांश्चेत्यनेनादेशेनैव विग्रहो दर्शितः । राष्ट्रावारेत्यत्रावारपाराद्विगृहीतादपीत्यादिपठितं तदिहापीत्याशयेनाह । अवारीण इत्यादि । पूर्वपदे इति । उत्तरपदे इति । उत्तरपदे तु विभक्तिलुकैव सिद्धिरिति भावः । पूर्वपदे यलोपनिपातनसामर्थ्यादलुगिति तु भाष्यकृतः । विजायतेगर्भं मुञ्चतीत्यर्थः । तेनात्यन्तसंयोगाभावान्न द्वितीया । खप्रत्ययानुत्पत्तावित्ति । पक्षे द्वयेपीति शेषः । सूत्रे उभयत्रापि तथोच्चारणात् । विकल्पस्तु वाचनिक एव । समाशब्दो बहुवचनान्त एवेत्युक्तसूत्रभाष्यादिबलादुपेत्यमिति भावः । अद्यश्वीनेत्यविभक्तिकं व्याख्यानात् । तेनास्त्रियामपि । अद्यश्वीनं वाडवमिति । अवष्टब्धमासन्नम् । आगवीने आङ्मर्यादायाङ्गो शब्दो गोः प्रत्यर्पणेति । अस्य यो गवाभृत इत्यादिः । अलङ्गामीति । सुप्यजाताविति णिनिस्तद्वृनयत्राह । गच्छतीति । अनुग्विति । पश्चादर्थे ऽव्ययीभावः । अध्वानमलङ्गच्छतीति । अलङ्गामिपदेन विग्रहे तु अध्वनोलङ्गामीत्येव । अभ्यमित्राच्छ च ॥ अलङ्गामीत्यनुवर्त्तते । लक्षणे नाभीत्यव्ययीभावः गोष्ठा । अत्र ॥ केचित् ॥ यद्यपि भूतपूर्वेचरट् षष्ठ्यारूप्यचेत्येते अत्रैव पठित्वा गोष्ठात्खञित्येव सूत्रं युक्तम् । तथापि तयोरन्यत्र करणसामर्थ्येन विशेषविहितेनापि खञा चरणे बाधानेति ज्ञाप्यते इत्याहुस्तद्भाष्ये न दृष्टम् । शालीनकौपीने ॥ शालाकूपाभ्यां तत्प्रवेशतत्पतनलाक्षणिकाभ्यामेव प्रत्ययो ऽनयो रूढिशब्दत्वात् । नानाजातीयानामनियतवृत्तीनां शरीरायासजीविनां सङ्घो व्रातस्तत्कर्मात्र शरीरायासरूपं व्रातः अत एव निपातनादिदमर्थेण तेषामन्यतमे सर्वव्रातीन दृश्यते । नवनीतमिति । भाष्ये घृतमिति पाठः । सञ्ज्ञायामित्युक्तेरुदश्विति न । तस्यपाक । अर्थयोः प्रत्यययोः प्रकृत्योश्च यथासंख्यम् । विनञ्भ्याम् ॥ न सहेति प्रकृत्यर्थविशेषणमित्याहासहार्थेति । तद्व्याख्या पृथग्भावे इति । असहार्थे किम् । विगत इत्यादौ क्रियाविशेषकान्माभूत् । गोष्ठजिति । एतत्प्रत्याख्यानपरभाष्यबलादेते वितः पठिताः अत्रत्यादिशब्दार्थबोधकानि वार्त्तिकानि आह । सङ्घात इति हस्तिषड्गवमिति भारते प्रयोगः । अवाचीनः प्रसिद्धः । नतइति ।

नासिकासंबन्धिनतत्वे वर्त्तमानादवात्स्वार्थे प्रत्यय इत्यर्थः ॥ नेर्बिड ॥ निबिडाः केशा इति प्रयोगाच्चेते नासिकाया इत्यादेरत्राप्रवन्धः । अये तु मण्डूकानुवृत्तिर्बोध्या । अभिधेय इति । तत्र वर्त्तमानाच्चेरित्यर्थः । चिकादेशे ऽकार उच्चारणार्थः । क्लिन्नस्येति । चिल्पिलावादेशौ लश्च प्रत्यय इत्यर्थः । आसन्नं समीपम् । आरूढं उच्चं सञ्ज्ञाधिकारलभ्यमाह । पर्वतस्येति । समुद्रोपत्यका हैमीपर्वताधित्यकापुरीत्यादौ लक्षणया प्रयोगो बोद्धः । कर्मठ इति । ठस्याङ्गसञ्ज्ञानिमित्तत्वाभावादिकादेशो न ॥ प्रमाणे द्व ॥ प्रमाणे इत्यर्थद्वारा प्रकृतिविशेषणं तत्र वर्तमानात्प्रथमान्तादित्यर्थः । प्रमाणमत्र परिच्छेदकमात्रं तत्र मात्रच् । अत एव प्रस्थमात्रमूरुमात्रमित्यादिसिद्धिः । आद्यौ तूर्ध्वमाने एव प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ ममेत्युक्तेरिति केचित् । अन्ये तु आयामपरिच्छेदकमेवात्र प्रमाणम् । अत एव यत्तदेतेभ्य इति सूत्रे प्रमाणपरिमाणशब्दयोरेकार्थत्वं मन्यमानस्य परिमाणग्रहणं किमर्थमिति शङ्कायामुक्तोत्र विशेष इति भाष्ये समाहितं तेनोक्तविशेषवाचकावत्र प्रकरणे प्रमाणपरिमाणशब्दाविति सूचितम् । एवञ्च प्रस्थमात्रमित्याद्यसाध्वेव । मात्रचश्चत्वविशेषेण परिच्छेदकमात्रवाचिनः स्मरणादिति कैयटोपि चिन्त्य एवेत्याहुः । प्रमाणे लः ॥ प्रमाणे वर्तमानाद्विहितस्य लुगित्यर्थः । इहायामस्तु प्रमाणं स्यादित्येव गृह्यते । तेनोरुद्वयसमित्यादिसिद्धम् । शमादीनामपि यदायामपरिच्छेदकत्वं तदा मात्रचो लुक् । यदातूर्ध्वाधरदिगवस्थितवस्तुपरिच्छेदकत्वे द्वयसज़ादि तदा ऽप्रमाणत्वान्न लुक् । द्विगोर्नित्यमिति । प्रमाणान्तद्विगोरित्यर्थः । एतत्सामर्थ्यादेव तदन्तद्विगोरप्रमाणत्वे ऽपि मात्रच् । प्रमाणपरीति । तेनोन्मानात्संशये मात्रज् न । शममात्रमिति । शमः स्यान्नवेत्यर्थः । वत्वन्तात्स्वार्थे इति । बहुलग्रहणसहितोत्र पाठो भाष्ये । हास्तिने इनणीति प्रकृतिभावः ॥ यत्तदे ॥ इह परिमाणग्रहण सर्वतोमानार्थकम् । ननु प्रमाणे इत्यनुवर्त्य तत्रैवास्य विधानमस्तु यावानश्वेत्यादिप्रयोगा एव मुख्याः सन्तु परिमाणप्रयोगा एव सादृश्याद्भवन्तु । तदुक्तं भाष्ये । किमर्थं परिमाणइत्युच्यते न प्रमाण इति वर्त्तते इति चेन्न यदादिभ्यो विशेषविहितेन वतुपामात्रादीनां बाधप्रसङ्गात् । परिमाणग्रहणे तु भिन्नोपाधिकत्वान्न बाध इति प्रमाणोपाधौ तन्मात्रमूर्ध्वमानोपाधौ तद्द्वयमित्यादिसिद्धम् । यावानश्वायावतीरज्जुरधिकरणेतावत्वे चेत्यादिप्रयोगास्तु सादृश्याद्बोध्याः । तदुक्तम् । मात्राद्यप्रतीघातायेति किमिदम् । वस्य घ विधानसामर्थ्याद्वतुपोप्यत्र विधिः । प्रत्ययान्तरत्वभ्रमव्यावृत्तये व इति । एतेनादेः घस्येत्येव सिद्धे व इति व्यर्थमित्यापास्तम् ।

यद्वा किमिदं भ्यामिति वाक्यभेदेन वतुपं विधत्ते । किमः सम् ॥ इदमो निवृत्त्यर्थं किम इति । संख्यापरिमाणमिति कर्मधारयः । परिमाणशब्दः परिच्छेदकपरः । पूर्वत्र परिमाणग्रहणस्य सर्वतो मानार्थत्वात्पुनस्तद्ग्रहणम् । संख्यारूपपरिच्छेदविषयके प्रश्ने वर्त्तमानात्किमोऽस्येति षष्ठ्यर्थे इतिरित्यर्थः । संख्येति किम् । कियान् वृक्षः । कतीति । नित्यबहुवचनान्तः । द्व्येकयोः सन्देहाभावेन प्रश्नाभावात् । बहुत्वव्याप्यसंख्यानां बहुत्वात्प्रश्नो युक्त एव । संख्याया ॥ अवयवे वर्तमानसंख्यावाचकादवयविरूपेऽस्येत्यर्थे तयप्इत्यर्थः अवयवीचात्रानुद्भूतावयवभेदोऽपि समुदायः । तेन मुनित्रयं बहुतयं यूयं उभये देवमनुष्या इत्यादि सिद्धम् । द्वित्रिभ्याम् ॥ नन्वयचश्चित्त्वं व्यर्थं चित्त्वे ऽपि द्व्यादीनामन्तोदात्ततया यस्येति लोपेनानुदात्तस्य च यत्रेत्यनेनाद्युदात्तस्यैव प्रयोगे श्रवणादिति चेन्न । प्रत्ययसंबन्ध्याद्याकारस्यैव प्रत्यप्रकृतेरपि शेषनिघातेनानुदात्तत्वात् ॥ उभाद् ॥ उदात्तग्रहणसामर्थ्यादाद्युदात्तः । अन्तोदात्तत्वस्य चित्त्वेनैव सिद्धेः । सर्वोदात्तत्वन्तु बाधितं अनुदात्तं पदमेकवर्जमित्युक्तेः । नचोभयेत्यत्र संबुद्धावामन्त्रिताद्युदात्तं बाधितुमुदात्तग्रहणमिति वाच्यम् । येननाप्राप्तिन्यायेन चित्स्वरस्यैव बाध्यत्वात्तस्य सतिशिष्टत्वेन बलवत्त्वाच्च । उभयं शृणवच्च न इत्यादौ मध्योदात्तप्रयोगाच्च । तयप् इति । इदन्तयादेशे प्रतिषेध उभये इति स्थानिवत्सूत्रस्यवार्त्तिकानुरोधेन । वस्तुतो नात्रादेशता । किं तु प्रत्ययान्तरत्वमेव उभयीत्यत्र ङीप् तु टिड्ढेति सूत्रे मात्रच इति मात्रशब्दात्प्रभृति अयचश्चकारेण तत्याहाराग्रयणादिति तत्प्रत्याख्यानभाष्यादत एवोदात्तग्रहणं सार्थकं अन्यथा निरनुबन्धकादेशान्तरमेव कुर्यात् । आदेशत्वेप्याद्युदात्तश्चेत्यधिकारेण तस्याद्युदात्ततायाः लाभात् ॥ तदसंबन्धे ऽपि स्थानिसादृश्येनानुदात्तत्वे उभयस्यान्तोदात्ततया ऽनुदात्तस्य च यत्रेत्यनेनाद्युदात्तत्वसिद्धेः । अयचःश्च समुदायानुबन्धः स्वानुबन्धश्चेत्यन्यत्र विस्तरः ॥ तदस्मिन् ॥ उपश्लिष्टपदाध्यारोपश्लेषिकेऽधिकरणे सप्तमीति स्पष्टं भाष्ये । ग्रहणवतेति । निषेधादन्तग्रहणं दशशब्दात्तु न व्यपदेशिवद्भावस्य प्रातिपदिकग्रहणे ऽभावात् । समानजातीयत्वे इति । करणलब्धोयमर्थः ॥ शदन्त ॥ तदस्मिन्नधिकमिति ड इति च वर्त्तते । संख्याया अवयवे इत्यतः संख्याग्रहणञ्च वर्तते । तेन गोत्रिंशदधिका अस्मिन् शते इत्यादिषु न अन्तग्रहणादेकत्रिंशतमित्यादि सिद्धं, विंशता वप्यन्तग्रहणं कर्तव्यं एकविंशंशतमित्यादिसिद्धये । गुणस्य निमाने ॥ गुणोऽत्र समानभागः । निर्मीयते क्रीयते ऽनेनेति निमानं मूल्यन्तदस्येति मण्डूकप्लुत्यानुवर्तते तदाह ।

प्रथमान्तात्पञ्चम्यर्थे इति । गुणस्येति मध्यमणिन्यायेनोभयान्वयि । गुणकर्मकनिमाने वर्त्तमानाद्भागगतसंख्यावाचकान्मयडित्यर्थः निमाननिमेययोर्भागरूपत्वे निमेयसंख्यापेक्षया निमानसंख्याया आधिक्ये च निमेयस्यैकत्वे एव चायं प्रत्यय इति भाष्ये स्पष्टम् । तेनैकोयवोभागो निमानमस्योदश्विद्भागस्येत्यत्र त्रयो यवानां भागानिमानमनयोरुदश्विद्भागयोरित्यत्र च न । द्विमयमिति । द्विशब्दस्य भागवृत्तेर्नित्यसापेक्षत्वाद्यवानामित्येतत्सापेक्षत्वे ऽपि प्रत्ययः । उदश्विद्भागस्याप्युश्वित्वाद्द्विमयमुदश्विदित्युक्तम् । संख्याया इति किम् । यवभागौ निमानमस्योदश्विद्भागस्य ॥ तस्य पू ॥ संख्याया इति वर्तते । संख्येयार्थकसंख्यावाचिनोग्रहणम् । प्रवृत्तिनिमित्तसंख्यापूरणे चायम् । वार्त्ताशाखेति वदवयवः प्रत्ययार्थः । नान्ताद ॥ मुक् तु न कृतः पञ्चम इत्यादौ नलोपानापत्तेः । डटित्यनुवृत्तस्य नान्तादिति पञ्चम्या षष्ठी कल्प्यते इत्याशयेनाह । डट इति । छयताविति । विशेषविहिताभ्यामप्याभ्यां चतुरो ऽरान बाध्यते । थुड्विधानसामर्थ्यात् । डटोपवाद इति । प्रत्ययाधिकारेण प्रत्ययत्वस्य न्याय्यत्वत् । सहायवाची द्वितीयशब्दस्त्वव्युत्पन्नं प्रातिपदिकम् । अनेन तु नास्य साधुत्वम् । नह्यपूरणस्तीयशब्दोऽस्तीति पुरणाद्भागेतीति इति सूत्रस्थभाष्यासङ्गतेः । तत्रत्य पूरणग्रहणान्तु प्रागेकादशभ्य इत्युत्तरार्थमिति भाष्ये स्पष्टम् । विंशत्यादिभ्यस्त ॥ अत्र विंशत्यादयः पङ्क्तिविंशतीति सूत्रस्था, उत्तरसूत्रे संख्यादेरिति त्विहप्रकरणे तदन्तविधिज्ञापकम् । तेनैकार्वविंशतितम एकविंशतितम इत्यादि सिद्धम् । ज्ञापकेन च प्रत्ययविधिविषयता बोध्यते ग्रहणवतेत्यादेः । अयञ्चागमविधिरिति षष्ठ्यादेरिति सूत्रे भाष्ये स्पष्टम् ॥ मतौ छः ॥ अस्य वामीयमित्यादौ प्रकृतिवदित्यस्यानित्यत्वान्ङसादेर्न लुक् । अस्यवामस्येति वेदे पठ्यते । तत्र द्वितीयविभक्तिप्राग्भागानुकरणादनुकार्यकार्यवतः प्रत्यय इति बोध्यम् । विधानसामर्थ्यादिति । ज्ञापकसिद्धविधानसामर्थ्यादित्यर्थः भाष्ये वा लुगिति वचनमेवारब्धं विमुक्तादयः शब्दपरागणे निर्दिष्टाः । गोपदादयोऽप्येवं मतौ च्छ इत्यारभ्यैतदन्ता अनुकरणशब्दादेव प्रत्ययाः साधवः । काम इच्छेति । न तु कामयितानभिधानात् तत्रेत्यनुवर्तते । तदाह धनेकाम इति । तद्रचनायामिति । अत्रैवार्थस्य साधुत्वं स्वभावात् ॥ उदरा ॥ तत्र प्रसित इति च वर्तते यः प्रसितः स चेदविजिगीषुरित्यर्थः । उदरको मल्लः ॥ शीतोष्णाभ्याम् ॥ सञ्ज्ञायामित्यनुवर्तत इत्याशयेनाह । अलस इत्यादि । अध्यारूढशब्दादिति । व्युत्पादनमात्रं शुद्धरूढस्त्वयमिति बोध्यम् । अनृजुरिति । सञ्ज्ञाधिकारादीदृशेऽर्थे एव साधुत्वं बोध्यम् । दम्भ इति । दम्भसाधनत्वात् । दाम्भिका हि प्रायेण दण्डाजिनन्धारयन्ति । तावतिथम् ॥ ग्रहण-

मिति भावे ल्युट् । तच्च प्रत्ययार्थः । तावतिथमिति पूरणप्रत्ययान्तापलक्षणम् । तृतीयार्थे प्रथमा । तृतीयान्ताद्ग्रहणमित्यर्थे प्रत्ययः । तावतिथेन गृह्णातीत्युपसंख्यानमिति वार्तिके तृतीयाया एव समर्थविभक्तित्वस्य क्लृप्तत्वात्तत्ध्वनयन् वक्ष्यति द्वितीयेन रूपेणेति पूरणप्रत्ययस्येति । षष्ठेन गृह्णाति षट्क इति भाष्योदाहरणे तल्लुक एव दर्शनादिति भावः । द्विकं वा ग्रहणमिति । गृहीतर्यपि प्रत्ययविधानेनासन्देहाय ग्रहणमित्युक्तं, द्वितीयेन रूपेणेति । द्वितीयया गुरूक्ततया शब्दावृत्त्येत्यर्थः । इति लौकिकविवक्षार्थः । तेन ग्रन्थविषये ग्रहणे एव तेन द्वितीयं ग्रहणं देवदत्तेन दण्डस्येत्यादौ न । एवञ्च ग्रन्थरूपकर्मणः प्रत्ययेनोक्तत्वादुभयप्राप्तावित्यस्याप्राप्तेर्ग्रहणपदघटिते उदाहरणे देवदत्तस्येति षष्ठी कर्तरि निर्बाधा । नित्यं लुगिति । तावतिथेन गृह्णातीति उपसंख्यानं कर्तव्यं लुक् च वक्तव्य इति वार्तिकपाठादिति भावः । षष्ठेनेति । पञ्चमी रूपैरसौ न गृह्णाति किं तु षष्ठेनेत्यर्थः । शृङ्खलमस्य शृङ्खलमिति भाष्ये क्वचित्पाठः । काष्ठमयं पाशकं यत्पादे व्यतिषज्यते तच्छृङ्खलमिति कैयटः । कालप्रयो ॥ कालबोधकः पूरणप्रत्ययान्त एव ततः सप्तम्यन्ताद्भावे प्रत्ययः । करणवाचकात्तृतीयान्ताज्जनित इत्यर्थे फलबोधकात्प्रथमान्तादस्य कार्यमित्यर्थे अभिधानस्वाभाव्यात् । तदस्मिन्नन्नम् ॥ अन्नमत्राभ्यवहार्यम् । वटकेभ्य इति । सञ्ज्ञायामित्येव । वेत्यनुवृत्तेरिति । तावतिथमिति सूत्रान्मण्डूकप्लुत्येति भावः । अन्यथा घनावादय न स्यात् । इदं वृत्त्यनुरोधेन । सूत्रे ऽधीत इत्यस्याध्ययनपूर्वकन्तदनुष्ठानमर्थः । तेनाध्येतृमात्रे ऽण् सिद्ध इत्यन्ये । श्राद्धीति । श्राद्धशब्दात्तत्साधनद्रव्यवृत्तेः प्रत्ययः । पूर्वादिनिः ॥ अनेनेति कर्तृबोधकमनुवर्तते तस्य क्रियाकाङ्क्षायामन्तरङ्गत्वात्करोति क्रिया एव गृह्यते । सपूर्वादित्यस्य विद्यमानपूर्वात्पूर्वशब्दादित्यर्थः । कृतपूर्वयोः सुप्सुपेति समासः ॥ छन्दसि परि ॥ छान्दसमपीदमनुवृत्तिसौकर्यायेह व्याख्यातम् । सक्षाद्द्रष्टरीति । साक्षाद्द्रष्टृत्यर्थे प्रथमोच्चारितादिनिरित्यर्थः । सञ्ज्ञाग्रहणाच्च न दातृग्रहीत्रोरयं प्रयोगः । किं तु पार्श्वे स्थितः सदुदासीनतया यः पश्यति तत्रैव । इन्द्र आत्मेति । स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिति तस्मादिन्द्रोनामतमिन्द्रं सन्तमिन्द्र इत्याचक्षते इति श्रुतेः । कर्त्रधिष्ठितानामेव करणत्वात्तस्य लिङ्गमनुमापकम् ॥ तदस्यास्त्य ॥ गोमान्देवदत्त इत्यादावाधाराधेयभावात्षष्ठ्युपादानम् । न च तत्राप्यधिप्रस्तदत्ते पञ्चाला इति वत्तत्सम्भवः । अधिशब्दयोगे तथाबुद्धिसत्त्वात्तत्र तादृशबोद्धाधिकरणत्वसत्त्वेप्यत्र तत्सत्त्वे मानाभावात् गोमान् देश इत्यादावधिकरणत्वे ऽपि संबन्धाभावेन षष्ठ्यप्राप्त्या सप्तम्युपादानं सर्वत्र क्रियाका-

रकभावमूलकः संबन्धो द्रव्यान्वये षष्ठीनियामकः । नचैवमत्र संयोग एवाऽऽत्राधारत्वमूलम्, न तु तन्मूलकः सः । किं च संयोगो न षष्ठीनिमित्तम् । कथञ्चित्संयुक्तयोर्घटयोरन्यतरबोधकात्षष्ठ्यापत्तेः । अत एव भूमादिषु संसर्गपदेन संयोगग्रहणम् । तत्स्मात्संयोगस्य भूमादिवत्संबन्धान्तरे सत्येव प्रतीतिर्न तु षष्ठ्यर्थता नापि मत्वर्थता । तदुक्तं भाष्ये । पर्वते वृक्षाः सन्ति न तु ते तस्य किंचिदिति । लोहितोष्णीषा इत्यादौ सप्तम्यर्थ एव बहुव्रीहिर्बोध्यः । अत्र षष्ठ्यर्थमत्वर्थीयान्तात् षष्ठ्यर्थमत्वर्थीयो न सप्तम्यर्थतदर्थात् सप्तम्यर्थो न भिन्नवृत्तावपि सरूपः स न । सप्तम्यर्थे च नेतिठनाविति भाष्ये स्पष्टम् । अत्र शब्दशक्तिस्वभावादेव बहुव्रीहाविव वर्त्तमानकालास्त्यर्थान्तर्भावो बोध्यः । गोमानासीदित्यादेस्तु तथा व्यवहारविषय आसीदित्यादिरर्थः । अस्तिग्रहणं त्वस्तिशब्दादस्तिसामानाधिकरण्याभावेनाप्राप्तमतुपो विधानार्थम् । तेनास्तिमानिति सिद्धम् । सत्ताकर्तृधनवानिति तदर्थ इति भाष्ये स्पष्टम् । इति शब्दलभ्यमर्थमाह भूमेत्यादि । अत्र संसर्गः संयोगः । स च संबन्धान्तरे सत्येव तन्नियामको ऽत एव दण्डीत्यतः संयुक्तदण्डस्यैव तत्स्वामिनः प्रतीतिः । येऽस्तिविवक्षायां मतुवादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीतिवाक्यार्थः । एवं बहुव्रीहिरिति यथायथं भूमादिषु बोध्यो मत्वर्थबहुव्रीहिरिति वार्त्तिकात् । रसादीनां विशेषणमिति । तेन गुणवाचकानामेवैषां ग्रहणमिति जलादिवाचि रसादीनान्द्रव्यवचनगन्धादीनाञ्च नेति भावः । एभ्य इनिठनावपीष्येते इतीदं व्यर्थमिति भाष्ये स्पष्टम् । गुणवचनेभ्य इति । गुणगुणिबोधकेभ्यः शुक्लादिभ्य इत्यर्थः । पटः शुक्ल इति गुणगुणिनोरभेदव्यवहारे ऽपि पटस्य शुक्ल इति भेदव्यवहारस्यापि सत्त्वेन प्राप्तमतुपो ऽश्रवणार्थमिदम् । अत एव गुणिनि विशेष्यलिङ्गता सिद्धा । तत्रापि रूढत्वे तु सर्वलिङ्गता नियतलिङ्गता वा प्रसज्येतेति भाष्यकैयटयोः स्पष्टम् । अयञ्च लुक् द्रव्यवाचकसमभिव्याहारे एव एतदेव ध्वनयता भाष्यानुक्तमपि इष्ट इति वदता तादृशस्थलएवेष्ट इति तदर्थः । ध्वनितञ्चेदं पूरणगुणेति सूत्रे भाष्ये गुणगुणिनोरभेदस्यापि सत्त्वादिदं वचनं भाष्ये प्रत्याख्यातम् । गुणिलिङ्गास्तु तद्वतीति कोशस्य मतुब्लुका ऽभेदेन वा तद्वति वर्तमाना इत्यर्थः । भेदे ऽपि मतुपोनभिधानाम् । गुणवाचिनामेषां पुंस्त्वमेव गुणिनि विशेष्यलिङ्गतेति त्वभिधानस्वाभाव्यात् । मादुपधायाः ॥ विधीयमानत्वेन सवर्णाग्राहकत्वान्मस्य नानुनासिको वकारः । आसन्दीवदष्ठीव ॥ अत्र सूत्रे कक्षीवच्छब्दपाठोनार्ष इति न संप्रसारण इति सूत्रस्यभाष्यस्वरसः । तत्र हि कक्ष्यायाः सञ्ज्ञायां मतौ संप्रसारणं वक्तव्यमिति वचन

मारब्धं वत्वन्तु सञ्ज्ञायामिति सूत्रेण सिद्धमिति दिक्। राजन्वतीति । राजन्वान्देश इत्यपि बोद्धम्। शिखावानिति। शिखाशब्दस्य व्रीह्यादित्वे तु चूडावती प्रतिमेति प्रत्युदाहार्यम् । मेधावानिति । नचात्रास्मायामेधेति विनिना बाधाच्च लचः प्राप्तिः चिकीर्षावानित्यस्यानेनोपलक्षणात् । चूडावलोसीति। असीति तिङ्‌ऽतिङ इति निहतं चूडालात्सो रुत्वे तस्य सुप्त्वेनानुदात्ततया तत्स्यानिकस्याङ्गुणस्यैकादेशउदात्तेनेत्युदात्तत्वे तस्य परेण पूर्वरूपैकादेशे तस्य पदाद्यनुदात्तेन सहैकादेशत्वात्स्वरितो वेत्यस्य प्राप्तिरिति बोद्धम् । एतच्च वृत्तौ स्पष्टम् । समुच्चयार्थमिति । भाष्योक्तव्याख्यानादिति भावः । वत्सांसाभ्याम् ॥ लच् स्यादित्येव पाठः । मतुबन्तेन स्नेहवलयोरप्रतीतेरित्यनुवृत्त्युक्तेः । प्रज्ञाश्रद्धा ॥ यद्यपि कर्तृव्युत्पन्नप्रज्ञशब्दात्प्रज्ञाद्यणि प्राज्ञः सिध्यति । तथापि स्त्रियां ङीबभावार्थमिदम् । तदाह । प्राज्ञेति । श्रद्धासाहचर्याद्भावार्थकाङन्तस्यैवात्र ग्रहणम् । तपःसह ॥ अर्थाभ्यां यथासंख्यं न । अस्वरितत्वात् । उत्तरार्थ इति । तपःसहस्राभ्यामथिनीनीति न्यासेन भिन्नविभक्त्युच्चारणादण उभयसंबन्धो विनीनोर्यथासंख्यञ्च सिद्धमिति भावः । मतुप्चेति। समुच्चयार्थान्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः । सिकता इति । लुपि युक्तवद्भावः । हयवरट्सूत्रे एकासिकतेति भाष्यादेकवचनान्तोप्ययम् ॥ दन्तुर इति। निम्नोन्नते प्रयोगस्तु लक्षणया उन्नते किम् । दन्तवान् । ऊषः क्षारमृत् । मधुमाधुर्यमिति । रसवाचिन एवात्र ग्रहणादिति भावः । स्पष्टं चेदं भाष्ये नगरमिति । चातुरर्थिकप्रत्ययान्तनगरशब्दस्तु देशविशेषनाम अयन्तु जातिवाची अत एव नगरीति जातिलक्षणो ङीष् । पुनर्ग्रहणमिति । पुनर्ग्रहणस्य द्युद्रुभ्यां म इत्यस्य नित्यत्वार्थताया भाष्ये उक्तत्वेन व्याख्यानादेवा स्यसर्वविभाषार्थत्वमिति वक्तुमुचितम् । मणिव इत्यादि । बिम्बावकुर एव मष्टकावमित्यप्यस्योदाहरणं; अन्येषामपीति दीर्घः । अर्णसो लोपश्चेति । भाष्ये न दृश्यते । नेहेति । भ्रातृवलः पुत्रवल इत्यादौ । भ्रातृवले ऽण इति अनुवृत्तेरपि तदभावः । अत इनि । एकाक्षरात्कृतोजातेः सप्तम्याञ्च न तौ स्मृताविति भाष्यम् । यवव्रीहीति ॥ व्रीह्यादिगणे ऽपि पाठादिहार्थग्रहणम् । तेन शालिलः शालिक इति सिद्धमिति वृत्तिः । एकगोपू ॥ सूत्रे बहुव्रीहिः । अधिकारप्राप्तं प्रातिपदिकादित्यन्यपदार्थः । ऐकशतिक इति । पूर्वकालैकेति समासः । तद्धितार्थोत्तरपदेति समासस्य मत्वर्थे ऽनभिधानेनाप्रवृत्तेः संख्यायाः संवत्सरेत्युत्तरपदवृद्धिस्तु न । तत्र संख्यापदमुच्चार्यविहितस्य तद्धितार्थेति समासस्यैव प्रतिपदोक्ततया ग्रहणात् । अत्रात इति निवृत्तम् । अत एव गोशकटिरस्यास्तीति विग्रहे ऽपि गौशटिक इत्येव । न तु गोशकटिमानिति, गोविंश-

तिरस्यास्तीत्यादौत्वनभिधानादेति स्पष्टं भाष्ये । द्वन्द्वोपतापेत्यादौ मण्डूकप्लुत्यात इत्यस्य संबन्धः । समासान्ता इति सूत्रस्थभाष्यादित्यलम् । निष्कात्पराविति । सूत्रे ऽसमार्थे ऽपि सौत्रत्वात्समासः । अन्तग्रहणं शतादिपूर्वान्निष्कादित्यर्थं निरासार्थं,प्रिनजिति पाठः । हृदयी हृदयिक इत्यादि । अनेनान्यतरस्यां ग्रहणेनात इनीत्यस्य प्रवृत्तौ तत्र मतुप्समुच्चयबोधकान्यतरस्याङ्ग्रहणानुवृत्तेः प्रत्ययत्रयसौ लभ्यमिति भावः । तप्पर्व ॥ पिदयमित्येके । निदयं, मरुद्विर्दत्तो मरुत इत्येवं मरुतं साधयित्वास्य भाष्ये प्रत्याख्यानात् । तत्र हि मरुत उपसर्गत्त्वे उपसंख्यानेनोपसर्गत्वसामर्थ्यादजन्तत्वाभावेप्यच उपसर्गादिति तत्वं तत्र तत्वविधावुपसंख्यानेन सिद्धे प्रथमे उपसर्गसञ्ज्ञायामुपसंख्यानमनेकसञ्ज्ञालाभार्थमिति निपात त्वान्मरुत आद्युदात्तत्वेन तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरेण मरुतस्याद्युदात्तत्वम् । एताश्च सञ्ज्ञास्तत्वविषया एवेति मरुद्विर्दत इति भाष्यप्रयोगो नालुपपन्नः एवञ्च फलाभेदाय नित्यमेवोचितम् । पित्वे तु मध्योदात्तत्वं स्यादित्यपरे । एतद्विषये मतुन्न । अस्य रूढिशब्दत्वादवयवार्थाभावेन तद्प्राप्तेरित्यन्यत्र विस्तरः । पदत्वमिति । तेन यस्येति लोपो न । अनुवर्तयन्तीति । बहुलंछन्दसीत्यतः । वाचो ग्मिनिः ॥ गकारोच्चारणं प्रत्यये भाषायामित्यनुनासिकाभावाय । उत्तरसूत्रस्थबहुभाषिणीत्यस्यात्रापि संबन्धात्सम्यक् बहुभाषिणि वाग्मीति बोद्ध्यम् । ऐश्वर्येति । तेन धनवानित्यर्थे स्वामीति न । कटकवलयिनीति । कटकवलययोः कश्चिद्भेदं परिकल्प्य द्वन्द्व उपपाद्यः । अत इत्येवेति । समासान्ता इति सूत्रस्थभाष्यात् मण्डूकप्लुत्या तदनुवर्तत इति भावः । ठनादीति । आदिना मतुपो ग्रहणम् । मतुप्समुच्चयार्थान्यतरस्याङ्ग्रहणस्यैकगो इति सूत्रे नित्यग्रहणात् बलादिभ्यो मतुबिति सूत्रे ऽन्यतरस्याङ्ग्रहणाच्चासंबन्ध इति भावः । अस्मायेत्यत्र तु संबन्ध्यत एव तसाविति सूत्रे यशस्वानिति भाष्ये उदाहरणात्प्रकृत्यैकाजिति सूत्रे स्रग्वत इति भाष्ये उदारणाच्चेति बोद्ध्यम् । वातातो । कुगर्थमेवेदम् । अदन्तत्वादेवेनः सिद्धत्वादिति वृत्तिः । ठन्बाधनार्थमिति । सामान्यसूत्रेण सिद्धः । सूत्रस्य फलान्तराभावाच्च । वर्णाद्वा ॥ वर्णात्र वेदाध्ययनार्थं ब्रह्मचर्यम् । अर्थाच्चेति । अर्थशब्दोत्र धनवाची कालतोत्रासंनिधिर्निर्देशतः । तत्र विरोधादस्तीत्यस्यासंबन्ध इत्यप्राप्त एवेनिर्विधीयते सत्तोपाधिकादिनि ठनोरभावो ऽनभिधानात् । अत एवासन्निहित इति किमर्थमर्थवानिति भाष्ये उक्तम् अर्थी समर्थो विद्वान्यः शास्त्रानुपहतश्च य इति त्वार्षम् । अर्थनमर्थ इति क्रियाशब्दात्सत्तोपाधिकादिनि ठनौ भवत एव । मतुप्तु नानभिधानात् । तेनार्थिकप्रत्यर्थिकौ

धान्यार्थीत्यादि च सिद्धम् । धान्यकरणकप्रार्थनावानित्यर्थः । बलादिभ्यो । अन्यतरस्याङ्ग्रहणं द्वन्द्वोपतापेति प्रकृतस्येनः समुच्चयार्थम् । तेनैतस्माट्टन्न । प्रथिमनीति । इमनिजन्ता प्रकृतिः । अनिनस्मन्नित्यनर्थकेनापि तदन्तविधिः । मेति । मान्तस्योदाहरणमित्यर्थः । वकारयकारपरस्येति । बहुव्रीहिरनुस्वारो ऽन्यपदार्थः ॥ इतिमत्वर्थीयाः ॥

प्राग्दिशो ॥ व्याख्यानादिदं सञ्ज्ञासूत्रं तदाह । विभक्तिसञ्ज्ञा इति । स्वार्थिका इति । प्रायेणेति शेषः । स्वीयप्रकृतेरर्थे भवा इत्यर्थः । तसिलादावर्थनिर्देशाभावादतिशायने इत्यादीनां प्रकृत्यर्थविशेषणत्वादिति भावः । जात्यन्ताच्छ बन्धुनि प्रकारवचने इत्यादिविहितस्य तु वाचकत्वमेवात एव तदर्थस्य विशेष्यतया भानमतः प्रायेणेति पूरितम् । किंसर्वनाम ॥ प्राग्दिश इत्येव । द्व्यादिपर्युदासात्किमः पृथग्ग्रहणम् । द्व्यादिभ्यः प्रागेव किम्शब्दस्तु न पठितः । कश्च भवांश्च कावित्यत्र भवतः शेषापत्तेः । त्यदादीनां यत्परं तच्छिष्यते इत्युक्तेः । विधेयानिर्देशादाहाधिक्रियत इति । बहुशब्दश्चात्र संख्यावाच्येव व्याख्यानात् । प्रकरणलभ्यमाह । प्राग्दिशीये परे इति । दिशः प्राक् प्राग् दिशं तत्र भवे इत्यर्थः । एतेतौ । द्वितीयो व्यञ्जनान्तः । यथासंख्यं कार्यनिमित्तयोः । नलोप इति । सर्वादेशत्वन्त्वानुपूर्व्यात्सिद्धम् । इत्सञ्ज्ञा तु न फलाभावात् । परत्वादनः पूर्वमेव त्यदाद्यत्वे कृते लक्ष्येलक्षणस्येति न्यायेन पुनरत्वाप्रवृत्तिरिति भावः । कुतिहोः ॥ अष्टन आ इत्यतो विभक्तावित्यनुवर्त्तते । तीत्यत्रेकार उच्चारणार्थः । तिहोरित्यस्य फलमाह । कस्मादिति । यत इति । तसिलादीनां विभक्तित्वात्त्यदाद्यत्वम् । परस्य तसेरिति । प्रतियोगे पञ्चम्यास्तसिरपादाने चाहीयरुहोरिति वक्ष्यमाणस्येत्यर्थः । प्रत्ययग्रहणपरिभाषया तसेधातोर्न ग्रहणम् । व्याख्यानाच्च । स्वरार्थम् । लित्स्वरार्थम् । विभक्त्यर्थं विभक्तिनिमित्तात्वाद्यर्थम् । स्वरार्थमिति भाष्यन्तूपलक्षणं पूर्वोक्तविभक्तिकार्यस्यापीति बोद्धम् । सर्वोभयेति । अभिधानमूलमेतत् । भाष्ये उक्तं ओदनं परिपिञ्चतीत्यादौ सर्वार्थत्वे ऽपि वाग्रहणानुवृत्तेर्न तसिल् । वाग्रहणमिति । साहचर्याच्च कुत्रचित् नान्यत्र कुत्रापि च साभिलापमिति बहुतरप्रयोगदर्शनादिदमुक्तम् । भागवृत्तिकारादयस्तु किमो भाषायान्त्रलं नेच्छन्ति । भाष्यस्वरसोप्येवमेव । एतदस्त्र ॥ इदमोन्वादेशइत्यतो ऽशनुवर्तते । एतदोनित्येव सिद्धे ऽनुदात्तार्थं वचनम् । ननु लित्स्वरे शेषनिघातेनैव त्रतसोरनुदात्तत्वे सिद्धे तयोस्तद्विधानं व्यर्थमिति चेन्न । लित्स्वरापवादेशानुदात्तत्वे कृते लित्स्वराप्राप्त्या प्रत्ययस्वरेण त्रतसोरुदात्तत्वप्राप्ते तत्सार्थक्यात् । अतो नेति । अत एतस्माद्धामादित्यर्थः । सप्तम्यन्तेभ्य इति । सप्त-

म्या इत्येवानुवर्तते कृप्रस्वरितत्त्वात् नेतराभ्य इतीति भावः । सर्वत्र देशे इति । सर्वत्र काले इत्यपि बोध्यम् । काले इत्युपादानेन सर्वशब्दस्य तत्र कालार्थकत्वात् । अत एव वर्तमाने लडिति सूत्रस्थे भाष्ये अनागतमतिक्रान्तं वर्तमानमिति त्रयम् । सर्वत्र च गतिर्नास्तीति प्रयोगे कालवृत्तित्वाविवक्षायां दानक्षत इति कैयटः । विहितत्वादिति । सर्वैकान्येत्यनेन । एतद्भाष्ये स्पष्टम् । तर्हीति । एतत्प्रतिद्वन्द्विभूतेयदीत्येतदखण्डमव्ययम् । एतर्हीति । एतद इति योगविभागेन एतादेशः । अस्मिन्नहनीति । पुष्येण युक्तः कालो यमित्यर्थके अद्य पुष्य इत्यादौ शक्तिमत्प्रधानता । इदमह इत्यर्थेऽपश्चेत्यन्ये । व्यपदेशिवद्भावेन स प्रयोग इत्यपरे । एद्युसिति निपातनादन्तोदात्तोयम् । भाष्ये तु चित्पठ्यते । प्रकारवचने ॥ पञ्चम्यर्थे सप्तमीत्याह प्रकारवृत्तिभ्य इति । वचनग्रहणात्प्रकारवद्वृत्तिभ्य इत्यर्थः । तेन प्रकारेणेत्यस्य विशिष्ट इति शेषः । सामान्यस्य भेदको विशेषोत्र प्रकारः बहुभिः प्रकारैर्भुङ्क्ते इत्यतो बहुभिर्विशेषैरित्यवगमात्सादृश्यन्तु न गृह्यते । अन्यथा सर्वथेत्यादौ तदप्रतीत्यानभिधानात् । यथा हरिस्तथा हर इत्यादौ यत्प्रकारवान्हरिस्तत्प्रकारवान्हर इति बोधे हरिसदृशे हर इति फलतीति बोध्यम् । अत्यन्तस्वार्थिकोयं, प्रत्ययं विनापि यश्चैत्रः स मैत्र इत्यादौ प्रकारवचनदर्शनात् द्योतकत्वे तदर्थस्य विशेषणतापत्तिश्च । एवं जातीयर्विधावपि बोध्यम् । स्थूलादिभ्यः कन्विधौ चैवमेव, स्थूलादीनामपि गौर्वाहीक इत्यादौ गवादिपदानामिवास्त्येव प्रत्ययं विनापि प्रकारवाचित्वमत एवैषां नित्यत्वं नोक्तम् ॥ दिक्छब्देभ्यः ॥ नेह यथासंख्यं अस्वरितत्वात् । शब्दग्रहणलभ्यमर्थमाह दिशिरूढेभ्य इति । संख्याया इत्येतत्पर्यन्तमस्तातिपदरहितमिदं सूत्रमनुवर्तते । अस्तातौ पुराद्यादेशविधानार्थमस्तातिचेतीहलेख्यं तत्रानुवृत्तिप्रदर्शनाय पूर्वेत्यादिसूत्रमपीह व्याचष्टे । पूर्वाध । असीत्यविभक्तिकम् । सन्नियोगशिष्टत्वाय चकारः । अवराणामित्यनन्तरयोगे षष्ठी । अस्ताति च । लुप्तसप्तम्यन्तमिदम् । तदाह अस्ताताविति । शब्दभेदादर्थभेदे ऽपि समानानुपूर्वीकत्वाद्दिक्शब्दो देशादिवृत्तिरितिव्यवहारो बोध्यः । पूर्वादयस्तत्तद्दिक्स्यत्वं प्रवृत्तिनिमित्तीकृत्य क्वचित् वक्तृसंमुखदेशत्वं तथा कृत्वा क्वचिद्देशे प्रवर्तन्ते । अत एव पुर इत्यस्याग्रे इत्यर्थकत्वं विश्वकोशादावुक्तम् । क्वचित्स्वसंयुक्तसंयोगित्वं यथा परादिशब्दे प्रकृतसूत्रे च सर्वेषां ग्रहणं विनिगमनाविरहात् । पूर्वस्मिन् गुराविति । पूर्वकालाध्ययनकर्तरीत्यर्थः । दक्षिणोत्तर । ननु तसुरेव प्रत्ययोस्तु दक्षिणस्यां दिशि दक्षिणत इति तु सर्वनामावृत्तिमात्र इति पुंवत्त्वेन सिद्धम् । षष्ठ्यतसर्थेति सूत्रे षष्ठी तस्वर्थेति

पाठान्तेन ततो ग्रामादन्य इत्यादौ पञ्चमीं बाधित्वा परत्वात्षष्ठी नेति चेन्न स्पष्टार्थत्वात् । प्राच्यामिति । लिङ्गविशिष्टपरिभाषयास्तातेर्लुक् । विभक्तित्रयार्थं प्रकटयितुमाह वसत्याग इत्यादि । एनबन्यत ॥ अपञ्चम्या इति ॥ प्रागसेरनुवर्तते । अदूरे इति ॥ अवधिमानवधेश्चेददूरेत्यर्थः । केचिदिति । अञ्चत्यन्तात्तु न । व्यवस्थितविभाषाविज्ञानादिति तदाशयः इयमेवात्र रुचिः । दक्षिणादाच् ॥ चकार आजाहीत्यत्र विशेषणार्थः । तेन वाक्यस्मरणयोरङिदाकारस्य व्यावृत्तिरिति भाष्यम् । उत्तराच्च चेन व्यवहित आजपि समुच्चीयते व्याख्यानात् । तदाहोत्तरेति । संख्याया वि ॥ विधस्यार्थे इत्यर्थः विधानं विध इति घञर्थेकः विधशब्दस्यार्थश्च सामान्यस्य भेदकविशेषरूपः प्रकारः स चाभिधानस्वाभाव्यात्क्रियाविषयक एव गृह्यते तदाह क्रियाप्रकारे इति । तदुक्तं भाष्ये विधयुक्तगताश्च प्रकारे भवन्तीति त्रेधा गुणो नवधा द्रव्यमित्यादावप्युपदिश्यते भवतीति वा क्रिया बोद्धा । चतुर्द्धेति । चतुर्भिः प्रकारैरित्यर्थः । अधिकरणस्य द्रव्यस्य विचलनमन्यथा करणं तच्चेह संख्यासन्निधानात्तद्विषयमेवेत्याह । द्रव्यस्य संख्यान्तरेति । तदवगमश्च पदान्तरसमभिव्याहारादिति बोद्धम् । एकं राशिं पञ्चधेति । पञ्चत्वसंख्याविशिष्टमित्यर्थः । एकाद्धो ॥ धामहणं धामाचस्य यथास्यात् । अन्यथा नन्तरत्वादधिकरणविचाले विहितस्यैव स्यात् । अत एव प्रत्ययेनाकारि अधिकरणविचाले एव सन्निहितत्वादापत्तेः । यदप्यनेकमेकं क्रियते सोप्यधिकरणविचाल इति बोद्धम् । ऐकध्यमिति । भुङ्क्त इति राशिं कुर्विति वा शेषः द्वैधानीति । स्वभावात्स्वत्ववाचित्वम् । एधाच्च । द्वित्र्योर्धा इत्यस्यैधाजित्यर्थः । याप्ये पा । याप्यमत्र कुत्सितम् । कुत्साविशिष्टे ऽर्थे वर्तमानात्पाशबित्यर्थः । अयं प्रवृत्तिनिमित्तकुत्सायामेव कुत्सित इत्यस्य त्वप्रकृतिनिमित्तकुत्सायामपि प्रवृत्तिरिति बोद्धम् । पूरणाद्भागे पूरणार्थकतीयप्रत्ययान्ताद्भागे वर्तमानादित्यर्थः । तीयादीकक् इति वचनद्वयं दृष्टं सामेत्यत्र भाष्ये स्पष्टम् । पूर्वत्र ज्ञानौ नित्याविति । न च षष्ठाष्टमाभ्यां भागार्थप्रतिपादनार्थं लुग्विधानं प्रत्ययानां स्वार्थिकत्वेन प्रकृतेस्तदर्थत्वलाभात् । प्रकरणादिकं तु तत्राप्यावश्यकम् । स्वरस्तु लुकि नास्त्येवेति न लुमतेत्यत्र भाष्ये स्पष्टम् । एकादा । असहायवाचकादेकशब्दादित्यर्थः । असहाये किम् । प्रसिद्धतरत्वात्संख्यावाचकस्यैवान्यत्रेवात्रापि ग्रहणापत्तौ द्विवचनाद्यसिद्धिः स्यात् । वाक्यभेदेन कनाकिनि चोरेव लुक् विधानसामर्थ्यात्पक्षे श्रवणमपि । भूतपू । तत्रार्थे वर्तमानात्प्रातिपदिकादित्यर्थः षष्ठ्यारू । अत्र भूतपूर्व इत्यनुवृत्तं श्रुतत्वात् षष्ठ्या विशेषणं भूतपूर्वे संबन्धे या षष्ठी तदन्तात्स्वार्थे प्रत्ययो त एव स्वार्थिकप्रकरणवि-

रोधो न । अतिशायने ॥ अतिशेतेः प्रकर्षापरपर्याय इतरस्य न्यूनीकरणरूपो ऽभिभवोऽर्थः । एवञ्च सकर्मकादस्माद्बाहुलकात्कर्तरि ल्युट् इत एव निपातनाद्दीर्घः । तत्र वर्तमानात्प्रातिपदिकात् स्वार्थे प्रत्यय इत्यर्थः । यत्तु यावद्ब्रूयात् प्रकर्षति शये इति तावदतिशायने इत्युक्तमुपक्रमे भाष्ये । तत्र भावार्थकस्य कर्तृपचाद्यजन्तस्य च तन्त्रेणोच्चारणं बोध्यम् । शये गुणो ऽभिधीयते इत्युक्त्या कालोति शेते इति विग्रहप्रदर्शनेन बाहुलकाल्ल्युडित्युक्त्या च तथा भाष्यार्थलाभः तदाहातिशयविशिष्टे ऽर्थे इति । अतिशयकर्तृरूपेऽर्थे इत्यर्थः । भावे ल्युडिति तु न युक्तं तत्रार्थे प्रत्यय इत्यर्थे तस्य प्राधान्यापत्तेः । अत एव भावल्युट्पक्षे लिङ्गवचनासिद्धिर्भाष्ये शङ्किता । अतिशये वर्तमानात्प्रातिपदिकादित्यर्थे ऽतिशयप्रकर्षादिभ्य एव प्रत्ययः स्यात् । न पट्वादिभ्यः । न हि विशेषणीभूतमर्थमादाय तत्रायं शब्दो वर्तत इति व्यवहारः स चेतसां न चातिशयशब्दस्य तद्विशिष्टे लक्षणा । अभिभूयमानादेव प्रत्ययापत्तेः । तत्कर्तरि लक्षणायान्तु भाष्योक्तमेव साधु । अत एवैतेषां समानाधिकरणवृत्तितद्धितत्वेन व्यवहारो युष्मद्युपपदे लटः शतृशानचावित्यादौ भाष्ये प्रातिपदिकार्थे तद्धितद्योत्यार्थस्य सामानाधिकरण्यमिति तदर्थः । तत्र प्रकृत्यर्थद्रव्यस्य स्वरूपत इतराभिभवकर्तृत्वाभावे ऽपि तत्प्रवृत्तिनिमित्तगुणादिनिष्ठेन तेन तस्यापि तत्त्वं बोध्यम् । गोतर इत्यादौ प्रवृत्तिनिमित्तभूतजातेः स्वतस्तदभावे ऽपि तत्साहचरितबाहदोहनादिगतेन तस्य तत्त्वम् । एवञ्च तरबादिसमभिव्याहारे आढ्यादिपदानामितराभिभवकर्तृत्वविशिष्ट आढ्योऽर्थः । प्रत्ययस्तु द्योतकः कुमारितरेत्यादौ ङीप् तु न । तरप्प्रकृतिभूतेन तदन्तघटकेन कुमारिशब्दादिना वयोविशिष्टार्थगतस्त्रीत्वस्योक्तत्वात् तरबन्तस्य तु प्रकर्षः प्रवृत्तिनिमित्तमतस्तद्विशिष्टार्थगते स्त्रीत्वे टाबेव । न वयसीति ङीप् । वयोमात्र विशिष्टार्थगते स्त्रीत्वे हि तत्प्रवृत्तिः । अत एव गोतरेत्यादौ न ङीष् । जातिप्रवृत्तिनिमित्तकत्वाभावात् । तदुक्तं भाष्ये यदि प्रथमान्तात् स्वार्थिकः कुमारितरेत्यादौ केवलवयसः प्रकृष्टं वयो ऽनतिरिक्तमिति ङीप् प्राप्नोति तरयोक्तत्वात् स्त्रीत्वस्य प्रत्ययो न भविष्यतीति । तरपा तत्प्रकृतिभूतेन वयो विशिष्टार्थगत स्त्रीत्वस्योक्तत्वादित्यर्थः । एतदुत्तरं टाबपि न प्राप्नोतीत्यादि भाष्यमेकदेशिनोक्तिरिति बोध्यम् । आतिशायनिकप्रत्ययान्तादातिशायनिको नानभिधानात् । श्रेष्ठतमाय कर्मण इत्यादिकं तु छान्दसत्वात्स्वार्थे साध्विति सर्वं भाष्ये स्पष्टम् । अतिशयेनेति । प्रकृत्यादित्वात्तृतीया । तिङश्च ॥ अप्रातिपदिकत्वादप्राप्ते वचनम् । किमे-

त्तिङः ॥ किमादिप्रकृतिकघादित्यर्थस्तत्फलितमाहाव्ययाच्च यो घ इति । किंतमामिति । आमन्तस्याव्ययत्वात्ततः परस्य सोर्लुक् । पूर्वाह्णेतरामित्यादौ तत्तत्क्रियाविशिष्टस्यैव तत्तत्कालव्यवहारनियामकत्वान्न शुद्धद्रव्यप्रकर्षः । उच्चैस्तम इति । उच्चैःशब्दो ऽत्रोच्चत्वगुणवत्परः । द्रव्यस्य स्वतः प्रकर्षाभावेपि द्रव्यनिष्ठगुणादिप्रकर्ष एव द्रव्यप्रकर्ष इति बोद्ध्यम् । तदुक्तं तमप्सूत्रे कैयटेन अद्रव्यप्रकर्ष इति निषेध उपचरितगुणक्रियागतप्रकर्षद्रव्यविषयो द्रष्टव्य इति उच्चैस्तमामित्यत्र त्वधिकरणशक्तिप्रधान इति उच्चैः शब्दस्तत्रोच्चत्वप्रकर्षेण तदाश्रयस्य प्रकर्षे ऽपि तस्य न द्रव्यत्वं क्रियाकारकभावरूपसंबन्धविशेषणत्वेनैव तस्य भानेनाप्रधानतया सर्वनामपरामर्शायोग्यत्वात् शक्त्या विशिष्टस्य सर्वनाम्ना परामर्शाभावाच्चात एव तदादिशब्देभ्यस्तत्तद्विभक्तयः । यत्किंचिदिदन्तदिति सर्वनामपरामर्शयोग्यं वस्तु तत् द्रव्यत्वेन विवक्षितमिति तमप्सूत्रे कैयटोक्तिः इदं पूर्वाह्णेतमामित्यत्रा ऽपि बोद्ध्यम् । द्विवचनविभज्यो ॥ द्व्यर्थप्रतिपादके विभजनीये चोपपदे द्वयोर्मध्ये ऽन्यतरापेक्षातिशयविशिष्टस्वार्थवृत्तेर्विभागप्रयोजकीभूतधर्मवाचकाच्च स्वार्थे प्रत्ययः । विभज्यांशे उपपदशब्दबोधितसुबन्तत्वं प्रतिपदोक्तत्वात्पञ्चमी विभक्ते इति विहितपञ्चम्येवेति बोद्ध्यन्तेन साङ्काश्यकानां पाटलिपुत्रकाणाञ्च पाटलिपुत्रका आढ्यतमा इत्यत्र न तरप् । पञ्चमीत्वत्र न विभागस्यैवाभावात् । चेन समूहरूपतया विभागस्यापि सत्वात् । एते खल्वपि नैर्देशिकानां वार्त्ऽन्तरका इति तस्मिन्निति सूत्रे भाष्ये प्रयोगाद्बहुषु पुत्रेष्वेतदुपपन्नं भवति । अयं मे ज्येष्ठो ऽयं मध्यमो ऽयं कनीयानित्याद्यन्तवत्सूत्रस्थभाष्यप्रयोगाच्चाऽद्व्यर्थोपपदेपीमौ साधू । सूत्रे द्विवचनेति तूदाहरणमात्रमिति केचित् । परे तु नैर्देशिकानां मध्ये ऽन्येभ्यः शब्देभ्य इत्यध्याहृत्य विभज्योपपदे तरप् आभ्यामित्यध्याहृत्यान्त्ये इयसुनत एव न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यङ्केन तर्हि तमपेति तमप्सूत्रे भाष्ये उक्तमित्याहुः । नतरानित्यादौ प्रतियोग्यसमानाधिकरणत्वरूपात्यन्तिकत्वे ऽभावगते प्रकर्षे तरप् । प्रवृत्तिनिमित्तगते प्रकर्षे तरबादिरिति तु प्रकृत्यर्थप्रकर्षासंभवविषये । एवं द्योत्यार्थप्रकर्षे ऽपि द्योतकात्तरप् यथा नितराङ्गच्छतीत्यादौ । तुश्छन्दसि ॥ पूर्वनियमव्यावर्तितप्रतिप्रसवत्वं स्फुटं बोधयितुं छान्दसमप्यत्रोपन्यस्तम् । तुरिष्ठे ॥ इमनिजग्रहणमुत्तरार्थं, नचेत एव ज्ञापकादिष्ठनीयसुनोः सिद्धौ तुश्छन्दसीति व्यर्थमिति वाच्यम् । इमनिचो ऽपि कल्पनापत्तेः । लोकेपौष्ठनादेरापत्तेश्च । यद्यपि निमित्तस्य छान्दसत्वादिदं छान्दसं न तथापि तस्यैवेहोपन्यासादिदमप्यत्रोक्तम् । लोप इति । स च वचनसामर्थ्यात्सर्वा-

देशः । अन्त्यस्य टेरित्यनेन सिद्धेः । प्रशस्य ॥ अजादीत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याहाजाद्योरिति । प्रशस्यत्वं गुण इत्यजादौ तस्य । क्रियात्वेऽप्यत एव ज्ञापकात्तौ । प्रकृत्यैकाच् ॥ इष्ठादिष्विति । तेन ज्ञादेवतास्य ञः स्थालीपाक इत्यत्र नेदम् । अयञ्च प्रकृतिभावाल्लोपो नस्तद्धिते यस्येति च टेरित्यादेरेतत्प्रकरणस्यलोपमात्रस्येति भाष्ये स्पष्टम् ॥ अन्तिकबा ॥ अत्र नेदसाधौ हलन्तावेव । अन्यथा प्रकृत्यैकाजिति सूत्रस्यभाष्योक्तरीत्या श्रेष्ठ इत्यादावुच्चारणसामर्थ्यादकारस्य लोपाभाववदत्रापि तदभावापत्तौ नेदिष्ठ इत्याद्यसिद्धेः उत्तरसूत्रस्य कन्साहचर्याच्च । कनिष्ठ इत्यादौ टेरिति लोपस्तु न प्रकृतिभावात् । कनस्तदपवादत्वाच्च । नस्तद्धित इत्यपि न । अन उच्चारणसामर्थ्यात् सर्वादेशस्तु केत्यादेशे नापि सिद्ध इति बोध्यम् । स्थूल दूर ॥ यणादीति लुप्तषष्ठीकम् । परमिति षष्ठ्यर्थे प्रथमा । पूर्वत्वेऽवधिस्तु यणादिरेव । यणादीति बहुव्रीहिः । इक्परिभाषया क्षिप्रक्षुद्रयोः पकारदकारयोर्न गुणः । युवशब्दस्यागुणवचनत्वादत एव ज्ञापकादजादौ । अन्ये तु गुणवचना एव । न च क्षिप्रक्षुद्रावगुणवचनौ । इमनिचि तद्ग्रहणस्य चारितार्थ्यात्तयोरिष्ठनाद्यनापत्तौ क्षेपिष्ठ इत्याद्यसिद्धेः । वस्तुतो युवशब्दो गुणवचनोऽपीत्याकडारसूत्रजातेरस्त्रीतिसूत्रभाष्याभ्यां लभ्यते । प्रियस्थिर ॥ बंहीत्यादाविकार उच्चारणार्थः । अन्यथाभीयासिद्धत्वादिकारोच्चारणसामर्थ्याद्वा प्रदाविव टिलोपानापत्त्या बंहिष्ठ इत्याद्यसिद्धेः । वरादिसाहचर्याद्वृन्दो हलन्तः । तेन वृन्दिष्ठ इति, प्रस्यस्फास्तु प्रेष्ठ इत्यादेर्भाष्ये उदाहृतत्वेनादन्ता एव । प्रेष्ठ इत्यादावादेशस्यासिद्धत्वात्प्रकृतिभावाच्च तन्निमित्तकटिलोपो न ॥ स्थानिमित्तकोऽपि न । प्राद्यादेशानां टिलोपापवादत्वात् । बहोर्लो ॥ इष्ठन उत्तरसूत्रेण कार्यान्तरस्य विधानात्तस्येह न ग्रहणमित्याशयेनाहेमेयसोरिति । लोपश्चादेः परस्येत्यादेः भूभावस्यासिद्धत्वाद्वयानित्यत्रोर्गुणो न दीर्घोच्चारणन्तु भूमेत्यादौ सावकाशम् । विन्मतोर्लुक् ॥ अजादी इत्यनुवृत्तेराहेष्ठेयसोरिति । अत एव ज्ञापकादाभ्यामजादौ । न च विन्विषये मतुप्सत्त्वेन तल्लुकैव सिद्धौ विन्ग्रहणं व्यर्थमिति वाच्यम् ॥ तत्करोतीत्यादिना णिवीष्टवद्भावेन विनो लुगर्थं तत्सत्त्वात् । बिल्वकादिभ्यश्छस्येत्युत्तरमेव विन्मतोरिष्ठेमेयःसुरिति नोक्तम् । तत्रत्यलुक्पदस्यास्वरितत्वादत एव लुरित्यत्र लोप इत्येव व्याख्यातम् ॥ प्रशसायां रूप ॥ प्रशंसाविशिष्टेऽर्थे वर्तमानात्स्वार्थे रूपबित्यर्थः । प्रशंसा चात्र परिपूर्णत्वरूपवैलक्षण्यरूपा प्रकृत्यर्थतावच्छेदकधर्मनिष्ठा तत्समानाधिकरणधर्मनिष्ठा वा प्रकृत्यर्थे आरोप्यते तेन चोररूपोयं यदक्ष्णोरञ्जनं हरेदिति सिद्धम् । प्राश-

इत्थं प्रतियोगिनिरपेक्षमतिशायनन्तु तत्सापेक्षमिति न तदनुवृत्त्या निर्वाहः ॥ ईषदसमा ॥ ईषदसमाप्तिविशिष्टे ऽर्थे वर्तमानात्प्रातिपदिकादित्यर्थः । स्वार्थिकानां प्रकृतितो लिङ्गवचनाङ्गीकारात् बहुगुडो द्राक्षा वृषभकल्प इयङ्गोरित्यादि सिद्धं गुडकल्पा द्राक्षेति तु क्वचित्प्रकृतितो लिङ्गवचनातिक्रमात्सिद्धम् । गाचः स्त्रियामिति सूत्रे स्त्री ग्रहणात्तदतिक्रमः । अन्यथा गाचः स्त्रियां विधानात् अजश्च स्वार्थिकत्वात्सिद्धौ किं तेन । गुडशब्दस्य सादृश्याद्द्राक्षायां वृत्तिस्तत्र सादृश्यप्रयोजकधर्मस्य माधुर्यादेरीषदसमाप्तिः । यत्किञ्चिद्रूपतत्सादृश्यप्रयोजकधर्मस्येषदसमाप्तिस्तद्वाचकाच्च कल्पादयः स्वभावात् । एवञ्च पूर्णपटुः कश्चित्तत्सादृश्यादन्यः पटुः पटुकल्पः प्रचुरसादृश्यञ्च पटुकल्पशब्दगम्यमिति सर्वत्रोपमा गम्या द्रष्टव्या । विभाषासु ॥ विभाषाग्रहणं कल्पबादि समावेशार्थं कल्पादयस्तिङन्तेषु सावकाशाः वाक्यार्थन्तु न तत् । तस्येष्टत्वे महाविभाषयैव सिद्धेः अनिष्टत्वे तु न तदर्थता तस्येति बोद्धव्यम् । सुप् ग्रहणान्तिङश्चेत्यस्यासंबन्धाय । उत्तरत्र त्वनुवर्त एव । पुरस्तादिति प्रत्ययपरत्वनिवृत्तये, तु ग्रहणं पुरस्तादित्यस्यावृत्त्या पुरस्ताद्यादृशे लिङ्गवचने तादृशे एवेत्यर्थबोधनद्वारा स्वार्थिकानां प्रकृतितो लिङ्गाद्यतिक्रमे ज्ञापकम् । वृत्तौ प्रागेवेत्येवकारस्तु सर्वं वाक्यं सावधारणमिति न्यायसिद्ध इति सर्वं भाष्ये स्पष्टम् ॥ प्रकारव ॥ अत्र प्रकारो भेद एवेति जयादित्यः । सादृश्यं भेदश्चेत्युभयमपीति प्रकारे गुणवचनस्येत्यत्र वामनः । थाल् तु प्रकारमात्रइति । तत्रापि प्रकारवचने इत्येवोक्तेः सो ऽपि प्रकारवति न्याय्य इति चिन्त्यम् । किं च तथा सति तथेत्यादेः स प्रकार इत्यादिरर्थः स्यात् । न च थाला जातीयरो बाधापत्तौ तज्जातीय इत्याद्यसिद्धिरिति वाच्यं, जात्यन्ताच्छबन्धुनीत्यनेन सिद्धेरिष्टापत्तेः । वामनोक्तरीत्या द्वित्वेनेव थालापि बाधा नेष्यत इति वक्तुं शक्यत्वाच्च । अत एव यथा जातीयक इत्यादि भाष्यप्रयोगाः सङ्गच्छन्ते । अव्ययस ॥ अयमप्यधिकारः अज्ञाते इत्यादौ तु वाक्यभेदनाकचोपि विधानं बोद्धव्यम् । कस्यायमिति । अज्ञातत्वाभिनयोयं अज्ञातोश्व इत्यपि विग्रहो बोद्धव्यः । अव्ययेति सूत्रे प्रातिपदिकादिति सुप् इति च संबध्यते तेन क्वचित्सुबन्तावयवप्रातिपदिकटेर्ग्रहणं क्वचित्सुबन्तटेर्ग्रहणं तत्र व्यवस्थामाह । ओकारेति । इदं वाक्यं युष्मदस्मच्छब्दमात्रविषयम् । भाष्ये तथैवोदाहरणात् अन्येषान्तु सर्वनाम्ना प्रातिपदिकटेरेव प्रागकच् अत एव कादेशः साकचकार्थः कः कौ के इत्येवमर्थमिति भाष्यं सङ्गच्छते । त्वयकेति । यत्वादिषु कृतेष्वकच् । पचतीति । अकचो द्वितीयोकारोच्चारणार्थं इति भावः । कुत्सिते । येन धर्मेण कुत्स्यते

वस्तु तद्धर्मयुक्तार्थाभिधायिनः प्रत्ययः । अश्वक इत्यादौ धावनादेः सम्यगननुष्ठानात्कुत्सेति बोध्यम् । कुत्सित गत कुत्सायां कुत्सितक इत्याद्यपि प्रकृष्टतम इति वत् ॥ सञ्ज्ञायाङ्कन् ॥ कुत्सादिहेतुकसञ्ज्ञाविषये कनित्यर्थः । तद्युक्तादित्यस्य विवरणमनुकम्पायुक्तादिति । धानका इति । धानाशब्दात्के केण इति ह्रस्वे कान्ताट्टापि अभाषितपुंस्काच्चेति विकल्पात्पक्षे इत्वाभावः । पूर्वेणेति । अनुकम्पायास्तद्विषयत्वादिति भावः । परम्परासबन्धेपीति । आरम्भसामर्थ्यादिति भावः । अनुकम्प्यमोदनदानेनाराधयतीति धानादेरनुकम्प्यमानसंबन्धादनुकम्पायुक्तत्वमिति बोध्यम् । ठञ्चेति । पक्षे कः । पूर्वसूत्रद्वयेति । अनुकम्पायां नीतौ चेत्येतत् । व्याख्यानादिति भावः ॥ घनिल ॥ पूर्वसूत्रेणेव ठच् कयोः सिद्धौ योगविभागादुक्तविषयातिरिक्तेप्येतौ तत्र कठच् सिद्ध्यर्थञ्च चकार इत्येके ॥ ठाजादौ ॥ अस्मिन्निति । बुद्धिसन्निधानादिति भावः । ननु ठग्रहणं व्यर्थं इकादेशे अजादित्वात्सिद्धेरत आह । ठग्रहणमिति । तस्मिन्हि वायुदत्तशब्दात् ठे नित्यत्वाट्ठावस्थायां लोपे कादेशे च वायुकसिद्धिः । अन्यथा मातिथिक वत्संनिपातपरिभाषया कादेशाभावे न सिद्ध्येदिति भावः । न च घचश्चित्वेन ज्ञापकेनेकादेः सर्वतः पूर्वं प्रवृत्तिरिति वाच्यम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वात् । ठग्रहणसामर्थ्याच्च तस्यात्राप्रवृत्तेः । अत्राजिनान्तस्येत्यत्रत्योत्तरपदेति पृथक्पदं लुप्तविभक्तिकान्तेन लोपपदमेवानुवर्तते ऽत एव षष्ठाजादिवचनात्सिद्धमिति सङ्गच्छते । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः तेन सवित्रिय इत्यत्र ठाजादाविति लोपो न । उपेन्द्रदत्ते चतुर्थादच इति लोपो न । विनापि प्रत्ययमिति । समुदायशक्तिग्रहकाले ऽवयवानामपि शक्तिग्रहादवयवतो ऽपि तद्बोधः । एवमेव प्रविशपिण्डीमित्यादौ वाक्यैकदेशाद्वाक्यार्थबोधः । अस्यैवानुवादकमिदम् । वर्णमात्रप्रयोगस्तु न ततो ऽबोधात् । उवर्णाल्ल । ल इति लोपस्य पूर्वाचार्यसञ्ज्ञा उवर्णात्परस्य ल प्रत्ययस्य लोपः स चादेः परस्य । तेन द्वितीयादच उर्ध्वलोपः सूत्रसिद्ध एवानूद्यते । ऋवर्णादपीति भाष्ये न दृष्टम् । पूजार्थमिति । ठश्चेत्यतो वेत्यनुवृत्त्यैव सिद्धेरिति भावः । उपड इति । नेन्द्रस्येति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षयान्तरङ्गस्याप्येकादेशस्य पूर्वमप्रवृत्तेरिति भावः । द्वितीयं सन्ध्यक्षरञ्चेदिति । एकपदेपीदम् । सन्ध्यक्षराण्येचः । एकाक्षरेति । अचसहितं व्यञ्जनमक्षरं एकाच् पूर्वपदानामित्यर्थः । द्वितीयादच उर्ध्वमित्यनेन द्वितीयाज्विशिष्टस्य लोपाप्राप्तेरिदम् । वागाशीर्दत्त इति । वाच्याशीर्यस्य तेन दत्तो वाक् करणकशुभाशंसनेन दत्त इति वार्थः । अत्रैकादेशपर्यन्ते तत्तत्सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया न पूर्वं कुत्वादिप्रवृत्तिः ।

यद्यपि द्वितीयादच उर्ध्वभागस्य शीर्दत्तशब्दस्य लोपे यस्येति लोपे चान्ते इकनिमित्तभसञ्ज्ञासत्त्वात्कुत्वाद्यप्रवृत्ताविदं सिद्ध्यति तथापि भत्वे आलोपस्य स्थानिवत्त्वादाकारान्तनिष्ठभत्वेन चान्तनिष्ठपदत्वाव्याघातात्कुत्वजस्त्वयो-र्वागिक इति स्यादिति भावः । न च साक्षात्परम्परया वा पदान्तविध्यादि-प्रापकस्य प्रतिबन्धकस्य वा स्थानिवत्त्वस्य निषेध इति सिद्धान्ताद्भत्वे ऽपि स्थानिवत्त्वनिषेध इति वाच्यम् । षडिके ऽपि दोषापत्तेः । यदि तत्र द्विती-यादच उर्ध्वस्य लोपविधायकवचनप्रामाण्याद्भत्वे स्थानिवत्त्वं तर्हि प्रकृते ऽपि तुल्यम् । एतेन पूर्वत्रासिद्धेति निषेधो जशिचेति निषेधश्च स्यादित्यपास्तम् । नपदान्तसूत्रोक्तरीत्या तयोः पदान्तजश्त्वे ऽप्राप्तेश्च । उत्तरपदलोपे तु अजझलादेशत्वेन स्थानिवत्त्वाभावात्तुल्यावधिकया भसञ्ज्ञा या पदसञ्ज्ञा बाध्यते तत्र तद्धिताश्रयाया विभक्त्याश्रया याश्च बाह्यसामान्यचिन्तया पवादत्वाद्बाधः । षषष्ठेति । स्पष्टञ्चेदं स्वादिष्विति सूत्रे भाष्ये ॥ शेवलसु॥ एषामिति । शेवलादय आदिभूता येषान्तेषामित्यर्थः एषामकृतसन्धीनां तृतीयादच इति वक्तव्यन्तेन सुपर्याशीर्दत्तशब्दाट्ठचि सुपरिक इति सिद्ध्यति॥ अजिनान्त ॥ उत्तरपदग्रहणात्सर्वलोपोऽत्र । अल्पत्वं महत्वप्रतिद्वन्द्वि । ह्रस्वत्वं दीर्घत्वप्रतिद्वन्द्वीति भेदः क्वचित्प्रकृतिलिङ्गातिक्रमस्यापि सत्वेनाह । कुटीर इति । कासूः शक्त्याख्यशस्त्रं विकलवाक् च ॥ किंयत्तदो ॥ द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरजित्यर्थः । द्वयोरि-त्युपलक्षणम् । अत एव बहुष्वासीनेषु कश्चित्कञ्चित्पृच्छति कतरो देवदत्त इति प्रत्यय इति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते । एतद्ध्वनयितुमेव सूत्रे एकग्रहणम् । द्वयोरिति निर्धारणषष्ठी व्याख्यानादेव भविष्यतीत्यलम् । अत्र निर्धारणं न प्रत्ययार्थः । तं विनापि प्रतीयमानतया न्यलभ्यत्वात्किं तु विषयनिर्देश इति वृत्तौ । वाबहूनाम् ॥ प्रत्याख्यातमिति । तेषार्थस्य त्वनभिधान्न । अत एव ततो डतरच् न । आकरे इति । पूर्वसूत्रस्यद्वयोरित्यस्य प्रत्याख्यानभाष्यव्याख्यावसरे कैयटवन्ये इत्यर्थः । अत एव कतमः कतमैषामा-ढ्यतेति पदद्वित्वप्रकरणे भाष्यप्रयोगः सङ्गच्छते तेन कतमो भवतामध्यापकः शूरो देवदत्तो वेति सिद्धम् । वाग्रहणमिति । नचाव्ययसर्वनाम्नामित्यस्या-धिकारत्वात्तदनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमिति वाच्यन्तन्निवृत्तिज्ञापनार्थत्वात् तेन डतरजविषये नाकच । महाविभाषयेति । अत एवावक्षेपण इति सूत्रे भाष्ये क एतयोरर्थयोर्विशेष इति प्रयोगः सङ्गच्छते । तमादयः प्रागवक्षेपणे कना नित्याः प्रत्यया इति प्रायिकमिति भावः । किम् इति । बहुष्वासीनेषु

इत्यादि भाष्यप्रयोगाद्विति भावः ॥ एकाच्च ॥ प्राचामिति पूजार्थम्। वाक्यस्येष्टत्वे महाविभाषयैव सिद्धेः। अकृजर्थमपि न तस्यानिष्टत्वादिति स्पष्टं भाष्ये। येनेतर इति। अवक्षेपणे इति करणे ल्युडिति भावः॥ इवे प्र॥ इवार्थोपमानत्ववति वर्त्तमानात्प्रातिपदिकात्कन् यदुपमेयं साप्रतिकृतिश्चेदित्यर्थः। प्रतिकृतिर्मृदादिनिर्मिता प्रतिमा प्रकारान्तरे स्वार्थिकप्रकरणविरोधः॥ अश्वकृति॥ उपमानाश्वाभिन्न इति बोधः॥ लुम्म॥ अस्य लुप्य प्रकृतिवल्लिङ्गाय। वचनन्तु विशेष्यवद्देव हरीतक्यादिषु व्यक्तिरित्यत्र पाठात्। तेन चञ्चे मनुष्यावित्येव देवलकानामिति। प्रतिमाङ्गृहीत्वा भिक्षार्थं प्रति गृहमटतामित्यर्थः। तत्तदायतनेषु प्रतिष्ठापि न पूजार्थप्रतिमासु चित्रेषु नटेषु च भ्रमात्मिका शिवाभेदबुद्धिरिति प्रत्ययोत्पत्तेरेवाभावः। स्पष्टञ्च चित्रनटविषये तादृशी बुद्धी रसप्रकरणे शङ्कुकमतनिरूपणावसरे प्रकाशकारैरुक्ता। यस्तु तत्र बुद्धेर्भ्रमत्वाभावोऽप्युक्तः सत्वनन्तरावतीर्णबाधापाटवबुद्धेस्तत्र भ्रमत्वेन प्रक्रमात्र विरुद्ध इति दिक्। अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु चेति देवपथादिषु पाठात्तत्र न दोष इति तद्राजस्येति सूत्रे कैयटः। प्रकृत सूत्रे वृत्तावप्येतत् निवृत्तमिति। अस्वरितत्वादननुवृत्तिरेवात्र निवृत्तिः शाखादिभ्यो यदिति पाठः य इति त्वपपाठः। मुख्यादीनामाद्युदात्तत्वदर्शनात्। उगवादिसूत्रस्थभाष्यविरुद्धत्वाच्च। भव्य॥ आत्मवान् अभिप्रेतानामर्थानां पात्रभूत इति यावत्। तद्विषयादिति। इवार्थविषयसर्वावयवकादित्यर्थः। भाष्ये तथैवोदाहरणात्। इवार्थविषयसर्वावयवकाद्विवार्थोपमानत्ववति वर्त्तमानाच्छ इत्यर्थः। अत एव शस्त्री श्यामेत्यादेरिवार्थे च्छो न काकतालमिति द्वन्द्वाच्चेवार्थे न। काकतालीय इति। काक इव तालमिवेति इवार्थे इत एव ज्ञापकात्सुप्सुपेति समासः। तत्र पूर्वपदमुपमानकाकागमनपरं उत्तरपदं चोक्तपूर्वपदार्थसमानाधिकरणोपमानतालपतनपरम्। समुदायश्चोपमेयदेवदत्तागमनसमानाधिकरण चोरपतनपरः एवञ्चोपमानकाकागमनसमानाधिकरणोपमानतालपतनेऽपमेयं देवदत्त गमनसमानाधिकरणञ्चोरपतनमिति सामासार्थः। विशिष्टे विशिष्टनिरूपितोपमेयत्व बोधात् विशेषणे विशेषणनिरूपितं विशेष्ये च विशेष्यनिरूपितन्तत्पर्यवस्यति। तत्तदुपमेयबोधे तत्तदुपमेयवाचकसमभिव्याहारस्तन्त्रम्। ततस्तद्धितसमभिव्याहारे समासार्थोपमानप्रयोज्योपमानभूत तालकृतः काकवधोपमेयः समासार्थोपमेयप्रयोज्यश्चोरकृतदेवदत्त बध इति बोधशक्तिस्वभावात्। एतेन परस्परं सामर्थ्याभावाद्वृत्तिद्वयमपि दुर्लभमि-

त्यपास्तम् । तत्फलितमाह । इह काकेत्यादि । अत्र सर्वत्रातर्कितोपनतत्वं साधारणो धर्म इत्याह । अतर्कितेति । पत्ते ठगिति । अन्यतरस्याङ्ग्रहणमनन्तरठकः समुच्चयार्थमिति भावः । एकशालाशब्दस्याङ्गुल्यादिषु पाठादिति भावमन्ये । पूगात् ॥ पूगेति न स्वरूपग्रहणं व्याख्यानात् । ग्रामणीवाचकपूर्वावयवकभिन्नात्पूगवाचकादित्यर्थः । लोहितध्वज्य इति । लोहिता ध्वजा यस्य पूगस्य स एव लोहित ध्वज्यः । व्रातच्फ ॥ शरीरायासजीवी नानाजातीयानामनियतवृत्तीनां सङ्घो व्रातः । च्फञ् इति गोत्रे कुञ्जादिभ्य इत्यनेन । अस्त्रियां किम् । कौञ्जायनी । टित्वान्ङीबिति । टित्वसामर्थ्यादस्त्रियामिति तत्र न संबध्यत इति भावः । तद्विशेषेति । व्याख्यानादिति भावः । जानकिस्त्रिगर्तः । पर्श्वादियौ ॥ अत्रास्त्रियामित्यनुवर्तते । यञश्चेति सूत्रस्यभाष्यप्रामाण्यात् । तेन पर्शूः स्त्री अट् टेण्यण् विधायकयोष्टित्वसामर्थ्यादसंबन्धेप्यन्यत्रासंबन्धे मानाभावात् । आभिजित्य इति । अपत्याण्यन्ताद्यञ् । तस्य स्वार्थिकत्वेन गोत्रार्थकत्वादाभिजित्यस्यायमिति विग्रहे वुञ् । अत्र आपत्यस्येति यलोपश्च । आभिजितकः । अयमपत्याण्णन्तेभ्य एव । तेनाभिजितो मुहूर्त इत्यादौ न । स्पष्टं चेदं सर्वं भाष्ये । अनैमित्तिकत्वार्थमिति । ननु तद्भावभावित्वरूपं निमित्तत्वं सहविधाने ऽपि तद्भावोत्तरं भाव इत्यर्थवत्तद्भावसमकालं भाव इत्यपि तदर्थात् । अत एव धिन्विकृण्व्योरित्यत्र वलोप एव कार्यो न धातुलोप इति गुणनिषेधसिद्धेरकादेशविधानं व्यर्थमित्याशङ्क्य तत्प्रत्याख्याने गुणवारणाय तदिति भाष्ये उक्तमिति चेन्न । लोपवचनसामर्थ्यादचः परस्मिन्नित्यत्र तथा निमित्तत्वानाश्रयणात् ॥ दण्डव्यव ॥ दण्डो दण्डनम् । व्यवसर्गसाहचर्यात् । तयोरर्थयोर्विषये स्वार्थे वुञित्यर्थः । स्थूलादिभ्यः । प्रकारो भेदः सादृश्यञ्च व्याख्यानात्तद्वति वर्तमानादित्यर्थः । जातीयरोपवाद इति । जातीयविधौ भेद एव प्रकार इति जयादित्यमते ऽपवाद इत्यस्य परत्वाद्बाधक इत्यर्थः । तत्राप्युभयङ्गृह्णाति इति वामनमते यथा श्रुतमेव ॥ अनन्त्यम् ॥ अनत्यन्तगतिरशेषतः संबन्धाभावः । सामिकृतमिति । समासे ऽपि सामीत्यस्य क्रियाविशेषणत्वेन कारकत्वात्समुदायस्य क्तान्तत्वम् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । अनत्यन्तगतेरित्यस्य यद्यपीत्यादिः अप्रकृत्यैवेति । समस्तत्वे तदेकदेशसामिशब्देनेत्यर्थः । असमस्तत्वे तत्सन्निहितेत्यर्थः । इदमेवेति । अस्य तथापीत्यादिः । बहुतरकमिति । यदि तु बहुतरकं सुकरतरकमित्यादि तमाद्यन्तात्स्वार्थे कन्वक्तव्य इति वचनेन यावादित्वात्स्वार्थे कनावासिद्धमित्युच्यते तदा नास्य प्रयोजनमेतदेवाभिप्रेत्येदं भाष्ये प्रत्याख्यातम् । एतदेव भाष्यं तस्याकृतिगणत्वे मानम् । विभाषाग्रहण-

दिति । प्राक् प्राचीनमिति रूपद्वयं महाविभाषयैव सिद्धमिति तदस्य नित्यत्वे ज्ञापकमिति भावः । तेनाशितंगवित्याद्यसाध्विति बोद्धम् । आशिता गाव इत्यादि तु खप्रत्ययप्रकृतेरर्थकथनं इयमभ्युच्चयमुक्तिः । बृहतीजात्यन्ता इति । बहुवचनेनास्यापि ग्रहात् । जात्यन्ताच्छस्येवास्यापि स्वभावतो नित्यत्वलाभात् । अञ्चतेः स्वस्यनित्यत्वाभावाय विभाषायहणमिति भाष्यसम्मतः पन्थाः । प्राक्कन इति । तेनावक्षेपणे कन्वैकल्पिक एवैतत्प्रायिकमित्युक्तम् । बृहतीजात्यन्ताः । कन् खच्छाः । अदिक्स्त्रियामिति कर्मधारयगर्भो नञ्तत्पुरुषः । प्रागिति । अस्तात्यन्तं प्राचिदेशे इत्यर्थकं निर्ल्लिङ्गम् । खान्तन्त्वाधेयप्रधानतया स्वभाल्लिङ्गयोगि लिङ्गञ्च नपुंसकमेव लिङ्गसर्वनामत्वात् । न स्त्रीत्वादिप्रकृत्या सहात्यन्तविरोधापत्तेरेकवचनञ्च । एवञ्च ग्रामावधिकप्राग्देशवृत्तय आम्रा इति बोधस्तदाह । प्राचीनमिति । पदसंस्कारपक्षे इदम् । यदा प्रागादिशब्दास्तद्देशकालस्थाम्रादिबोधकास्तेभ्यश्च खस्तदोपस्थितविशेष्यलिङ्गत्यागे मानाभावात्प्राचीना आम्राः प्राचीनावाटी प्राचीनं वनमित्यादीत्यन्ये कश्चित् तत्र मानं चिन्त्यम् । प्राचीदिगिति । लिङ्गविशिष्टपरिभाषया प्राप्तिः । प्राचीनं ग्रामादिति । अत्र प्राच्यान्दिशीत्यर्थे ऽस्तात्यन्तात्प्रागिति प्रकृतिः स चाव्ययत्वादस्त्री । स्थानिवत्सूत्रे भाष्ये चायं प्रयोगः । जात्यन्ताच्छबन्धु ॥ जात्यन्ताद्बन्धुनि वर्तमानात्तज्जात्याश्रयद्रव्यलक्षकादित्यर्थः । जातेर्व्यञ्जकमिति बध्यतेऽस्मिन् जातिरिति व्युत्पत्तेः । अत्र प्रकरणाबोधेन वाचकत्वं वक्तुं शक्यं युक्तञ्चेति परे । स्थानान्ता । सस्थानशब्दस्तुल्यवाची, तुल्यरूपार्थेन चेत् स्थानान्तमर्थवद्भवति तदा प्रत्यय इत्यर्थः । इति शब्दादर्थवदिति लब्धं अनुगदतीति । अत्रार्थे अनुगादिशब्द इत्यर्थः । अस्य नित्यत्वादस्वपदविग्रहं दर्शयति । स एवेति । अनुयाय्यादिवत्सुप्यजाताविति णिनिः । विसारिणो ॥ अणिनुण इत्यतो ऽणनुवर्तते । इनणीति प्रकृतिभावः । क्रियाजन्मेति ॥ अत एव इचः प्रवृत्तौ द्विः पचतीति न । वृत्तौ पञ्चादिशब्दास्तत्संख्योत्पत्तिपरास्तस्यैव सुच् द्योतकस्तेषाञ्च क्रियायामन्वयः सूत्रस्वरसात् । द्विदशा इत्यादौ समास एव द्व्यादिशब्दानान्तत्परत्वद्योतक इत्युक्तार्थत्वात् सुच् । समुदायस्यापरिसमाप्तत्वाच्च । भुङ्क्ते इति वर्तमानप्रयोगः निरावृत्तौ दशेत्यादावावृत्तिक्रियाजन्मगणने कृत्वसुच् । सङ्ख्यायाः किमिति । गणने वृत्तिः । सङ्ख्याशब्दानामेवेति प्रश्नः । भूरिवारानिति । नायं संख्यावाची लोके गणनायामप्रसिद्धेरिति भावः । बहुशब्दस्तु संख्यासञ्ज्ञकत्वात्तत्कार्यभागित्युक्तं तदभावे हि क्रियाजन्मगणने गम्ये इत्यर्थः स्यादिति तात्पर्यम् । वारशब्दः कालपरः । स च भोजनपर्याप्त इति कालाध्वनोरिति द्वितीया । यद्यपि द्रव्यगुणयोर्गणनयोग्यं जन्माप्रसि-

द्वमेकैव तेषामुक्तिः । क्रियायास्त्वनेकस्या अपि निवृत्तभेदायाधातुवाच्यत्वेन तत्सम्भवः । तथापि क्रियाग्रहणं स्पष्टार्थम् । साध्यस्वभावैव यत्र क्रिया तत्रैतत्प्रवृत्त्यर्थन्तु न तत् । द्विर्वचनेचीति द्विराशृत्तिर्द्विः प्रयोगः द्विर्बद्धं सुबद्धमित्यादिप्रयोगविरोधात् । पञ्चकृत्वः कर्त्ता कटान् द्विः कर्त्ता इत्यादौ गुणभूतक्रियायोगे कारकविभक्तेरिव अस्यापि साधुत्वमिष्टमेवेति स्पष्टं हरिकैयटादिग्रन्थे इत्यन्यत्र निरूपितम् । द्वौ पाकौ इत्यादौ न सुजादि । क्रियाजन्मगणनस्याभावात् । तद्गणनार्थत्वे हि पाकावित्यादौ द्विवचनाद्यनापत्तिः । अत एव द्विःप्रयोगाविति न । तदुक्तं भाष्ये । द्वौपाकावित्यादौ कस्मान्न भवति नैतत्क्रियागणनम् । अभिमुखी प्रवृत्तिरभ्यावृत्तिरिति । सा च जन्मरूपा । एवञ्च नैतत्क्रियागणनमिति तदर्थ इति निरूपितं भाष्यप्रदीपोद्योते । यद्यपि संख्यागणनात्मिकैव तथापि गणनायां ये प्रसिद्धास्तेषामेव ग्रहणार्थम् । तेन युग्मोभादिशब्दा नेति दिक् ॥ विभाषा व ॥ अविप्रकृष्टकालक्रियाजन्मगणनवृत्तेरित्यर्थः । प्राचुर्येणेति । व्याख्यानादिति भावः । भावे इति । प्रचुरस्य वचने बोधने सति प्रातिपदिकात्प्रत्यय इत्यक्षरार्थः प्रचुरार्थबोधकात्तदिति । प्रथमासमर्थात्स्वार्थे मयडिति यावत् । अधिकरणे इति । प्राचुर्येण प्रस्तुतावादिवचनात्प्रथमासमर्थादधिकरणे प्रत्यय इत्यर्थः । प्रकृतेति लुप्तसप्तम्यन्तं तत्र वर्तमानादित्यर्थः अत्र पक्षे वचने इत्यत्र प्रकृत्यर्थो विवक्षितः तेन भवन्मयो ध्यायति नावनीपतिरित्यादौ प्रकृत्यर्थाधिकरणमात्रे मयडुपपन्नः । तन्त्रेणार्थद्वये सूत्रतात्पर्यम् । व्याख्यानात्स्वार्थिकप्रकरणे पाठस्त्वाद्यपक्षे चरितार्थः । वस्तुतो ऽथ स्वार्थिका इत्यस्य प्रायेणेत्यादिः । प्रकारवचने जात्यन्ताच्छ बन्धुनि देवतान्तात्तादर्थ्ये यदित्यादौ वाचकताया एव प्रतीतेरिति बोद्धम् । तद्ग्रहणं वाक्यभेदेन प्राचुर्याभावेप्यत्यन्तस्वार्थिकमयडर्थन्तेन चिन्मयं ब्रह्मेत्यादि सिद्धम् । यवागूमयीति । टित्त्वान्ङीप् ॥ समूहव ॥ बहुत्वविशिष्टेर्थ प्राचुर्यार्थे वर्तमानादित्यर्थः । मोदकिकादावचित्तेति ठक् । स्वार्थिकत्वे ऽपि लिङ्गातिक्रमः । कुटीरवत् भेषजमिति । भियः षुक् ह्रस्वश्चेति व्युत्पादितादृषजशब्दादिदमर्थे ऽण्यन्तएव निपातनादेकारः । देवतान्तात्तादर्थ्ये ॥ तदर्थे वस्तुनीत्यर्थः । वैधे कर्मणित्यज्यमानद्रव्योद्देश्यत्वं मन्त्रस्तुत्यत्वञ्च देवतात्वम् । तदुक्तं भाष्ये दिवेरैश्वर्यकर्मणो देवस्तस्मात्स्वार्थे तल् इति । तेन दैवत्यमिति सिद्धन्तत् ध्वनयन्नाह । पितृदैवत्यमिति । एतेन पितृषु देवतात्वजात्यभावादिदमयुक्तमित्यपास्तम् । नवस्येत्यादिवार्त्तिकैर्विधीयमाना अत्यन्तस्वार्थिकाः । साधारणादिति । अत एव निपातनात्सादेशस्य दीर्घः । सहसमानं धारणं अस्येत्यर्थः । अनेकं

प्रत्यविशिष्टसंबन्धमित्यर्थः । देवतेति । लिङ्गातिक्रमात्स्त्रीत्वं ॥ वर्णो चा ॥ वर्णे किम् । लोहितं रुधिरम् । यावदाश्रयमवस्थानयोग्यत्वाभावोऽनित्यत्वम् । लोहितादिति । अस्मादेव ज्ञापकादत्यन्तस्वार्थिकानां सुबुत्पत्तेः प्रागेवोत्पत्त्यङ्गीकारेणान्तरङ्गत्वात्प्राप्तं लिङ्गबोधकप्रत्ययबाधनं स्वार्थिकेन वा भवतीत्यर्थः । अत एव आप्पदस्यात्र प्रकरणेऽसंबन्धः । तेनैतादिभ्योऽत्यन्तस्वार्थिके एतिकेत्येव न त्वेनिकेति । वैलक्ष्येणेति । लज्जयेत्यर्थः । उपायादिति । अचेति वक्तव्ये ह्रस्वग्रहणाद्दीर्घस्य स्थानित्वम् । एतेनान्त्यस्य स्यात्तत्सामर्थ्याच्च लोपाभाव इत्यपास्तं व्याख्यानाच्च ॥ वाचो ॥ व्याहृतोऽन्येनोक्तोऽर्थो यस्या इत्यर्थस्तदाह । सन्दिष्टेति ॥ तद्युक्ता ॥ तच्छब्देन वाक् वाचा युक्ताद्व्याहृतार्थप्रतिपादककर्मशब्दादित्यर्थः । तेन स्वयं वाचाऽकथनपूर्वकं यत्कर्म क्रियते तत्कार्मणम् । तदुक्तं भाष्ये । तदित्यनेन किं प्रतिनिर्दिश्यते वागेव यदेव वाचा व्याह्रियते तदेव कर्मणा क्रियते इति । अत्र वागेवेत्युत्तरस्यैवकारेण व्याहृतार्थायामित्यंशो संबन्धो लभ्यते । क्रिययोरुत्सर्गेण एकत्वञ्च प्रतीयते । यद्वाचावदति तत्कर्मणा कुरुते श्रुत्यर्थानुवादरूपत्त्वाद्यदेवेत्यादिभाष्यस्य । तद्युक्तात्किम् । वाचा कथनं विनैव यत्कर्म क्रियते तत्र माभूदिति । एवं च मन्त्रविशेषप्रयोगपूर्वं क्रियमाणकर्मविशेषे रूढोऽयमित्याहुः । इदन्त्वया कर्तव्यमिति संदेशवाचं श्रुत्वा यत्कर्म क्रियते तत्कार्मणमिति वदतः कैयटस्याशयस्तु चिन्त्यः । वाचिकं श्रुत्वेति मूलं कैयटानुसारेण । तेत्रे रूढा इति । तत्रोत्पन्ना इत्यर्थः । प्रजानातीति प्रज्ञः । नित्यार्यमिति । वृत्ताविदं स्पष्टम् । भाष्ये नित्येष्वस्यागणनाच्चास्य नित्यत्वम् । प्रत्ययान्तरं त्वस्मादस्यापवादत्वान्न भविष्यतीति परे । मङ्गलामङ्गलवचनमिति । अपेतापोढेति सूत्रे ऽल्पश इति सौत्रप्रयोगः । एतेनास्मात्सूत्रप्रयोगान्मङ्गलेत्यादि प्रायिकमित्यपास्तम् । भाष्यानुक्तेः । अत्राल्पार्थशब्देन स्तोकादीनामेव ग्रहणम् । न तदर्थैकशब्दस्य तत्सत्त्वे मानाभावात् सत्त्वेऽपि तत्रार्थे तस्याप्रसिद्धतरत्वेनाल्पार्थशब्देन न ग्रहणम् । संख्यैक ॥ संख्यावाचिन एकत्वविशिष्टाच्च प्रातिपदिकात्कारकाच्छसित्यर्थः । एकार्था एवेति । एकवचनशब्देनात्र त एव गृह्यन्ते इति भावः । घटं घटमिति । ततः शसि घटं घटमितिवत् घटौ घटौ ददातीत्यपि बोधसम्भव इत्यभिमानः । पदशः स्वरश इति प्रयोगात्तेभ्योऽपि वृत्तावेकत्वविशिष्टस्यैव बोध इति जातिशब्देभ्योऽपि शस् इति परे । एकवचनादिति घटौ घटौ ददातीत्यादिबोधे शसोऽसाधुत्वायेति केचित् वस्तु त एकवचनादिति संख्यातिरिक्तार्थानां परिगृहीतैकत्वानामेव वीप्सेत्यर्थानुवादकम् । अत एव

माषौ माषौ ददातीति न । किं तु द्वौ द्वौ ददातीत्येव तत्रेति बोध्यम् । अत्राहुः । चकारो वीप्सायामित्यनन्तरं द्रष्टव्यः । संख्यैकवचनाद्वीप्सायाञ्च चात्स्वार्थेपि स चाभिधानस्वाभाव्यादेकशब्दादेव । तेनैकशब्दाद्वीप्सा शसभावे द्विर्वचने ततोत्यन्तस्वार्थिके शसि पक्षे जाते एकैकश इत्येतत्सिद्धिः । न चैवमेकश इत्युक्ते सन्देहः स्यात् । शास्त्रे व्याख्यानतो लोके प्रकरणादितो निर्णयात् । नचास्य एकं बहुव्रीहिवदित्यपवादत्वाभावादेकशब्दे परत्वाद्द्विर्वचनमेव न्याय्यमिति वाच्यम् । तत्रापि नित्यवीप्सयोरित्येव द्वित्वसत्त्वात्तदनुवादेन बहुव्रीहिवद्भावस्यैव तेन विधानादिति ध्वनितञ्चेदं सर्वस्य द्वे इति सूत्रे भाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितम् । यापञ्चमीविहितेति । प्रतिनिधिप्रतिदानेचेत्येपेत्यर्थः । आद्यादिभ्य इति । अयमेव सार्वविभक्तिकस्तसिः । चारित्रत इति । बहुष्वासीनेष्वन्यातिक्रमेण लोकैर्गृह्यते इत्यर्थः । फलितमाह अन्यानतिक्रम्येति । हीयमानेन पापेन च युक्तादित्यर्थः । अर्जुनत इति । पक्षे इति शेषः । प्रवाहिका विषूचिका । अभूतेति । सम्पमाने इति शेषः । तद्भावेति करणतृतीयया समासः । अभूतपदेन कर्तृषष्ठ्यन्तेन तस्य समासः । अभूतत्वं प्रत्यासत्त्या तद्भावशब्दघटकतच्छब्दार्थकरणकत्वेनैव ग्राह्यम् । एवञ्च येन रूपेण प्रागभूतन्तेन रूपेण तस्य भावे इति फलितम् । एवञ्च यत्र प्रकृतिस्वरूपमेव विकाररूपतामापद्यमानं विवक्ष्यते तत्रायं प्रत्ययः संपद्येत्यादेः संपद्यकर्तरि वर्तमानादित्यर्थः । अस्मादेव निपातनात्संपदेर्भावे शः दिवादित्वाच्छ्यन् । संपद्यस्य कर्तेति तत्पुरुषः । एवञ्च संपत्तिकर्तृबोधकाद्विकारवाचकात्प्रत्ययः । तस्य प्रकृतौ वर्तमानत्वङ्गौण्या वृत्त्या । अत एव महद्भूतेत्यादौ नात्वं सामानाधिकरण्यनिबन्धनं पुंवत्वञ्च भवति तदाह विकारात्मतामित्यादि । च कारो ऽन्तोदात्तत्वाय ॥ इकारो वेरित्यत्र सामान्यग्रहणाविघातार्थः । च्व्यन्तत्वादिति । ऊर्यादिच्वीति निपातत्वे ऽव्ययत्वमित्यर्थः । ब्रह्मीभवतीति । अत्र भवनकर्तृत्वं प्रकृतिभूतस्याब्राह्मण एव विकाराभेदेन बोध्यम् । कृष्णीकरोतीत्यादौ कर्मत्वमप्येवम् । अत एव सङ्घीभवन्ति ब्राह्मणास्त्वद्भवति चैत्र इत्यादौ वचनपुरुषव्यवस्था । अन्यत्र तु प्रकृति विकृत्योरुभयोः कर्तृत्वं तत्र साक्षाद्विकारस्यैव स्वर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति पस्पशास्यभाष्यप्रयोगो विकृतेः कर्तृत्वात् । अत्वन्त्वं संपद्यते इत्यादौ च्व्यन्तस्य वाक्ये लोके प्रकृतेरपि कर्तृत्वदर्शनाच्च । अयं प्रयोगो युष्मद्युपपद इति सूत्रे भाष्ये स्पष्टः । अनारोपिता तथा भूते आरोपिततद्भावसंपत्तावेव च्विः । अत

एवेश्वरप्रसादादिना ऽमहति मुख्यमहत्त्वोत्पत्तौ च्विः । अत एव च्व्यन्तार्थस्य गोभवदित्यादौ गौणत्वेन प्रगृह्यत्वाभावसिद्ध्या ओतश्च्व्यन्तस्य प्रतिषेध इति वार्तिकमोत्सूत्रे भाष्ये प्रत्याख्यातम् । करणीभूतौ दण्ड इत्याद्यसाध्वेव । तत्र करणत्वाद्यारोपपूर्वककरणत्वादिबुद्ध्या च्विरिति न युक्तम् । अगोत्वारोपपूर्वकगोत्वबुद्ध्या च्वौ गोभवदित्यादौ च्व्यन्तप्रतिषेधस्यावश्यकत्वेन तत्प्रत्याख्यानपरविरोधापत्तेः । प्रकृतसूत्रे भाष्ये ऽपि ध्वनितमेतत् । सञ्ज्ञोपसर्जनीभूतानामिति वार्तिकप्रयोगे च वृत्तिवाक्ययोरत्यन्तभेदात् उपसर्जनत्वस्यैकार्थत्वस्य वारोपितस्यैव सत्त्वात् च्विः । तत्पदत्वस्यैव तत्रारोपेणैकार्थत्वस्य सुतरान्तत्वम् । अमृतीभूत्वा मोची भवतीत्यादि तु छान्दसम् । अभूततद्भावसामर्थ्यात्संपद्यकर्तृत्वलाभे तद्ग्रहणं यत्र संपद्यकर्तृत्वमेव न कारकान्तरत्वं तत्र यथास्यादित्यर्थन्तेनादेवगृहे देवगृहे भवतीत्यत्र न । देवगृहं देवगृहं संपद्यते तत्र पूर्वं जातोपि वृत्तादिर्देव गृहे संपद्यते तथाभवतीति तदर्थः । अत्र वृत्तभवननिरूपिताधिकरणमपीति न दोष इत्याकरे स्पष्टम् । दोषाभूतमिति । अधिकरणशक्तिप्रधानस्यापि वृत्तौ शक्तिमत्प्रधानत्वं बोद्ध्यम् । गार्गीति । यञन्तात् च्वावापत्यस्येति लोपोनाकारेण व्यवधानादिति भावः ॥ च्वौच ॥ अकृत्सार्वेत्यतो दीर्घ इत्यनुवर्तते । यति नेष्यते इति । अनेनानिष्टौ दृढतरमानाभाव इति सूचितम् । च्विश्चेति । अनुवादोयन्तेनोऽमनीस्यादित्यादि सिद्धम् । अन्यथा प्रत्ययविधौतदन्तविध्यभावान्न स्यात् अनेनान्त्यलोपे यथायथमीत्वादि । साकल्ये इति । अभूततद्भावे इत्यपि बोद्ध्यम् । कृत्स्नं सर्वावयवोपेतम् । वाक्यमेवेति । न तु च्विरित्यर्थः ॥ तदधीन । अभूततद्भावे इति निवृत्तम् ॥ देवमनुष्य । सातीति कृभ्वेति च निवृत्तम् । वन्देरमेवेति । देवान्वन्दे तेषु रमेवेत्यर्थः । पुरुशब्दो बहुवाची । बहुत्रेति । जीवतो जन्तोर्मनोबहुषु विषयेषु गच्छतीति बहून् विषयान्व्याप्नोतीत्यर्थः । अव्यक्तानु । मण्डूकप्लुत्या कृभ्वस्तीत्यनुवर्तते संपदेति निवृत्तमेव । न तु ततो न्यूनमिति । द्व्यजवरेत्यस्य द्व्यजपेक्षया न्यूनमित्यर्थस्तु न पटपटाकरोतीत्यादावव्याप्तेः । विवक्षिते इति । डाचि द्वित्वन्द्वित्वे चार्द्धानेकाच्त्वे डाजित्यन्योन्याश्रयः स्यादिति भावः । बहुलग्रहणाद् द्वितीयाकरोतीत्यादौ न द्वित्वम् । डावश्चित्त्वं लोहितादिडाच्भ्य इति विशेषणार्थम् । तेन नाभापृथिव्या इत्यादौ ङे डादेशे निष्पन्नस्यानुकरणे पटपटायतीत्यादाविव नाभा इति भवति इत्यर्थं क्यषवारणायेति भाष्ये स्वरसः । अनेकाच इति । द्व्यजवरार्द्धादित्यपनीयेत्यर्थः । पटितीति । अव्यक्तानुकरणस्येति पररूपम् ॥

कृञो द्वितीय ॥ कृञ इति समासान्ता इत्येतत्पर्यन्तमनुवर्तते । बीजेनेति । बीजावापेन सहेत्यर्थः । कृषधातुः । कर्षात्वत इति सूत्रभाष्यप्रामाण्याच्छ्विकरणो ऽपि । कृषाविति किम् । द्वितीयं करोति पटम् ॥ संख्यायाश्चगु ॥ गुणशब्दान्तसंख्यावाचकस्येत्यर्थः । कृञो किम् । द्विगुणां करोति रज्जुम् । समयाकरोतीति । करोतिर्यापनायान्तदाह । यापयतीत्यर्थं इति । निष्कुला ॥ अन्तरवयवानां बहिष्करणं निष्कोषणं तत्र किम् निष्कुलान्करोति शत्रूनिति । आनुलोम्यमाराध्यचित्तानुवर्तनम् । तत्र किम् । सुखं करोत्यौषधम् । चित्तपीडनं प्रातिलोम्यम् । शूलाकरोतीति । करोतिः पचत्यर्थे । सत्यु साधु सत्यम् ॥ इति तद्धितप्रक्रिया ॥

सर्वस्य द्वे ॥ न च वाक्यादिद्वित्ववारणायावश्यकेन पदस्येत्यपकर्षेण सिद्धे सर्वस्येति व्यर्थम् । एकाच्द्विर्वचनन्यायेन च सर्वावयवकद्वित्वसिद्धेरिति वाच्यम् । द्वितीयषष्ठ्युच्चारणेन स्थाने द्विर्वचनत्वबोधनात् । द्वे इत्यस्य संख्येयापेक्षया शब्दानुशासनप्रस्तावाद्द्वे शब्दे रूपे प्रत्यासत्त्या स्थानिसमानाकारे सर्वस्य पदस्य स्थाने भवतः । अन्यथैकाचो द्वे इत्यादाविवोच्चारणक्रियापेक्षया पदस्येति कर्मषष्ठी स्यात् । तेन पौनः पुन्यं पौनः पुनिक इत्यत्र ष्यञ्ठञौ सिद्धौ ॥ तत्र हि पुनः पुनर्भवितरि वर्त्तमानात्पुनः पुनः शब्दाद्भावे भवे च प्रत्ययः । अन्यथा तरङ्गत्वात्सुपि लुप्त्वाच्चाव्ययत्वात्सुपो लुकि वीप्सारूपे द्वित्वप्रवृत्त्यार्थवत्त्वे ऽपि समासग्रहणकृतनियमेन स्वातन्त्र्येणापि प्रयोगार्हार्थवत्समुदायविषयकेण प्रातिपदिकत्वाभावात्स न स्यात् । स्थाने द्वित्वे तु स्थानिवद्भावात्प्रातिपदिकत्वम् । प्रत्ययलक्षणेनाप्रत्यय इति निषेधाप्रवृत्त्या स्थानिनः प्रातिपदिकत्वे ऽतिदेशेनादेशे तत्सुलभम् । नचैवमपि तत्प्रकृतिक सुबन्तत्वन्दुर्लभम् । पुनः सुबुत्पत्त्या सुलभत्वात् यद्वा । तत्संबन्धिभाव इत्याद्यर्थे प्रातिपदिकात्प्रत्यय इत्येवार्थः । स च कुत्सिते इति सूत्रभाष्यात् घकालेति ज्ञापकाच्च सति सम्भवे सुब्व्यवहित इत्यन्यत् ॥ तत्र द्विरावृत्तशब्दरूपमादेश इत्यर्थके द्विरिति वक्तव्ये द्वे इति वचनबलेनानस्तमितावयवभेदसमुदायस्यैवादेशस्योपस्थितपदसमुदायात्मकस्य विधानात्प्रत्येकमप्यनयोः पदत्वमित्यग्रे ऽग्रे इत्यादौ पूर्वरूपादिसिद्धिः । एतेनैकैकमित्यादौ बहुव्रीहिवद्भावे ऽपि तदवयवयोः सुप्त्वं मानाभावात्सुब्लुगनापत्तिरिति परास्तम् । अत एवैतद्विषये न संहिताया नित्यत्वम् । संहितैकपदे इत्यत्र समासग्रणादखण्ड पद एव तन्नित्यता बोधकत्वात् । समुदायस्यापि स्थानिवद्भावेन पदत्वमिति आम्पचसि पचसि देवदत्तेत्यादावाम एकान्तरतासिद्धिः । कस्कादिषु कौतस्कुतपाठेन कृताष्टमिकद्वित्वादप्रातिपदिकत्वे

ऽपि तद्धितोत्पत्तिज्ञापनेन द्विःप्रयोगपक्षे ऽपि न दोष इत्यन्ये । पदस्येत्यपकर्षे ऽपि प्रपचतीति सगतिकस्य द्वित्वं सगतिकस्येति वार्त्तिकेन सिद्धमिति दिक् । नित्यमाभीक्ष्ण्यम् । व्याख्यानाच्च पौनः पुन्यम् । तदाहाभीक्ष्ण्ये इति । ननु याङ्क्रियां कर्ता प्राधान्येनानुपरमन्करोति तन्नित्यं पुनः क्रियाया विच्छेदेनोत्पत्तिराभीक्ष्ण्यमिति तयोर्भेदस्य कैयटादिभिरुक्तत्वेनेदमसङ्गतमिति चेन्न । मानाभावात् । तच्चाभीक्ष्ण्यं तस्येदं ग्रहणमिति प्रकृतसूत्रस्थभाष्यविरोधाच्च । आभीक्ष्ण्यमिति । शब्दशक्तिस्वभावादिति भावः । हिरुगादीनाङ्क्रियाविशेषणत्वेन क्रियाप्रधानत्वं न तु क्रियावाचकत्वमतो न द्वित्वम् ॥

परेर्वर्जने ॥ वर्जनद्योतनस्य परेरित्यर्थः । उदाहरणे पञ्चम्यर्थवर्जनरूपसंबन्धस्य परिर्द्योतकः । पञ्चम्यपाङ्परिभिरिति पञ्चमी । परित्रिगर्तं वृष्टो देव इति समासे तु न द्वित्वम् । कर्मप्रवचनीयानां स्वयोगविहितविभक्त्यर्थसंबन्धपरिच्छेदकतया समासे विभक्त्यभावेन तत्वासम्भव इति । परेर्नैरर्थक्यात् किंच वाक्यदृष्टविभक्त्यर्थान्तर्भावेण तत्र समासस्यैव शक्तिकल्पनेन परेस्तद्द्योतकत्वाभावः । न हि समासस्य यदर्थान्तर्भावेण शक्तिस्तद्द्योतकापेक्षा । अत एव घनश्यामादाविवाद्यप्रयोगः परिशब्दस्तु साधुत्वार्थमेव वृत्तौ प्रयुज्यते । समूलकाषमित्यादौ कषिरिव । तदुक्तम् । भाष्ये । नात्र परिवर्जने वर्तते । कस्तर्हि समास इति । वाक्यादेरा । विनापि कोपासूये भर्त्सनकुत्सनयोः शिष्यादौ सम्भवात्तद्ग्रहणम् । द्विरुक्त इति । वीप्साविषये इति भावः । अस्य सूत्रस्य वीप्सायामेव प्रवृत्ते भाष्यसंमतत्वात् । अत एवैक इत्यादौ न बहुव्रीहिवत् । तथा सति सुब्लुकि दधीत्यादौ विभक्तिरहितस्येवात्रापि तादृशस्यैव साधुत्वापत्तिः । अनेनैव द्वित्वं विधीयते इति तु न युक्तम् । शस एतदपवादत्त्वानापत्त्येकश इत्यसिद्धेः । अत्रेदं बोद्धम् । अल्पार्थकशब्दसत्त्वे ऽपि तदर्थे वीप्सायान्द्वित्वापवादः शसेव । संख्याशब्दातिरिक्तशब्दार्थानां परिगृहीतैकत्वानामेव वीप्सासत्त्वेन तस्याप्येकवचनत्वात् । किंचाल्पत्वमपि परिमाणविशेष इत्यल्प इति सूत्रे भाष्यकैयटयोरुक्ततया प्रस्थाद्यर्थानामिवास्यापि परिगृहीतैकत्वस्यैव वीप्सा । एकैकश इति भाष्यप्रयोगस्योपपत्तिरुक्तेत्यन्यत्र विस्तरः । तेनेति । अत्र सुब्लोपशब्देन तन्निमित्तं प्रातिपदिकत्वं लक्ष्यते । अन्यथा सुबुत्पत्तिरपि वक्तव्या स्यात् । भाष्येप्येवमेव । गोस्त्रियोरिति ह्रस्वस्तु नातिदिश्यते तस्योपसर्जनार्थनिमित्तत्वात् । बहुव्रीहिवद्भावादेवेति । मध्यमणिन्यायेनोभयान्वयि । समुदाये जातस्य प्रातिपदिकत्वमस्यैकदेशविकृतन्यायेन सुब्लोपे ऽपि सत्वम् कार्यकालपक्षे तु तेनैव पुनः

प्रातिपदिकत्वं सुबिति । न चात्र द्वयोः सुपोर्लुकि तदर्थस्य प्रातिपदिकार्थेऽन्तर्भावेण द्वितीयाद्यनापत्तिः । व्याप्तिविशिष्टस्य कर्मत्वादिबोधार्थं तदुत्पत्तेः सुलभत्वात् । एकैकस्मै इति । द्वयोरपि सुपोर्लुकि पुनः सर्वादिपठितैकशब्दान्तत्वेन सर्वनामत्वात् स्मैभावः । इह पुंवदिति । बहुव्रीहिवत्त्वातिदेशेनोत्तरपदत्वस्यैकार्थ्येन भिन्नार्थत्वाभावेन च सामानाधिकरण्यस्य च सत्त्वात्स्त्रियाः पुंवदित्यनेनेति भावः । अन्तोदात्तत्वानीति । अनुदात्तं चेत्यस्याधिकारत्वे ऽपि भाष्यप्रामाण्यान्नेहोपस्थितिः । अत एव बहुव्रीहिवद्भावे प्रकृते ऽपि कर्मधारयवद्भावः किंच प्रियादिषु प्रतिषिद्धपुंवत्त्वस्यापि विधानार्थं कर्मधारयवद्भावः । अत एव पूर्वसूत्रयोः कर्मधारयवदिति नोक्तम् । प्रियादिषु पुंवत्वापत्तेः । पूर्वसूत्रे तु न स्वरातिदेशो भाष्यप्रामाण्यात्। अत एव तत्र किं प्रयोजनं सुब्लोपपुंवद्भावावित्येव भाष्ये उक्तम् । अत्र कानि प्रयोजनानि सुब्लोपपुंवद्भावान्तोदात्तत्वानीत्युक्तम् । प्रकारशब्दः सादृश्यवाची व्याख्यानादित्याह । सादृश्ये द्योत्ये इति । पुंवद्भाव इति । पुंवत्कर्मधारयेत्यनेन । गुणवचनश्चेहाकडारसूत्रभाष्यपरिभाषित इति बोध्यम् । प्रकारः सादृश्यप्रतियोगित्वरूपमुपमानत्वम् । उपमानपटुभिन्न इति बोध इति परे। आनुपूर्व्ये इति । वार्त्तिकेषु कर्मधारयवदिति न संबध्यते । तदुदाहरणेषु भाष्ये सुब्लोपादर्शनात् । संभ्रम आदरो भयं च क्रियासमभिहारे चेति । पौनःपुन्य भृशार्थेश्च क्रियासमभिहारश्चेति । लोट्येवेदम् । अत एव क्रियासमभिहारे लोट् मध्यमैकवचनस्य द्वे भवत इति पठित्वा तस्य लोट्ज्ञापकत्वम् । अष्टमे चास्य लोट्येवोदाहरणमुपन्यस्तम् । अत एव यङन्ते न द्वित्वम्। यत्तु लोटः समुच्चयादिष्वपि विधानेन केवले तद्द्योतनेन सामर्थ्याभावाल्लोटि द्वित्वम् । यङस्तु तदतिरिक्तार्थाभावाद्यङैव द्योतनसम्भवाद्यङन्ते न द्वित्वमिति, तन्न । अकजादेरनेकत्र द्योत्येऽर्थे विधाने ऽपि केवलस्यैव प्रकरणादिना तत्तदर्थद्योतकतया दृष्टत्वात् । भृशार्थे यङि ततः पौनःपुन्य विवक्षयान्तु नित्यवीप्सयोरिति द्वित्वं भवत्येव । पापच्यते पापच्यते भृशं पाकं पुनः पुनः करोतीत्यर्थः । नन्वस्य द्वित्वफलके भृशार्थे इत्येव सिद्धे क्रियासमभिहारपदं व्यर्थमत आह । पौनःपुन्येपीति इदमेवज्ञापकं पौनःपुन्यस्य केनचित् द्योतने सौत्रद्वित्वाप्रवृत्तेरिति पौनःपुन्ययङन्तेन सौत्रद्वित्वमिति भावः । भुक्त्वा भोजं भोजमित्यादौ त्वाभीक्ष्ण्ये द्वे वाच्ये इति भाष्यपठितवचनान्तरेण द्वित्वं मूले त्वेतत्कृदन्ते वक्ष्यते । पुनः पुनः क्रियाविच्छेदेनोत्पत्तिराभीक्ष्ण्यन्तदेव च नित्यत्वं भुक्त्वा भुक्त्वेत्यादौ विच्छेदिका क्रिया चोपात्ता व्रजनादिरूपैव गृह्यते । अनुपस्थितकल्पने मानाभावात् । एवञ्च

त्वाद्यन्तेनैव व्रजनाद्याभीक्ष्ण्यस्य द्योतितत्वान्न त्वाद्यन्तसमभिव्याहारे तिङन्तस्य द्वित्वम् । जीवत्येवायमित्यर्थे जीवति जीवतीत्यादौ । कमलानि कमलानीतिवदेकं जीवतिपदं दीर्घाविच्छिन्नतत्कर्मेति न तत्र शास्त्रीय द्वित्वं कर्मव्यतीहारश्च क्रियाविनियमः नित्यमेवेदं द्वित्वम् । बाहुलकन्तु समासवद्भावस्यैव तदाह । बहुलग्रहणादिति । अत एवान्यशब्दस्य समासवद्भावरहितमेवेतरशब्दस्य तत्सहितमेवोदाहरणं भाष्ये । परस्परशब्दे परस्पराच्चेति वार्तिकप्रयोगात्समासवद्भावाभावः । अन्यपरे तरव्यतिरिक्तेषु तु नास्य प्रवृत्तिर्बाहुलकादेव । अन्येषां कर्मव्यतिहाराबोधकत्वाच्च । अन्योन्यादौ कर्मव्यतिहारः स्फुट एव । अन्योन्यस्मै इति । अन्यस्मै इत्यस्य द्वित्वे पूर्वपदस्य सुपः सौ रूपसिद्धिः । इतरेतरेषामित्यादौ तु एकैकस्मै इत्यत्रोक्तरीत्या सर्वनामत्वम् । वार्तिकेषु कर्मधारयवत्पदासंबन्धबोधनाय समासवदित्युक्तिः । सुब्विधिनैव सिद्धे समास इत्युक्तिराम्रेडितानुदात्तत्त्वबाधेनान्तोदात्तार्था । कस्कादित्वादिति । कुप्वोःᳲकᳲपौ चेति बाधित्वेति भावः । सिद्धान्तिमतमाह । अन्ये त्विति । तदुक्तम् वृद्धैः । न चोदाहरणमादरणीयमिति । तदतिरिक्तोदाहरणाभाव इत्येवं परतया नादरणीयमित्यर्थः । दलद्वये इति । समासवद्भावे तदभावे चेत्यर्थः । इतरेतरमित्यादौ पूर्वखण्डस्य सर्वनाम्न इति पुंवत्वेन यद्यपि सिद्धम् । तथाप्युत्तरखण्डे टाबभावार्थं बाहुलकमावश्यकम् । क्लीबे चेति । अन्योन्यमित्यत्र पूर्वपदे प्राप्तादिरह इत्यर्थः । उत्तरखण्डे तु अस्मद्वक्ष्यमाणान्यतमरीत्यापि तदभावः । समासे सोरिति । कृतद्वित्वस्यान्येन समासे पूर्वखण्डस्यस्येत्यर्थः । इदमुपलक्षणं परस्परमित्यत्र पूर्वपदे नपुंसके सोरमभावस्य परस्परस्मादित्यादौ व्यवस्थाभावे ऽपि सर्वनामत्वस्य च । इतरेतरमित्यत्र चेति । डतरादिसूत्रे सर्वादीनीति सूत्रस्थभाष्यरीत्या विहितविशेषणादद्वनेत्यन्ये । सोर्लुक्चेति । स्वादेशविधानं त्वन्योन्यमित्यादावसमासे चरितार्थमिति भावः । प्रकृतवार्तिकेति । स्त्रीनपुंसकयोरिति वार्तिके अन्योन्यमिमे ब्राह्मण्यौ इतरेतरमिमे कुले इत्यादि तत्रोदाहृतम् । स्त्रियामितीति । अन्योन्यसहाया इति सर्वस्य द्वे इति सूत्रस्थभाष्यप्रयोगो ऽपि बोद्धः । अन्यान्यप्रादुर्भावादिति अपादाने इति सूत्रस्थभाष्यप्रयोगे कर्मव्यतिहारः स्पष्ट एव । अकृकृ इति । तत्र वर्तमानयोस्तदर्थकयोरित्यर्थः । पुनस्तद्वेति । अनुवादकविभक्तेर्न्याय्यत्वादिति भावः । यस्य दाने क्लेशसंभावना तत्रैव तदभावप्रतिपादनं सफलमित्याशयेनाह । अतिप्रियमिति । यद्यच्चेति । स्वशब्दस्योभयार्थकत्वात् । ज्ञातिधनवाची तु न गृह्यते ऽनभिधानात् द्वे इति वीप्सायां यथा शब्दस्यावृत्तौ द्वित्वाप्राप्त्या तदपि निपात्यते इति भावः । क्लीब-

त्वञ्चेति । तेन ह्रस्वसिद्धिः चेन कृतद्वित्वस्याव्ययत्वाभावसङ्ग्रहः । ज्ञातेत्यस्य तृजन्तत्वात् षष्ठी न । तृचि यथायथस्य ज्ञातेत्येव । यथास्वभावमिति । यथास्वरूपमित्यर्थः । ज्ञाताः सर्वे पदार्था यथायथं यथास्वभावं सर्वे पदार्था ज्ञाता इति वृत्तिसम्मतम् । पूर्वपदस्याम्भाव इति । द्वौ द्वाविति द्वित्वे कर्मधारयवद्भावात्सुब्लुकि पूर्वपदावयवस्योकारस्यामादेश इत्यर्थः । आत्वमिति । सञ्ज्ञात्वादप्राप्तिः । नपुंसकत्वं चेति चेन कृतद्वित्वान्नियतद्विवचनोत्पत्त्यभावस्य सङ्ग्रहः कर्मवद्भावादन्तोदात्तत्वम् । वाच्यमिति । इदं वृत्तौ स्पष्टम् । अभिव्यक्तिरप्येवमित्यन्ते । आचतुरमिति । आङभिविधौ । आङ्मर्यादेत्यव्ययीभावः । शरत्प्रभृतित्वाट्टच् । चतुर्थान्तमिति फलितार्थः । मिथुनीयन्त्यनेनान्वयः । मिथुनशब्देन तत्कर्ममैथुनन्तदिच्छन्तीत्यर्थे क्यच् । मिथुनं गच्छतीति । मिथुनत्वं प्राप्नोतीत्यर्थः । फलितार्थकथनमिदं मिथुनायन्ते इति क्यङन्तोपपाठः । उपमानार्थाभावात् । द्वन्द्वपदद्योत्या मर्यादा तु एतावदेव पशूनामायुरित्येवं रूपा । स्वसाहित्येन चतुरोऽभिव्याप्येत्यर्थः । प्रपौत्रेणापीति । चतुरोऽभिव्याप्येत्यर्थे इति वृत्तिस्वरसः । अत्यन्तसहचरितत्वेन लोकविज्ञानमत्राभिव्यक्तिः । अत्यन्तसहचरितो लोकविज्ञाते द्वन्द्वमित्युपसंख्यानमिति वार्तिकात् । तदाह । साहचर्येणेति । तेनेहन । द्वौ युधिष्ठिरार्जुनौ द्वन्द्वं न्यञ्चीत्यत्र वीप्सायान्द्वित्वमन्यत्र स्वार्थे । अन्यत्रापीति । द्वन्द्वे युद्धान्यवर्तन्तेति यथा । अत्र द्वयोर्द्वयोरित्यर्थाद्वीप्सायान्द्वित्वम् । शीतोष्णसुखदुःखक्षुत्तृषां द्वन्द्वानि सहते इत्यत्र स्वार्थे द्वित्वमेकशेषाद्बहुवचनं यथा चार्थे द्वन्द्व इति स्वार्थे द्वित्वं पुंस्त्वं लोकात् । अयं योगविभागो भाष्ये न दृश्यते द्वन्द्व युद्धानीत्यत्र मर्यादावचनेन सिद्धम् । एषा हि युद्धे मर्यादा । शीतोष्णादिष्वभिव्यक्त्या । सहचरितत्वं शब्दप्रयोगे बोद्धव्यं स्वार्थे द्वन्द्व इति तु सञ्ज्ञाशब्दोऽव्युत्पन्नः अवयवार्थाभानादिति तदाशयः । विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः ।

शब्देन्दुशेखरे स्वल्पे पूर्वमर्द्धमपूपुरम् ।
प्रीयतान्तेन भगवान् शिवया सहितः शिवः ॥

भूषितः फणिभाष्योक्त्या लघुः शब्देन्दुशेखरः ।
सतां हृत्कमलेष्वास्तां यावत्फणिफणे धरा ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते लघुशब्देन्दुशेखरे पूर्वार्द्धं समाप्तम् ॥

॥ श्रीः ॥

# ॥ लघुशब्देन्दुशेखरः ॥



नानाविधग्रन्थनिर्माणधुरीणमहामहोपाध्याय-

श्रीमन्नागेशभट्टविरचितः ।

धर्माधिकार्युपाख्य पण्डित श्रीढुण्ढिराजपन्तमहाशयप्रोत्साहितेन

काशिकराजकीयप्रधानपाठालये साहित्योपाध्यायपदवीं

लब्धवता मानवल्ल्युपाख्य रामशास्त्रिणा

लब्धसाहित्योपाध्यायपदवीकेन

भारद्वाज नारायणशास्त्रिणा

च संशोधितः ।



श्रीकाश्याम्

मेडिकल्-हाल्-नाम्नि यन्त्रालये धर्माधिकारिवीरेश्वरपन्तार्थं मुद्रितः ।

सं० १९४४ कार्तिकवदि २ भौमे । ख्रीष्टाब्दे १८८७ ।

श्रीगणेशाय नमः ।

# ॥ अथ लघुशब्देन्दुशेखरः ॥

## उत्तरार्द्धम् ।

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते इति भाष्योक्तेर्विघ्नविघाताद्यर्थं ग्रन्थमध्ये कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति । श्रोत्राहंन्तीति । श्रोत्रं श्रोत्रियत्वं वेदाध्ययनकर्तृत्वं आर्हन्ती योग्यता । तद्विहितकर्मानुष्ठातृत्वमाभ्यां वित्तैः प्रसिद्धैरित्यर्थः । गुण्यैः । प्रशस्तगुणवद्भिः । अर्हद्भिवम् । अहन्यहनि । विजयतेतरामिति । वीति भिन्नं पदम् । तिङश्चेति तरप्याम् । तिङन्तोत्तरपदस्तु समासश्छन्दस्येव । उपसर्गाणां द्योतकतया वीत्येतत्सापेक्षत्वेनासामर्थ्यात्कथन्तरबिति न शङ्क्यम् । पूर्वार्द्धेनास्य सङ्गतिमाह । पूर्वार्द्धइति । कथिताः प्राधान्येनेत्यर्थः । तृतीयाध्यायेति । उणादीनामप्युणायो बहुलमिति सूत्रबोधितत्वात्तत्त्वम् । पञ्चम इति । लट्लिट् इत्याद्युक्तक्रमापेक्षयेदम् । छन्दोमात्रेति । तेन तद्रूपाणामिहाप्रदर्शनान्न्यूनतेति परास्तम् । वर्त्तमानकालादेर्द्योत्यतयाह । वर्त्तमानक्रियेत्यादि । वर्त्तमानकालक्रियेत्याद्यर्थः । वर्त्तमानत्वं प्रारब्धापरिसमाप्तक्रियाश्रयत्वं कालगतं बोध्यम् । अटाविताविति । अकारस्य विनेत्सञ्ज्ञां निवृत्त्युपायाभावात् । टित्त्वष्टेरेत्वार्थम् । लः कर्मणि ॥ ल इति उच्चारणार्थाकारेण जातौ प्रथमैकवचनान्तम् । लस्येत्येतत्स्वरसात् । तिप्तस्झि ॥ सौत्रत्वान्निर्विभक्तिकानुकरणत्वाद्वा थासाथान्तस्झीत्यादौ रुत्वं न । तिबादीनां पित्त्वङ्गुणार्थं स्वरार्थञ्च आदेशैः साहचर्यान्नागमत्वमिटः । एषां स्थानिवद्भावेन प्रत्ययत्वे सिद्धेऽपि देशांशे निराकाङ्क्षत्वेऽपि च विरोधात्प्रत्ययः परश्चेत्याद्युदात्तश्चेति च संबध्यतएव । अत एवैतत्सूत्रविधेयतादिविषये प्रत्ययसञ्ज्ञासंनियुक्तमाद्युदात्तत्वमित्याद्युदात्तश्चेति सूत्रे भाष्ये उक्तम् । ल इत्यादेशापेक्षया षष्ठीत्याह । लादेशा इति । सिजादयस्तु च्लिविशिष्टोद्देशेन विहितानलमात्रोद्देशेनेति न तेषामत्र ग्रहणम् । अस्याकडारत्वेऽपि शत्रादौ सावकाशां परस्मैपदसञ्ज्ञा पुरुषसञ्ज्ञां न बाधते सिचि वृद्धिः परस्मैपदेष्वित्यादिलिङ्गात् । एकसञ्ज्ञाधिकारादेवात्मनेपदपरस्मैपदसञ्ज्ञयोर्बाध्यबाधकभावः । शेषपदार्थज्ञानायात्मनेपदविधायकान्याह अनुदात्तङित इति । तदन्ताच्चेति । तेन यङन्तादात्मनेपदसिद्धिः । यङादेर्ङित्त्वमादाय तत्सिद्धावपि यङाद्यन्तसमुदा-

यस्य तङ्निरूपिताङ्गत्वानापत्त्याऽडाद्यव्यवस्थापत्तिरिति केचित्। चङ्गाद्यन्ते तु न। मण्डूकप्लुत्या भूवादय इत्यतो धातव इत्यस्य षष्ठ्या विपरिणतस्यानुवृत्तेरिति भाष्ये स्पष्टम् । स्वरितञितः ॥ कर्त्तारमभिप्रैति तत्कर्त्रभिप्रायं कर्मण्यण् । अभिप्रैतिर्गत्यर्थस्तदाह कर्तृगामिनीति। क्रियाफलञ्च श्रुत्या लोकतो वा यदुद्देशेन क्रियाप्रवृत्तिरवगता तदेव न दक्षिणादिरूपम् । तच्च पच्यादौ भोजनादि लोकतोऽवगतं यज्यादौ स्वर्गादिश्रुत्यावगतम् । कर्तृगामिफलफलकक्रियावृत्तेर्धातोरित्यर्थः । तदर्थत्वद्योतकञ्चात्मनेपदमेव यजमानस्य पाकयागादिसामग्रीसङ्घटनरूपं संविधानं यजमानो यजते इत्यादौ धात्वर्थः । नचैवं णिजापत्तिरिति वाच्यं, संविधानपूर्वकप्रेरणाया एव णिजर्थत्वात् ॥ यत्र सति प्रयोजक इत्युच्यते न हि संविधानमात्रेण तथोच्यते । संविधानं कुर्वन्नपि न यावत् प्रेरयति न तावत्प्रयोजक इत्युच्यत इति हेलाराजोक्तेः । भिक्षा वासयतीत्यादावपि प्रयोजकत्वारोपो बोध्यः । तूष्णीमासीनोऽपस्तत्समर्थान्याचरति सोऽपि वासादिप्रयोजक इति भाष्यात् । तत्समर्थाचरणमात्रेण तत्प्रयोजकत्वारोप इति तदर्थः। तत्समर्थाचरणपूर्वकप्रेरणा तत्र तत्र धात्वर्थः॥ तदुक्तं हेलाराजेन यः स्वर्गादिफलार्थं भृत्या इतरं व्यापारयति स्वयञ्च प्रतिविधानमारभते तत्रैव यजमानादौ कर्त्र्यात्मनेपदमिष्यते इति । केषाञ्चित्कर्त्रभिप्राये णिचा सह विकल्पते आत्मनेपदमिति हरिकारिकाव्याख्यावसरेऽपि हेलाराज आह । णिच् प्रेरणावाची । तत्प्रयोजको हेतुश्चेति सूत्रात् । अत एव तदाश्रयस्य कर्तृत्वं पाचयति देवदत्तो यज्ञदत्तेनेत्यादौ । एवञ्च भिन्नविषयत्वाद्विकल्पोक्तिरसङ्गता । किंच सामान्यविहितणिचो धातुविशेषाद्विहितेनात्मनेपदेन बाध एवोचितः । एतच्च केषाञ्चिदित्यनेन सूचितमिति । क्रीणीष्ववपते इत्यादिप्रयोगाणान्तेनैव गतिरुक्ता । क्रीणीष्वात्मानमिति विनताङ्कूराह । तत्र प्रत्युपकारं विना दास्यान् मुक्त्यसम्भवात् । प्रत्युपकारस्य च स्वासाध्यत्वात्पुत्र संविधानं गम्यते न तु स तदर्थः । एवं केशश्मश्रुवपते इत्यादावपि स्वस्याऽसामर्थ्येन सामर्थ्यात्कर्तुः संविधानं गम्यते न तु स तदर्थः । एवमन्यत्राप्यूह्यमिति । स्वामिदासौ पचेते इत्यादौ स्वामिधर्मस्य दासे आरोपादात्मनेपदं दासधर्मस्य तु न स्वामिन्यारोपः । उत्तमे निकृष्टधर्मारोपस्य प्रयोजनं विना स्वरसतोऽप्रतीतेरिति न कदाचित्तत्र परस्मैपदमेतच्च मञ्जूषायां विस्तरेण निरूपितं कमलवनोद्घाटनङ्कुर्वते इत्यादौ तु सुगन्धाघ्राणादिरूपविकासफलारोपः किरणेष्विति न दोष इत्यन्यत्र निरूपितम् । युष्मद्युपपदे ॥ सामाधिकरण्यमेकार्थबोधकत्वन्तच्च प्रत्यासत्त्या लकारेणैवेत्याशयेनाह । तिङ्वाच्येति। अत्र तिङ्ग्रहणान्तस्थानिलकारे लाक्षणिकम् । एत-

द्विधेयस्य तिङ एतद्वाक्ये उद्देश्यत्वासम्भवात् । उपोच्चारितं पदमुपपदं न तु कृत्रिमन्तस्येहानुपयोगात् अप्राप्तेश्च स्थानं प्रसङ्गस्तद्वति स्थानिनीत्यर्थः स च तदर्थावगतौ सत्यां वक्ता प्रयोग एवेत्यभिप्रेत्याह । अप्रयुज्यमाने इति । अपेरर्थमाह । प्रयुज्यमाने चेति । त्वद्भवति । अत्वन्त्वं संपद्यते इत्यादौ तु न । त्वं शब्दस्य गौणत्वात् । त्वत्कल्प इत्यादौ कालान्तरदृष्टगुणस्यैवेषदसमाप्तौ प्रत्यय इति त्वत्कल्पो भवसीत्येव । ननु तिङ्वाच्यकारकवाची त्वत्कल्पशब्दो न स युष्मच्छब्दः । न च युष्मदीत्यस्य युष्मद्वतीत्यर्थे सौत्री लक्षणेति वाच्यम् । अतित्वं भवतीत्यादावपि मध्यमापत्तेः । स्पष्टञ्चेदं भाष्ये इति चेन्न । युष्मादिसाधने इत्येवं भविष्यतीति भाष्ये एव सामाधानात् । युष्मदर्थेन यत्र लान्तस्य सामानाधिकरण्यं तत्र मध्यम इत्यर्थेन तल्लाभ इति कैयटः लबोद्ध्यार्थेन समानाधिकरणयुष्मदर्थबोधकशब्दे उपपदे इत्यादि क्रमेणार्थः । सामानाधिकरण्यञ्च तदर्थप्रवृत्तिनिमित्तयो र्बोद्ध्यम् । सलिङ्गस्य चेतनाचेतनसाधारणस्य भवदर्थत्वात् । युष्मदश्चालिङ्गचेतनैकविषयत्वाद्भवच्छब्दयोगेन मध्यमः । संबोधनार्थो मध्यमे प्रतीयते । युष्मदश्च संबोधन एव प्रयमेति तु न युक्तन्त्वं पचसीत्यादौ तदप्रतीतेः । क्रियाविनियोगफलकाभिमुखीकरणस्यैव संबोधनत्वात् । तदुक्तं हरिणा । प्रत्यक्त्वापरभावश्चेत्युपाधी कर्तृकर्मणोः । तयोः श्रुतिविशेषेण द्योतकौ मध्यमोत्तमौ ॥ १ ॥ सदसद्वा हि चैतन्यमेताभ्यामवगम्यते । चैतन्यभागे प्रथमः पुरुषो न तु वर्त्तते ॥ २ ॥ इति ॥ एवञ्च मध्यमोत्तमाभ्याञ्चैतन्ययुक्ते कर्तृकर्मणी बोध्यते प्रत्यक्त्वं प्रयोक्तुरहङ्कारानास्पदचेतनत्वम् । अपरत्व तदहङ्कारास्पदचेतनत्वम् । कर्तृकर्मविशेषणन्तयोः प्रतीतिस्लिङैवेति श्रुतिविशेषेणेत्युक्तं शृणोत ग्रावाण इत्याद्यर्थमसदिति अनभिव्यक्तमित्यर्थ इति मञ्जूषायां विस्तरः । अतित्वं भवतीत्यादौ अतिक्रमितुः प्राधान्याच्च मध्यम इति बोध्यम् ॥ प्रहासे च ॥ पूर्वोत्तरसूत्रयोरपवादः मन्योपपदइति बहुव्रीहिः प्रकृतिभूतश्च मन्यति कर्तृकर्तृक एव प्रत्यासत्तेः समानाधिकरणे इत्यनुवृत्तेश्च मध्यमोत्तमयोर्व्यत्यासेन प्रयोगे प्राप्ते इदं अत्राद्ये वाक्ये ऽस्मद्युपपद इति द्वितीये युष्मद्युपपदे इति च संबद्ध्यते । उत्तमार्थस्यैकत्वविधानात्तत्समानाधिकरणयुष्मच्छब्द एकवचनान्त एव ॥ अस्मदि ॥ आद्यन्तपदरहितं पूर्वसूत्रमनुवर्त्तते तदाह । तथाभूत इति । युष्मदस्मद्भ्यां समानाधिकरण्ये तु परत्वादुत्तम एव । अहञ्च त्वञ्च वृत्रहन् संयुज्यावहै इति यथा देवदत्तश्च त्वञ्चेत्येकशेषे युवां भवथ इति मध्यम एव युष्मदर्थसत्तेन शेषत्वाभावात् एकशेषे शिष्टशब्दप्रवृत्तिनिमित्तेनैव लुप्तार्थबोधात् । उपयुक्तासमभिव्याहृतस्योपयुक्ताद-

न्यस्य शेषपदार्थत्वात् । स्पष्टञ्चेदं सर्वं भाष्ये । एवञ्च तत्र वाक्ये ऽपि भवथ इत्येव भवच्छब्देन युष्मदस्मदोः सहविवक्षायां पूर्वशेष एवेति मध्यमोत्तमावेव ॥ परस्य भवतः शेषस्तु नानभिधानादिति कैयटः । भू सत्तायाम् ॥ सत्तेहात्मधारणं सत्तायामित्यादेर्वर्त्तत इति शेषः । पूर्वं भूकथनं महाव्याहृतिस्मारकतया माङ्गलिकत्वात्सत्तार्थनिर्देशोऽप्येवं सत्ताख्यस्य परब्रह्मणः स्मरणात् । कर्मणः कर्त्रधीनत्वेन पूर्वं कर्तृप्रत्ययानाह । कर्त्रिति ॥ धातोरिति पञ्चम्यन्तस्य पृथक्सूत्रस्याधिकारसामर्थ्यादाह । धात्वधिकारेति । कर्त्रर्थे इति । विकरणास्तु सति सम्भवे द्योतका इति भावः । अतीत्यादौ विकरणं विना ऽपि तत्प्रतीतेः वस्तु तस्तिबादायो ऽपि द्योतका एव लकारार्थश्च क्रियायामेवाभेदेनान्वेति गुणगुणिनोरिव क्रियातद्वतोरपि तादात्म्याङ्गीकारात् । अत एव कैयटेन युष्मदर्थस्य यत्र लान्तेन सामानाधिकरण्यमित्युक्तम् । अन्यथा लेनेत्येव वदेत् इत्यन्यत्र निरूपितम् । ननु कर्त्तरीति व्यर्थं भावकर्मणोस्तु यका बाधान्न दोषः तद्विधौ हि भावकर्मणोरिति वर्त्तते इति चेन्न । दिवादिभ्य इत्यादावनुवृत्त्यर्थत्वात् । अन्यथा ऽपवादविप्रतिषेधेन भावकर्मणोरपि तेभ्यः श्यन्स्यात् । यक् पुरस्तादपवादन्यायेन शप एव बाधक इति दिक् । प्रत्ययावयवस्येति । तेनैङ्भ्कतेत्यादौ न दोषः सर्वे सर्वपदादेशा इति न्यायेन तु झविशिष्टस्यान्तविशिष्ट आदेश इत्यर्थः । अत एवालुनन्नित्यादावुपदेशिवद्वचनेनान्तरङ्गत्वादन्तिभावे कृते स्थानिवत्त्वेन परस्मैपदत्वादितोलोपे एकदेशविकृतन्यायेन झित्वात्प्राप्तोजुस् धातोरित्यधिकारान्नेति भाष्ये स्पष्टम् । झेर्जुसित्यत्र प्रक्रियालाघवाय विशिष्टे एव स्थानित्वं बोध्यम् । भवन्तीति । अत्र शबकारान्त्यकारयोः पररूपे कृते ऽचःपरस्मिन्निति स्थानिवत्वाद्गुणः ॥ वार्णादाङ्गमिति तु समानस्थानिकत्वे एवेति बोध्यम् ॥ अतो दीर्घो ॥ यञि किम् । भवतः । एहिमन्ये इति ॥ ओदनं भोक्ष्य इति त्वं मन्यसे इत्यर्थः । एवमग्रे ऽपि बोध्यम् । सत्यप्योदने परिहासशीलश्यालकादेर्वाक्यमेतत् । अत्र मननापेक्षया भोजनस्य भविष्यत्कालतैव मननस्य तु वर्त्तमानतैव परिहासपोषायैवेहीत्याकारणम् । श्यनानिर्देशादिह न । एहि मनुषे रथेन यास्यामीति । अत्र पुरुषव्यत्ययस्य प्रहासव्यञ्जकत्वम् । परोक्षे लिट् ॥ परोक्षत्वञ्च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम् । भूते इति अनद्यतने लङित्यतो ऽनद्यतनइति चानुवर्त्तते तत्र भूतादीनां साक्षाद्धातुविशेषणत्वासम्भवाद्धात्वर्थविशेषणतेत्याह । भूतेत्यादि । भूतत्वं वर्तमानध्वंसप्रतियोगिसमयवृत्तित्वम् । अतीतरात्रेरन्त्ययामेनागामिन्याः पूर्वयामेन च सहितः कालो ऽद्यतनस्त-

द्वितो ऽनद्यतनः ॥ लिट् च ॥ पक्षाः सैत्रोलुक् तदाह लिडादेश इति । एकसञ्ज्ञाधिकारादन्यत्र सत्त्वेन सञ्ज्ञासमावेशः स्यादत आह एवेति । लङः शाकटायनस्यैवेत्यतो ऽनुवृत्तेरिति भावः । परस्मैपदानाम् ॥ णलः सर्वादेशत्वन्ततः प्राक् णकारस्य लोपाभावेनानेकाल्त्वादिति केचित् । तन्न नानुबन्धकृतमनेकाल्त्वमिति निषेधात् । अनुबन्धत्वयोग्यकृतमिति तदर्थः । ध्वनितञ्चैदण्डादौ रस इति सूत्रे ऽनेकाल्शिति च सूत्रे भाष्ये इति जसः शीत्यत्र निरूपितम् । तस्मात् ण अलिति प्रश्लेषेणानेकाल्त्वेनेति सर्वादेशत्वसिद्धिः प्रश्लेषसामर्थ्यादादेशोत्तरमेकादेशप्रवृत्तिः । एवमणडा आ इति प्रश्लेषात् डादेशः सर्वादेशो बोध्यः लित्त्वं स्वरार्थं अन्यथा द्विः प्रयोगत्वाद्द्विर्वचनस्य पर्यायेणोभयोरन्तोदात्तत्वं स्यादित्यत्रैव भाष्ये स्पष्टम् ॥ भुवोवुक् ॥ अचिश्नित्यतो चीत्यनुवर्त्तते । नित्यत्वादिति । कृताकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताभ्युपगमादिति भावः । ओः सुपीत्यत ओरिति तु नात्रानुवर्त्तते फलाभावादस्वरितत्वाच्चेत्यपि बोध्यम् । अधिकृत्येति । व्याख्यानादस्याधिकारत्वमेवेति भावः । एकाजिति तद्गुणसंविज्ञानबहुव्रीहिणा प्रथमविशेषणम् । अत एव जागर्जादौ द्वित्वं तदाह । धात्ववयवस्येत्यादि । पचादौ इण धातौ च प्रथमत्वैकाच्त्व धात्ववयवत्वानि व्यपदेशिवद्भावेन बोध्यानि । अजादेरिति कर्मधारयस्तदाह । आदिभूतादिति । एवञ्च द्वितीयस्येति न कार्यमिति बोध्यम् । अचैकाच इत्यादेः कारकषष्ठीत्वाद् द्विःप्रयोगपक्ष एव । अत एवाटिटदित्यादौ णिलोपसिद्धिः स्पष्टञ्चादेशप्रत्यययोरिति सूत्रे ऽस्य द्विःप्रयोगत्वमुक्तं भाष्ये । अत्रोत्तरखण्डस्यैवार्थवत्त्वं अभ्यासो नर्थक एव ध्वनितञ्चैदं दयतेरिति सूत्रे भाष्ये । नचात्र पक्षे सिषेधेत्यादौ सात्पदाद्योरिति षत्वनिषेधापत्तिः । सिचेरत्र तिङ्विहित इति द्वितीयोच्चारणविशिष्टस्य पदत्वात्पदादित्वस्योत्तरखण्डाद्यसकारे सत्वादिति वाच्यम्, तावेव सुप्तिङौ यो ततः परौ सेव च प्रकृतिराद्या, आदिग्रहणञ्च कृतं समुदायपदत्वमेतेनेति भाष्येण समाधानात् यो ततो विधानावधेः परौ तावेवेमौ सुप्तिङौ यतो विहितौ सा प्रकृतराद्यैव । आगन्तूनामन्ते निवेश इति न्यायात् द्वितीयोच्चारणस्यैव विधेयत्वात् । आद्या । आद्योच्चारणविषया । ननु द्वितीयोच्चारणेन व्यवधानमत आदिग्रहणमिति । यस्मात्प्रत्ययविधिस्तदादीत्यस्यात्रानुवर्त्तनात् । समुपपदत्वमिति उच्चारद्वयविषयत्वेन समुदायव्यवहार इति तदर्थः । कृते तु द्वित्वे द्वितीयोच्चारणेनैवार्थबोधादभ्यासस्य नैरर्थक्यव्यवहारोऽपि । यत्तु द्वित्वे लिटीत्यस्य विषयसप्तमीत्वमाश्रित्य पूर्वन्द्वित्वे ततः समुदायाल्लिटि ततस्तिङि यस्मात्तिङ्विधिस्तदादितिङन्तस्य

समुदायस्यैव पदत्वम् । समुदायोपि द्विःप्रयोगत्वाद्द्वित्वस्य धातुबुद्धिविषय इति पक्षान्तरमुक्तम् । तत्त्वेकदेश्युक्तिः । गणपठितत्वाभावेन क्रियावाचकत्वाभावेन च तस्य धातुत्वोपपत्त्यभावात् । अत एव दयतेरिति सूत्रे असति द्वित्वे परस्य भूभावे रूपासिद्धिमाशङ्क्यार्द्धधातुके इत्यस्य विषयसप्तमीत्वेन परिहृतमिदं प्रथमद्विर्वचनापवादः । अजादेर्धातोर्द्वितीयाभावे प्रथमवाक्येनैव प्रथमस्य द्वित्वमिति भाष्ये स्पष्टम् । व्यपदेशिवद्भावेन तु न द्वितीयत्वं प्रथमस्येत्युक्त्योभयसत्तायामेवाजादेरित्यस्य प्रवृत्तेः । धातोरितिकिम् तदभावे लिटीत्यादिप्रथमैकाच एव विशेषणं स्यात् । एवञ्च पपावेत्यादावेव स्यान्न तु जज्ञागारेत्यादौ अनभ्यासग्रहणमनर्थकं छन्दसिवावचनादिति भाष्यं, यङन्तात्सनि सन्नन्तात् णिचि चङि वा लोके प्रयोगा अनभिधानादसाधव एवेति तदाशयः । स्तौतिण्योरिति सूत्रभाष्योदाहृतं सोषुपिषते इति तु छान्दसमेव जुगुप्सिषते इत्यादौ लक्ष्येलक्षणस्येति न्यायेन निर्वाह इति बोध्यं द्वेइत्यनुवृत्तं षष्ठ्याविपरिणम्यते तदाह । तयोरिति । हलादिः शेषः ॥ अत्र लोपोभ्यासस्येत्यतोऽभ्यासस्येत्यनुवर्त्तते । यद्यपि अभ्यासस्यादिर्हल् शिष्यत इति वाक्ये आदिहल्त्वत एव ग्रहणात् प्रत्यासत्त्या शेषग्रहणसामर्थ्यलभ्याभ्यासस्यान्ये हलो लुप्यन्त इति वाक्ये तादृशस्यैवाभ्यासस्य ग्रहणं प्राप्नोति तथापि लक्ष्यानुसाराद्व्याप्तिन्यायाश्रयेणाभ्यासमात्रग्रहणं बोद्ध्यम् । यद्वा संहितापाठेऽहलादिः शेष इति छेदः अभ्यासस्याहलहलभावो भवति यत्रादिः स तत्र शिष्यत इत्यर्थान्नदोष आदेर्हलः शेषोक्तेः प्रत्यासत्त्याऽन्यस्य हल एव लोप इतरनिवृत्तिपूर्वकावस्थाने शेषशब्दस्य वृत्तेरित्याशयेनाह । अन्येहल इति । ह्रस्वः ॥ यद्यपि भवतेर इत्येव सिद्धेरस्य प्रकृते नोपयोगस्तथापि पर्जन्यवच्छास्त्रप्रवृत्त्यभ्युपगमेनेदमत्रोक्तम् । अत्राभ्यासस्येत्यनुवर्त्तते । अच इति चोपस्थितं तच्च व्यधिकरणमभ्यासावयवस्याच इत्यर्थः । अत एव छो इत्यस्यात्वे लिटि छाशब्दस्य द्वित्वेऽन्तरङ्गत्वात्तुकि अनजन्तस्यापि ह्रस्वसिद्धिः ह्रस्वो ह्याङ्गत्वाद्बहिरङ्गः एतेन तुगपेक्षया परत्वाद्ध्रस्व इत्यपास्तम् । स्पष्टञ्चेदं दीर्घाकित इत्यत्र भाष्ये । एवमुत्तरसन्यत इत्यनयोरपि बोद्ध्यम् । वार्णादाङ्गमिति तु उभयोरादेशत्वे एवेति तद्भावः । भवतेरः ॥ प्रयोगे दृष्टानां भूवामनुकरणात् श्तिप् । अत एवास्तेर्भू भावेऽपि बभूवेत्येव । तस्यार्द्धधातुकएव विधानेन लुग्विकरणत्वाभावाच्च लुग्विकरणेति परिभाषा प्रवृत्तिः उभयानुकरणेनादादि मात्रत्वाभावाच्च शपो लुक् । प्रकृतिवदनुकरणमित्यस्यानित्यत्वेनादादित्वानतिदेशाच्च ॥ व्यथोलिटीत्यतो लिटीत्यनुवर्त्तते इत्याह । लिटीति । असिद्धवद । इदं सूत्रमनित्यम् । श्नसोरल्लोप इति सूत्रस्थतपरकरणात् तथाहि । असतामिति स्थिते जनसनेति सूत्रभाष्योक्त-

रीत्याभीयेषु विप्रतिषेधसत्वेन परत्वाल्लोपे तस्याभीयत्वेनासिद्धत्वात्पुनः प्रसङ्गविज्ञानेना ऽऽटि लक्ष्यभेदाल्लक्ष्यलक्षणस्येति न्यायाप्राप्तौ प्राप्तस्याटो लोपस्य वारणाय तत्र तपरकरणं तच्चाटो ऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वज्ञापकमिति बोध्यम् । इदञ्चात एकेति सूत्रे भाष्ये स्पष्टम् । तेन दम्भेर्दभतुरिति सिद्धम् । उवङीति । यद्यपि वृद्ध्यपेक्षया नित्यत्वाद्धुकि वृद्धेराभीयत्वाभावेन तत्रासिद्धत्वाभावात्तदप्राप्तावुवङः प्राप्तिः अभ्यासविकारेषु बाध्यबाधकभावाभावाद्धलादिःशेषात्वयोरत्र समावेशो बोध्यः । आर्द्धधातुकस्येट् ॥ नेड्वशिकृतीति प्रकृते एकयोगनिर्दिष्टानामेकदेशोऽप्यनुवर्तत इति न्यायेन नेति निवृत्त्या सिद्धे पुनरिड् ग्रहणं नेड्वशीति सूत्रे भाष्ये प्रत्याख्यातम् । आर्द्धधातुकस्येति किं जुगुप्सति । स्यतासी ॥ यद्यपि लृशब्देन लृङ् लृटोर्ग्रहणं तथापि इह यथासंख्यं वाचकशब्दसाम्यात् । शबाद्यपवाद इति । अत्रार्द्धधातुक इत्यनुवृत्त्या ऽस्य लावस्थायां प्राप्तावपि यदीदं न स्यात्तदा शप्स्यात्कृते त्वप्राप्तिरेवेत्येतावतेति भावः ॥ लुटःप्रथ ॥ एकार्थस्यैकार्थे इत्याद्यान्तरतम्याद्विर्वाहः । डित्त्वेति । सर्वादेशत्वन्त्वनुबन्धान्तरेणापि सुशकमिति भावः । पुगन्त ॥ बहुव्रीहिगर्भो द्वन्द्वः सार्वधातुकार्द्धधातुकयोरेकोविशेषणमङ्गावयवस्येक इत्यर्थः । अत एव भिनत्तीत्यादौ न गुणः । नन्वेवं भेत्तेत्यादावपि न स्यादत आह येननेति । सूत्रारम्भसामर्थ्यादेकवर्णव्यवधानमेवाश्रीयते इत्यर्थः अत्र क्नोः कित्त्वसामर्थ्याद्भूतपूर्वलघूपधत्वाश्रयोगुणः । इकोगुणवृद्धीति सूत्रे भाष्ये तु पुकि अन्तो लघ्वी उपधा तयोः समाहारद्वन्द्व इत्याश्रितं सार्वधातुकार्द्धधातुकञ्चाङ्गविशेषणं तत्रैवोत्थिताकाङ्क्षत्वात् । तत्पराङ्गावयवपुगन्तलघूपधारूपेको गुण इत्यर्थ इति तदाशयः । दीधीवे ॥ इडत्रागम एव व्याख्यानात् । तासस्त्योः ॥ सस्यार्द्धधातुक इत्यतो ऽनुवृत्तं सीत्येतद्बोधितसकारस्य प्रत्ययाद्यवयवस्यैव संभवेन फलितमाह सादाविति । लृट् शेषइति । चरहितः पाणिनेः पाठ इति भाष्यस्वरसः तत्र योगविभागः लृडित्यत्र क्रियार्थायामित्याद्यनुवर्तते शेषे इति अक्रियार्थोपपदार्थम् । न च क्रियार्थेत्यादि निवृत्त्यैव सिद्धे शेषग्रहणं व्यर्थम् । भावकर्मणोस्तुमुन्ण्वुलभ्यां लृटो बाधाभावाय तत् । न च वासरूपविधिना तत्सिद्धिः तुमुन्ण्वुलाविति सूत्रे ण्वुल्ग्रहणेन क्रियार्थायाङ्क्रियायामुपपदे वासरूपविधिना प्रत्ययान्तराभावज्ञापनस्य भाष्ये उक्तत्वात्सर्वञ्चेदं भाष्ये स्पष्टम् । आशिषि ॥ आशीरिष्टप्राप्तीच्छा । अनन्यार्थडित्त्वेष्विति । तद्बलकल्प्यमानार्थानुवाद एव डित्त्वेत्येतत् । अर्थान्तरकल्पना निवृत्त्यर्थमिति भावः परिभाषाणाञ्च प्रायेण पक्षप्राप्तार्थानुवादेनार्थान्तरनिवृत्त्यर्थत्वं व्रीहीनवहन्तीत्यादि वदिति स्पष्ट-

मेव । संप्रसारणादीति । आदिना उव ईडभावः । संभवत्प्रयोजनेति । इदं प्रयोजनं सर्वादेशत्वे एव नान्त्यादेशत्वे ऽप्रत्ययत्वात् । मन्थरमिति ॥ सम्भवत्प्रयोजनतया स्वविषयाभावसंभावनया ङित्त्वमात्रदर्शनेन स्वविषयसंभावनया च मन्दं प्रवृत्तिरित्यर्थः । समबलत्वादिति । मन्दप्रवृत्त्यैव तत्त्वमिति भावः एतेन टाप् यप् अबादिष्वनन्यार्थपित्वेषु चरितार्थस्यानुदात्तौ सुप्पितावित्यस्य जित्वरीत्यादौ तुक्सम्पादनेन चरितार्थपित्वे क्वापि उक्तन्यायेनान्तवद्भ्रावेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिरिति परास्तं तद्वदस्य पित्वसामर्थ्यसिद्धत्वाभावात् । वस्तु तस्तु तत्सामर्थ्यसिद्धस्य ङिच्चेत्यस्यात्राप्राप्तिरेव ङित्वस्य सावकाशत्वात्तातङि विप्रतिषेधात्सर्वादेश इति भाष्यस्य सावकाशङित्त्वे प्रवृत्तौ परिभाषात्वविरोधादप्रवृत्तौ सर्वादेशः सिद्ध इत्यर्थः । न च गुणवृद्धिप्रतिषेधार्थत्वे सर्वादेशत्वन्तत्वे च तदर्थत्वमित्यन्योन्याश्रयेण सर्वादेशत्वालाभे अन्त्यादेशत्वमेव स्यादिति वाच्यम् । एरुरिति प्रकरणे तिह्योस्तादिति न्यासेनानयोरिवर्णस्य तादित्यर्थकेनान्त्यादेशत्वसिद्धौ ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वबोधनद्वारा सर्वादेशार्थत्वेनादोषात् । स्पष्टञ्चेदं सर्वं भाष्यकैयटयोः । तुस्थानिकश्चायमान्तरतम्यादनुदात्त एव । हि स्थानिकस्तूदात्त वेत्याहुः । नित्यं ङितः ॥ ङिदुत्तमस्येति षष्ठीतत्पुरुषः । एतल्लेखो भवानीत्युत्तरमुचितः ॥ सेर्ह्य ॥ अपिद्ग्रहणात्पित्वेनानुदात्तसेः स्थाने जायमान हेरान्तरतम्यात्प्राप्तमप्यनुदात्तत्वं न एतेन सेर्हिङिच्चेत्येवास्त्विति परास्तम् । भवतादिति । लुगपेक्षया परत्वाद्धेस्तातङ् अन्तरङ्गानपीति न्यायस्तु ज्ञापकसिद्धं न सर्वत्रेति न्यायेनानित्यत्वाच्च । मेर्निः ॥ अमोपवादोयम् । स पिच्चेति । यस्याडागमः स इत्यर्थः । सामर्थ्यादिति । अन्यथा प्रक्रियालाघवाय नू एव विदध्यादिति भावः । भवानीति । लङ्वद्भावात्प्राप्तमपि इतश्चेति न मेन इति वक्तव्ये मेर्निरिति सूत्रकरणात् । एवं हेरपि बोद्धम् ॥ अनद्यतने ॥ अयं बहुव्रीहिः तेनाद्यह्यश्चाभुङ्क्ष्महीत्यत्र व्यामिश्रे लुङेव । स चोदात्त इति । अन्तरङ्गत्वात्तिबादिषु कृतेषु नित्यत्वाद्विकरणे कृते विकरणान्ताङ्गस्याडागमः लकारप्रश्लेषेण लावस्थायामेवाडिति षष्ठे भाष्ये पक्षान्तरमुक्तम् । नन्वत्र पक्षे ऽकारोदित्यादौ उप्रत्ययाद्युदात्तत्वनिबन्धनमनुदात्तत्वमटः स्यात् । उदात्तत्वन्त्वभवदित्यादौ चरितार्थमिति चेन्न, उदात्तपदे स्वरितत्वप्रतिज्ञानात्स्वरितेनाधिकं कार्यमित्यप्यर्थात् । बलवता ऽपि सतिशिष्टस्वरस्य बाधनात् । पूर्वशास्त्रेण बलवता ऽपि परशास्त्रस्य बाधनवत् अधिकः कार इत्यप्यर्थस्तेन पूर्वेण परस्य बाध इति स्पष्टं स्वरितेनेति सूत्रे भाष्ये, अत एव पक्षयो र्न फलभेद इत्यलम् । अभवदिति । नचात्रादेः परस्येत्यादेर्लोपापत्तिः अनुवृत्तधातोरित्यस्य विहि-

नविशेषणत्वेन परशब्देन परस्य कार्यविधानाभावात् ॥ विधिनि ॥ संप्रश्नः संप्रधारणं विचारस्तद्वा कर्त्तव्यमिदं वेत्यादिरूपः ॥ यासुट्प ॥ सीयुटोऽपवादः प्रत्ययसन्नियोगशिष्टतयान्तरङ्गत्वात्परस्मैपदानान्तसादीनामुदात्तत्वे कृते यासुडागमो ऽनुदात्तः स्यादित्युदात्तवचनं, नचाद्युदात्तश्चेति सूत्रोक्तभाष्यादिरीत्या परस्मैपदविषये लस्यैव यासुटि धातोरित्यस्य विहितविशेषणत्वात् निर्द्दिश्यमानलस्यैवादेश इति नोक्तं फलमिति वाच्यम् लस्य यासुट्यपि लस्य स्थाने आद्युदात्तस्तस् भवतीत्येवमर्थादुत्पद्यमानस्यैवाद्युदात्तत्वेन तत्र यदागमा इत्यस्या अनुवाद विषयाया अप्रवृत्त्या तेन यासुडुदात्तत्वस्य दौर्लभ्यात् । आगमा अनुदात्ता इत्येषोर्थः शेषनिघातमूलक एव । अनुदात्तं पदमिति सूत्रे पदग्रहणस्य परिमाणार्थत्वेन यावतः पदत्वं भावि यावच्च पदत्व भावि तावत्संनिहितानां सर्वेषां शेषनिघातेन पश्चात्प्रवृत्तागमानामपि तेन निघातप्रवृत्तेः । सन्निहितानान्तु तत्समकालमेव निघात इत्यन्यत् अलावीदित्यादौ सिचश्चित्वे तेनेट उदात्तत्वान्न निघात इत्याद्युदात्तश्चेति सूत्रे भाष्यप्रदीपोद्योते निरूपितं अनेन यासुटो ङित्वेप्यवयवे ऽचरितार्थं लिङ्गं समुदाये विशेषणमिति न्यायेन समुदाये ङित्व बोध्यम् । ङित्वोक्तेरिति । अत्र यदुक्तव्यन्तट्टिड्डिति सूत्रे उक्तम् । सुटा यासुड्नेति । आत्मनेपदे चारितार्थ्ये ऽपि परत्वात्प्राप्तो बाधो नेत्यर्थः । विषयभेदादिति । एवञ्च यौगपद्यासंभवरूपविप्रतिषेधाभावाच्च परत्वेन बाध इति भावः । एतेनैधिषीष्टेत्यादौ सुटा सीयुटो येननाप्राप्तिन्यायेन बाधः स्यादित्यपास्तन्तकारथकारयोः सुटः सत्त्वेन कार्यभेदादिति भाष्यकैयटयोः स्पष्टम् । नन्वस्ति च संभवो यदुभयं स्यादिति वार्त्तिकमते ऽस्य समाधेर्वक्तुं शक्यत्वे ऽपि सत्यपि संभवे बाधनं भवतीति भाष्यनये प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनेन बाधवत् सुटापि सीयुटो बाधो दुर्वार इति चेत्सत्यं, यासुड्विषये सीयुटः प्रतिषेधो वक्तव्य इति वचनेनात्र प्रकरणे बाध्यबाधकभावाभावज्ञापनेनादोषादिति निरूपितं भाष्यप्रदीपोद्द्योते। अत एव भ्रेर्जुस् विषये यासुट् सिद्धिरन्यथा जुसा यासुटो बाधापत्तिरिति दिक् ॥ लिङः स ॥ रुदादिभ्य इत्यतः सार्वधातुक इत्यनुवर्त्तते । सकारद्वयस्यापीति । युगपत्प्रवृत्त्या लक्ष्यभेदात्पुनः प्रवृत्त्या वेति भावः । यलोप इति । न च तत्र कर्त्तव्ये ऽङ्गसञ्ज्ञासापेक्षस्येयोबहिरङ्गतया ऽसिद्धत्वमिति वाच्यम् । तस्यामङ्गशब्देन शब्दरूपस्य सप्तम्यान्तोपात्तस्य निमितस्यैव ग्रहणं न तु सञ्ज्ञाया आर्थस्य चेत्यदोषात् । एवञ्चेयोना ऽपरनिमित्तकत्वेनान्तरङ्गत्वमिति बोद्धयम् । सार्वधातुकावयवस्येति किमिति । रुदादिभ्य इत्यतः सार्वधातुकग्रहणमत्रानुवर्त्तते अन्यथा पचेदित्या-

द्दौ दीर्घप्राप्त्या चिकीर्ष्यादित्यादौ अतोलोपप्राप्त्याऽऽनर्थक्येनोभयोरपि बाधः स्यात् मध्येपवादा इति न्यायेन लोपमेव वा बाधेतेति स्पष्टञ्चेदं भाष्यकैयटयोस्तदाह मध्येपवादेत्यादि ॥ उस्यप ॥ अपदान्तात्किम् का उस्रा कोस्रा नचात्र लाक्षणिकत्वमुसः अपदान्तादित्येतत्सामर्थ्येनेह परिच्छेदकन्यायाः प्रवृत्तिज्ञापनात् । अत एवानर्थके ऽप्रत्यये च भिन्द्युत्यादौ पररूपसिद्धिः अवर्णादुसवयवे ऽचीति सूत्रार्थस्तदाह । इति प्राप्ते इति । याशब्दाकारेणेति भावः । नित्यत्वादिति । एकादेशस्य पूर्वान्तत्वेन ग्रहणादिति भावः । यास् इत्येतस्येति ॥ वार्णादाङ्गमित्यनपेक्ष्येदम् । सन्धिरापे इति । आनेमुगिति सूत्रे भाष्ये ऽतो या इति व्यस्तपाठ एव दृश्यते, नन्वेवमपि भवेत्यकारेणेयुसः पररूपं दुर्वारं यदागमा इति न्यायेनेयुस उस्त्वादिति चेन्न, भिन्द्युरित्यसिद्ध्यापत्त्या ऽर्थवत्परिभाषाया इव यदागमा इत्यस्या अप्युस्विषये ऽप्रवृत्तेः । अन्यथा गमसत्वे केवले उस्त्वस्याप्यभावेन तदसिद्धिः स्पष्टैव । क्ङिति च ॥ इह चर्त्वेन गकारोपि निर्दिश्यते तेन जिष्णोः सिद्धिः स्यान्नुरित्यत्रेत्वापत्त्या नार्यङ्क्ङिदित्याशयेनाह गिदित्यादि । निमित्त इति । क्ङिति सति ये गुणवृद्धी प्राप्नुत इत्यध्याहारेण सिद्धं, सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तत्वं बुध्यतइति केचित् वार्त्तिककृता तु तन्निमित्तग्रहणं कर्त्तव्यमित्युक्तं भाष्यकृता क्नोः क्त्विन ज्ञापकेन प्रत्याख्यातं गुणवृद्धिविशेषणत्वे ऽपि क्ङिति अव्यवहिते उपश्लिष्टस्य पूर्वस्य ये प्राप्नुत इत्यर्थस्य संभवेन परिभाषाया दुर्वारत्वात् । अनुवादे परिभाषानेति तु इकोगुणवृद्धी अचश्चेति सूत्रद्वयमेवेत्युक्तं भाष्ये तस्य निषेधस्यानुपलम्भाच्च अधिकरणसप्तमी संभवे उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायेन यस्य च भावेनेति सप्तमी युक्तेत्यप्युक्तं सिद्धसाध्येति न्यायस्य परिभाषया बाध एवोचितः तन्निमित्तग्रहणेन सामर्थ्यात् ज्ञापकेन परिभाषाबाध इति तूचितं इक इति च स्वरूपपरमत्रानुवर्त्तते अर्थाधिकारात्तदाह इग्लक्षणे इति । इक्पदलक्षणे इत्यर्थः । भूयास्तामिति । धातोर्विहितत्तसादीनामित्यर्थेन परत्वादाद्युदात्तश्चेति सूत्रभाष्यरीत्या तस्य यासुटि अन्तरङ्गत्वाद्वा पूर्वं यासुट्यपि निर्दिश्यमानपरिभाषया न क्षतिः ॥ माङि लुङ् ॥ मास्तु इत्यादौ तु निषेधार्थो माशब्दो न माङिति न दोष इति कश्चित् तन्न । आङ्माङोश्चेति सूत्रस्थेन माङो विशिष्टस्य ग्रहणं किमर्थं प्रतिषेधार्थकसंप्रत्ययार्थं प्रमाच्छत्रमित्यादौ माभूदिति भाष्येण तदभावबोधनादिति परे ॥ गापाविहेति ॥ व्याख्यानादिति भावः । अत एव गापोर्ग्रहणे इण् पिबत्योर्ग्रहणमिति उक्तं भाष्ये ॥ भूसुवोः ॥ अत्र पितीत्यनुवृत्तावनु-

वृत्तौ वा फलदोषयोरभावेन तदनुक्तिः । भत्वमिति । तेन कुत्वजश्त्वेन । विद्यमानादिति ॥ तत्त्वञ्च सर्वादेशेनानपहृतत्वं अत एवासीदित्यादौ न दोषः भाष्यात्तु अस्तिसिचो ऽपृक्ते इति सूत्रपाठो लभ्यते तत्र स इति मध्यमणिन्यायेनोभाभ्यां संबध्यते सान्तादस्तेः सान्तात्सिचश्चेत्यर्थः । लुक्यपि स्थानिवत्त्वं नाल्विधित्वात् प्रत्ययलक्षणसूत्रन्तु नियमार्थं विद्युर्यत्वे ऽपि सान्तादिति विशेषणसामर्थ्येन श्रूयमाणसान्तपरं अत एव वार्त्तिककृता सकारः सिच एव विशेषणमित्याशयेन भुव इटि स्थानिवत्त्वप्रतिषेध उक्तः न तु सिज्लुकोपि तन्निषेध आरब्धः सिचस्स इति प्रश्लेषे द्विसकारको निर्देश इत्यस्य भाष्यस्यासङ्गतिःतदुच्चारणाभावादिति भाष्यप्रदीपोद्योते विस्तर इत्याहुः ॥ इतिप्राप्तेइति ॥ प्रत्ययलक्षणेन प्राप्तिः । आदन्तादेवेति विपरीत-नियमस्तु न व्याख्यानात् ञ्निलुङीत्यत्र प्रकृतसूत्रे च भाष्ये स्पष्टमेतत्सर्वम् । अडाटाविति ॥ लुङादिषु यदुक्तं तत्रेति व्याख्यानादिति भावः ॥ लिङ्निमित्ते ॥ हेतुहेतुमद्भावादीत्यादिना आशंसावचनेलिङित्यपि गृह्यते इत्येके अतिपत्ति-रनभिनिर्वृत्तिः उदाहरणे सुवृष्टिभवनसुभिक्षभवनयोर्हेतुहेतुमतोर्भविष्यत्काल-योरनभिनिर्वृत्तिरितो वाक्याद्गम्यते प्रमाणान्तराच्च तयोरतिपत्तिं वक्तावगत्य वाक्य प्रयुङ्क्ते॥ आनि लोट् ॥ उपसर्गात्पर समुदायावयवानिशब्दनकारस्य णत्व-मित्यर्थः प्रहिमानीत्यादौ तु न दोषः अनर्थकत्वात्प्रादीनामनुपसर्गत्वाच्च । एवञ्च लोड्ग्रहणमनर्थकमिति भाष्ये स्पष्टम् ॥ दुरःषत्वणत्वेति । दुरः कृतरेफसान्तस्याप्यत्रानुकरणात्तस्याप्ययं निषेध इति निरूपितम् ॥ अन्तःश-ब्दस्येति ॥ हन्तेरत्पूर्वस्येत्युत्तरमन्तरदेश इति तु देशप्रतिषेधार्थमिति भावः अयनं चेत्युत्तरसूत्रमपि कृत्यच इति सिद्धे देशप्रतिषेधार्थमेव । शेषेविभाषा ॥ अकखादाविति च्छेदः ननु संहिताधिकारात्तद्विवक्षा ऽविवक्षायां रूपद्वय-सिद्धौ विभाषाग्रहणं व्यर्थमत आह ॥ संहितेति ॥ अत्रैकपदशब्देन अखण्ड-म्पदम् । अत एव नित्यासमास इति चरितार्थं अत एवाये अये इत्यादौ पदद्वित्वे संहिता अनित्यैव अखण्डत्वञ्च पदत्वाभाववदुत्तरखण्डत्वन्तेन राजीयतीत्यादौ न दोषः अन्यथा तत्र पक्षे शबेकादेशोपि न स्यादिति बोद्धम् । अर्थनिर्देशश्चेति । भूसत्तायामित्यादिरभियुक्तकृत इत्यर्थः स च क्रियावाचि-त्वबोधार्थं इति भावः पाणिनिस्तु कांश्चिदर्थरहितान्पठति कांश्चिदर्थसहि-तान् अत एव भूवादिसूत्रे परिमाणग्रहणं कर्त्तव्यं कुतो ह्येतत् भूशब्दो धातुसञ्ज्ञो भविष्यति न पुनर्भ्वेधशब्द इति भाष्ये उक्तञ्चुटू इति सूत्रे यदयमि-रितः कांश्चिन्नुमनुषक्तान्पठति उबुन्दिरनिशामने स्कन्दिर्गतिशोषणयोरिति तेन नेरितामिदिद्विधिरिति भाष्ये उक्तं तथा नमोवरिव इति सूत्रे भाष्ये उक्तञ्च

खल्वपि पचादीनांक्रियावचनत्वे यत्नं करोतीति अथ खल्वप्याचार्यश्चित्रयति क्वचिदेकं क्वचिन्नेति । उपलक्षणमिति । अनेकार्था अपि धातवो भवन्तीति भाष्यमत्र मानं तच्च प्रयोगानुसारेणैव नत्वमर्यादं भाष्यस्यापिशब्दात् एवञ्च सेधते गतावित्ति सूत्रे गतावित्युपादानात् षिधगत्यामित्यर्थनिर्देशो ऽपाणिनीय इति बोध्यम् । द्योतका इति अत एवानुभवत्यादेः सकर्मकत्वं अत्रोपसर्गास्त्वित्युक्त्या निपातानां द्योकत्वं वाचकत्वञ्चाभ्युपैति ॥ एधवृद्धौ । अकर्मकः ॥ वृद्धिक्षयभयजीवितमरणं लज्जासत्तास्थितिजागरणं, शयनक्रीडा-रुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुरित्यभियुक्तोक्तेः ॥ टित आत्मनेपदानाम् ॥ आत्मनेपदशब्देनात्र प्रकृतास्तङ एव गृह्यन्ते तेनानस्य नेति भाष्ये स्पष्टम् ॥ सर्वधातुकम् ॥ अपिदिति पर्युदासः । न च व्यवे इत्यत्र परादिवद्भावेन शबिटोरेकादेशस्यापित्वान्ङित्वे गुणानापत्तिः एकादेशस्य पूर्वविधौ स्थानि-वत्त्वेनादोषात् । यत्तु वदन्ति पिदार्द्धधातुकयोरिति पठित्वा इदन्त्यक्तुं शक्यमिति तन्न मृष्ट इत्यादौ मृजेर्वृद्धिः क्ङितिचेति निषेधानापत्तेः ॥ थासः से ॥ तङादेशानाण्टेरेत्वं नेति ज्ञापनायैकारोच्चारणम् ॥ इजादेश्च गु ॥ धातोरिति कास्प्रत्ययादित्यत आम् लिटीति चानुवर्त्तते इयेषेत्यादौ तु नाम् सन्निपातपरिभाषाविरोधात् लिण्निमित्ता हि तस्य गुरुमत्ता इजादेर्गुरु-मतो विहिते लिटिति वा ऽर्थान्न दोषः । इचो गुरो रित्येवानृच्छ इति पऽर्युदासादर्थान्तरस्यासंभवाच्चेजादेर्गुरुमत इत्यर्थ लाभे मतुप् ग्रहणमादि-ग्रहणञ्च स्पष्टार्थं मतुप् ग्रहणादोपदेशिकगुरुमतो ग्रहणमिति तु न युक्तं इदि ऋजीत्यादेरुच्छेश्चामनापत्तेः तत्र हि नुम्न गुत्तरं गुरुमत्ता अनृच्छ इत्यस्य वैयर्थ्यापत्तेश्च आदिग्रहणान्मुख्ये जादेरेव ग्रहणं न तु व्यपदेशिव-द्भावेनेजादेरित्यपि न युक्तं ईङ्गतावित्यादेरयांचक्रे इति माधवाद्युदाहृत-स्यासङ्गत्यापत्तेः न च ऋच्छेर्लिटि गुणविधानसामर्थ्यादेव तत आमभावे सिद्धे ऽनृच्छ इति व्यर्थं आम् बाधापेक्षया नास्मिन्निति परिभाषाबाधेन व्यवधाने ऽपि गुणप्रवृत्त्या तत्साभर्थ्याभावेन तत्सार्थक्यादिति तात्पर्यम् ॥ ज्ञापकादिति ॥ ननु मित्त्वादन्त्यादचः परत्वसामर्थ्यादसञ्जातविरोधित्वन्या-येन सवर्णदीर्घबाधो ऽस्त्विति चेन्न प्रधानसवर्णदीर्घबाधापेक्षया इत्सञ्ज्ञा-बाधस्यैवौचित्यात् ॥ कृञ्चानु । कास्प्रत्ययादिति सूत्रादनुवृत्तमामिति पञ्चम्या विपरिणम्यते लिटि परत उपश्लिष्ठस्य कृञ आमन्तादनुप्रयोग इति सूत्रार्थ-स्तत्फलितमाह ॥ आमन्ताल्लिट्परा इति ॥ आमन्तादिति पञ्चम्या निर्दिश्य-मानपरिभाषया प्रशब्देन चाव्यवहिते एव प्रयोगः । अनुशब्दात्पश्चादेवेति च बोध्यम् । कृञ्ग्रहणेति ॥ कृञ एवानुप्रयोगे ऽनुप्रयोगश्चेत्येव सिद्धे तद्वैयर्थ्यं

स्पष्टमेव । तेषाङ्क्रियेति । एधभृज्ञादयः फलानुकूलव्यापारवाचकाः कृञुत्पत्त्यनुकूलव्यापारवाची भ्वस्ती सत्तानुकूलव्यापारवाचकौ आम्प्रकृतिसमभिव्याहारे चोत्पत्त्यादिकमामन्तार्थफलनिष्ठमेव एवञ्च एधाञ्चक्रे इत्यस्यैककर्तृकवृद्ध्यनुकूलव्यापाराभिन्नपरोक्षानद्यतनभूत उत्पत्त्यनुकूलोव्यापार इति बोधः । संपदिस्त्विति । अभिविधौ संपदाचेति सूत्रे पठित इत्यर्थः । अनन्वितार्थत्वादिति । संपदेर्हि सिद्धवस्तुनो योग्यरूपान्तरापत्तिरूपार्थकत्वादिति भावः द्रव्यं सम्पादयतीत्यादौ तु धातूनामनेकार्थत्वात्स्वस्वत्वाक्रान्तताकरणमर्थः केवलपदेप्यनुप्रयोगो नापाद्यः उत्तरदेशसंयोगानुकूलव्यापारवाचित्वेन तस्यापि विशेषवाचित्वात् एतेन कृसजातीयानान्धातूनामेव प्रत्याहारे ग्रहणात्संपदेर्विशिष्टस्याधातुत्वाच्चिन्त्यमिदमित्यपास्तम् । अतद्गुणेति । आमन्तस्यात्मनेपदानर्हत्वात्प्रत्ययग्रहणाच्चेति भाव तृतीयान्तादिति अनुप्रयोगस्येति कर्मणिघञ् पञ्चम्यर्थे षष्ठी अत्र न प्रत्याहारग्रहणं अनुप्रयोगस्येत्येव सिद्धे कृञ्ग्रहणात् पूर्ववदिति तृतीयान्तादितिः पूर्वशब्देन पूर्वपादानकात्मनेपदभवनं लक्ष्यते तदाह ॥ पूर्ववदेवेति ॥ पूर्ववाक्ये आम्प्रत्ययवदिति तु इन्दांचकारेत्यादावकर्तृगामिक्रियाफले एतद्विहितत्मनेपदवारणाय ॥ न तङिति ॥ इदमुपलक्षणं कानचो ऽपि ॥ एकारोच्चारणमिति । थासः से इत्यत्रत्यमप्येवम् ॥ तेन डेत्यादि । टितआत्मनेपदानामित्यत्र भाष्ये स्पष्टमिदमेकदेश्युक्त्या वस्तुतः परत्वादेत्वे पुनःप्रसङ्गविज्ञानेन डादिषु कृतेषु लक्ष्यैलक्षणस्येति न्यायेन नैत्वमिति लुटः प्रथमस्येत्यत्र भाष्ये स्पष्टम् । कित्स्यादिति ॥ किद्वत्स्यादित्यर्थः ॥ द्विर्वचने ॥ स्यान्यचः पूर्वत्वेन दृष्टस्यैव चक्रे इत्यादौ कार्यभावादचः परस्मिन्नित्यनेनासिद्धेरिदमारब्धन्द्विर्वचनेचीत्यनयोः सामानाधिकरण्यासंभवात् द्विर्वचनशब्देन तन्निमित्तं लक्ष्यते ऽचीत्यनेन सामानाधिकरण्यं तदाह द्वित्वनिमित्ते ऽचीति ॥ प्रत्यासत्त्या तन्निमित्तकादेशस्यैव स्यानिवत्त्वं बोध्यं ऊर्णुनविषतीत्यादावपि तद्भावभाविताामात्रेण निमित्तताश्रयणादचस्तन्निमित्तत्वं किंच लक्ष्यानुरोधेन साक्षात्समुदायघटकतया वा द्वित्वप्रयोजकत्वं निमित्तत्वमिहेति चक्रतुरित्यादिसिद्धिः । एवञ्च द्वित्वेऽजादिप्रत्ययस्य निमित्तत्वे ऽचोपि तत्वं यथा अचो निमित्तत्वेजादिप्रत्ययस्यापि सन्यङोरित्यस्य षष्ठ्यन्तत्वे ऽपि सनो द्वित्वप्रयोजकत्वमस्ति तत्र लोके समवायिकारणातिरिक्ते एव निमित्तकारणत्वव्यवहारादरिरिषतीत्यादौ नेस इकारस्य वा द्वित्वनिमित्तत्वमिति न गुणनिषेधः इसो द्वित्वाश्रयत्वात् तदाहुर्न हि कार्यमनुभवन्कार्यी निमित्तत्वेनाश्रीयते तस्य समवायिकारणत्वादिति तदाशयः । एतेन शयितरिव्रते इति ज्ञापक-

सिद्धं परिभाषान्तरमिति वदन्तः परास्ताः भाष्ये ऽस्यानुक्तेश्च व्याकरणे ऽपि कार्यिणोपश्लिष्टस्यैव निमित्तत्वव्यवहाराच्च । न चारिरिपतीत्यादावित्तथा उपश्लेषस्य समीपसंबन्धरूपस्य भेदनिबन्धत्वात् अचिकिं अधिजगे गाङ्लिटीत्यत्र द्विलकारकनिर्देशेन लावस्थायाङ्गाङादेशस्य सत्त्वाल्लिटि आर्द्धधातुके इत्यादीनां विषयसप्तमीत्वे ऽपि तद्भावभावित्वेनेव तद्बुद्धिभावभावितामात्रेणापि निमित्तत्वस्य वक्तुं शक्यत्वात् अत्र सूत्रोपात्तलिड्बुद्धिभाव एव निमित्तमित्यन्निमित्तत्वाभावः सर्वत्रैव चात्र शास्त्रे बुद्धिकृतमेव निमित्तत्वादिदमेवाचीति ईदृशनिमित्तत्वाश्रयणे लिङ्गं आवृत्त्या कालावधारणमपीत्याह ॥ द्वित्वे कर्तव्ये इति ॥ अचइतिकिं ईजये तत्र हि कित्वनिमित्तत्वात्संप्रसाणस्यादेशेषु कृतेषु प्रवृत्त्यान्निमित्तत्वात् अत्र तन्निषेधे द्वित्वेहलादिःशेषे उत्तरखण्डे संप्रसारणे पूर्वखण्डे संप्रसारणं न स्यात् न संप्रसारणे इति निषेधात् लावस्थायान्तु न कित्वं परैस्तिबादिभिर्बाधात् अत एवासंयोगादित्यत्रापि दित्यनुवृत्तिश्चरितार्थेति दिक् ॥ उरत् चकृदतुरित्यादावभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वं हलादिः शेषे ततो ऽन्तरङ्गत्वातुकि उरदत्वसिद्धये आह ॥ अभ्यासऋवर्णस्येति ॥ इदञ्च दीर्घो कित इति सूत्रे भाष्ये स्पष्टम् । ननृते इत्यादौ तेनैव न्यायेनोरदत्वे कृते हलादिःशेष इति बोद्धम् ॥ प्रत्यये किमिति ॥ अङ्गेन प्रत्ययाक्षेपः किमर्थमिति प्रश्नः ॥ वव्रश्चेति ॥ अन्यथोरदत्वस्यापरनिमित्तत्वात्स्यानिवत्त्वाभावेन नसंप्रसारणे इति निषेधानापत्तिरत एवासप्तमसमाप्तेरङ्गाधिकार उक्तो भगवता । नच प्रागभ्यासविकारेभ्योङ्गाधिकारे ऽपि अभ्यासेन प्रत्ययाक्षेपो भविष्यतीति वाच्यम् । अभ्याससञ्ज्ञैकवाक्यतया लिपरे ये द्वे तयोः पूर्वस्य ऋतो ऽदित्यर्थलाभे ऽपि अत्वस्य परनिमित्तत्वानुपपादनात् किंच सन्यङोरित्यस्य षष्ठीत्वेन तद्विषये सन्नन्तस्य ये द्वे इत्यर्थेन सर्वथा ऽपरनिमित्तत्वन्दुरुपपादं अङ्गसञ्ज्ञैकवाक्यतया तु प्रस्यत इत्यस्यावृत्त्या न दोषः अजर्घाश्चर्करीतीत्यादौ यङ्लुगन्ते नलुमतेति निषेधानित्यत्वेन न क्षतिरिति भावः वस्तु तस्तेन तदाक्षेपाभावे ऽपि अङ्गसञ्ज्ञाद्वारा ऽस्य परनिमित्तत्वं नियमतः परबुद्धेः पूर्ववृत्तितया परनिमित्तत्वात् एवञ्च चर्करीत्यजर्घा इत्यादौ दोषशङ्कैवनेति दिक् । ननूपदेशो ऽनुदात्तस्यैकाज्त्वव्यभिचारात्किन्तेनेति पृच्छति ॥ एकाच इति किमिति ॥ न च वधिव्यावृत्त्यर्थन्तत् तत्सामर्थ्येनोपदेशमात्रे एकाचो ग्रहणादिति वाच्यं, आद्युदात्तनिपातनेन सिद्धेरित्यभिमानात् । एकाज्ग्रहणेनेति । तदर्थकैकाच इति पदेनेत्यर्थः अन्यथोपदेशे ऽनेकाचामुदात्तत्वस्यैव सत्वेन तद्वैयर्थ्यं स्पष्टमेवेति भावः । ननु वधादावा-

द्युदात्तनिपातने ऽपि न सिद्ध्यति सत्युपदेशे तस्यानुदात्तत्वात्ततेर्नेच तत्सामर्थ्यङ्गीकारवादत आह ॥ अचइत्येवेति ॥ उपात्तविभक्त्यर्थत्यागे माना-भावेन तद्विवक्षेति भावः ॥ तद्वत इति ॥ समुदाये एकत्वविशिष्टाज्रूपत्वा-रोपेणेति भावः ॥ सिद्धे इति ॥ शब्दविशेषमनादृत्यार्थविशेषपुरस्कारेणैवोक्त-परिभाषाप्रवृत्तेः सूपपादत्वादिति भावः ॥ सामर्थ्यादिति ॥ उपदेशमात्रे य एकाजेवेत्यर्थकल्पनयेत्यर्थः ॥ अनेकाच्त्वादिति ॥ हनो वधेति सूत्रे ऽस्यादन्ततया भाष्ये उक्तत्वात् अत एवावधीदित्यत्रातोहलादेरिति वृद्धिर्न एवञ्चाद्युदात्तनिपातनन्तस्य निष्फलमिति भावः वस्तुत आरोपितार्थबो-धकत्वे तात्पर्यग्राहकाभावेनाजन्तस्येत्यर्थवारणायं चैकपदस्यावश्यकत्वे ऽपि अवच्छेदकावच्छेदेनान्वयस्योत्सर्गिकत्वेन लत्यानुरोधेन च तथैवान्वयाद्बुधि-व्यावृत्तिः स्पष्टाचेयं रीतिरुपदेशे ऽत्वत इति सूत्रे भाष्यकैयटयोः । तत्र हि घसौ प्रतिषेधाभावाय हलादिग्रहणं कर्त्तव्यमिति भाष्यमुपादाय उपदेशग्रह-णमुभाभ्यां संबध्यते उपदेशेयो ऽत्वान् हलादिश्चेति, न च घसिराद्युपदेशे हलादिरिति कैयटेनोक्तं यद्वा यस्य साक्षादुपदेशः संभवति तस्य मुख्यत्वात्स एव गृह्यते न तु स्यात्युपदेश इति न दोषः । इयमपि रीतिरुपदेशे त्वत इति सूत्रशेषे ऋतोभारद्वाजस्येति सूत्रे च भाष्ये ॥ परेत्वेकाज्ग्रहणव्यावर्त्योऽत्र वधिरेव किंच उत्तरार्थमेकाज्ग्रहणं अत एव जागरितवानित्यादावुपदेशे उगन्तत्वमादाय श्र्युक इति इणिनषेधो न तत्रोपदेशानुवृत्तिश्च स्तीर्यमि-त्यादाविणिनषेधायेत्याकरे स्पष्टम् । श्तिपा शपेति नास्त्येव भष्यानुक्तत्वात् न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदे नुदात्तादेकाचः श्रूयमाणादित्यर्थे सनीट् प्रतिषेधोवक्तव्यो बिभित्सतीति दोषोपन्यासवद्यङ्-लुकि दोषानुपन्यासेन तत्रेडिष्टः यङ्लोपे इत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयं किंच तस्य तद्विषयत्वे यङ्लोपे स्थानिवत्वस्येव यङ्लुक्यु-पायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम् । इद्विषये यङ्लुको लोके ऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात् अन्यथै-काज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमित्युत्तरस्य च भाष्ये निरा-लम्बनतापत्तेः अजर्घा बेभिदीतीत्यादौ श्नम् श्यनादयस्तु चर्करीतञ्चेत्य-स्यादादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तस्याप्राप्त्या न छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टाप्रयोगेष्वदृष्टानामभावो बोध्यः । भाषायान्तु तादृशानामभाव एव श्तिपादिनिर्देशास्तु लिङादिनिमित्तक भवतेर इत्या-दिस्यतन्निर्देशवन्नार्थसाधका इत्याहुः ॥ इणःषीध्वम् ॥ षीध्वमि षकारोच्चार-णन्तु ब्रुवीध्वमित्यादावेकदेशविकृतन्यायेन सीध्वमः सत्वेन ढत्ववारणाय

अङ्गात्किं वेविषीध्वं, अस्य षीध्वमो ऽनर्थकत्वे ऽपि अर्थवत्परिभाषाया अनित्यत्वज्ञापनायेदन्तेनानिनस्मन्ग्रहणानीति सिद्धमिति केचित् ॥ क्सचेति ॥ यद्यपि क्सजित्युक्तौ लाघवमस्ति तथाप्येकस्यैव लाभार्थं प्रत्याहारग्रहणक्लेशो दुर्ज्ञेयताचेति भावः तदुक्तमत उत्सार्वधातुके इति सूत्रे भाष्ये अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्त्तुर्वचनान्मनीषिण इति । पररूपापवादइति । पररूपपदमेकादेशोपलक्षणं आनृजे इत्यादौ गुणस्यैव प्राप्तेः अभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वापरस्थित हलादिशेषोत्तरं दीर्घ इति भावः अत्र लिटीति वर्तते तेन ऋधातोरशधातोश्च यङ्लुकि नायं दीर्घ इति केचित् आदिग्रहणं तदन्तविधिनिरासार्थम् ॥ धिच ॥ धादौ प्रत्यय इति तेन पयोधावति पयोधावनामित्यादौ नलोपः अत एव भाष्ये सडीत्युक्तं सनः सकारमारभ्य महिङो ङकारेण प्रत्याहारः चकाधीत्येवेष्यते इति भाष्योक्तेरयं सिचो लोप इति सडीत्यस्यैकदेश्युक्तं प्रत्याख्यानं न युक्तं तत्र सङो ऽन्यस्यधादेःसान्तादसंभवेन प्रत्यय इत्येवाध्याहृतं मूलकृता । यत्तु पदस्येत्यधिकारेण प्रत्यासत्या व्याख्यानेन चाखण्डैकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणमिति कैयटेनोक्तं तत्त्वति क्लिष्टन्ततो वचनमेव ज्याय इति परे ॥ हणीति ॥ तासस्त्योर्लोप इत्यतस्तासस्त्योरिति सः सीत्यतः स इति च वर्तते । लोट इति । लोडादेशस्येत्यर्थः ॥ सलोप इति ॥ लिङ्सलोप इत्यनेन ॥ इटोत् ॥ तकार उच्चारणमात्रफलको न विभक्तावित्यस्योच्चारणमात्रफलके ऽप्रवृत्ते रुत्वघेरित्यत्रोपपादितत्वादित्सञ्ज्ञया निवर्त्तते षत्वमिति लक्ष्यभेदात्पुनः प्रवृत्तिरिति भावः युगपदेव वोभयोः षत्वम् ॥ ढधयोरिति । मतभेदेनेतिशेषः ढस्येत्येव युक्तम् । इति मते त्वित्यनेन तन्मते भाष्याननुग्रहरूपस्य युक्त्यभावरूपस्य चास्वरसस्य बोधनात् ॥ ऊदृदन्तैरिति ॥ दीर्घाकारान्तानामुदात्तत्वादेव बभूयाततन्थेति इडभावनिपातनमारब्धम् ॥ एकाच इति ॥ तेन जागृधीतीत्यादीनां व्यावृत्तिः ॥ शक्लिति ॥ भाष्ये त्वनुबन्धरहितः पाठो दृश्यते ॥ पचिति ॥ डुपचष् प्रसिद्धत्वात् । सृजिर्दिवादिस्तुदादिश्च बुध्यतीति यद्यपि भाष्ये श्यनानिर्देशो नास्ति तथापि माधवादिप्रामाण्यादुक्तः तृप्यति दृप्यतीति ॥ अत एव शे मुचादीनामिति सूत्रभाष्ये तृपितो दृपित इत्युदाहृतम् । लुप् तुदादिरेव न दिवादिर्व्याख्यानात् । शप् धातौ भ्वादेर्दिवादेश्च ग्रहणम् ॥ श्लिष्यतीति ॥ श्यनानिर्देशः श्लिषआलिङ्गन इति सूत्रभाष्यप्रामाण्यात् तत्र हि श्लिष इति विभक्तविहितक्सस्य पुषाद्यङ्बाधकत्वमुक्तं अनिट इत्यनुवर्त्तनाद्वाहार्यस्य सेटो ग्रहणाभाव इति कैयटः ॥ मृषेर्भाष्येनार्षः पाठः मृषस्तितिक्षायामिति सेड् निष्ठायां अकित्वविधानात् । अत एव मूले मृषिर्नोक्तः ॥ पुष्येति

श्यना निर्देशो माधवादिप्रामाण्यात्। वसतिर्भ्वादिः, वसिः प्रसारणीति भाष्यात्॥ शक इति। चन्द्रदुर्गाभिमते न, वस्तुतो भाष्ये लृदित्पाठाभावेन दिवादेरप्यनिट्त्वमेव । विद्यतिर्विनदिति ॥ विकरणनिर्देशस्य व्यावर्त्यं व्यावर्त्यान्तरखण्डनव्याजेन दर्शयति॥ विन्दतिरिति। भाष्येपीति॥ विन्दति विनत्ति विद्यतीति पाठ इति भावः। संप्रत्युपलभ्यमाने विन्दि विद्यतीति पाठे ऽपि विन्दिग्रहणेनोभयोर्ग्रहणं वेत्ति विन्दतीति प्रयोगस्य विन्देरनुकरणादिटः सत्वात्। अत एव यस्य विभाषा अविदेरिति वक्तव्यं इह माभूत् विदितः तर्हि वक्तव्यं न वक्तव्यं यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः शब्विकरणस्य विभाषा लुग्विकरणश्चायमिति यस्य विभाषेति सूत्रे भाष्ये उक्तं तौदादिकस्यापि सेट्त्वे अविदेरिति वार्त्तिके तद्ग्रहणमेव स्यात् एवञ्च यदुपाधेरित्याश्रयणे ऽपि तदर्थं वार्त्तिकस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः। मम तु त्रयाणामनुदात्तत्वेन वार्त्तिके लुग्विकरणस्यैव ग्रहणमिति न दोषो ऽत एव ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थे परिवेत्तेति तृजन्तप्रयोगः सङ्गच्छते। यत्तु कैयटेन तत्रत्यं भाष्यमुपादाय वेत्तिरत्र विवक्षितो विद्लाभ इत्यस्य तु प्रतिषेधो भवत्येव विन्न इति विद्यति विनत्योस्त्वनुदात्तत्वादिट्प्रतिषेधः सिद्ध्यति तदेतेन परास्तन्तौदादिकस्यापि सेट्त्वे अविदेरित्यनेन वेत्तेरेव ग्रहणे बीजाभावात् ॥ नवेति ॥ तेन रक्तं तदस्मिन्नन्नं प्राये क्ताङ्क्तमितप्रतिपन्नाः शुष्कधृष्टौ क्तेन नञ्विशिष्टेनेति निर्देशात् नुन्नो मग्नः पुष्टो मङ्क्ता मङ्क्ष्यमित्यादि भाष्यव्यवहाराच्च वसतिक्षुधोरिट् नुदविदोन्दत्रा मस्जि नशो-र्झलीत्यादि गमकाच्च ततवद्वा नुन्नवद्वेति भाष्यप्रयोगाच्चेति भावः॥ अकर्मक इति। देवदत्तो यज्ञदत्तं स्पर्द्धते इत्यत्र स्पर्द्धापूर्वके शब्दने वृत्तिर्बोध्या। शर्पूर्वाः ॥ हलादिरित्यतः शेष इत्यनुवर्त्तते अत्रादिरित्यनुवर्त्तते तत्र शर्व्यतिरिक्तवर्णापेक्षया धात्वादिभूता इत्यर्थः। तेन वव्रश्चेत्यत्र चस्य न शेषः। खयः किं सस्नम्। शपूर्वाः किं शर्पूर्वा इत्युक्तौ उखादिष्वपि खयः शेषापत्तेः॥ आशिष्येवेति ॥ आशीःप्रतिपादकनाथ एवेति वाच्योर्थः अर्थान्तरे शेषादिति परस्मैपदमेव॥ अत एक ॥ एकशब्दो ऽसहायवाची द्विवचनान्तेन समासः द्वयोरेव मध्यसंभवादित्याह ॥ असंयुक्तेत्यादि ॥ लिटीत्यादेशविशेषणं एकदेशान्वयेपि सौत्रत्वाद्वृत्तिस्तदाह ॥ लिण्निमित्तेति ॥ तन्निमित्तादेशादिभिन्नमित्यर्थः। निमित्तञ्च प्रत्यासत्त्योपस्थितो लिडेवेत्याशयेनाह॥ क्ङिति लिटीति॥ गमहनेत्यादितो यद्यपि क्ङितीत्यनुवृत्तं तथापि लिटो ङित्वासंभवात्किन्तीत्युक्तम् ॥ अभ्यासलोप इति ॥ विशिष्टविधिरत्र प्राप्ताप्राप्तविवेकेन च लोपमात्रे विधेयता पर्यवस्यति । यद्वा समासेप्युद्देश्यविधेयतयान्वयोस्त्व

सति तात्पर्यं क्व चित् । लिटीति किं पापच्यते । अभ्यासविकारे बाध्यबाधकभावाभावेन दीर्घात्पूर्वं कृते वाभ्यासदीर्घे एत्वाभ्यासलोपौ प्राप्नुतः किं च परत्वादेत्वाभ्यासलोपस्य दीर्घत्वेन बाधः सकृद्गतिन्यायाच्च न पुनस्तौ इति भाष्ये उक्तं शब्दान्तरप्राप्त्या च लोपो न नित्यः अभ्यासविकारेषु न बाध्यबाधकभाव इति तु ज्ञापकसिद्धस्यासार्वत्रिकत्वान्नाश्रीयत इति तदाशयः। एतेन यत्रान्यतरस्मिन्कृते सर्वेषां प्रवृत्तिस्तद्विषयः स न्याय इति कैयटोक्तमपास्तं दीर्घकृते इत्वस्याप्राप्त्याऽचीकरदिति गुणोयङ्लुकोरिति सूत्रोक्त तदुदाहरणपरभाष्यविरोधापत्तेः ॥ थलि च से ॥ सेटीत्येव सामर्थ्यादेवाक्लिल्लिड्विषयत्वे लब्धे थल्ग्रहणं स्पष्टार्थम् ॥ तेष्विति ॥ देधे इत्यादिषु दकारादिषु सत्स्वपीत्यर्थः ॥ एकेत्यादिकिमिति ॥ आदतुरित्यादौ हल्मध्ये इत्येतावतापि वारणसंभवादिति प्रश्नः नच बभणतुरित्यत्राभ्यासे चर्त्त्वस्यासिद्धत्वादेत्वादिस्यादिति वाच्यम् । फलिभजिग्रहणेनैत्वाभ्यासलोपयोरभ्यासादेशस्यासिद्धत्वज्ञापनात् अनादेशादेरित्यादिग्रहणन्तु हलादिः शेषमादाय सूत्रस्यासंभववारणाय स्पष्टार्थम् । उत्प्लवनमुत्प्लुत्यगमनम् ॥ इदितो ॥ इदित इति कर्मधारयेण धातोर्विशेषणान्तेनेदिदन्तस्य धातोर्नुम् विधानाच्चलिङ्गादौ न दोषः । धातोरिति धातूपदेशावस्थायां नुमर्थन्तेन हुण्डेत्यादौ गुरोश्च हल इत्यप्रत्ययसिद्धिः अनुवर्तमानमङ्गस्येत्यङ्गत्वयोग्यस्येत्यर्थकं बोद्धन्तासौ तु न दोषः तास एव वक्तुं शक्यत्वात् । सिच्यपि न दोषः सच एव वक्तुं शक्यत्वादिति स्पष्टं भाष्ये ॥ श्विन्दते इति ॥ श्वेतो भवतीत्यर्थः । अभिवादनं नतिस्तत्पूर्वकमाशिषां वाचनञ्च । स्वप्न आलस्यं निद्रागतावस्थाविशेषश्च । न शस ॥ गुणशब्दोऽत्र नादेङ् मात्रपरः शसि ददि ग्रहणवैयर्थ्यापत्तेः व्यपदेशिवद्भावेन गुणावयवत्वसंभवात् । अतो व्याख्यानाच्च लक्षणया गुणशब्देन भावितपरः स इति बोद्धम् । अर्थमित्यादि । आस्वादनमनुभवो रुचिश्च । धात्वादेः ॥ अत्र सुब्धातुव्यावृत्तये उपदेश इत्यनुवृत्तेरावश्यकतया षडित्यादेरपि तेनैव व्यावृत्तौ धातुग्रहणं स्पष्टार्थम् आदेरिति लषतिव्यावृत्तये, षोपदेशफलन्त्वसिष्वददिति ॥ ऊर्दमाने ॥ मानं सुखञ्चादास्वादने ॥ उपधायाञ्च ॥ सिपिधातोरित्यतो धातोरिति र्वोरुपधाया इत्यतो र्वोरिक इति हलि चेत्यतो हलीति चानुवर्त्तते धातोरित्यस्याभावे पदाधिकारस्य सत्त्वेन पदोपधाभूतयोरित्यर्थे ऊर्द्धत इत्यसिद्धिः सूत्रन्तु क्विबन्ते ऊर्द्धित्यादौ चरितार्थम् । कुर्दखुर्दगुर्देति पृथग्धातुः ॥ सेगिति ॥ भाष्ये क्वचित्स्त इति दीर्घान्तस्य पाठदर्शनादुभयोपादानं यद्यप्येकाच इत्यत्र भाष्ये न दृश्यते तथापि यङ्विधौ सोसूच्यत इति भाष्योदाहरणात्पूरितं सेगादिपर्युदासाद्वा तल्लाभः । यद्यपि भाष्ये

ष्वक्कति ने दृश्यते तथापि सुब्धातुष्ठिवुष्वक्कतीनां प्रतिषेध इति वार्त्तिक-बलात्पठितः ष्ठिवेस्तु न सत्वं यादित्वादिति बोध्यम् । नरपरेति सूत्रे सृपि सृजि स्पृशि स्पृहीनामपोपदेशत्वे ऽपि पूर्वपदादिति सूत्रेण प्राप्तषत्वनिषेधार्थं ग्रहणं तत्र हि आदेशप्रत्यययोरिति न संबध्यते अत एव द्विषाहस्रमित्यादौ छन्दसि तेन षत्वसिद्धिरिति वृत्तौ स्पष्टम् । पूर्वपदादिति सूत्रे च छन्दसीति संबध्यते यद्यपि छन्दसि दृष्टानुविधिस्तथापि छान्दस्यन्यनिषेधवदिदमपीति बोध्यम् । ग्रथि कौटिल्ये । कौटिल्यं शाठ्यं वक्रता वा ॥ श्लाघायामिति । अविद्यमानगुणसंबन्धज्ञापनं श्लाघा । अथाऽष्ट्रिंशदिति । अष्टत्रिंशदिति पाठे भिन्ने पदे ॥ इट ईटि ॥ संयोगान्तस्येत्यतो लोप इति रात्सस्येत्यतः सस्येति चानुवर्त्तते ॥ वदव्रज ॥ हलन्तत्वादेव सिद्धे ऽतोहलादेरित्यस्य बाधनार्थमनयोर्ग्रहणम् । तदन्तविधिनैव सिद्धे ऽन्तग्रहणं स्पष्टार्थम् । नन्वज्ग्रहणसामर्थ्यान्नेटीति निषेधाच्चानन्त्याचो ग्रहणे सिद्धे हलन्तग्रहणं व्यर्थमिति चेन्न इत आरभ्य वृद्धिभाज एव सिच्परत्वेन विशेष्यन्त इत्यर्थज्ञापनार्थन्तत्सत्वात् एवञ्चाराङ्क्षीदित्यादिसिद्धये वर्णग्रहणे जातिग्रहणाय तदावश्यकं अत एव लावस्थायामडागमे ऽपाक्षीदित्यादावटो न वृद्धिः विलोडनं क्षोभणम् ॥ निषेधे प्राप्ते इति ॥ इदमुपलक्षणं अवष्टभ्नातीत्यादावप्राप्तस्य विधानात् ॥ उपसर्गात्सु ॥ अभिषावयतीति णयन्तेपि षत्वं भवत्येव शब्दशक्तिस्वभावेनोपसर्गाणां प्रकृत्यर्थविशेषणतायां एव स्वीकारात् तदुक्तं भाष्ये सुनोत्यादीनां षत्वे णयन्तस्योपसंख्यानमधिकृत्वादभिषावयति न वा ऽनन्यत्वात् नच नात्र सुनोतिं प्रति क्रियायोगः किं तर्हि सावयतिं प्रतीति सुनोतिं प्रत्येव क्रियायोगो नासावेवं प्रेष्यते सुनुअभीति किं तर्हि उपसर्गविशिष्टमसौ प्रेष्यते अभिषुणवतीति अत्र वचनप्रत्याख्यानयोः समफलत्वाय नासावेवमित्यादिभाष्येण च मदुक्ते एव तात्पर्यं लभ्यते ॥ सदिरप्र ॥ अप्रतेः किं प्रतिससाद । ननु सदेरालम्बनाविदूर्ययोर्वृत्त्यभावादेवासंबन्धः सिद्धो ऽत आह ॥ किंचेति ॥ अवाच्चा । आविदूर्यं सामीप्यं अवष्टब्धा गौः निरुद्धाऽस्ति समीपे आस्ते इत्यर्थः ॥ परिनिविभ्यः ॥ सेवेत्यत्राकार उच्चारणार्थः । सितसयौ विज्प्रकृतिकौ व्याख्यानात् ॥ स्यादिष्व ॥ प्राक्सितादित्यस्य संबन्धार्थं प्राक्सितादित्युत्तरमिदं पठितं नचाभ्यासस्य नैरर्थक्यात्तस्य षत्वाप्राप्त्या कथमस्य नियमार्थत्वमिति वाच्यं द्विःप्रयोगत्वादभ्याससकारस्यापि अर्थवत्सुनोत्यादिसंबन्धित्वात्ततः । अर्थवत्सुनोत्याद्यवयवत्वमिव तत्संबन्ध्यवयवत्वस्यापि अत्र षष्ठ्यर्थत्वात् । यद्वा अत्र प्रकरणे तत्तद्धातोरिव तदानुपूर्वीकस्य च ग्रहणं व्याख्यानात् । अत

एवानुषस्यन्दे इत्यादावनुविपर्यभिनिभ्य इति अभ्यासस्य षत्वम् । स्यादिष्विति नियमस्तु प्राक्सिताच्चेदभ्यासस्य षत्वं तदा स्यादिष्वेवेत्येवमिति नात्र तस्य प्राप्तिः सुपिसूति समा इति सूत्रे भाष्ये सर्वमिदं स्पष्टं तत्र हि भाष्ये विसुष्वापेति अभ्यासस्य षत्वं प्राप्नोति नच स्यादिष्विति नियमात् भविष्यति प्राक्सितसंशब्दनान्नियमः उत्तरश्च सुपिः एवन्तार्थ्वनर्थकत्वात् नचैवं विषुषुपुरिति न सिद्ध्यति इति वाच्यं सुपिभूतस्य द्विर्वचनादित्युक्तं, सुपिभूतस्येति प्रतीके यद्यपि कैयटेन द्विःप्रयोगे स एव सुपिर्द्विरुक्त इति समुदायाश्रयमेव षत्वमिति व्याख्यातं तथापि दयतेर्दिगीति सूत्रस्थभाष्यविरोधात्समुदायस्य सुवित्वानुपपत्तेश्च मदुक्तव्याख्याने एव भाष्यतात्पर्यं दिगीति सूत्रस्थभाष्यन्त्वये तनादिगणे स्फुटीकरिष्यते ॥ गङ्गां विसेधतीति । विप्रतिषेध इत्यत्र सेधतेर्गताविति निषेधो न तस्य विरोधार्थत्वे न गत्यर्थत्वाभावात् । सिषेधेत्यादावादेशप्रत्यययोरिति षत्वं भवत्येव अनन्तरस्येति न्यायेन सेधतेर्गतावित्यनेनादेशप्रत्यययोरित्यस्यानिषेधात् इति केचित् । सिचो यङीत्यादिसाहचर्यात्सर्वषत्वनिषेध उपसर्गादित्यस्य तु नात्र संबन्धो विच्छिन्नत्वात्तेन गङ्गां विसिषेधेत्येव यद्यभिधानमस्तीत्यन्ये ॥ स्वरतिसूति ॥ सूतीत्यत्र गुणाभावः सौत्रः धूञः सानुबन्धकनिर्देशो धू विधूनने इत्येतद्व्यावृत्त्यर्थः इट्सनिवेत्यनुवर्त्तमाने वा ग्रहणं लिङ्सिचोरात्मनेपदेष्वित्यस्य निवृत्त्यर्थं, नच स्वरतिग्रहणसामर्थ्यादेव तन्निवृत्तिः सिद्धा ऋतश्चेतीड्विकल्पस्य सिद्धत्वादिति वाच्यं स्वरतिग्रहणं नित्यार्थं स्यादिति तस्याज्ञापकत्वादिति कैयटः ॥ चकार इदिति ॥ तत्फलन्तु नाग्लोपीति ह्रस्वनिषेधः ॥ अतो हलादेः ॥ अत्राङ्गान्त्ये ऽकारासंभवाद्धलादेरिति सामर्थ्याच्चाङ्गस्याकार इति वैयधिकरण्येनान्वयः, हलः परस्याङ्गावयवकारस्येत्यर्थेन सिद्धे आदिग्रहणं स्पष्टार्थं अचकासीदित्यादौ तु चकाराकारे नातिप्रसङ्गः सिच्परत्वेनाकारविशेषणात् । नन्वेवं लघोरिति व्यर्थं अतक्षीदित्यत्रापि येननाव्यवधानन्यायेनैव वारणसंभवादिति चेन्न, स्पष्टार्थत्वात् अत इति तु अकुटीदित्यादौ वृद्धिवारणाय ॥ नेर्गद । अत्राडव्यवायेपीति वर्त्तते तेनाकारादिव्यवधानेपि णत्वं यद्यपि तत्र सूत्रे रेफषकारयोर्निमित्तयोर्निमित्तिनश्च नस्याडादिव्यवाय आश्रितस्तथापि यत्र यन्निमित्तं निमित्ती च तयोरप्यडादिव्यवाये णत्वं, अस्ति चात्र गदादेर्निमित्तत्वं नेर्निमित्तित्वमिति स्पष्टं भाष्यकैयटयोः । धात्वादेरित्यनुवर्त्तनादाह धात्वादेरिति । अत्रोपदेश इत्यनुवृत्त्या णादिनामधातुव्यावृत्तिर्बोद्ध्या । नाटीति । नट अवस्पन्दने चुरादिरेव व्याख्यानात् तेन भ्वादिर्णोपदेश एव । आहुरिति । भाष्यविरोधो ऽनाकरुचिः ॥ उपसर्गाद ।

पूर्वपदात्सञ्ज्ञायामित्यतः पूर्वपदादित्यनुवृत्तौ तदाक्षिप्तसमासे एव स्यादतो ऽसमासेपीति । ननु पूर्वपदाधिकारस्यात्र निवृत्तिर्व्याख्यानत एव सिद्धाविदं व्यर्थं न चासञ्ज्ञायां पूर्वपदादिति नियमव्यावर्त्तितणत्वप्रतिप्रसवाय समासासमासयोर्विशिष्यविधानार्थं पूर्वपदादिति दृष्टोपसर्गादसमास इत्यस्यासिद्धा नियमेन व्यावृत्तेः कर्तुमशक्यत्वात् नचैतत्प्रकरणे प्रकरणेनसिद्धं न तु सूत्रे सूत्रमित्यर्थज्ञापकमिति वाच्यं रषाभ्यामित्यत्र समानपदे इत्यस्याखण्डपदे इत्यर्थेन पूर्वपदादित्यस्य विध्यर्थत्वेन ज्ञापकासंभवाद्‌िति चेन्न । स्पष्टार्थत्वात् । तस्मात् । तच्छब्देनात आदेरिति कृतदीर्घः परामृश्यते उपस्थितत्वात्तदाह दीर्घीभूतादिति । अत्रापि लिटीति वर्त्तते दन्दशूकस्या क्रियात्वादाह ॥ दन्दशूकक्रियायामिति ॥ दन्दशूको विशेषः ॥ वदनैकदेश इति ॥ तत्क्रियायामित्यर्थः । आदिर्ञि ॥ ञिकारीयतीत्यादौ नेदन्तेषामनभिधात् । यत्तूपदेश इत्यनुवृत्तेस्तत्र न दोष इति तन्न, तस्यास्वरितत्वात् । किंच तदनुवृत्तावादिग्रहणवैयर्थ्यापत्तिः पट्वादिशब्दे उपदेशाभावादेव तदप्रवृत्तेरित्याहुः ॥ द्विचत्वारिंशदिति । विभाषा चत्वारिंशत्प्रभृतावित्ति विकल्पविधानादात्वाभावः ॥ अपोपदेशत्वादिति ॥ सेकः पर्युदासादन्ययोर्दन्त्याजन्तसादित्वाभावादित्यर्थः ॥ रुदुपधेभ्य इति ॥ यद्यपि त्रिभिदतुरित्यत्र कित्वं नित्यं तथापि रुदुपधे तदनित्यङ्गुणे संयोगात् परत्वात् तत्र परत्वात् गुणे प्राप्ते इदं, कित्वावकाश ईजतुरित्यादिः गुणावकाशश्चेततीत्यादिः । परे तु रुदुपधविषयैतल्लक्षणोपप्लवकृतकित्वस्यानवकाशत्वमेव तदुक्तं भाष्ये उक्तं वा क्तस्यानवकाशत्वादपवादो गुणस्येति यथा क्तस्य कित्वसामर्थ्यादेवालित्तदित्यादौ गुणो बाध्यते तथेह रुदुपधविषयैतल्लक्षणोपप्लवप्रापितातिदेशसामर्थ्यादित्यर्थ इति कैयटः । न च परत्वाद्गुणस्यैतद्विषयलक्षणोपप्लव एव नेति वाच्यं, असंयोगादिति कित्त्वस्यैतद्विषये निषेधातिदेशकत्वेन निषेधाश्चबलीयांस इति न्यायादत्र विषये विप्रषेधाप्रवृत्तेः । नच संप्रसारणविधौ कित्वस्य कृतार्थत्वात् दुर्बलेनानेनातिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बल इति विधिरनेन स्वर्द्धत इति परत्वप्रवृत्तिरस्त्येवेति वाच्यं, विचति गृह्णातीत्यादावतिदेशप्राप्तङित्त्वस्य संप्रसारणेन कृतार्थतया तदनन्तरप्राप्तगुणेन त्वदुक्तरीत्यातिदेशप्राप्तगुणनिषेधबाधापत्तेः एवञ्च विषम उपन्यासः अनवकाशं क्तस्य कित्वं इह पुनरुभयं सावकाशमित्यादिस्तदुत्तरभाष्यमन्य एकदेश्युक्तिरित्याहुः । उवोखेति । द्विर्वचनेचीति निषेधात्पूर्वन्द्वित्वे कृते उकारस्य वर्णादाङ्गस्य बलीयस्त्वात्सवर्णदीर्घं बाधित्वा गुणे कृते उवङ् । एतेन गुणस्य स्थानिवत्वनान्तरङ्गत्वात्सवर्णदीर्घः स्यादित्यपास्तं पूर्वस्यैव विधौ स्थानिव-

त्वात् । उवङि तु न स्थानिवत्त्वमसवर्णग्रहणसामर्थ्यात् । सन्निपातेति । आमि-सति धातोर्णल्परत्वव्याघातः स्यादिति भावः । वार्णादिति । अत्रह्यभ्यास-स्येति सूत्रं ज्ञापकं तद्धि इयेषेत्यादावियङाद्यर्थं तत्र पूर्वप्राप्तगुणवृद्ध्योर्द्विर्व-चनेचीति निषेधे द्वित्वोत्तरं प्राप्ते गुणवृद्धी बाधित्वा ऽन्तरङ्गत्वात्सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः । परत्वाच्चेति । अस्य परकालप्राप्तिकत्वादि-त्यर्थः । एवञ्चाभ्यासविकारे बाध्यबाधकभावाभावेन ह्रस्वहलादिःशेषयोर्युगप-त्प्रवृत्तौ ततः परकालो दीर्घ इत्यन्तरङ्गत्वाद्दीर्घत्वं स्यादिति न वाच्यमिति भावः । अनिदितामिति । इदङ्कुञ्चधातु विषयङ्क्रुञ्चौ त्वनिदितामिति न प्रव र्त्तेते परेश्चघेति सूत्रस्थभाष्यप्रामाण्येनास्य ञोपधत्वान्नकारजावनुस्वारपञ्चमा-विति तु प्रायिकं तदाह । कुञ्च्यादिति । जकाररहितपाठस्त्वपपाठः । इति म-तेत्विति । इदमेव युक्तं तपरकरणफलस्य भाष्यानुक्तत्वात् । अजेर्व्ये । अत्र वालि-टीत्यतो वेत्यनुवर्त्तते तेन व्यवस्थितविभाषा तेन घञपक्यप्सुनल्युटि वा वलादा-वार्द्धधातुके वा अन्यत्र नित्यमेव अत्राघञपोरिति न वक्तव्यं स्पष्टञ्चेदं भाष्ये । एवञ्चैतद्विकल्पसामर्थ्याद्वीधातोरज्यर्थेसार्वधातुके एव प्रयोगो नार्द्धधातुक इति बोध्यम् । स्वरदीर्घेति । पूर्वत्रासिद्धीय इति निषेधस्याप्ययं नियम इति भावः । चतुर्णामिति । कृत्वादिना चतुष्टुं विनिगमनाविरहेण तेषां सर्वेषां निय-मार्थत्वमेव तदुत्तरेषान्तु विध्यर्थत्वसंभवान्न तदर्थत्वम् । प्रकृत्याश्रयः, एकाच उपदेशे इति कादिषु प्राप्तः, प्रत्ययाश्रयः, श्र्युकः कितीति वृधातोः प्राप्तः । प्र-त्ययाश्रयस्य नियमे वृग्रहणमेव मानम् । यावानिति । नञ्वाशब्दान्यतरप्रापित इत्यर्थः । तेन षिधू इत्यस्य सिषेधिथेत्येकमेव यदि तु नेड्वशीति प्रकृमावत्प्रा-पितस्यैव नियमः स्यात् तदोपदेशेत्वत इति सूत्रे नित्यानिट इत्यस्यानिर्व्या-वर्त्य इत्यर्थपरभाष्यासङ्गतिः तत्र नित्या निट इत्यस्याभावे ऽञ्जो ऋतोभारद्वा-जस्येति विकल्पः स्यात् तत्सत्वे ष्वदित्वप्रयुक्तविकल्पस्यैव सत्वेन तदसङ्गतिः मम तु क्रादिनियमेन नित्य इडिति भावः । क्रादिभ्यश्चेदिण्न तर्हि लिड्येवेति विपरीतनियमस्तु न कृते परिवृत इत्यादिलक्ष्यविरोधात् । अत्र सूत्रे कृञो ऽसुट इति वक्तव्यन्तेन सञ्चस्करिवेत्यादि सिद्धमिति स्पष्टं भाष्ये । ततश्चतुर्णा-ऽमिति । नियमाद्विधिर्बलवानिति भावः । उपदेशे ऽजन्त इति । उपदेश इत्युत्तर सूत्रस्थं तथा च सूत्रविभागादिहैव क्रियतइति ऋतोभारद्वाजस्येति सूत्रे भाष्ये स्पष्टं एवञ्च धेडादेर्दधियेत्यादिसिद्धये ऽद्ग्रहणमावश्यकं अन्यथोप-देशे एजन्तानामात्वविधानेनाज्ग्रहणमेव कुर्यात् । तासौनित्यानिट इति । तासौ सतस्तत्र नित्यानिट इत्यर्थः यस्तासावस्ति नित्यानिट् चेति भाष्योक्तेरिति भावः । तास्वदिति । सप्तम्यन्ताद्वतिः यथा तासौ नेट् तथा थल्यपीत्यर्थः ।

नित्यानिटः किं दुधविथ । अयं स्वरतीति सूत्रेण तासौ विकल्पितेट् अतो ऽस्य थलिनित्यपादाभावे भारद्वाजनियमेन विकल्पः स्यादिति वृत्तिः । तासाविति किं घस्ता देशे जघसिथेत्यादौ नित्य एवेड्थास्यादिति ॥ उपदेशे ऽत्व । उपदेशे किं कर्ष्टा चकर्षिथ । अत्वत इति किं भेत्ता बिभेदिथ । तपरः किं राद्धाराधिथ । तासौ किं जिघृक्षति जग्रहिथ । नित्यानिटः किम् आनञ्जिथेति भाष्यं चक्रमिथेत्यपि प्रत्युदाहरणं लुक्रमेरिति नियमेनात्मनेपदपरतासाविड्भावे ऽपि परस्मैपदे तत्सत्वात् ॥ ऋतो भा । अचस्तास्वदित्येव सिद्धे नियमोयमित्याह ऋदन्तादेवेति । न च ऋदन्ते विकल्पेन निषेधार्थमिदमिति वाच्यम्, अचस्तास्वदिति सामान्यसूत्रप्रणयनेन भारद्वाजातिरिक्तैरप्यृदन्ते निषेधस्यैवाङ्गीकारेण स्मृत्यन्तरानुसन्धानद्वारा विकल्पस्य वक्तुमशक्यत्वात् । वृञादिषु परत्वान्नित्यत्वाच्च कुणे रपरत्वे ऋदन्तत्वाभावे ष्युपदेशग्रहणस्य तथासूत्रविभागेनाचस्तास्वदित्यत्रैव तत्कारणात् प्राप्तिः नियमफलितार्थमाह तेनान्यस्येति । अत्रापि भारद्वाजस्येति संबध्यते अन्यस्येत्यस्य ऋकारान्तभिन्नस्य तासौ नित्यानिट उपदेशे ऽजन्तस्यात्वतश्चेत्यर्थः । एतेन ययिथेत्यादावजन्तसन्निपातेन जात इट् सन्निपातपरिभाषया आलोपनिमित्तं न स्यादित्यपास्तम् । उपदेशे इत्युक्तेस्तदाह अजन्त इत्यादि । अस्योपदेशे इत्यादिः । ईदृक् तासौनित्यानिट् । ननु स्तुद्रुस्रुश्रुवान्यलि भारद्वाजनियमादिट् स्यात् क्रादिसूत्रस्थस्त्वादिग्रहणेन तु येननाप्राप्तिन्यायेन क्रादिनियमप्रापितस्यैव बाधौचित्यादित्याशयेनाह नचेति । समाधत्ते योगद्वयेति । अयं भावः थल्यनिटो नित्यमित्यस्यानुवृत्त्या तत्पदसंबन्धवान्य इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैवेति नियमेन क्रादिनियमस्य नायं निषेध इति । एतेन भारद्वाजनियमो येननाप्राप्तिन्यायेनाचस्तास्वदित्यस्यैव बाधक इति जघनिथेत्यादाविण्नस्यादित्यपास्तं ध्वनितञ्चेदमत्रैव सूत्रे भाष्ये किंच पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादपि स्त्वादिनिषेधेनानन्तरस्यापि भारद्वाजनियमस्य बाध इति नेड्वशीत्यत्र वस्वेकाजादित्यत्र भाष्ये स्पष्टम् ॥ सिचि वृद्धिः ॥ वृद्धिश्रुत्योपस्थितमिक इति अङ्गस्य समानाधिकरणं विशेषणमित्याह इगन्ताङ्गस्येति । तत्फलन्त्वकोपीदित्यादौ व्यञ्जनस्य वृद्ध्यभावः न च नेटीति निषेधः तत्र हलन्तस्येत्यनुवृत्त्या तद्विषये परत्वाद्धलन्तलक्षणया ऽस्या वृद्धेर्बाधेनानया येननाप्राप्तिन्यायाभावेनास्यास्तेन निषेधेनाबाधात् भ्रष्टावसरन्यायस्तु नास्त्येव नान्तः पादमिति पाठे ऽपि एङो ऽतीत्यनुवर्त्य एङो ऽति यद्यत्प्राप्नोति तस्य निषेध इत्यर्थस्य नान्त इति सूत्रे भाष्ये उक्तत्वेन फलाभावात् । कूजिनेति । अर्थैक्यादिति भावः ॥ स्यन्तक्षण ॥ इडादौ किम् । अधाक्षीत् । इयतुरिति । इकारोच्च

ह्रस्वः द्वित्वे कृते एरनेकाच इति यण् सवर्णदीर्घयोः प्राप्तयोर्वार्णादाङ्गमिति परिभाषया यणिति बोध्यं केचित्त्वित्यारभ्योदाहरन्तीत्यन्तमरुचिग्रस्तमिति केचित् । कुडि । वैकल्यमविवेकः । तुड । तोडनं दारणं हिंसनं च लडयोश्चेति ग्रन्थेको दुःस्पृष्टः स च शिक्षादौ प्रसिद्धः ॥ लिङ्सिचा ॥ इको झल् हलन्ताच्चेति असंयोगादित्यतः किदिति चानुवर्त्तते । आत्मनेपदेष्विति किम् । अद्राक्षीत् अत्र हि कित्त्वे ऽम्न स्यात् । अर्थभेदादिति । पूर्वादैन्यार्थ इति भावः ॥ तृफल ॥ गुणशब्देन भाविताकारवत्वाद्द्विरूपादेशादित्वादेकहल्मध्यस्थत्वाभावाच्च यथायथमप्राप्ते विधिरयम् । तद्धीजन्त्विति । पूर्वसवर्णप्रवृत्तिपत्वावस्त्योर्बीजन्त्वित्यर्थः । अर्थविशेषानिर्देशादाह । स्वार्थ इति । धातोरेकाच इत्यतो धातोरित्यधिकारादस्याद्धधातुकत्वं आयो ऽकारान्तः तत्फलस्तु गोपायतमित्यादौ गोपायेत्यस्य धातुस्वरेणान्तोदात्तत्वे शब्कारयोरेकादेशस्याप्यन्तोदात्तत्वे तमित्यस्यादुपदेशात्परलसार्वधातुकत्वेनानुदात्तस्योदात्तादनुदात्तस्येति स्वरितत्वम् ॥ सनाद्यन्ता ॥ सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणनिषेधादन्तग्रहणं यस्मात्सविहितस्तदादेरित्यंशस्तु प्रवर्त्तत एव तेन देवदत्तश्चिकीर्षतीत्यादौ देवदत्तादेः समुदायस्य न ॥ एतत्साध्यधातुसञ्ज्ञकघटकानां सूत्रादीनां समुदायानाञ्च क्रियावाचकत्वन्तु स्वभावाद्बोध्यं स्पष्टं चेदं सुप आत्मन इति सूत्रे नमो वरिव इति सूत्रे च भाष्ये । विवक्षायामिति । विषयसप्तमीति भावः परसप्तमीत्वे हि आर्द्धधातुकोपदेशकाले यदकारान्तमिति गोपायितेत्यत्र लोपो न स्यात् गोपायेति च न सिद्ध्येत् पूर्वङ्गिन एवापत्तेः ॥ कास्य ॥ प्रत्ययान्तेभ्यश्चेति । धातुभ्य इति शेषः । सूत्रे प्रत्ययग्रहणमपनीयेति । एतच्च हरदत्तग्रन्थे स्पष्टं, परे तु कासीति सप्तम्यन्तं तद्घटितसूत्रे इत्यर्थभाष्ये कास्ग्रहणं च कास उपसंख्यानमित्युपक्रमस्वारस्यात् अत एव भाष्ये तत्र कर्त्तव्यमिति नोक्तं अत एवाचारेवगल्भेति वार्तिके धातुभिरेव सिद्धिमाशङ्क्यावगल्भाञ्चक्रे इत्यादौ कास्प्रत्ययादाममन्त्रे इत्याम्यथा स्यादित्युक्तं भाष्ये तत्राकारस्यानुबन्धत्वेनैकाच्त्वात् । न च भीतपूर्विकानेकाच्त्वङ्गृहीत्वा तत्रामिति वाच्यं, आमर्थं वार्त्तिकमित्युत्तरमपर आह सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः एवन्तर्ह्यवगल्भाद्यनुक्रमणं न कार्यङ्कार्यञ्चानुबन्धानासंत्यामीति ध्यवगल्भक्लीबहोडेति भाष्योक्त्या तदर्थन्तस्य चारितार्थ्येन भीतपूर्विकानेकाच आमित्यर्थे मानाभावात् अनुबन्धासङ्गश्च सर्वप्रातिपदिकेभ्य इत्यनेन क्विपि ध्यवगल्भतीत्यादीनां वारणायावश्यकः । कृते त्वस्मिन् न तेनैभ्यः क्विप् येननाप्राप्तिन्यायेनास्य तद्बाधकत्वात् सर्वग्रहणन्त्ववगल्भेति वार्त्तिकापेक्षया बहु

विषयत्वबोध नायेत्याहुः । अत्रेदं बोध्यं प्रत्ययग्रहणापनयवादिनोप्येकाज्भ्यः अचार्थाक्षेपेनाभिधानमावश्यकं अन्यथारम्भप्रत्याख्यानयोः फलभेदः स्यात् इति हरदत्तोदाहृतानि सस्वौ चकावित्यादीनि चिन्त्यान्येवेति ॥ अतो लोपः । आर्द्ध-धातुके किं वृत्तस्य । व्युत्पत्तिपक्षे सप्रत्यय उपदेशे ऽकारान्तः । घुण घूर्ण । अस्य दीर्घपाठः प्रक्रियालाघवार्थः । अन्ये तु ह्रस्वमेव पठन्ति । स्नुताविव्येवेति । यद्यपि पृथङ्निर्देशो यथासंख्यनिवृत्त्यर्थं इत्यपि वक्तुं शक्यं तथापि संप्रदा-यानुरोधादेवमुक्तम् । स्नुतावनुबन्धस्येति । आर्द्धधातुकविषये आयादीनां वैक-ल्पिकत्वेन तदभावे चारितार्थ्यमिति भावः । चक्षंसे इति । अनुनासिकस्येति दीर्घस्तु न क्विप्साहचर्येण तिङ्भिन्नस्यैव झलादेर्ग्रहणात् । कामयतइति । अनित्यत्वाचोपधावृद्धिनिषेधः ॥ अयामं ॥ लोपापवाद इति । णिलोपापवाद इत्यर्थः वस्तु तो यदनुवादोयं तदनुवादबलाच्च णिलोपबाधः । ध्वनितश्चेदं प्रकृतसूत्रे भाष्ये इति उणादय इति सूत्रे निरूपयिष्यामः । ननु परत्वादियङादिषु णिलोपो न स्यादत आह यल्लोपाविति । क्विजन्तमिति । किन्तु दुर्लभो ऽप्रत्य-यादित्यनेन बाधात् एवञ्चीप्सतीत्यप्यवकाशः इडभावे इको झलिति कित्वात् । यत्तुयदि पुनः प्रसङ्गः आश्रीयते स्थानिवद्भावेन च णित्वन्तदा णिलोपांशे वार्त्ति-कमनावश्यकं अत एव सप्तमशेषे यन्तात्पणौ परत्वाणिणाचि वृद्धिः वृद्धौ कृतायां लोपस्तवाग्लोप्यङ्गमिति भाष्ये उक्तमिति तन्न अगिति प्रत्याहारग्रहणसाम-र्थ्यनाकृतायां वृद्धौ लोप इत्यर्थस्य णौ चङीति सूत्रभाष्ये ऽवीवददित्युपक्र-म्यैव सिद्धान्तितत्वेन यल्लोपाविति पूर्वप्रतिषेधपरभाष्यविरोधे न च पर-त्वाद्वृद्धिरित्यत्रत्यभाष्यस्य एकदेश्युक्तित्वात् किंच वृद्धौ णिलोपो ऽपि दुर्लभः णेरभावात् नच स्थानिवद्भावः वृद्धिस्थानीकारूपाल्वृत्तिधर्मणित्वाश्रयलोप स्याल्विधित्वेन तत्र स्थानिवत्वाप्रवृत्तेः स्पष्टा चेयं रीतिर्भोभगो इति सूत्रे भाष्ये यन्तात्पणाववीवददित्यादावित्वदीर्घत्वोपधाह्रस्वत्वसिद्धये णेर्णिच्यु-पसंख्यानमेव कार्यं सन्वत्सूत्रे णेर्णिच्युपसंख्यानमिति वचनाभावेन सिद्धान्ति णिचाव्यवहितत्वादग्लोपित्वाच्चेत्येव सिद्धान्त्युक्तिरयिमभाष्यन्त्वेकदेश्युक्तिः एवमतो लोप इति सूत्रे यल्लोपाविति पूर्वविप्रतिषेधमुक्त्वा न वक्तव्यः एषु विधिषु कृतेषु स्थानिवद्भावाण्णित्वेन लोपो भविष्यति नैवं शक्यं इयङादेशे ऽन्त्यलोपापत्तेरित्युक्तं भाष्ये तदप्येकदेश्युक्तिरेव भो भगो इति सूत्रस्य न्याय-सिद्धभाष्यविरोधात् किंच णेरनिटीत्यस्य यन्ताङ्गस्य निर्दिश्यमानो यो न्त्यस्तस्य लोप इत्यर्थः इति एकाचो द्वे इति सूत्रभाष्याल्लभ्यते तत्र हि स्थानेद्विर्वचने आटिटदित्यादौ णिलोपो न स्यादित्यापादितम् । एवञ्चेयहि

अन्त्यस्य निर्दिश्यमानधर्मावच्छिन्नत्वाभावात्समुदायस्य चान्त्याल्रूपत्वाभावाल्लोपाप्राप्त्या तस्यैकदेशयुक्तित्वावश्यकत्वात् । वचनसामर्थ्यादिति । परत्वाद्गुणादीनां णिलोपबाधकत्वे दण्डादावपि गुणेन बाधसिद्धिरिति भावः तेन कारणादिसिद्धिः परे त्वेवमनेकवचनकल्पनया तस्मार्थ्येन तत्तद्बाधकल्पनापेक्षया पूर्वविप्रतिषेधकल्पकतया एवानिटीत्यस्यौचित्यमित्याहुः ॥ णौ चङि ॥ णिनाङ्गस्याव्यवहितपरत्वं चङा तु सामर्थ्याद्व्यवहितपरत्वं तत्फलितमाह चङ्परे णाविति । णाविति किं चङ्परोपधाया ह्रस्वभाविन्या असंभवेन सूत्रवैयर्थ्यापत्तेः नच लू इ अ इति ऊकारस्य संभवः तत्राप्यन्तरङ्गत्वाद्वृद्ध्यावादेशयोः कृतयोस्तदसंभवात् नच ह्रस्वो वृद्धेरपवादः ह्रस्वप्रवृत्तिकाले वृद्धेर्निष्पन्नत्वेन तस्य तद्बाधकत्वासंभवात् पदसंस्कारपक्षे ऽपि निमित्तनिमित्तिभावापन्नशास्त्रकार्याणां क्रमेणैव ज्ञानेन धातुसञ्ज्ञा तिङुत्पत्ति चङुत्पत्ति समये एव वृद्ध्यावो निष्पन्नत्वज्ञानेन चङुत्तरकालिकह्रस्वेन तद्बाधायोगात् । नच सामर्थ्येन चङि यः प्रत्ययस्तस्मिन्नुपधाया इत्यर्थो भविष्यतीति वाच्यन्तदपेक्षया सकलबोद्धबोधक्षमत्वेन णावित्यैव लघुत्वात् । चङिकिं कारयति । उपधाया इति किम् । अचकाङ्क्षत् । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात् णावित्यङ्गस्यैव विशेषणं नाच इति बोद्धन्तदुक्तं शर्पूर्वा इति सूत्रे कैयटे शब्दनित्यत्वे ऽपि उपायानामवश्याश्रयणीयोन्तरङ्गबहिरङ्गभाव इति नित्यः शब्दो वाक्यपदरूपः तदन्वाख्यानेपीत्यर्थः । अवश्येति । अन्यथा ऽन्वाख्यानविलय इति तदर्थः । बहुव्रीहिरिति । परग्रहणसामर्थ्यादिति भावः । तद्विशेष्यस्य णेरेव न लघु अङ्गस्येत्यावर्त्याङ्गसञ्ज्ञानिमित्तमिति व्याख्यानादत एव श्रीप्रभृतीनां न सन्वत्वन्तदाहाङ्गसञ्ज्ञेत्यादि । तत्परं यल्लघ्विति ॥ संनिधानाच्चङ्परेणाविति लघोरेव विशेषणमिति भावः अत एवेह कस्मान्न भवति अजजागरत् लघुनि चङ्पर इत्युच्यते व्यवहितत्वान्न लघुचङ्परं इति भाष्यं सङ्गच्छते चङ्परे णौ यल्लघु तदभ्यासस्य व्यवहितमित्यर्थः एवञ्चावचकासदित्यादौ नैव सन्वत्वं औन्दिददित्यादौ नैव दीर्घत्व औणूनवदित्यत्र च भवत्येव सन्वत्वं अचिक्षपदचिक्षणदित्यत्रा ऽस्मृदृत्वरेत्यनेनेत्वबाधनार्थेन संयोगव्यवधाने प्रवृत्तिज्ञापनान्न दोषः । अङ्गस्येति । अवयव इत्यर्थः अस्य फलं चिन्त्यन्तत्परलघुपराभ्यासस्येत्येव सिद्धेः माधवानुरोधेन तु मूलकृतोक्तं तन्मते फलन्त्वग्रे स्फुटं । णाविति । चङ्परे इत्यस्यावृत्तिरिति भावः । अथवेति । चङ्परे इत्यस्याङ्गविशेषणत्वे ऽङ्गत्वस्य प्रत्ययनिमित्तत्वेनैव णिरूपविशेष्यलाभ इति भावः अयं पक्षस्तु उक्तभाष्यविरुद्धः । औन्दिददित्यादौ दीर्घापत्तिश्चात्र पक्षे चङ्परेणौ दिदङ्गमौर्तिदिति तदीयोभ्यासश्चङमादाय णिलोपस्य स्थानिव-

द्भावेन णिमादाय वा लघुपर इति बोद्धुम् । ननु मीमादीनान्तु अभ्यासस्य लोपः श्रूयते इति अमीमपत् सिद्धन्तु सनि यादृशमभ्यासरूपं दृष्टन्तादृशस्यैवा-त्रातिदेशो न तु कार्यस्य नच मीमादीनां सन्यभ्यासरूपमस्ति लोपश्च न रूपमित्युक्त्वाङ्गान्यत्वाद्वा सिद्धमिति भाष्ये उक्तं तत्र कैयटः मीमादीनामङ्गा-नामभ्यासलोपो विहितो ऽयन्त्वभ्यासोण्यन्तानां अन्ये तु चङ्परे णौ यदङ्गं तदभ्यासस्य सन्वत्वं णौमीमादीन्येवाङ्गानि तस्मादङ्गान्यत्वादित्यस्यायमर्थः येषामङ्गानामच इस् इत्यादिर्विधीयते तस्यात्र ग्रहणाल्लोपो नत्विसादिरहि-तानाममीमपदित्यादौ धातोः सन्वत्वाभावादभ्यासस्यैवह्यनेन सन्वत्वमिति एवञ्च कैयटेनाप्ययं पक्ष उक्त इति चेन्न अङ्गस्याभ्यास इत्यत्राङ्गं किं निरू-पितं ग्राह्यञ्चाङ्गरूपितं णि निरूपितं वा तत्रोपस्थितत्वात्प्रधान्याच्च णि निरूपितमेव गृह्यते इत्येवं परतया पूर्वभाष्याविरोधेन तस्य योजयितुं शक्य-त्वात् अन्यथा एकस्यैव प्रयोगस्य सूत्रव्याख्यानभेदेन साधुत्वासाधुत्वयोरा-पत्तौ नवेति सूत्रस्यभाष्यविरोध इति दिक् ॥ सन्यतः ॥ अतः किं जुघुक्षति । तपरत्वं स्पष्टार्थं अभ्याससंबन्ध्यकारस्येत्यर्थः इति दीर्घाकित इति सूत्रे भाष्ये स्पष्टं अत एव चिच्छादयिषतीत्यादावन्तरङ्गत्वात्तुक्यपि इत्वसिद्धिः सन्यरा-भ्यासस्येत्यर्थः द्वि-प्रयोगत्वाद् द्विर्वचनस्याधीपिपतीत्यादौ सन्यरत्वमभ्यासस्य यङो ऽल्लोपस्य स्थानिवत्वात्पापचिषते इत्यादौ न दोषः । ध्वनितञ्चेदं स्तौ-तिण्योरिति सूत्रे भाष्ये तत्र हि अभ्यासादित्यस्य सनि यो भ्यासस्तस्मा-द्याप्राप्तिस्तस्यानियमो यथास्यात् यङि यो भ्यासस्तस्माद्याप्राप्तिस्तत्र नि-यमो माभूत् सोषुप्यतेः सन् सोषुपिषते अथ वा ऽभ्यासाद्याप्राप्तिस्तस्यानि-यमो यथास्यात् धातोश्च या प्राप्तिस्तस्याश्च नियमो माभूत् अधीषिषती-तिप्रयोजनमुक्तम् । सञ्ज्ञायाः कार्येति । तत्पक्षे हि पूर्वोभ्यास इत्यस्य एकाच इ-त्यनुवृत्तसहितस्य कार्यदेशे सन्निधानं अङ्गञ्च तत्र संनिहितं तत्राङ्गस्येति कर्म-णि षष्ठी कारकविभक्तेर्न्याय्यत्वात् एकाच इति च तत्समानाधिकरणं एव ञ्चाङ्गसञ्ज्ञकैकाच्कर्मके ये द्वे उच्चारणे तयोः पूर्वाभ्याससञ्ज्ञस्तस्य च सन्व-दित्यर्थ इत्येकाच्चेव प्रवृत्तिरेतदर्थमेवाङ्गस्येत्यस्यावृत्तिरिति भावः । इदञ्चाज-जागरदित्यादौ सन्वद्भावापादानपरभाष्यविरुद्धमित्यरुचेराह वस्तुत इत्यादि । अत्र पक्षे ऽङ्गस्येत्युपरञ्जकतया कथं विज्ञेयम् । ऊर्णो दीर्घ इति । स्यादित्यपक्ष-प्यते सन्वत्वन्त्वत्र नोपयुज्यते । अर्थापयतावित्ति । अर्थशब्दाण्णिचि प्रकृतेरापु-गिति भावः वस्तु त आपुगागम इति भाष्योक्तपक्षान्तरेण फलाभेदाय लुङि अस्यानभिधानमेवोचितं मूलन्तु कृत्वा चिन्तान्यायेनेति दिक् । न स्यादिति । न स्यादेवेत्यर्थः । व्यवस्थयेति । अथवेत्याद्यर्वाचीनोक्तपक्षेणेत्यर्थः । कैयटेनैवेति ।

एतद्विकर्षश्चोक्तः । अगितामिति । क्रमिप्रभृतीनामित्यर्थः ॥ ये विभाषा ॥ जन-सनेति सूत्रे जन्ग्रहणेन यथा जुहोत्यादि दिवाद्योर्ग्रहणं तथा सन्ग्रहणेनापि सनतेः सनोतेश्च ग्रहणमत एव सनोतेरनुनासिकलोपादात्वं विप्रतिषेधे-नेति वार्तिकव्याख्यावसरे आत्वे सनोतेर्ग्रहणस्य को ऽवकाशः सनि च ये वि-भाषाच आत्वस्यावकाशो ऽन्ये जनादय इत्युक्तं भाष्ये अन्यथा ऽन्ययोर्जन्-खनोर्द्वयोरेव सत्वे ऽनजनादय इति बहुवचनासङ्गतिः स्यात् सनत्वेनं सन-मादाय तदुपपत्तिः स्पष्टैव एतेन भाष्ये सनोतेरित्युक्त्या ऽस्य न तत्र ग्रह-णमित्यपास्तम् । नचाङीयीति वचित्र्द्वंशे कार्यं ऽकारोच्चारणेन यगादावेवास्य प्रवृत्तिर्न तु यासुडादाविति वाच्यं, अजनि आशामजन्यामित्यत्र यणि ये वि-भाषेत्यात्वं प्राप्नोतीत्यचः परस्मिन्निति सूत्रशेषस्यभाष्यविरोधापत्तेः तस्माद-कारो ऽत्रादृष्टार्थ एव । क्रमत्विति । उत्क्रामेत्यत्र हेर्लुकि दीर्घो भवत्येव क्रम इति सूत्रे ऽनुवृत्ताङ्गस्य परस्मैपदपरशिच्निरूपितस्यैव ग्रहणेन हेर्लुक्यपि तन्निरूपिताङ्गस्य कार्याभावेन नलुमतेत्यस्याप्रवृत्तेः प्रत्यासत्तिन्यायेन लुमता-लुप्ते प्रत्यये यदङ्गन्तस्य कार्ये एव निषेधप्रवृत्तेः ॥ स्नुक्रमोर ॥ स्नुक्रमोरिति प्रथमार्थे षष्ठी अनात्मनेपदनिमित्त इति प्रसज्यप्रतिषेधः । स्नुक्रमौ यत्रात्मनेप-दनिमित्ते न भवतस्तत्र प्रत्यासत्त्या ताभ्यां परस्यार्द्धधातुकस्येडित्यर्थः उदा-त्तत्वादिटि सिद्धे नियमोयन्तदाह अत्रैवेति । प्रस्नुत इत्यादौ श्र्युकःकितीति निषेध एव पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यान्निमित्तत्वं चात्र फलोपहितं न योग्यतामात्रन्तेन प्रस्नवितेत्यादाविट् भवत्येव । स्नुक्रमोरनात्मनेपदे इति तु न सूचितं तत्र हि परस्मैपदे इडित्यर्थे चिक्रमिषिष्यतीत्यसिद्धिः स्येनव्यवधा-नात् आत्मनेपदेनेडित्यर्थे तु प्रचिक्रंसिष्यते इत्यसिद्धिरतो निमित्तपदोपादा-नमिति दिक् । ततः परेषामिति । यद्यपीटः षीध्वमवयवत्वात्तस्य ततः परत्वं दुरुपपादं तथापि श्रुतिकृतानन्तर्यमात्रेण सामर्थ्याच्चास्य प्रवृत्तिर्बोध्या । अन्ये तु इटः परस्यैषान्धस्येत्यर्थः षीकारव्यवधाने तु सामर्थ्यात्प्रवृत्तिरित्याहुः अत्रा-ङ्गादिति निवृत्तं अत एवोपदिदीयिध्व इत्यत्र विकल्पः अन्यथा युटः परादि-त्वात्र स्यात् इयञ्च प्राप्तविभाषा लुङ्यपि धिचेति सलोपे इवर्णान्तमङ्ग-न्ध्वमिजातमितीणः षीध्वमित्यस्य प्राप्तः । परस्योपसर्गस्येति । श्रुतत्वादयता-वित्युपसर्गविशेषणं अत एव निलयते प्लायते पलायते इत्यादौ सर्वत्र लत्व-सिद्धिः । रेफविशेषणत्वे तु प्लायते निलयत इत्यत्र श्रुतिकृताव्यवधाने एव स्या-दिति भावः । प्लायत इति । अचःपरस्मिन्निति स्थानिवत्वादयतिपरत्वमिति स्पष्टं भाष्ये । इणो रूपमिति । प्लत्यय इति तु न अनभिधानादिति कैयटः । कथमु-दयतीति । शानच् स्यादिति प्रश्नः । अनित्यमिति । इदं भाष्ये न दृश्यते । इट

क्तिटेत्यत्र प्रश्लेषाभाववादिनां मते त्वयं प्रयोगोऽसाधुरेवेति बोध्यम् । उन्दः क्लेदनम् । पुनःप्रसङ्गेति । द्वित्वे कृतेऽपि सावकाश इत्यभिमानः । लिटीति । विषयसप्तमीति परे । दीपजनबुधेति । बुध्यतेरेव ग्रहणं तस्यैवात्मनेपदित्वात् । चिणोलुक् । अकारितरामित्यादौ तरपो न लुक् प्रतिलक्ष्यं लक्षणभेदेन पूर्वचिणो लुक् उत्तरचिणो लुक्यसिद्धत्वात् ॥ अतो लान्त ॥ क्वचिद्भाष्ये ऽतोर्लान्तस्येति पाठे दृश्यते इति कश्चित् आगन्तुनाकारेण निर्देशः । सङ्कोच इति । नेत्रसङ्कोच इत्यर्थः तत्रैव प्रचुरप्रयोगात् गतिचातुर्यमश्वीयं बोद्ध्यम् । छद्मगतिः कपटगतिः । हूर्छनं कौटिल्यम सन्लिलिणनिमित्तेति । सँल्लिटोरिति सप्तमी अभ्यासविशेषणं चेति भावः संल्लिट् परो यो भ्यास इति वक्तुमुचितम् । उप्रत्ययश्चेति ॥ सन्नियोगशिष्टत्वेनोभयोपदेशकालस्यैकत्वादार्द्धधातुकोपदेशकाले ऽदन्तत्वादतो लोप इति भावः । तस्य स्थानिवद्भावादिति । एतेन वस्य लोप एव विधीयतामित्यपास्तं धिन्वन्तीत्यादौ वस्य स्थानिवत्त्वेनार्द्धधातुकत्वादिण्न उकारवृत्त्यार्द्धधातुकत्वस्यालधर्मत्वेनानल्विधाविति निषेधात् स्पष्टा चेयं रीति र्भोभगोइति सूत्रे भाष्ये अचःपरस्मिन्निति सूत्रे भाष्ये त्वभ्युपेत्य स्थानिवत्त्वं पञ्चमीसमासेन परिहृतमेकदेशिनेति बोद्ध्यम् । प्रत्ययोकार इति । असंयोगपूर्वादित्यनेनावद्धवधिमतोः साजात्यादुकार एव विशेष्य इति भावः । असंयोगपूर्वो य उकारस्तदन्तो यः प्रत्यय इति वक्तुमुचितम् । अमवीदिति । यन्विक्ङोगुणेति सूत्रे भाष्ये ऽतोल्रेति सूत्रे वकारप्रश्लेषमुक्त्वा माभवानवीन्नवीदित्यत्र दोषमाशङ्क्य ह्स्यन्तेत्यत्राविमव्योर्नित्युक्तेरत्र नित्य निषेध एव लभ्यते इति तन्न, मध्येपवादन्यायेनास्य निषेधस्यातोल्रेत्येतन्मात्रबाधकत्वात् जागर्त्तौ तु लक्ष्यानुसाराद्भाष्यसामान्यचिन्ताया एवाङ्गीकारात् हमयान्तादिविषये तु सामर्थ्याद्विकल्पस्यैव निषेधात् अत एव सूत्रभाष्ययोर्न विरोधः इक इति सूत्रस्थभाष्यं पूर्वपक्ष्युक्तिरिति परे इति दिक् । दीच । मौण्ड्यादयः पञ्चार्थाः । ईषगति । दानेष्विति पाठान्तरं परिभाषणमनृतभाषणम् । आद्य इति । अत एव वेहद्गर्भोपघातिनीत्यादि सङ्गच्छते । गाढेति । लोपे ष्टुत्वासिद्धत्वं, नलोपविधानसामर्थ्यात् ॥ शलइगु । अनिट्श्चलेरिति धातुविशेषणत्वे तु गुह इत्यस्य सेट्त्वादघुक्षदित्यादौ क्सो न स्यात् पाक्षिकेडभावमादायानिट्त्वे तु नित्यमेव स्यात् च्ल्यारम्भवादिसूत्रमते इदमनिट्इति विशेषणादेव क्सस्य नोदित इतीट् । नच गुहादेश्च्ल्यवस्थायां गुणः स्यात् इगुपधत्वाभावे ऽपि क्सविधानं भूतपूर्वगत्या चरितार्थमिति वाच्यं क्सस्य कित्वसामर्थ्यात्तदप्रवृत्तेः न च ककाराभावे तृणादिभ्यश्चातुरर्थिके से तृणसावित्यादौ क्सस्याचीति लोपापत्तिः तत्रोत्तरसूत्रस्थात्मनेपदग्रहणापकर्षणाद्दोषात्तदाहाजादौ तङीति । अत एव ककारे कृते

ऽपि दृशेः क्से तादृक्षावित्यादौ नलोपः उत्तरसूत्रे चल्यादेशक्सस्यैव ग्रहणेनार्थाधिकारानुरोधादत्र तस्यैव ग्रहणेन तङीति निष्फलं निर्मूलं चेत्यन्ये । अघृक्षातामिति । लोपाभावे अतोङित इति स्यादिति भावः । प्रतिज्ञानमिति । तच्च शब्देन स्वाभिप्रायप्रकाशनं अपपाठत्वे हेतुरवज्ञे-त्यादि सूत्रंणमादरस्ततो ऽन्यदसूत्रंणमिति तदर्थः ॥ तीषस ॥ इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति वार्तिकादत्रेषग्रहणेनेच्छतीष्यात्योरेव ग्रहणं अत्र सूत्रे धातुपाठे चेषु इत्युदित्पाठो ऽनार्षः । तादेरिति । ननु तादेरित्यर्थो दुर्लभः वलादेरित्यादिग्रहणसामर्थ्येन विशेष्यविशेषणयोरुभयोरपि सप्तम्यु-च्चारणे एव यस्मिन्विधिरित्यस्य प्रवृत्तेः अत एव ङःसिधुडित्यादौ शादेः पदस्येति नार्थ इति चेन्न सूत्रत्वात् वलादेरित्यनुवृत्तविशेषणीभूतवल्पदार्थस्य तकारेण विशेषणात्तकाररूपवलादेरिति वाच्योर्थः । एवं सेसिचीत्यादावपि बोद्ध्यं सप्तमी तु प्रथमार्थे एवेत्यलं उषविद इयमप्राप्तविभाषा प्रत्ययान्ता-धत्वन्तराणीति नवेति सूत्रे भाष्ये स्पष्टं कैयटादय इति श्लिष आलिङ्गन इति सूत्रस्था इति बोद्ध्यम् । अत्रैव पाठ इति न च धातुसञ्ज्ञार्थः पाठः द्युतात्पूर्वं पाठेनैव सिद्धे ऽत्रपाठस्य ज्ञापकत्वात् एतेनायं द्युतात्पूर्वं पाठ्य पुषादिसूत्रे घसादीति पाठ्यं ऌदित्वञ्च न कार्यमित्यपास्तं पाठस्याङ्संपाद-कतया चारितार्थ्येन शपि परस्मैपदे प्रयोगानापत्तेः ऌदित्करणमिति यद्यपि घस्लादेशेनैवाघसदिति सिद्धं तथाप्यघात्सीदिति प्रयोगवारणार्थमस्य ऌदित्वं बोद्ध्यं आशिषीति इदमुपलक्षणं यक्चिणोर्विषये च प्रयोगाभावस्य परेतु लिट्यन्यतरस्यामित्येतत्सामर्थ्याल्लिटि मास्तु प्रयोगो ऽन्यत्र तु भवत्येव जघ-स्येति रूपवारणे तत्सार्थक्यं जघस्येत्यस्येष्टत्वे हि असार्वत्रिकत्वबोधनेपि न कथमपि सार्थक्यमत एवोपदेशेत्वत इति सूत्रे घसेः प्रतिषेधो वक्तव्यो जघ-सिथेति वार्तिकं तासौ नित्यानिट्त्वाभावात्प्रत्याख्यातं भाष्ये । अन्यथा ऽस्य प्रतिषेधार्थं वार्त्तिकं स्यादिति तत्प्रत्याख्यानासङ्गतिः अच्प्रत्यये घस्लादेश-विधानं त्वद इत्येतद्रूपवारणार्थमित्याहुः । अशवीदशावीदिति यद्यपि इकोगु-णेति सूत्रे ऽतोल्लेत्यत्र वकारप्रश्लेष उक्तस्तथापि पूर्वपक्षत्वात्तस्य सिद्धान्ते प्रश्लेषे मानाभावेनात्र विभाषावृद्धिरिति भावः महपूजायां अयदाने इति दाश्वानिति सूत्रे भाष्ये द्युतिस्वाप्योः प्रत्यासत्त्याङ्गाभ्यासयोरेकनिमित्तत्वे एवास्य प्रवृत्त्यादुद्योतकीयिषतीत्यादौ संप्रसारणाभावः व्यदिद्युतदित्यत्र द्युच्च इश्चेति समाहारद्वन्द्वगर्भद्वन्द्वाश्रयणेन न दोषः । इकारेणोपस्थितद्युते-रेवेकारान्तस्य ग्रहणं इकारश्च णिच एव स्वापिसाहचर्यादिति वृत्त्यनुसारिणः अत्र मानाभावात् द्युतेर्ण्यन्ताच्चङि संप्रसारणं न भवत्येवेति भाष्यानुसारिणः

स्वापि न नामधातुर्द्युतिसाहचर्यात् नचाभ्यासस्य प्रकृतिभूतद्युतिस्वाप्योः प्रत्यासत्त्या ऽभ्यासनिमित्तप्रत्ययान्तयो संप्रसारणमित्यर्थेनोक्तदोषप्राप्तिः स्पष्टा चेयं रीति हूः संप्रसारणमिति सूत्रे भाष्ये इत्यङ्गाधिकारपाठो व्यर्थ इति वाच्यम् । अभ्यासस्य संप्रसारणलाभानापत्तेः अभ्यासस्येत्यनुवृत्त्यर्थं तत्र पाठाच्च अशोकवनिकान्यायाच्च । एतेनाभ्यासाप्रिप्रत्ययस्य प्रकृत्याकाङ्क्षाया-मुपात्तधातोरेव ग्रहणेनाभ्यासनिमित्तप्रत्ययप्रकृतिभूतद्युतेः संप्रसारणमित्यर्थेन नाङ्गाधिकारे एतत्सूत्रपाठे फलमिति परास्तं किंचाभ्यासस्योत्पत्तौ प्रत्ययापे-क्षत्वे ऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावो ऽत एवाभिषि-षेचयिषतीत्यत्र स्यादिष्विति षत्वं भवत्येवेति दिक् । द्युद्भ्यो लुङि ॥ बहुवचना-दाद्यर्थावगतिः षष्ठ्यर्थे लुङीति सप्तमी तदाह द्युतादिभ्य इति वृद्भ्यः स्यस ॥ प्रतिप्रसवविधिरयं अन्तरङ्गमपीति सकारादिविशेषापेक्षत्वादात्मनेपदनिमि-त्तत्वाभावनिमित्तत्वाच्च निषेधस्य बहिरङ्गत्वमित्यभिमानः । चतुर्ग्रहणसाम-र्थ्यादिति तेन हि सर्वेषु प्रत्येकं निषेधव्यापारो ध्वन्यते अन्यथा नवृद्भ्य इत्येतावतैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव क्रपिव्यावृत्तिस्तु न फलन्तासिचेति च कारेण सार्वधातुके तस्यापि निषेधसत्वात् वृत्करणेन द्युतादेरपि समा-प्तिर्बोधयितुं शक्या अत एव वृद्भ्यः स्यसनोरिति सूत्रं सङ्गच्छते न वृद्भ्य इति वचनन्तु येननाप्राप्तिन्यायेनार्द्धधातुकलक्षणे इबाधेन चारितार्थं क्रपेस्तु तासि-चेति सूत्रारम्भसामर्थ्यादेव विकल्पोनेति भावः वस्तुतश्चतुर्भ्य इति व्यर्थं निषेधाश्चबलीयांस इति न्यायेनान्तरङ्गाणामपि बाधसिद्धेः वृतादिभ्यो यद्य-त्याप्नत्तत्रेति वचनव्यक्त्या सर्वेण निषेधाच्च । अत एव चतुर्भ्य इत्यस्य प्रत्या-ख्यानं भाष्योक्तं सङ्गच्छते किंच बहिर्भूतशब्दनिमित्तकस्यैव बहिरङ्गत्वमिति परत्वेनापि तद्बाधोनेति दिक् । उ इति च्छेद इति स्पष्ट चेदं प्रत्याहाराह्निके भाष्ये तच्चेति क्रपेति पदमित्यर्थः सूत्रमित्यन्ये आवृत्तिफलं वाक्यभेदः इद्विति वृत्तेः कर्त्तरिक्रिप् पितश्चेति अतिदेशोयं फलन्तु पिद्विदादिभ्य इत्यङ् तत्र ये ऽन्यविकरणा अनूद्यन्ते तेपान्तत्तत्प्रयुक्ता एव विकरणाः येतु भ्वादिस्था एवानूद्यन्ते स्वतन्त्रा वा पठ्यन्ते तेषां शबेव न च तस्यैवेति एवञ्च विघट-यतीत्यादौ मित्त्वं न स्यादिति भावः नान्येमित इति अनुवादसामर्थ्येन तद्बा-धकल्पनापेक्षया स्वातन्त्र्यकल्पनस्यैवौचित्यादिति भावः न च पित्वार्थमयञ्चु-रादेरनुवादः तत्रैव घटिषिति पठितुं युक्तत्वात् एयासश्रन्थेति युच एव प्राप्त्या पित्वे फलाभावाच्च हलादिः शेषापवाद इति यस्यानिक हलादिःशेषापवाद इत्यर्थः नचाभ्यासविकारे बाध्यबाधकभावाभावेनेदमसङ्गतमजीगणदित्यादौ हलादिःशेषे इत्वस्य ज्ञाप्यार्थप्रयोजनभाष्ये उपन्यासाल्लोपस्यापि तत्र विका-

रग्रहणेन ग्रहणात् । एवञ्च वस्यैव संप्रसारणापत्तिरिति वाच्यम् । लिट्यभ्यासस्येत्यत्रोभयेषां ग्रहणेन सामान्यत एवाभ्यासलोपाभ्याससंप्रसारणविषये तच्चायाप्रवृत्तेर्ज्ञापनेनादोषात् संप्रसारणं तदाश्रयञ्च बलवदिति तु उभयेषां ग्रहणवैयर्थ्यापत्त्या लिट्यभ्यासस्येति सूत्रे भाष्ये एव प्रत्याख्यातमिति तदुपन्यासः केषाञ्चिदयुक्त एवेति दिक् । मित्वसामर्थ्यादिति असञ्जातविरोधन्यायेनेति भावः । अचञ्जीति णयन्ताच्चिणि तशब्दस्य लुक् चाञ्जङ्घाञ्जमिति णयन्तादाभीक्ष्ण्ये णमुल् क्रियासमभिहारे द्वित्वं एतत्सर्वं दक्षादिष्वपि बोद्धुमित्वार्थं इति षित्वस्याप्युपलक्षणं गुरोश्च हल इत्यप्रत्ययेनापि सिद्धेः षित्वे फलाभाव इति कश्चित् मित्वार्थं आत्मनेपदार्थश्चेति चेन षित्वमप्युपलक्ष्यम् । निदित्पाठे इदित्पाठे तु चक्षिवत् उत्सृष्टानुबन्ध इति त्यक्तानुबन्ध इत्यर्थः । उकारे ऽकार उदात्त उच्चारणार्थः अनुदात्तत्वे लाघवेनान्य एवेति नोक्तमिति भावः । अत्र गणे ऽन्यत्र पठितानां सति संभवे ऽनुवाद एवेति शृतं पाके इति सूत्रे भाष्ये कैयटे च ध्वनितं तत्र हि श्राश्रप्योः शृभावो निपात्यते इति भाष्यमुपादाय श्रापाक इत्यदादौ श्रैपाके इति भ्वादौ घटादिषु मित्वार्थं श्रापाक इति पठ्यते इति कैयटः । अत एव भाष्ये श्राश्रपिश्रापीनामिति नोक्तं प्रागेवेति त्वरतेरये इत्यर्थः । षित्वं त्रयोदशानामेव अनुदात्तत्वन्त्वन्येषामप्यस्त्विति भावः । परस्मैपदमिति नचैतदर्थं पाठस्य चारितार्थ्येन कथमर्थविशेषनियमलाभ इति वाच्यं घटादिषु पाठेन तत्प्रयुक्तकार्यस्याप्यवश्यकत्वेन विजातीयार्थपाठेन च तस्यापि लाभात् । एवञ्च मित्वं परस्मपदेष्वेष्टन एवेति बोद्धुम् । अहीडीति चिण्णमुलोरितिदीर्घः । एतदर्थं तत्र ह्रस्व एव न विकल्पितः । परेतु ह्रस्वविकल्पेनैव सिद्धे चिण्णमुलोरित्यत्र दीर्घग्रहणं व्यर्थमित्याशङ्क्य शमेर्ण्यन्ताण्णिचि अशमीत्यादौ णिलोपस्य स्थानिवद्भावाद्ध्रस्वो न स्यात् दीर्घग्रहणे तु दीर्घे स्थानिवत्त्वनिषेधान्न दोष इति कर्मणिङ्सूत्रे भाष्ये उक्तं तदनुपपन्नं प्रकृतोदाहरणार्थं दीर्घविधानस्यावश्यकत्वेन शङ्कोत्तरयोरुभयोरपि निर्दलत्वापत्तेः । तस्मादस्यात्रासांप्रदायिकः पाठः कैयटादयस्तु चिन्त्या एव ॥ ऊकाल इति सूत्रे भाष्ये ऽप्येतद्ध्वनितमिति भाष्यप्रदीपोद्योते निरूपितं द्विर्वचनादीनि न वक्तव्यानि वर्ण्यलोपस्वरवर्जमिति नपदान्तसूत्रभाष्ये वर्ज्यकोटौ दीर्घोऽप्युपलक्षणीयः । किंच यदापि पाठस्तदापि उत्सृष्टानुबन्धेत्याद्यसङ्गतं अपूर्वत्वे बाधकाभावात् अर्थविशेष इत्यत्रापि न मानं किंच सर्वेषामनेकार्थत्वे न मानम् । एवञ्चोपात्तार्थे एव मित्वमिति यत्र फलाभाव एवमन्यत्राप्यनेकार्थत्वनिर्णायकाभावे किंच स्पर्धस्पर्द्ध इति धातुपाठस्य भूवादिसूत्रभाष्योक्तेरर्थं खल्वपि आचार्यश्चि-

नयति क्वचिदर्थानादिशन्ति क्वचिन्नेति नमोवरिव इति सूत्रभाष्योक्तेश्चात्र त्यार्थनिर्देशस्य पाणिनीयत्वमेवेत्यत्र न दृढतरं मानमेवञ्च नियमकथापि निर्मूला अतिप्रसङ्गपरिहारस्त्वनभिधानात् प्रयुक्तानामेवान्वाख्यानाच्च। किं च ज्वरादिभ्यः प्रागग्रे वा पाठे न किंचित् गौरवं लाघवञ्च। एवञ्च तत्रानुवादमात्रेण परस्मैपदकल्पनापि निर्मूलेत्याहुः। ननु विशेषानालिङ्गितसामान्यस्याभावेन क्रियासामान्यार्थत्वमयुक्तमत आह अनेकार्थत्वादिति। निपात्यतइति। तत्र णिप्रकृतिधातोरेव ग्रहणं न घञन्तस्य व्याख्यानात्पूर्वोत्तरसाहचर्याच्चेति भावः। धातुपाठे ह्रस्वोच्चारणन्तु दीर्घणिचोरभावे चरितार्थम्। नन्वत्र पाठवैयर्थ्यमत आह मित्त्वन्त्विति। निपातनञ्च चिण्णमुलतिरिक्तविषये चरितार्थन्तदभावेपि न वृद्धिः फले विशेषाभावेन दीर्घेण बाधस्य वैयर्थ्यापत्तेः तच्छास्त्रस्य तदभावेपि तात्पर्यादिति भावः। उदित्करणसामर्थ्यादिति। तदनुवादे तनादेरुदित्वेन पुनरत्र तत्करणं व्यर्थमित्यर्थः। विशिष्यार्थो नोच्यतइत्युक्त्या नियमस्य वक्तुमशक्यत्वेन तद्वैयर्थ्यमिति भावः। अत एव पूर्वपठितवनोपि नानुवादः। उक्तरीत्यार्थनियमासंभवेन तत्र वनपाठस्य वैयर्थ्यापत्त्या तदनुवादासंभवात् उदित्त्वफलन्तु णिजभावे। परे तु पूर्वपाठः संभक्तौ शब्दे च वनोतीति रूपव्यावृत्त्यर्थः। अन्यथानेनैव वनतीत्यादिसिद्धौ तत्रापि तद्वैयर्थ्यं तदवस्थमेव तनादौ वनुयाचने इति पाठः। अत्र तु वनशब्दे वनषणसंभक्ताविति उदित्वमस्य तु तानादिकस्यैवात्रानुवाद इत्यर्थबोधनाय। तेन पूर्वपठितस्य प्रवानयतीत्येव। तानादिकस्योदित्वेन पूर्वपठितस्यानुदित्त्वेन निष्ठायां रूपद्वयन्त्वपीष्टमेवेत्याहुः। विकल्प। वक्ष्यत इति। ग्लास्नावनुवमाञ्चेत्यनेनेति भावः। क्रादेरिति। दिवादेरित्यपि बोध्यम्। ताच्छीलिकप्रकरणान्ते ऽस्य दिवादिताया अपि भाष्यसंमतत्वात् श्यन्तत्वे दृणाति दीर्यं इति वा। इति मते इति। इदमेव युक्तमिति भाति। एवमन्यत्रापि बोध्यम्। अत्र पठिष्यमाणानामन्यत्र पठितानामपि नानेकार्थत्वमित्यन्ये। पाकादन्यत्रेत्यादावपि चिन्त्यमर्थान्तरे वृत्तौ मानाभावात्। परिभाषाभ्यामिति। विरोधे ऽनित्यत्वादुभयोरप्यप्रवृत्तिरिति भावः। मारणेत्यादि। मारणे संपूर्वकस्यैव प्रयोग इति पुरुषकारेण उक्तम्। कथमिति। माधवान्यमते आक्षेपस्तदुन्नयन्नाह माधवेति। अत्र माधवमतं ज्यायः। कम्पने चलिरिति। कम्पनेर्थे चलधातुरित्यर्थः। एवमन्यत्रापि। स्वार्थे णिजभावे इति। आधृषाद्वेति वैकल्पिकत्वादित्यर्थः। स्वार्थे णिचिस्त्विति नान्ये मितइत्यस्य प्रवृत्तेरिति भावः। जिह्वामिति। ताञ्ज्ञापयतीत्यर्थः। जिह्वयेति। तया ज्ञापयतीत्यर्थः। लडयति शत्रुमिति। गालयतीत्यर्थः। दधीति। उन्मथ्नाति विलोडयतीत्यर्थः। दैवादिकस्येति। अस्यैवानुवाद इत्यर्थबोधनार्थमीदित्त्वमिति भावः।

घञन्तादिति। णौ टिलोपे सति तस्य स्थानिवत्त्वान्न मितां ह्रस्व इति भावः। वृत्तिकृदिति। भाष्ये तु न दृश्यत इति भावः। प्राप्ते इति। वनः पूर्वपाठाद्गमो ऽमन्तत्वादिति भावः। अत्र वनोस्तानादिकस्यापि ग्रहणमित्यन्ये॥ यमोप॥ परिवेषणंभोजनानुकूलः पात्रे ऽन्नस्थापनादिरूपो व्यापार इति बोध्यम्। नियमवच्छब्दादिति। न च मतुब्लोपे टेरित्यस्याप्राप्तौ वृद्धौ पुगापत्तिः नियमवदित्यर्थकाशंकाऽञजन्तनियमशब्दादित्यर्थेनादोषात्। उपेक्ष्यमिति। नियमयान्नित्यादेः सामञ्जस्येनात्र मते उपपत्तेस्तावेवोपेक्ष्याविति कश्चित्। असंभवादिति। प्राप्तिं विना निषेधासंभव इत्यर्थः। फणेः प्रागेवेति। यो व्यतीकारंफाणयन्सुयुक्तामुपदाणुषे इत्यादिश्रौतप्रयोगोऽत्रानुकूल इति बोध्यम्। तत्र हीति। घत्वविधावित्यर्थः। टल ट्वल। वैक्लव्यं भयादिजनितोद्वेगः। तद्व्यापार इति बन्धुत्वानुकूलो व्यापार इत्यर्थः। अक्रथोदिति। एदित्वान्न वृद्धिः। सुधाकर इति। अस्यैवमर्थसहितस्य पाणिनिना पाठे प्रमाणाभाव इति अत्रारुचिः। तद्व्याख्यादाविति। वेमुरित्यादयस्त्वसाधव एवेति भावः। मर्षणं क्षमा सा चापराधे सत्यपि कोपानाविष्करणं, ढलोप इति बहुव्रीहिपक्षे निमित्तत्वेनाश्रयणादेव ष्टुत्वादीनामसिद्धत्वं न। यद्वा शब्दाधिकारात् षष्ठीतत्पुरुषत्वेन ढलोप इति विषयसप्तमी तत्र क्तप्रत्ययं विना तद्विषयज्ञानाभावादूढ इत्यादौ तत्र कृते संप्रसारणौत्वयोः प्राप्तौ परत्वादौत्वे संप्रसारणे पूर्वत्वे च कृते लक्ष्येलक्षणस्येति न्यायेन पुनरौत्वाप्रवृत्त्या ऽवर्णस्येति भाष्ये प्रत्याख्यातं ढलोपस्य त्वसंभवान्निवृत्तिः। सोढः॥ नरपरेत्यतो नेत्यनुवर्त्तते। सोढः किं परिषहते। सिवादीनाम्॥ सिवु सहसुट्स्तुस्वञ्जः सिवादयः। विशीर्णतायामिति। विशरणे इत्यर्थः। ननु शातनन्तदनुकूलो व्यापारः। एवञ्च तेनार्थकथनमसङ्गतं सकर्मकत्वापत्तेरत आह शातनन्त्विति। विषयतयेति विषयतात्र जनकतारूपा। एवञ्च तज्जन्यविशरणमर्थ इति भावः। शदेः शितः॥ शदेस्तिङुत्पत्तेः पूर्वं शितो ऽसंभवाच्छित इत्यस्य शिद्विषये लक्षणा तदाह तद्भाविन इति। शिद्विशिष्टे लक्षणायान्तु शितः शब्दादेः सार्वधातुकाश्रयत्वेन परस्मैपदे जाते भुक्तवन्तमिति न्यायेनास्य सूत्रस्य वैयर्थ्यापत्तिरिति भावः। बोधितेति। बुध्यतेरेवानिट्त्वमिति भावः। वृदिति। परे तु ज्वलितिकसन्तेभ्य इति सूत्रादत्र वृत्करणमनार्षमन्यथा ज्वलादिभ्यो ण इत्येव सूत्रयेदित्याहुः। अबुददिति। इर इत्वे ऽपि इदित्वाभावान्न नुम्। रुन्धे इत्यादौ स्वरितेत्त्वप्रयुक्तमात्मनेपदन्तु भवत्येव स्वरितत्वप्रतिज्ञासामर्थ्यात्। प्रत्येकमिरोरित्त्वमिति पक्षे ऽपि न नुम् कर्मधारयेणान्त्येदित एव तद्विधानात्। अनिदितामित्यस्यापीत्संज्ञकेकारान्तभिन्नाङ्गानामित्यर्थ इति नलोपो भवत्येवेति बोध्यम्। ऊदुपधाया॥ उपधाया इत्युत्तरार्थं प्रकृते त्वोः सुपीत्यत ओरित्यनुवृत्त्या

ऽपि सिद्धमाह इति विपर्यासन्तदाह । गुणहेताविति । तेन जुगुहतुरित्यादि सिद्धं । दन्त्येतङीति । वर्णग्रहणाद्यस्मिन्विधिरिति न्यायाच्च दन्त्यादौ तङीत्यर्थः । अन्तलोप इति । अत एवाजुग्रातामित्यादावातो ङित इतीयादेशो न ॥ रदुनोः ॥ एकाच इति निषेधे प्राप्ते इदम् । रिङ्श ॥ अय ङ्यीत्यतो यीति अकृत्सार्वेति चानुवृत्त लिङ एव विशेषणं शे ऽसंभवात् । यक्ति वैयर्थ्यात्तदाह यादाविति । इगागमेन सिद्धे रेफोच्चारणं निर्दिश्यमानपरिभाषया सिद्धे इकारोच्चारणस्य स्पष्टार्थम् । उश्च ॥ इको झलित्यतो झल्ग्रहणं लिङ्सिचाविति सूत्रस्यानुवर्त्तते तदाह ऋवर्णादित्यादि । ह्रस्वादङ्गात् ॥ अङ्गग्रहणमङ्गसञ्ज्ञानिमित्तस्य लोपार्थं तच्च पूर्वापरसाहचर्यात्सिजेव तदाह सिच इति । तेनास्तं द्विष्टमामित्यादौ न । यद्यपि ह्रस्वात्सिच इत्येव सिद्धम् अलाविष्टामित्यादौ तु न दोषः । आगमे कृते तत्सहितस्यैव प्रत्ययत्ववत्सिच्त्वमिति स्वावयवत्वेन पौर्वापर्याभावात्तथापि पदलाघवाभावादेवमेवोक्तम् । आदेच ॥ उपदेश इति षष्ठ्यर्थे सप्तमी तेनैजन्तस्योपदिश्यमानस्येत्यर्थः । कर्मव्युत्पत्त्योपदेशपदेनाद्योच्चारणविषय उच्यते तेन छौकितेत्यादौ न दोषः । समुदायस्योपदिश्यमानत्वं न तु तदवयवस्य तदुपदेशे तात्पर्याभावात् । उपदेशे किङ्गाभ्यां उद्देशश्च प्रातिपदिकानां नोपदेशः उणादीनामव्युत्पन्नत्वाच्च गो इत्यादीनामुपदिश्यमानैजन्तत्वमिति न वाच्यम् । तादृशश्च प्रायेण धातुरेवेत्यतो धातो रित्युक्तम् । मेङादौ ङकारसत्त्वे परस्य ङस्य सत्त्वेन तस्यैजन्तत्वाभावेन उदीचां माङ इति निर्देशस्य नानुबन्धकृतमनेजन्तत्वमित्यर्थज्ञापकता सुस्था । ङकारलोपे त्वेजन्तत्वसत्त्वेन धातुसञ्ज्ञादिकार्यार्थेन्तावतोप्युपदेशे तात्पर्याच्चोपदिश्यमानैजन्तत्वसत्त्वेन भवत्येवात्वं धातोरित्यनुवृत्तौ त्वनुबन्धलोपोत्तरन्त्रिनिर्मुक्तस्यैव धातुताया नधातुलोपसूत्रे भाष्ये उक्तत्वेनोदीचां माङ इत्यादावात्वानापत्तिः । धातोरित्येतत्संबन्धं विनापि तदन्तविधिरचेत्यणिञोरिति सूत्रशेषे ऽपि भाष्ये ध्वनितं तत्र हि अवश्यमात्वार्थन्धातुग्रहणं कर्त्तव्यमिह माभूत् गोभ्यामिति उपदेशे यदेजन्तं तस्य चेदात्वमिष्यते, उद्देशो रूढिशब्दानां तथा गोर्न भविष्यतीत्युक्तं न च द्वरे प्रभृतीनामुपदेशे एजन्तत्वादात्वव्यावृत्तये धातोरित्यावश्यकं शिति नेत्युक्त्या शित्प्रत्ययपरत्वयोग्यस्यैवैजन्तस्य ग्रहणेनादोषात् । एवञ्चोपदेश इत्यस्य वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तिज्ञापकतापि चिन्त्येति दिक् । न तु शितीति । शीतीति कर्मधारयात्सप्तमी पूर्वोत्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्तेस्तत्साहचर्यादत्र शितीति शिति प्रत्यये इत्यर्थेतद्वाक्यैकदेशः । एवञ्च तदादिविधावित्सञ्ज्ञकशकारादौनेत्यर्थः । तेन जग्ले इत्यस्य सिद्धिः । विषयसप्तमीचेयन्तेन ग्लाय-

नीत्यादौ शबाद्युत्पत्तेः प्रागपि नात्वमित्यलम् । आतो लोपः ॥ दीङो युडित्यतो ऽचिक्ङितीति वर्त्तते तदाह अजाद्योरिति । इडागम एवाऽन्यासम्भवात् जगे इत्यादौत्वजादिक्ङित्त्वादेव सिद्धं इट आर्धधातुकत्वं तदवयवत्वाद्बोध्यम् । क्ङितीति चेटो न विशेषणमिड्ग्रहणसामर्थ्यात् । दारूपा । इति प्रयोग इति शेषः । प्रयोगस्यदाधारूपाणामेव सूत्रे ऽनुकरणात् प्रयोगस्यानामेव सूत्रे ऽनुकरणमित्यर्थस्य तङादेशानाष्टेरेत्वं नेत्यर्थं आनयीति वक्तव्ये आने मुगिति सूत्रनिर्देशस्य ज्ञापकत्वं वदता भाष्यकृता सूचनाच्च । यद्यपि लाक्षणिकत्वाद्दीदेङ्घेटाङ्कृतात्वानां न प्राप्नोति तथापि गामादाग्रहणेष्वविशेष इति परिभाषया न दोषः । अस्याञ्च दैपः पित्वं ज्ञापकं तच्चादाबिति निषेधे ऽस्यापि ग्रहणाय धारूपा इति प्रयोगबाहुल्येन बहुवचनं प्रनिधारयतीत्यादावनर्थकत्वात् तत्वेनैव घुनिरूपितोपसर्गत्वाभावाच्च न णत्वं प्रणिदापयतीत्यादौयदागमा इति न्यायेन न दोषः । रेफस्त्वाकारागमो न दा इत्यस्य दासाहचर्याद्दाग्रहणेन घेटोपि ग्रहणम् अत एव दोदद्घोरित्यत्र दधाते र्हि विधानसत्वात् घेणिवृत्त्यर्थं दाग्रहणं चरितार्थम् । एर्लिङि । घुमास्थेत्यादि वर्त्तते क्ङितीति च । विभाषाघेट् ॥ णिश्रीत्यतः कर्त्तरीति चङीति च वर्त्तते । विभाषाघ्रा ॥ गातिस्थेत्यतः सिचः परस्मैपदेष्विति लुगिति च वर्त्तते । यमरमन ॥ अनयोः सगिड्विधानमयंसीदित्यादौ वृद्धेरभावायायंसिष्टामित्याद्यर्थञ्च आतो ऽप्यधासिष्टामित्यादौ फलम् । वान्यस्य ॥ अन्यस्येति स्याधातो परत्वादेतद्विकल्पवारणाय । क्तिलिङीति । यद्यपि क्ङितीत्यनुवर्त्तते तथापि आर्द्धधातुके इत्यनुवृत्तेर्विधिलिङि न प्रवृत्तिरिति ङितीत्यनुवृत्तौ फलाभाव इति भावः । एवमेर्लिङीत्यत्रापि । बोद्धम् पिबादेश इति । सचादन्त आद्युदात्तश्चेति स्पष्टं भाष्ये । तेन पिबतीत्यादौ गुणाभाव आद्युदात्तत्वञ्च सिद्धम् । एवञ्च हलन्तएव अङ्गवृत्तपरिभाषया गुणाभाव इति भाष्योक्तपक्षान्तरं परिभाषारम्भेण गुरुफलान्तरञ्च नास्या इति निरूपितं युष्मत्प्रकरणे । ष्ठागति ॥ अत्र सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां ष्टुत्वाप्रवृत्त्यासत्वे यस्यैव श्रवणं बोद्धम् प्रतिष्ठतीत्यादौ तिष्ठतेरेव गतिरर्थः । प्रशब्दस्त्वादिकर्मणि इति भूवादिसूत्रे भाष्ये स्पष्टम् । तिष्ठन्मूत्रयत इत्यादावूर्ध्वदेशसंयोगोऽपि तिष्ठतेरर्थ इति समर्थसूत्रे भाष्ये ध्वनितम् ॥ ऋतश्च ॥ तपरत्वं स्पष्टार्थम् । अत्रैव सिद्धे गुणग्रहणं ऋच्छत्यृतामित्यस्येग्लक्षणत्वेन क्ङिति चेति निषेधाय क्सोः कित्त्वसामर्थ्यान्निषेधविषयस्यापि तस्य गुणस्य निषेधाङ्गीकारात् । उपधावृद्धिरिति । जाग्रो वीति गुणविधानन्तु जागृधातावेव गुणोत्तरं वृद्ध्यभावबोधकमत एव कृधात्वादौ भावकर्मणोः परत्वाद्गुणे उपदेशग्रहणाच्चवृत्त्वे कारिष्यतइत्यादावुपधा-

वृद्धिरिति भावः । श्युकः ॥ एकाचः क्रिञ्जागरितः । गिद्दिति । चर्त्वेनायं प्रश्लिष्यते तेन भूष्णुः सिद्धः स्यात्तुसिद्धये हिस्तुर्गिदिति दिक् ॥ परत्वादिति । स्वरतीति विकल्पस्तु मध्येपवादन्यायान्नास्य बाधक इति भावः ॥ ऋच्छत्यृ ॥ ऋधातोरिति । बहुवचननिर्देशादृकारोपि प्रश्लिष्यते ऋवर्णान्तधातुमात्रस्य तु न ग्रहणं ऋतश्च संयोगादेरित्यस्य वैयर्थ्यापत्तेः । अन्यथा ऋ ऋतुसिति स्थिते द्वित्वे उरदत्वे ऽभ्यासलोपे अत आदेरिति दीर्घे उत्तरखण्डे प्राप्तं यणं बाधित्वा परत्वाद्गुणे आरतुरिति स्यादिति भावः । इडत्यर्त्ति ॥ इड्ग्रहणं स्पष्टार्थं अर्तीत्युभयोर्ग्रहणं व्याख्यानात् । गृघृधातो घृतघर्मघृणाभ्योन्यत्र न प्रयोग इति तृज्वत्सूत्रे भाष्ये स्पष्टम् । श्रुवः शृ च ॥ श्रुवः स्वादिपाठः कुतो न कृत इति चिन्त्यम् यत्तु यङ्लुकि शृणोतीति रूपार्थमिति तन्न । शबादेशाः श्यन्नादय इति भाष्योक्तपक्षान्तरे श्नोः स्थानिवत्त्वे न शप्त्वात्तस्य लुकि संनियोगशिष्टन्यायेनादेशनिवृत्तावुक्तरूपस्य दुर्लभत्वात् । तस्मात्पक्षान्तरेप्यस्य साहचर्याद्यङ्लुगप्रवृत्तिश्चर्करीतञ्चेत्यदादौ पाठाच्चेत्याहुः । हुश्नुवोः ॥ एरनेकाच इत्यतोऽसंयोगपूर्वस्येत्यनुवृत्तमोः सुपीत्यतो ऽनुवृत्तस्य ओरित्यस्य विशेषणं न तु प्रत्ययस्य तेनाप्नुवन्तीत्यत्र यण्न । अचिश्नु इत्यतो ऽचीत्यनुवर्त्तते । हुश्नुवोरिति किम् । अपुवन् । नचानेकाच इत्यनुवृत्त्या ऽट आभीयासिद्धत्वेन न दोष इति वाच्यम् । तत्प्रत्याख्याने दोषवारणाय सत्त्वात् । स्पष्टा चेयं रीतिर्धिन्विकृण्व्योरचेति सूत्रे भाष्ये । तत्र हि वलोपेन सिद्धे ऽकारविधानात्तल्लोपे स्थानिवद्भावाद्गुणाभावाय । न च वलोपे ऽपि नधातुलोप इति निषेधसिद्धिः प्रत्याख्यायते सयोगः तस्मिन्प्रत्याख्याते गुणः स्यादेवेत्युक्तं श्नसोरदिति तपरत्ववत् तदनित्यत्वबोधनेन चारितार्थ्याच्च भाष्ये यङ्लुको भाषायामपि प्रयोग इत्यर्थज्ञापकत्वोक्तिस्त्वेकदेशिन एव अत एव किमेतस्य ज्ञापने प्रयोजनं बेभिदीति चेच्छिदीतीत्येतत्सिद्धं भवति भाषायामपीत्यग्रे भाष्ये उक्तम् ॥ अन्यथा ज्ञापितेप्यस्य सार्थक्याय उवर्णान्तेभ्यो ऽपि यङ्लुक आवश्यकत्वेनेत्येतदिति भाष्यासङ्गतिरित्यादि सिद्धं भवति एवं सिद्धं भवतीति वक्तव्यं स्यात्किमेतस्येत्यादिप्रश्नस्याप्यनुपपत्तेश्च । लोके उवर्णान्तप्रकृतिकप्रयोगादर्शनमेवास्य प्रश्नस्य बीजं तत्र तत्प्रयोगाप्रदर्शनेनोत्तरमेकदेश्युक्तिरित्यपि बोद्धम् ॥ यङोचि चेति सूत्रे बहुलग्रहणानुवृत्त्या वाक्यभेदेन च लभ्यस्यानैमित्तिकयङ्लुको बाहुलकेनैव यथाप्रयोगं लोके ऽपि लाभेन ज्ञापकानुपयोगाच्चेति सुधियो विभावयन्तु । इङादेशस्यैवेति । व्याख्यानादिति भावः । स्पष्टञ्चेदङ्गाङ् लिटीत्यत्र भाष्ये । फलेतु न भेद इति । गा अ आते इत्यत्र वार्णपरिभाषया सवर्णदीर्घं बाधित्वा ऽऽतो ङित इतीयादेशः स्यादिति भेदस्तु न तस्याः स्थान्येकत्वे एव प्रवृत्तेः । वृत्तिरिति । इदमुपलक्षणं

भाष्यस्यापि । मान्बध ॥ अभ्यासविकार आभ्यासः सचेत्वमेव व्याख्यानात्तदाह इकारस्येति । वस्तुतस्तद्वृत्तिनिर्देशो व्यर्थः । अभ्यासविकाराणां समावेशस्यैव वक्तव्यतया इत्वोत्तरं दीर्घस्य सुलभत्वात् । स्पष्टञ्चेदं गुणो यङ्लुकोरित्यत्र भाष्ये । गुपेर्निन्दायामिति । गोपनाद्यर्थकानां निन्दादौ वृत्तिरनेकार्थत्वाद्बोध्या । जिज्ञासायामिति । तत्प्रयोज्ये विचारे इत्यर्थः । अत एव मानेर्विचारे इति वृत्तिग्रन्थेन न विरोधः । सन्नन्तस्येति । अत एव सन्यङ्चङ्ष्विति न सूत्रितम् । अत एव यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वं सिद्ध्यति परसप्तम्यान्तु नलुमतेति निषेधान्न स्यात् । गुपिप्रभृतय इति । गुप्तिज्मान्बधा इत्यर्थः । कितभिन्ना इति । य एव विद्वान् चिकित्सतीत्यादिप्रयोगात्स परस्मैपदीति भावः । यद्यपि भाष्ये गुप्तिज्कित् माना अनुदात्तेत इत्युक्तं तथापि अनुक्रमदर्शनाय कितिः पठितो न त्वयमनुदात्तेदिति कैयटः । यद्यपि बधिर्मानौ दानशानौ च स्वरितेताविति नोक्तं तथापि वृत्त्यनुसारादेवमुक्तं गुपादिष्वनुबन्धकरणमिति भाष्येण ध्वनितोप्ययमर्थः । अन्यथा गुपादिष्वनुदात्तत्त्वमित्येव वदेत् । परे तु यथाश्रुतभाष्यस्वरसात्कितिरनुदात्तेद्बुधिः परस्मैपदी विचिकित्सतीति तु छान्दसमित्याहुः । अर्थान्तरे त्वननुबन्धका इति अत एव गुपादिष्वनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदमिति भाष्योक्तं सङ्गच्छते । अन्यथा सनोभिधानस्वभावादर्थविशेष एव साधुत्वेनार्थान्तरे सनभावे आत्मनेपदार्थत्वस्य चारितार्थ्येन सामर्थ्योक्तिरसङ्गता स्यादिति भावः । चुराद्य इति । एतच्च वृत्त्यनुरोधेन परेतु दाधर्त्तीति सूत्रे तेतिक्ते इति किं निपात्यते तिजेर्यङ्लुगन्तादात्मनेपदमिति भ्वादौ शब्विकरणो अप्येते अन्यथा णिजन्ताद्यङ्णिलोपयोरपि निपात्यता स्यात् । एतेन भ्वादौ गोपनाद्यर्थेषु गुपादेरनुदात्तपाठो व्यर्थ इत्यपास्तम् । गुपादिष्वनुबन्धकरणसामर्थ्यादित्यस्य सन्प्रकृतिभूतेष्वर्थविशेषविशिष्टेष्वित्यर्थः । भाष्यद्वयप्रामाण्यात्तद्विशिष्टेष्वपि अनुदात्तपाठः पाणिनेरिति ज्ञायते इत्याहुः । भाष्योदाहरणादिति । आद्यमतएकेति सूत्रे अन्त्यं सदेः परस्य लिटीति सूत्रे इति बोद्ध्यम् । कृत्यैवेदमिति । परेत्वत्र न भाष्यानुग्रहः । अत एवानुविपर्यभ्य इति सूत्र इवात्र भगवता पर्युदासप्रसज्यप्रतिषेधयोः फलभेदविचारो न कृतः । तस्माद्द्विपूर्वस्यास्य तिङप्रयोगो वा प्रयोग इत्याहुः । भाष्यमिति । संप्रसारणाच्चेत्यादि सूत्रेष्विति शेषः । मतान्तरेत्विति । इदमेव सारमिति वक्ष्यते अत्रारुचिबीजन्तु त्रैपादिकेन्तरङ्गे परिभाषाया भाष्यनये ऽप्रवृत्तिरिति तस्मादत्रापि पक्षे णत्वं भवत्येव । अत एवाभिषिषेणयिषति अभिषुणु इति भाष्यप्रयोगाः सङ्गच्छन्ते इषगमि अत्र मण्डूकप्लुत्याचीति वर्त्तते तस्य च शितीति विशेषणत्वेनाजूपे शितीत्यर्थादिष्णातीष्यत्योर्नातिप्रसङ्गः । एवञ्चात्र सूत्रे तु-

दादौ चोदित्पाठेनेति बोध्यम् । इकानिर्देशे ऽपि सौत्रत्वाच्चोपधालोपः । गमे-रिट् ॥ अत्र परस्मैपदमात्मनेपदाभावे लाक्षणिकं न वृद्ध इतिवत् अत एव वृचि सञ्जिगमिषितेत्यत्रेट्सिद्धिः ॥ अनुदात्तस्य च ॥ आदेच इत्यत उपदेश इति सृजि दृशोरित्यतो झल्यमकितीति च वर्त्तते । धातोः कार्यमुच्यमानमिति परिभाषया सन्निधापितस्य अकितीत्यस्य वा झलीति विशेषणम् । अनुनासिक-इति । स च दंष्ट्राव्यापारार्थक एव तनुत्रं वर्मदंशनमित्यमरस्वरसात् । आधु-निकत्वादिति । सर्वधातुष्वर्थनिर्देशस्य पाणिनीयत्वाभावादित्यर्थः । यज देव-पूजा । इह देवतोद्देशेन द्रव्यत्यागः पूजा । लिड्यभ्या ॥ वचिस्वपियजादीनाम्ति सूत्रो-पात्तयोरुभयोपाङ्ग्रहणेन ग्रहणमित्याह वच्यादीनामिति । वचिस्वपि ॥ इकानि-र्देशे सौत्रमसंप्रसारणं आदिशब्दो वचिस्वपिभ्यां न संबध्यते स्वपिग्रहणात् । चुरादौ संप्रसारणे ऽवच्यादेरभावाच्च यजादिः श्वयत्यन्तः परत्वात्संप्रसारणे कृते सकृद्गतिन्यायेन द्वित्वाप्राप्तिराह पुनरिति । विकिरणमिति क्यु प्रत्ययः । अत एव वपिः प्रकिरणार्थ इति सन्यङोरित्यत्र भाष्यम् । शासिवसि ॥ आदेशप्रत्यय-त्वाभावादप्राप्ते विधिरयम् । शासिद्वयमप्यत्र गृह्यते आशिषि लिङित्यादिनि-र्देशात् अवात्तामिति सिज्लोपस्यासिद्धत्वात्सः सीति तत्वे सिज्लोपः । इकार इति । इत्सञ्ज्ञकत्वे नुम्स्यादित्यभिमानः । परे तु वपिरित्यादौ स्थानिवद्भावेन भाष्यातिदेशिकधातुत्वं गृहीत्वा धातुनिर्देशे इकः सत्वेन नुमित्याहुः । उवाये-ति । लिटि वयो य इति यस्य निषेधाद्वस्य संप्रसारणम् । अस्य ग्रह्यादिसाहचर्या-त्परस्मैपदिनो वयेर्ग्रहणं न त्ववयेति दण्डकपठितस्यात्मनेपदिनः । ऊवतुरि-ति । वकारे कृते तस्य संप्रसारणन्तु न । उश्चास्येत्येव सिद्धे वादेशविधानसाम-र्थ्यात् उपदेशे ऽजन्तात्वादत्वत्वाच्च थलि नियममाशङ्क्याह वयेस्तासाविति । यस्तासावस्ति नित्यानिट् चेति भाष्योक्तेः । न हि तासौ सत्ता स्थानिवद्भावग्र-हणेनापि अतिदेष्टुं शक्येति भावः । वेञः । अत्र किनीति नानुवर्तते तदाह ववाविति । सामर्थ्यादिति । तत्सामर्थ्यात्पूर्वविधानन्तेन विध्यन्तराणां बाध इति भावः । इदमेव च सामान्यतो ज्ञापयति अभ्यासलोपाभ्याससंप्रसारणविषये ऽभ्यासविकारे बाध्यबाधकभावो नेति न प्रवर्त्तते इति बोध्यन्तेन व्यथो लिटी-त्यस्यापि यलोपं बाधित्वा प्रवृत्तिः संप्रसारणं तदाश्रयञ्च कार्यं बलवदिति तु उभयेषाङ्ग्रहणवैयर्थ्यापत्त्या भाष्ये प्रत्याख्यातमिति दिक् ॥ इडत्यर्तीति । अन्य-था ऋतो भारद्वाजस्येति विकल्पः स्यादिति भावः । वीयादिति । संप्रसारणे ऽकृ-त्सावति दीर्घः । अभ्यस्तस्य च । ननु द्वित्वे ऽभ्यस्तसञ्ज्ञायामुत्तरखण्डस्य संप्रसार णे अभ्यासस्य नसंप्रसारणे इति निषेधः स्यादत आह अभ्यस्तीभविष्यत इति । न च जिह्वायकीयिषतीत्यादावपि संप्रसारणापत्तिः । अभ्यस्तीभविष्यतो ह्वेञ

इत्यस्याभ्यस्तप्रकृतिभूतस्य ह्वेञ इत्यर्थेनादोषात् । अत्र हि क्यजन्तः सन्नन्तो वा तत्प्रकृतिः यद्गतन्धातुत्वं निमित्तीकृत्यावयवस्यैकाचो द्वित्वं स हि तत्प्रकृतिरित्युच्यते। अत एव ह्वः संप्रसारणमिति सन् चङ्परयोः संप्रसारणविधायकं चरितार्थं तत्र ह्वाययते रभ्यस्तप्रकृतित्वात्स्पष्टं चेदं भाष्ये। यत्तु कैयटेनाभ्यस्तादिप्तप्रत्यये ऽनन्तरस्य ह्वयतेर्ग्रहणेन नात्र दोष इत्युक्तं तत्तु द्युतिस्वाप्योरिति सूत्रोक्तरीत्या ऽसङ्गतमिति स्पष्टमेव। जुहुवतुरिति। ह्वा अतुस् इत्यत्रालोपापेक्षया ऽनैमित्तिकत्वेनान्तरङ्गत्वात्संप्रसारणे वार्णपरिभाषाया अनित्यत्वाश्रयणेनान्तरङ्गत्वात्पूर्वरूपे ततो द्वित्वे उवङ् उवङि पूर्वरूपस्य न स्थानिवत्त्वम् । उवर्णान्तधातोरुवङ्विधानेनाकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाभावात् आकारैकादेशस्याकारात्परभूतनिमित्तकत्वाभावाच्च । प्रत्यासत्त्याचः परस्मिन्नित्यत्रादेशस्यान्यपेक्षपरत्ववन्निमित्तकस्यैव ग्रहणात् अच्छ वदतीति अच्छगत्यर्थवदेष्विति गतित्वम् । विभाषाश्वेः । उभयत्रविभाषेयम्। शुशावेति अत्र नित्यत्वात्संप्रसारणे ऽन्तरङ्गत्वात्पूर्वरूपे द्वित्वे वृद्ध्यावाविति भावः । नन्वेतदभावे लिट्यभ्यासस्येति दुर्वारं तथाच शिश्वायेत्यसिद्धिरत आह श्वयतेर्लिटीति वाचनिकमेवेदं एतत्सामर्थ्याच्छ्वयत्यभ्यासविषयलक्षणानुपप्लव एवेति भावः । यत्त्वनेन परत्वात्तस्य बाध इति तन्न । अस्य परत्वेन द्विर्वचनात्पूर्वं प्राप्त्या लिट्यभ्यासस्येत्यस्य च द्वित्वोत्तरं प्राप्त्या युगपत्प्राप्त्यभावेन विप्रतिषेधशास्त्राप्रवृत्तेः । तदभावपक्षे तेन बाधस्य वक्तुमशक्यत्वाच्च ॥ पररूपमिति । आर्द्धधातुकोपदेशे ऽदन्तत्वाभावान्नातोलोपः । अश्वयीदिति । नन्वन्तरङ्गत्वाद्गुणे इगन्तत्वाभावाद्वृद्ध्यप्राप्त्या ऽयादेशे यान्तत्वादेव हलन्तलक्षणायानिषेधेसिद्धे किं स्यन्तेत्यत्र णिश्विग्रहणेनेति चेन्न । सिचि वृद्धेर्येननाप्राप्तिन्यायेनान्तरङ्गापवादत्वादिति दिक् ॥ इति भ्वादयः ॥

सौत्र इति। कर्मणिङिति साहचर्यात्तान्त इका निर्दिष्टो न त्विकारान्तः। इप्रत्यये ऽकृत्सार्वेति दीर्घेण सिद्धे ईयङ्करणात् इत्येके इति। ऋतीयते स्यात् घृणयोरिति कोशादर्थद्वयमपि। यत्र घृणयोरित्यस्य जुगुप्साकृपयोरित्यर्थः। नित्यमिडिति। अन्यथा भारद्वाजनियमाद्विकल्पः स्यादिति भावः। हुझल्भ्यो हृद्धित्यादौ तु न निर्दिश्यमानस्य व्यवहितत्वादिट्सहितस्य चानिर्दिश्यमानत्वात् ऋत्तादित्यत्र धित्वात्परत्वात्तातङि स्थानिवत्त्वेन पुनर्द्वित्वन्तु न सकृद्गताविति न्यायात् युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याभावरूपसंभवस्य सत्त्वेन परत्वप्रवृत्तेस्तादृशासंभव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी। स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरं न प्रवृत्तिकाले इति युगपदसम्भवः स्पष्ट एवेति

दिक् । अदःसर्वेषाम् ॥ अङ्गार्ग्येत्यतो ऽडिति वर्तते प्रणिहन्तीति नेर्गदेति णत्वं लुप्तषष्ठीकमिति असमस्तम् । सौत्रत्वाल्लुप्तविभक्तिकमित्यर्थः । तेन मुचादौ न दोषः । अनुदात्तोपदेशा इति । अनुनासिकान्ता इति शेषः । उपदेशेतिकिं यतेः क्तिनि नित्वेनाद्युदात्तत्वेऽपि न दोषः । जघनिथेत्यादौ ञ्णित्परत्वादाह । अभ्यासाच्चेति । इदञ्चाभ्यासाङ्गनिमित्तप्रत्ययैक्य एव तेन जिहननीयिषती- त्यादौ न । अदन्त इति । तेनावधीदित्यादौ न वृद्धिः अलिक्षतेति । शल इति क्सः । लुग्वेति वा लुक् । अलिक्षातामिति । क्सस्याचीत्यन्तलोपः । युजर्थ इति अनुदात्तेतश्च हलादेरिति युच् विचक्षणोन्तोदात्तः । ज्ञापनार्थ इति । अन्त्ये द्वि- त्वव्याघातकत्वेन चारितार्थ्यात्कथञ्ज्ञापकत्वं भाष्यानुक्तञ्च ज्ञापकत्वमत इदं माधवानुरोधेन स्फायचित्याद्यसाध्वेवेति बोद्ध्यम् । असिद्धकाण्डे इति । तेन सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीय इत्यत्र धन्वयोपधादिति वुञ् न किंतु छ एव । तच्च वचनं णत्वप्रकरणानन्तरं बोद्ध्यन्तेन पर्याख्यानमित्यत्र कृत्यच इति णत्वं न । अस्यतिवक्ति ॥ अस्यतेः पुषादित्वात्सिद्धे तङर्थङ्ग्रहणं वक्तीति वच्यादेशस्वतन्त्रयोरुभयोरपि ग्रहणं ख्यातीति प्रयोगस्यख्यानामनु- करणं दाधेतिवत् । वैचित्र्यार्थ इति । ख्वे इत्यस्य पूर्वत्रापकर्षः स इत्यस्योत्त- रत्रानुवृत्तिरिति वैचित्र्यम् । ईशेध्वे इडभावार्थं योगविभाग इति न युक्तं भाष्यवि- रोधात् । ईडजनोर्ध्वे चेति भाष्यसम्मतः पाठः । आङःशासु । अयन्धातुर्वेवीङ- नन्तरमिति जक्षित्यादिसूत्रस्यभाष्यस्वरसः । नमोवाकमिति वचेर्घञि वाकः नम इति वचनमित्यर्थः । नमस्कारमिति यावत् प्रशास्महे कुर्महे इत्यर्थः । धातूनामनेकार्थत्वात् । शिञ्जि । अयं दन्त्यादिरपि । शीङो रुट् । झोन्त इत्यतो झ इति अदभ्यस्तादित्यतो ऽदिति च वर्त्तते तच्च षष्ठ्या विपरिणम्यते तदहात इति । झस्यैव रुटि त्वदादेशो दुर्लभः । उतो वृ ॥ अचीत्येतद्रहितं नाभ्यस्तस्येति सूत्रमनुवर्तते तदाह पिबीति भाष्ये पिच्चेति । इदञ्च हलः श्न इति सूत्रे भाष्ये स्पष्टम् । सार्वधातुकमपिदित्यस्यावृत्त्येदं लभ्यते । ननु पूर्ववाक्येन ङित्त्वमपि दुर्लभमत आह विशेषेति । यूयादिति । आर्द्धधातुकत्वाच्च वृद्धिः । स्मरन्तीति । अव्यवहिततिङ इड्विधानमत्र बीजं शम्यमोर्बहुलं छन्दसीति विकरणलुकि वेदे उदाहरणम् । ऊर्णोतेः ॥ उतो वृद्धिरित्यतो वृद्धिरित्यनुवर्त्तते आमन्तीति ऊर्णोतेर्नुवद्भावेनेजादेरित्यनेकाच इति वा मोऽभावस्यातिदेशादिति भावः । नन्द्राः ॥ अजादेरिति कर्मधारयात्पञ्चमी तदाह । अचः परा इति । आदिभू- तादचः परा इत्यर्थः । ननूत्तरखण्डेपि णश्रवणं स्यादत आह । नुशब्दस्येति णत्वस्यासिद्धतया नुबुद्ध्यैव द्वित्वकरणात् यद्बुद्ध्या शास्त्रप्रवृत्तिस्तदीयद्वितीय- प्रयोगस्यैव साधुत्वान्वाख्यानाच्चोत्तरखण्डे णश्रवणं पूर्वोच्चारेण न व्यवधा-

नाच्च न शास्त्रेण तत्प्रसङ्ग इति भावः। पूर्वत्रासिद्धीयमिति। पूर्वत्रासिद्धमि-
त्यधिकारे भवमित्यर्थः । गहादित्वाच्छः। यत्पूर्वत्रासिद्धीयं शास्त्रं तत्रद्वित्वे
इत्युपतिष्ठते इत्यर्थस्तच्च पूर्वत्रेत्यनेनान्वेति एवञ्च द्वित्वभिन्ने पूर्वत्रेदमसि-
द्धमित्यर्थः । द्वित्वस्य त्वन्यत्रासिद्धत्वं भवत्येव अत्र द्वित्वशब्देन षाष्ठमाष्ट-
मिकञ्चाविशेषात् । लिङ्गादिति । अन्यथा अनितेरित्यनेन कृतणत्वस्य द्वित्वे
प्राणिणदित्यादेः सिद्धावुभाविति सूत्रं व्यर्थं स्यादेवञ्च णत्वविधावस्यानुप-
स्थानमिति भावः। विभाषोर्णोः। गाङ्कुटादिभ्य इत्यतो ङिदिति विज इडि-
त्यत इडिति चानुवर्तते तत्रेडागम एव विज इडित्यत्र तस्यैव संभवेनार्था-
धिकारात्। अतः प्रोर्णुवीत्यत्र नायं विकल्पः। अन्यथा परमपि सार्वधातुकम-
पिदिति बाधित्वा निषेधाश्च बलीयांस इति इदमेव स्यादिति दिक्। गुणो-
ऽपृक्ते॥ नाभ्यस्तस्येत्यतः पितीत्याद्यनुवर्त्तते उतोवृद्धिरित्यतो हलीति च। ऊ-
र्णोतेर्विभाषा ॥ सिचि वृद्धिरिति सूत्रं नेटीति च वर्त्तते निषेधविकल्पे विधि-
विकल्पस्य फलितत्वान्नेति निवृत्तेर्वा ऽऽह वृद्धिर्वेति। ब्रुवः पञ्चानाम् ॥ आद्यं
ब्रुव इति पञ्चम्यन्तन्द्वितीयं षष्ठ्यन्तं विदो लटो वेत्यतो लटो वेति वर्त्तते। चत्व-
मिति। महाप्राणादेशप्रकरणादाहस्त इतिनोक्तम् । हलादेः पित इति नाभ्य-
स्तस्येत्यतः पितीत्याद्यनुवर्त्तते सार्वधातुकस्येत्यपि बोद्ध्यन्तेन उवक्येत्यत्र न
अपृक्त इति तु नानुवर्त्तते ब्रवीतीत्यसिद्ध्यापत्तेः। वक्तीत्यङित्ति प्रयोगस्यानामनु-
करणे ऽस्य स्वतन्त्रस्य च विनिगमनाविरहादनुकरणमिति भावः । दीर्घइणः ।
अत्र लोप इत्यतो ऽभ्यासस्येति व्यथो लिटीत्यतो लिटीति चानुवर्तते। कितीति
किं इयाय न च परत्वाद्दीर्घेपि अभ्यासविकारे बाध्यबाधकभावाभावेन पुनः-
प्रसङ्गविज्ञानेन चेयङि रूपसिद्धिरिति वाच्यम्। अभ्यासविकारे बाध्यबाधकभा-
वाभावेन परत्वाप्रवृत्तौ इयङुत्तरं दीर्घे ऽनिष्टस्यापत्तेः। ईयतुरिति ननु इइ
अतुसिति स्थिते ऽभ्यासदीर्घे यद्यपि स्थानिवत्त्वं न सवर्णदीर्घे ऽभ्यासदी-
र्घविधानसामर्थ्यात्पुनर्यणभावे ईअतुरिति प्राप्नोति अनन्तरस्येति न्यायेन त-
त्सामर्थ्येन यण एव बाधो न तु दीर्घस्येति चेन्न। पूर्वस्यैव विधौ स्थानिवत्त्वेन
यणि दीर्घाप्रवृत्तेः। आयन्निति यण आभीयासिद्धत्वाद् तदसिद्धप्रत्याख्याने
तु लावस्थायामडेव कर्त्तव्यः। आडजादीनामिति च न कार्यम्। आटश्चेति सूत्र-
मटश्चेति कार्यन्ते न ऐज्यते त्यादौ न दोषः। वृद्धिविधौ धातोरित्यपकर्षणास्व-
पोहसतीत्यत्र न वृद्धिः। अतो गुण इत्युत्तरं नाट इति कर्त्तव्यन्तेनाटीदि-
त्यादौ न पररूपम् । आयुनगित्यादौ वेदे तु छान्दसो दीर्घः । आयन्नित्यत्र
चान्तरङ्गत्वाद्वृद्धावायादेशः। वृद्धौ कृतायामिणो यणिति तु न तत्र एरित्यपक-
र्षणेनेकाररूपस्येणो यणित्यर्थात् इदञ्चासिद्धवत्सूचनमाङ्योगे इति सूत्रयो-

भाष्ये स्पष्टम् । इणो ऽण इति प्रसिद्धत्वादस्यैवात्र ग्रहणमितिभावः । उभयत इति पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्याञ्च विरोधस्य पुरःस्फूर्तिकत्वाद्विरुद्धातिदेशद्वयस्य युगपदसम्भवः । यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकार्ये प्रेरितो ऽविरोधार्थी कस्यापि कार्यं न करोति तद्वदिति भावः । एतद्विषये स्थानिवत्वन्तु न आनुमानिके स्थान्यादेशभावे विशिष्टस्य स्थानित्वेपि प्रत्येकं तयोः स्थानित्वे मानाभावात् श्रौतस्तु वर्णयोरेवेति बोध्यम् । स्पष्टा चेयं रीतिरुपसर्गादस्य त्यूह्योरित्यस्यप्रोह्यतइत्यादौ गुणे कृते प्रवृत्तिवारणपरभाष्येन भान्तस्यैकदेशविकृतन्यायेनोपसर्गत्वादीकारस्य परादिवद्भावेनेत्वाद्ध्रस्वो दुर्वारः । स्पष्टाचेयं रीतिरुदके केवले इति पूर्वपदान्तोदात्तत्वं प्रयोजनम् गुडोदकमिति भाष्यमुपादायान्तादिवच्चेति सूत्रे कैयटइति वाच्यम् । येनविधिरिति सूत्रे भाष्ये सर्वके इत्यत्र जसः शी कथं न च यथा गङ्गाप्रविष्टनद्या गङ्गाग्रहणेन ग्रहणं तथा तदन्तः प्रविष्टाकस्यापि तद्ग्रहणेन ग्रहणमिति वाच्यम् । यथा परिच्छिन्नपरिमाणार्थवाचकानां खार्यादिद्रोणादिशब्दानामूनाधिकयोर्न प्रवृत्तिस्तथा सर्वाद्युपादानेन क्रियमाणसञ्ज्ञाया विना शास्त्रव्यापारं न न्यूने ऽधिके वा प्रवृत्तिरित्याशङ्क्य नेदमदसोरिति ज्ञापकात्समाहितं तत्तुल्यन्यायादत्रापि दीर्घविशिष्टे भान्ते च लौकिकन्यायेनोपसर्गत्वाभावात् उपसर्गसञ्ज्ञायाः परिच्छिन्नपरिमाणप्रादिगतत्वादिति बोध्यम् । लक्ष्यानुसारात्क्वचिच्चायानाश्रयणमिति न दोष इत्यन्ये । परे तु वतिघटितशास्त्रस्याहार्यारोपबोधकत्वेन तस्य च विरुद्धविषयस्यापि युगपत्संभवेन लौकिकन्यायेनैकेन नास्य सिद्धिः । किंच तत्रान्तादिवत्त्वे ऽपि व्यपवर्गाभावेनोपसर्गात्परत्वस्योण्याभावेनाभीयादित्यादिसिद्धिः । नचोपसर्गस्येति सूत्रे ऽयतिपरस्योपसर्गस्येत्यर्थे प्लायते इत्यादावेकादेशेकृते व्यपवर्गाभावाद्यताविति लत्वं न स्यादित्याशङ्क्यान्तादिवद्भावेन व्यपवर्ग इति भाष्यासङ्गतिस्तस्मात्पूर्वपरान्तावद्भावे आर्थसमाजग्रस्तः स इति वाच्यम् । तद्भावे ऽपि वास्तवभेदाभावेनायतिपरत्वस्यानुपपादनेन तस्यैकदेश्युक्तित्वात् । न हि तेनातिदेशेन वाच्यवृत्त्या तदारोपबोधनं शक्यं कर्तुन्तस्मादेकदेशिनोक्ते तस्मिन्नर्थे परेणैकदेशिनोभयत आश्रयेणान्तादिवदित्युक्ते ऽचःपरस्मिन्निति । स्थानिवद्भावाद्व्यपवर्ग इति सिद्धान्तिनोक्तम् । अत एवोभेअभ्यस्तमिति सूत्रे ईत्संचित्यादौ नुम्प्रतिषेध एकादेशे कृते व्यपवर्गाभावाद्दुरितः । किं चाभीयादित्यादौ वर्णादाङ्गमिति न्यायेन ह्रस्वे कृते लक्ष्येलक्षणस्येति न्यायेन पुनर्ह्रस्वाप्राप्तेर्नास्य निषेधस्योपयोगः । इदमुपसर्गाद्ध्रस्व इति सूत्रे कैयटे स्पष्टम् । यत्तु व्याश्रयत्वादत्र तन्न्यायाप्रवृत्तिरिति तेनोक्तन्तु इयायेत्याद्यसिद्धासङ्गतमिति स्पष्टमेव । यदपि प्रोह्यते इत्यत्रैकादेशे कृते व्यपवर्गाभा-

वात्र ह्रस्व इति तत्सूत्रे भाष्ये उक्तं तस्य अन्तादिवद्भावेपि उपसर्गात्परत्वाभावादित्यर्थः साप्येकदेश्युक्तिरेव वार्णपरिभाषया सिद्धेः । आऊह्यते ओह्यते समोह्यते इत्येतद्वारणाय तत्र समेयादित्येतद्वारणायात्र चाण इत्यनुवर्त्तते इति भाष्यमप्येकदेश्युक्तिरेव आङोप्युपसर्गत्वेन तेन न्यायेन पूर्वं ह्रस्वस्यैव प्रवृत्तेः । अत एवान्तादिवत्सूत्रे ऽभ्यासादीनां ह्रस्वत्वे नान्तादिवत् । के पुनरभ्यासादयः अभ्यासोहाम्बार्थेनदीनपुंसकोपसर्जनह्रस्वत्वानि उपेयाय प्रोह्यते अम्बात्रेत्याद्युदाहृत्य न वा बहिरङ्गलक्षणत्वात् अन्तरङ्गं ह्रस्वत्वं बहिरङ्ग एते विधय इत्युक्तं न च ऊहेर्ह्रस्वत्वं न अन्तरङ्गमुपसर्गसंबन्धोत्तरमेव प्रवृत्तेः वर्णाश्रयत्वादेकादेश एवान्तरङ्ग इति वाच्यम् । तदपवादवार्णपरिभाषाया अप्यनेनोपलक्षणात् । एवञ्चोभयत इत्यादेरग्रहणानुवृत्तेश्चैकदेश्युक्तित्वं स्पष्टमेवोक्तम् । किं चोहेरिवेणमभ्यासादिष्वगणयताभीयादित्यादेरनभिधानं सूचितं यदप्यन्तादिवच्चेति सूत्रे प्राटितेत्यादावेकादेशादुत्तरपदप्रकृतिस्वरो विप्रतिषेधेन स चावश्यं विप्रतिषेध आश्रयितव्यः न ह्येकादेशे उत्तरपदं परं भवतीति व्यपवर्गाभावाभिप्रायेण सिद्धान्तिनोक्ते ननु चान्तादिवद्भावेन परमिति पूर्वपक्ष्येकदेशिना शङ्किते उभयत आश्रये नान्तादिवदित्युक्तं साप्येकदेश्युक्तिरेव । एवं नपदान्तसूत्रस्थे गोस्त्रियोरिति सूत्रस्थे ऽन्यत्र च भाष्ये ऽस्योल्लेख एकदेश्युक्तिरेव । निरूपितञ्च तत्र भाष्यप्रदीपोद्द्योते तस्य तत्त्वम् । अत एवान्तादिवच्चेति सूत्रे उभयत आश्रये इत्यर्थं न्यायसिद्धमुक्त्वा तस्योदाहरणं न दत्तं वृत्तिकृता च सोर्थो नोक्त इत्याहुः । समेयादिति । आङः प्रश्लेषो ऽत्र बोद्ध्यः । भौवादिकस्येति । इटकिटकटीत्यत्र प्रश्लिष्टस्याशीर्लङीति भावः । इकार्द्धातु कईति स्वरूपकथनं किति लिङीत्येतावतैव सिद्धेः । नित्यमधिपूर्व इति । धातुसञ्ज्ञा तु पाठापेक्षणादधिरहितस्यैव क्रियावाचकत्वन्तु काल्पनिकन्तस्यास्त्येव अधिरूपरिभावे उपरिभावश्च पठने नियमपूर्वकत्वमिति भूवादिसूत्रभाष्ये स्पष्टम् । ननु द्विर्वचने ऽचीति निषेधादिण एव द्वित्वे उत्तरखण्डस्य गादेशे ऽधीगे इति स्यादत आह लावस्थायामित्यादि । एवञ्च द्वित्वनिमित्ताज्निमित्तत्वाभावेन द्विर्वचनेचीत्यस्याप्रवृत्तिरिति भावः । गुणायादेशयोरिति । पूर्वन्धातुः साधनेन युज्यते पश्चादुपसर्गेणेति सुट् कात्पूर्व इति सूत्रे भाष्ये सिद्धान्तितत्वादिति भावः । साधनेनेत्यस्य कारकेणेत्यर्थः । उपसर्गेण तत्सञ्ज्ञकशब्देन इति दर्शनइति । अनेनानारुचिर्बोधिता तद्बीजन्तु तत्रैव भाष्ये एवमुपक्रम्य नैतत्सारमित्युक्तिः । निर्देशाच्चेति । अनेन हि निर्देशेन पूर्वन्धातुः साधनेनेत्युक्तन्यायो ज्ञाप्यते उपसर्गार्थेन तु पूर्वयोगः तेन पूर्वं योगादेवानुभूयते निविशते इत्यादौ कर्मलकारात्मनेपदयोः सिद्धिः । नेविश इत्यादेर्नः परत्वयोग्यादित्यादिक्रमेणार्था-

त्पूर्वमेव तङ् । संपृचानुरुधेत्यादेरपि संपूर्वत्वयोग्यात्पृचेरित्यादिक्रमेणार्थः । अत एव न तत्र धातूपसर्गयोः समासः । तिङि अतिङिति निषेधात् । ध्वनितञ्चेद-मुपपदमतिङिति सूत्रे भाष्ये गोसन्दाय इत्यादावपि सन्धोत्यार्थविशिष्टा-द्दातोः कर्मण्युपपदे ऽणि ततः संशब्दयोगे गतिसमासे उपपदसमासो बोद्ध्यः साध्यत्वेन प्रतीतये च पूर्वं साधनसंबन्धः तस्मिंश्च तत्प्रयुक्तं कार्यमपि पूर्वमे-वान्तरङ्गत्वात् । एवञ्च तिङुत्पत्त्यनन्तरमधिसंबन्धे वार्णादाङ्गमिति न्यायेन गुणादौ कृते यणघञ्ल्युडादयो ऽप्युपसर्गार्थविशिष्टे सिद्धत्वप्रतिपादनाय पूर्वं तदर्थसंबन्धे अन्तरङ्गत्वात्पदद्वयनिमित्तसमासात्पूर्वमेव । एवं भावार्थतिङोपि । ध्वनितञ्चेदं सुट्कात्पूर्वो गतिर्गतौ उपपदमतिङित्यादिभाष्येषु । भिन्नपदवा-च्यकारकबोधकपदसंबन्धस्तूपसर्गसञ्ज्ञकशब्दयोगोत्तरमेव । अत एव अद्य आ-ऊढा अद्योढेत्यत्र पूर्वमन्तरङ्गत्वादाद्गुणे पररूपमिति संप्रसारणाच्चेति सूत्रे भाष्ये । परत्वादियङिति । आडपेक्षयेत्यादिः । अत्र वदन्ति । लावस्थायामडिति पक्षे ऽन्तरङ्गत्वाद्वृद्धावेतद्रूपासिद्धिः कथञ्चिद्वार्णादाङ्गमित्याश्रयणेपि अनेका-च्त्वाद्यणापत्तिः । नचाटो ऽसिद्धत्वाच्च यण् । अत्र पक्षे ऽसिद्धवत्सूत्रस्य भाष्ये प्रत्याख्यानात् । न च एरनेकाच इति योगं विभज्य इणो यणित्यनुवर्त्याडादि-सहितानेकाचश्चेद्यण् तर्हि इवर्णान्तेण एवेति नियमान्न दोष इति वाच्यम् । शब्दमर्यादया ऽलाभात् । उक्तरीत्या ऽडादिसहितानेकाजिणो यण एवाभावात् । भाष्येत्त्वसिद्धवत्सूत्रप्रत्याख्याने ऽस्य योगविभागस्य विध्यर्थतामाश्रित्यैतत्सा मर्थ्यादार्धात्यत्र पूर्वंगाडित्युक्तं तस्मादीदृशे विषये पक्षयोः फलाभेदायेङ्-धातोर्लोके ऽनभिधानमेव संप्रसारणाच्चेति सूत्रोदाहृतमध्यैयातामित्यादि तु छान्दसन्तत्र हि बहुलं छन्दस्यमाङ्योगेपीति बहुलग्रहणादादेशोत्तरं पर-त्वादियङ् तत आटि वृद्धिः नचाण् नित्यः इयङोपि तत्त्वात् । अन्तरङ्गया वृद्ध्या बाधेपि लक्षणान्तरेण निमित्तविघातेपि नित्यत्वाङ्गीकारादिति केचित्तं लावस्थायामडिति पक्षे ऽपि वार्णादाङ्गमिति न्यायेनाङ्गस्य तन्निमित्तभूतादे-शानाञ्च पूर्वं प्रवृत्त्या न दोषः । यथा ऽन्तरङ्गानपीति न्यायो लुकृतत्प्रयोजक-समासादीनाञ्च प्राबल्यबोधकः । अतिप्रसङ्गस्तु अनित्यत्वाद्वारणीय इत्याहुः । गाङादेशादिति । व्याख्यानमत्र शरणम् घुमास्था ॥ जहातीति हाको ग्रहणं न हाङो व्याख्यानात् दीङो युडित्यतः क्ङितीति वर्त्तते आर्द्धधातुक इति वाधि-कृतं ईग्रतीत्यत ईदिति च वर्त्तते इकृस्मरणे इणवदिक इत्यादौ विशेषणार्थः क-कारः केचित्त्विति । अत एव भाष्ये इणो गा लुङीत्येतत्प्रकरणे इदं पठितम् अ-धीयन्निति । इयङ् सवर्णदीर्घः । राघवयोरित्यधीगर्थेति षष्ठी । केचिदिति । अ-त्रार्हचिबीजमटआभीयतया ऽसिद्धत्वेनानेकाच्त्वाभावः । लावस्थायामडिति ।

पक्षेऽपि लङादिनिमित्तत्वादटः समानाश्रयत्वेन स्थानिनमादाय वा समानाश्रयत्वेनासिद्धत्वं सूपपादम्। ईदृशार्थमसिद्धवत्सूत्रमावश्यकमेव। अत एव तत्सूत्रे भाष्ये वार्त्तिकोक्तफलानामन्यथासिद्धिं कृत्वाऽपि आरभ्यमाणेऽस्मिन्सूत्रे इत्याद्युक्तम्। सर्वथा प्रत्याख्याने तु अस्य लङ्प्रथमपुरुषबहुवचनेऽनभिधानं स्वीकार्यम्। आर्द्धधातुके न प्रयोग इत्यजधातावुक्तम्। जुस्वेति। एवकारस्तूत्तरत्र पठ्यमाने लिट् च लिङाशिषीत्यादावर्थवान् तथा नित्यं ङित इत्यतो ङित इत्यनुवृत्त्या सिद्धे लङ्ग्रहणं लङ्वद्भावेनैतदप्रवृत्त्यर्थं विध्याशिषो स्कोरिति सलोपे यायादित्येव रूपमिति विशेषद्योतनाय द्विवचनमुदाहरति यायातामिति। लिङः सलोप इति सलोपः। पारक्षणे गातिस्था घुमास्थेत्यत्र पिबतेरेव ग्रहणान्नेत्वमिति लुकौ। प्राणिदातीति। घुत्वाभावाच्छेपे विभाषेति वैकल्पिकं णत्वं सार्वधातुकमात्रेति। मात्रशब्दोऽवधारणे सस्थानत्वमिति। ख्याञादेशस्य खशादित्वप्रयोजनकथनावसरे वार्तिकमिदं सस्थानत्वं सस्थानशब्दस्तेन स्ववच्यो जिह्वामूलीयो बोध्यते। यद्वा सस्थानत्वशब्दे सस्थानशब्दः शब्दपरस्तद्भावश्च तदर्थ एव तदाह सस्थानो जिह्वामूलीय इति। अन्यथाऽस्मात्तृचि तस्य दुर्वारत्वेन भाष्यासङ्गतिः प्रमाणानां सामान्ये पक्षपाताच्चार्द्धधातुकमात्रे प्रयोगाभाव इति भावः। नटः ख्यातीत्यादौ तु जिह्वामूलीयो भवत्येवेति दिक्। संपूर्वस्येति सार्वधातुकेऽपि नेति भावः। संख्येति प्रयोगस्तु चक्षिङ एव नास्येति। घुप्रकृति माङ्गिति भाष्ये पाठादिति भावः। अयमन्तीति। शिष्टैरिति शेषः। अत्रार्थे न भाष्यानुग्रहः। विद इति पञ्चमी विकरणाव्यवधाने लटस्ततः परत्वासंभवादाह वेत्तेरिति। अकारान्तनिपातनादिति। आम्सन्नियोगेनेति शेषः। तदुक्तं भाष्ये निपातनादगुणत्वमिति। विदाङ्कुर्वन्त्विति। इतिशब्दः प्रकारे एवञ्जातीयकमित्यर्थस्तदाह पुरुषवचने इति। तयोर्नान्तरीयकमुच्चारणमिति भावः। कर्तृत्वपरस्मैपदे तु विवक्षिते एव लोकविवक्षानुसारेणेति शब्दादित्येके एते अप्यविवक्षिते नान्तरीयकत्वादेवेत्यन्ये। लोट् तूच्चारणसामर्थ्याद्विवक्षित एव। अत एवोषविदेत्याम्विधानं तत्रापि व्याख्यानादुषजागृसाहचर्याच्चास्यैव परस्मैपदिनो ग्रहणम्। गणकार्यस्येति। तनादिसाहचर्येण तद्गणस्यस्यैव कृञोऽत्र ग्रहणं क्रियासामान्यवाचित्वेनान्वययोग्यतया तस्यैवात्रानुप्रयोग इति भावः। भाष्ये कृग्रहणस्यात्र प्रत्याख्यानादत्रार्थे तात्पर्यमयुक्तं न विश्वसेदित्याद्यार्षमेव। ज्ञापितेऽपि तच्चारितार्थ्याभावाच्चेत्यन्ये। अत उत्सा॥ गमहनेत्यतः क्ङितीति नित्यं करोतेरिति उतश्च प्रत्ययादित्यत उत इति चानुवर्त्तते। तपरत्वसामर्थ्यादिति। इदं स्थानिवत्सूत्रे भाष्ये स्पष्टम्। उदवोढामित्यत्र वृद्धिवल्लक्ष्येलक्षणस्येति न्यायेनाप्येतद्वारयितुं शक्यं विकारभेदकृतलक्ष्यभेदानाश्रयणादिति केचित्।

तत्स्थानिक इव तत्स्थानिकस्थानिके ऽपि लोकन्यायेन तत्त्वबुद्धेः स्वस्थानिकादेशस्थानिकादेशकृतलक्ष्यभेदानाश्रयणे ऽपि स्वस्थानिकादेशावयवस्थानिकादेशकृतलक्ष्यभेदानाश्रयणे मानाभाव इति स्थानिवत्सूत्रस्थभाष्याशयं परे ॥ कुर्वन्त्वित्यत्र हलि चेति दीर्घस्तु न न भकुर्छुरामिति निषेधात्। लुकोऽसिद्धत्वादिति। सार्वधातुकइत्यस्याभावेपि उकारान्ताङ्गावयवकरोतेरत उदित्यर्थात् अङ्गसञ्ज्ञायाश्च लुक्यपि प्रत्ययलक्षणेन युवोरनाकावित्यादिसूत्रभाष्ये स्वीकारेण सार्वधातुकग्रहणं स्पष्टार्थम् एतत्सूत्रशेषस्यमिदन्तर्हि प्रयोजनं सार्वधातुके भूतपूर्वमात्रे ऽपि यथा स्यात् कुर्वितीति भाष्यन्त्वेकदेश्युक्तिरिति बोद्धम् । दश्च ॥ सिपि धातोरिति सूत्रं पदस्येति चानुवर्तते पदान्तस्येति किम् वेत्सि वत्वस्यासिद्धत्वाद्धोस्त्यत्र श्नसोरिति शकन्ध्वादित्वात्पररूपं अत्र सार्वधातुके इति निष्फलं आर्द्धधातुके तस्य भूभावात् ईहामासेत्यादौ अत आदेरिति दीर्घे परस्य लोपे ऽपि तत्यभावात् श्नस्य सार्वधातुके एव सत्वाच्च आसन्निति आयन्नितिवत् उपसर्गपरस्येति सस्य विशेषणत्वेन प्रादुरासीदित्यत्र न षत्वम् अस्तेः किम् । अनुसूते ऽनुसूस्तस्यापत्यमानुसेय इत्यत्र शुभ्रादित्वाड्ढकि ढे लोप इत्युलोपे सकारनिरूपितोपसर्गत्वसत्वेन षत्वाप्राप्तेः । मृजेर्वृ अत्रास्याधृषी । यस्य च मृजू इत्यस्य ग्रहणं व्याख्यानात् लुग्विकरणपरिभाषा त्वनित्यत्वादत्र न प्रवर्त्तते धातोः कार्यमुच्यमानमिति परिभाषालब्धमर्थमाह धातुप्रत्यये इति । तेन परिमृड्भ्यामित्यादौ न । अजादाविति । आद्यंशे यस्मिन्विधिरिति परिभाषालभ्यार्थानुवादः। मृड्ढीति । हेर्धिः । षत्वष्टुत्वजश्त्वानि । परत्वादिति । युगपत्प्रवृत्तौ द्वयोः स्वस्वनिमित्तानन्तर्यासंभवरूपो विरोधो ऽस्तीति भावः । रुदश्च ॥ हलादेः किं व्यत्यरुदि पञ्चभ्यः किम् । अजागः । पित इति स्वरूपकथनम् । अपृक्तापितो ऽसम्भवात् तुरुस्तु इत्यनेनैव तन्निवृत्तेश्च । सार्वधातुकस्येत्यप्येवम् । अरुदितामिति । तामादिविधौ धातोरित्यस्य विहितविशेषणत्वेन निर्दिष्टपरिभाषानपेक्षणादन्तरङ्गत्वात्तामादयस्तत इट् । इदं पादः पादिति सूत्रे भाष्ये स्पष्टम् प्रकृतीति प्रत्ययविशेषापेक्षयासुडपेक्षयान्तरङ्गत्वाद्वितश्चेति लोपे यासुडीटोः प्राप्तयोरन्तरङ्गत्वाद्यासुडित्यर्थः । सामान्यधर्मापेक्षशास्त्रापेक्षया कश्चिद्विशेषधर्मो ऽधिको निमित्तकोटौ यत्र विशेषापेक्षशास्त्रे ऽस्ति तत्ततो बहिरङ्गमिति तदर्थः । रुदादित्वं सार्वधातुकत्वञ्च तथा सार्वधातुकत्वज्ञानाय प्रकृते धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति सामान्यधर्मनिमित्तकत्वमप्यत्रास्तीति बोद्धम् वस्तुत इदं बहिरङ्गत्वं भाष्ये क्वापि नाश्रितमिति परिभाषावृत्तौ निरूपितम् । तस्मान्नित्यत्वादत्र यासुटि कृते ऽपृक्तत्वाभावेनाडीटोः प्राप्त्यभावेन तयोरनित्यत्वादित्यन्ये । सुविनिर्दुर्भ्यः । सुपीत्यागन्तुनेकारेण कृतसंप्रसारणस्य ग्रहणं

सूतीति क्तिन्नन्तं समेति पचाद्यजन्तसाहचर्येण तस्यापि कृदन्तस्यैव ग्रहणात् पूर्वन्धातुरुपेति द्वित्वात्पूर्वं षत्वायेदं । षत्वेकृते इति । सुषिभूतो द्विरुच्यते इति भाष्यादिति भावः । यदि तु सुपिसंबन्धिसस्येति सूत्रार्थो ऽभ्याससोपि सुपिसंबन्धिभवत्येव तदीयद्वितीयप्रयोगसंबन्धित्वादित्युच्यते तदा षत्वात्पूर्वं द्वित्वे ऽपि न दोषः । इदमेवयुक्तं पूर्वन्धातुः साधनेनेति सिद्धान्तात् । अत एव भाष्ये सुपिभूतो द्विरुच्यत इति प्रचुरः पाठः । अन्यथा ऽभ्यासस्यानर्थक्यात्तत्संबन्धिनः षत्वमेव न स्यादिति निरूपितं स्यादिष्विति सूत्रे । नित्यत्वाच्चेति अभ्युच्चयोयम् सुपिरूपाभावादिति । अर्थवत्सुपिरूपाभावादित्यर्थः । अन्यथैकदेशविकृतन्यायेन तत्वं दुर्वारमेव । अभ्यासस्य नार्थवत्त्वं नापि समुदायस्येत्यत्रै वसूत्रे इयर्तेर्दिगीत्यत्र सुट् कादित्यत्र च भाष्ये स्पष्टम् । अनितेः ॥ उपसर्गादसमासइत्यत उपसर्गादिति वर्त्तते नो ण इति च अत्र समीपार्थकमन्तपदमपकृष्य सप्तम्या विपरिणम्यानितेः समीपे यो रेफस्तस्मान्नस्य णत्वमित्यर्थः । समीप्यञ्चाव्यवहितमेव व्याख्यानात् प्राणितीत्यत्रैकादेशस्य परादिवत्त्वेनानितेरव्यवहितत्वं रेफस्यास्ति स्थानिवत्त्वन्तु न । पञ्चमीसमासस्यानित्यत्वात् । पर्यनितीत्यादौ यकारेण व्यवधानान्न णत्वं अन्यथा ऽडादिव्यवायें ऽपि स्यादिति भाष्ये स्पष्टम् । अन्त इति सूत्रं हेप्राणित्यत्र पदान्तस्येति प्रतिषेधबाधनार्थम् । अन्तापवाद इति । यद्यप्यन्तरङ्गो ह्रस्वस्तथाप्यपवादविषयं प्रकल्प्योत्सर्गाणां प्रवृत्तेर्न ग्रामण्येकुलायेत्यादौ प्रवर्त्तत इति तृतीयादिष्विति सूत्रकैयटोक्तरीत्या प्रकल्प्य चापवादविषयमुत्सर्गोभिनिविशते इति भाष्योक्तन्यायमूलकेनोपसीजनिष्यमाणोप्यपवाद इति न्यायेन ददतीत्यादौ अन्तरङ्गाप्यन्तादेशो न । ईर्त्सन्तीत्यादौ नायं अनन्तइत्यापकर्षात् । अत एव प्रतीपिपन्तीत्यादौ न । जाग्रोविचिण्णल् ॥ पर्युदासेन वृद्धिविषयस्य ङित्पर्युदासेन प्रतिषेधविषयस्य ग्रहणं विरनैतच्छास्त्रकल्प्यो विन् जागृविः । दर्वि रित्याद्यव्युत्पन्नं प्रातिपदिकम् । उणादिषु पाणिनेरव्युत्पत्तिपक्षस्यैव सत्त्वात् । अत्रोणादिको क्विनिति चिन्त्यम् । एतच्चोणादय इति सूत्रे निरूपयिष्यते । विग्रहणसामर्थ्याज्जागृवौ लक्षणान्तरेणापि गुणो न । क्विप्तु न गृह्यते । शुद्धेक्परस्यात्र ग्रहणात् । क्विपस्तु सानुनासिक इति भाष्ये स्पष्टम् । निषिध्यते इति । जागरक इत्यत्र गुणे कृते उपधावृद्धिस्तु न चिण्णल्प्रतिषेधवैयर्थ्यापत्त्या जागर्त्तेर्गुणे उपधावृद्ध्यभावकल्पनात् । यत्तु गुणोत्तरं वृद्धिमात्राभावे एतज्ज्ञापकमाश्रित्य स्यन्तीति सूत्रे जागृग्रहणं त्याज्यमिति । तन्न । सति संभवे सजातीयापेक्षतैव ज्ञापकस्योचितेत्यर्थस्य जागृग्रहणेन ज्ञापनादित्याहुः । जाग्र इति सूत्रस्यभाष्यस्य तु सामान्यापेक्षज्ञापकत्त्वे एव स्वरसो दृश्यते ॥ दद्रुरिद्रस्य । सौत्रो ह्रस्वः । ई हल्यघो-

रित्यस्यापवादः। आर्द्धधातुके लोपविधानात्सार्वधातुके एवेदम् । आत इत्यनुवृत्त्या लोपोक्तं नास्य प्रवृत्तिः । अनयोरात इति । श्नासाहचर्येणाभ्यस्तेष्वन्त्यस्यैव ग्रहणाज्जाग्रतीत्यत्र न दोषः । तत्साहचर्येणाभ्यस्तस्यापि सार्वधातुके एव लोप इत्याह सार्वधातुके इति। आमिति । कास्प्रत्ययादिति सूत्रे भाष्ये स्पष्टमिदम् । ओऽत्र्येवेति । ओकारस्य विवृततरत्वेन यत्नलाघवादिति भावः । आलोपे इति । आर्द्धधातुके विवक्षिते लोपेऽपि औविधानसामर्थ्यादेव भूतपूर्वगत्याकारान्तत्वमाश्रित्य णल आदेश इति भावः । आम्रेति । पक्षे इति भावः । इदं मतं वस्वेकाजादिति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमेवोक्तम्। सनि खलीति। अनन्तरस्येति न्यायेन वार्त्तिकप्राप्तस्यैव निषेधः। तेन दिदरिद्रिषतीत्यत्रातो लोपो भवत्येव । दिदरिद्रिषतीत्येके दिदरिद्रासतीति वेति भाष्यात्। अदरिद्रासीदिति। अयं प्रयोग इट्टरिद्रस्येति सूत्रे भाष्ये । इत्येके इति । धि चेत्यत्र सिचो ग्रहणं कर्त्तव्यमिति वार्त्तिकादिति भावः । भाष्यमिति । इष्टमेवैतच्चकाधीति भाष्योक्तः । सिचोनुवृत्तेरभावो ऽपूर्वकरणाच्चानिष्टावहमिति तद्भावः । तिप्यनस्तेः ॥ अनस्तेः किम्। सलिलं सत्र्वमाइदम् । आइति लङि तिप्यनस्तेरूपम् । बहुलं छन्दसीति इट् न । सिपि धा ॥ सिपि वेत्येवदत्वविकल्पे सामान्यसूत्रेणैवत्वे सिद्धे धातोर्रुरिति दश्चेत्युत्तरार्थं । शास इति । अङ्योगस्यैवशासेर्ग्रहणादाशास्ते इत्यादौ नेति भाष्ये स्पष्टम् । शाहौ ॥ इत्वापवादः यद्यपि पूर्वसूत्रे शास इत्यवयवषष्ठी तथापीहोपधापदानिवृत्त्या स्थानषष्ठ्येव । पञ्चेति । अत एव दीधीवेवीति सूत्रे दीधीवेव्योः छान्दसत्वादिति भाष्यं जक्षित्यादय इति सूत्रे षसिवशीछान्दसाविति भाष्यञ्च। यीवर्णयोर्दी । तासस्त्योरित्यतो लोप इत्यनुवर्त्तते । यिश्च इवर्णश्चेति द्वन्द्वः यीत्यत्रेकार उच्चारणार्थस्तदाह । यकार इति । नित्यत्वादित्यन्तरङ्गत्वस्याप्युपलक्षणम् । टेरेत्वमिति । अचः परस्मिन्निति सूत्रे आदीध्ये इति भाष्यप्रयोगादिति भावः आदीधयते खलि अन्तरङ्गत्वेन णिलोपात्पूर्वम् यीवर्णयोरिति लोपे आदीधक इति सिद्धम् । यत्तु नाग्लोपीति सूत्रे भाष्ये वर्णग्रहणसामर्थ्याल्लुप्तेपीत्युक्तम् । तत्तु अन्तरङ्गत्वमनालोच्य एवञ्चान्तरङ्गपरिभाषाया अनित्यत्वे एतज्ज्ञापकमिति बोध्यम् । एतेन वर्णग्रहणसामर्थ्याच्छ्रूयमाणे इवर्णएव लोप इति हरदत्ताद्युक्तमपास्तम् । वेवीङो ऽनन्तरमाङःशास्विति पठ्यते इति जक्षित्यादय इति सूत्रस्थभाष्यस्वरसः । षस सस्ति । जक्षित्यादय इति सूत्रस्थभाष्यस्वरसात्तु सस्तिधातुरत्र नास्तीति प्रतीयते तत्रैव कैयटे षसशास्तिस्वप्न इत्येके पठन्ति। तत्र श्तिपानिर्देशेन शास एवार्थभेदात्पुनः पाठ इत्युक्तम् माधवानुरोधी तुमूल पाठः । तदनुसारेणैव-

पञ्चानां छान्दसत्वोक्तिः । असः । असदिति सिपिधातोरिति वा रुः । सन्तीति । इदित्वान्नुमि स्कोरिति सलोपे झरोझरीति पक्षे तलोपः । इत्ये-केदत्ति । अचाहचिबीजन्तु हलोनन्तरा इति सूत्रभाष्यविरोधः । तत्रत्य भाष्यादप्ययमप्रमाणिकः । अन्यथा बहूनां सन्निधाने बहूनामेवेति पक्षे मस्ज-धातावित्रापि दोषात्तदनुक्तौ बीजानापत्तिः । वशकान्तौ । अस्य भाषायां प्रयोगो ऽसाधुरेव । उङ्गौति । संप्रसारणधित्वषत्वजश्त्वष्टुत्वानि । अव-डिति । लङि हल्ङ्यादिलोपे षत्वजश्त्वचर्त्वानि । औष्टाम् । संप्रसारणे ऽजादित्वादाट् । यद्यपि लावस्थायामडिति पक्षे आट्प्राप्नोति । तथापि भाव्यजादेरपि तेनाड्विधानान्न दोषः । तत्पक्षे ऐज्यतेत्यादिसिद्धये ऽटमेवाश्रित्य आटः प्रत्याख्यानाच्च । चर्करीतञ्चेति । चर्करीतमिति यङ्लुकः सञ्ज्ञा तेन तदन्तग्रहणं सामर्थ्यात् । किरतिंचर्करीतान्तमिति सप्तमे भाष्योक्तेः । अदादा-विति । तेन यङ्लुगन्तात्छबेव न तु तत्तद्गणप्रयुक्तः श्यनादिः । शपोलुक्तपरस्मै-पदिन उपक्रम्यास्य पाठादस्य परस्मैपदित्वमेवेति बोध्यम् । इत्यदादयः ॥

भाष्यमिति । तृतीया चहोरित्यत्र । दानं प्रसिद्धञ्चेद्विप्राय जुहोती-त्यपि स्यादत आह प्रक्षेप इति । वैधे इति । आहवनीयाग्न्यादिरूपे तत्र प्रज्वालनाय प्रक्षिप्यमाणकाष्ठादावतिप्रसङ्ग निवृत्तये आह । हविष्यश्चेति । जुहुत इति । श्लौः परनिमित्तत्वाभावेन शप्त्वेन स्थानितया ऽजादेशत्वाभा-वेन च स्थानिवद्भावे न शप्त्वमाश्रित्य न गुणः । परत्वादिति । हुश्नुवोरित्येत-दपेक्षयेति भावः । बिभेत्य ॥ गमहनेत्यतः क्ङितीति वर्तते । अभ्यस्तस्येत्यनु वृत्या सार्वधातुक इत्यनुवृत्या वा भीत इत्यादौ न दोषः । पॄ । दीर्घोच्चा-रणमुत्वाय । उदोष्ठ्य ॥ अङ्गावयवौष्ठ्येति । ऋगताविति क्र्यादेः क्ते समीर्णं इति यथास्यादिति तत् । ॠ ॥ ह्रस्वविधानस्य कित्येवफलमिति सूचयितुं क्ङितीति । गुणाभावे वार्णादङ्गमिति यणं बाधित्वोत्वापत्त्या गुण एव न विकल्पितः । भृञामित् । बहुवचनादाद्यर्थावगतिः निजामित्यतस्त्रयाणामित्यनुवर्तते । इहल्य । श्नासाहचर्यादभ्यस्तांशेपि सार्वधातुक एवेदं जहातेश्चअभ्यस्तस्ये-त्यनुवृत्या ऽस्य लोपोयीत्यस्य च सार्वधातुके एव प्रवृत्तिः । दत्त इति । अघोरिति प्रतिषेधादीत्वाभावे श्नाभ्यस्तेत्यलोपः । अदात् । गातिस्थेति सिचोलुक् । दधस्तथोश्चेत्यत्र झषन्तस्य बश इत्यनुवृत्तिसामर्थ्याद्विरुक्तग्रहणेन ध इत्येव-सिद्धे दध इति स्पष्टार्थं झषन्तस्येति किम् । दधाति । नन्वाल्लोपस्य स्थानि-वत्त्वाद्धत्त इत्यादावपि न स्यादत आह । वचनेति । पूर्वत्रासिद्ध इति । एवञ्च वामनादीनां वचनसामर्थ्याश्रयणं वृथेति भावः । निजान्त ॥ श्लाविति किम् ।

निनेजा । कपिञ्जलाधिकरणन्यायस्यात्र शास्त्रे ऽनाश्रयणबोधनाय त्रयाणा-मिति भूम्नामित्युत्तरार्थम् । अत्र तु नोपयोगः । गणान्ते पाठेन त्रयाणामेव-निजादित्वस्य वक्तुं शक्यत्वात् । नाभ्यस्तस्य । अभ्यस्तस्य किम् । द्वेपाणि । अचिकिम् । नेनेक्ति । पितीन्युत्तरार्थम् ॥ अर्त्यादलीङ्विति । ओविजात्यस्यै-वेति । तौदादिकस्य रौधादिकस्यैव च तत्र ग्रहणं व्याख्यानादिति भावः । अर्भिजहर्तीति । अत्रापि छान्दसत्वादित्वम् । इयर्तीति । यणो ऽचः परस्मि-न्निति स्थानिवत्वाल्लोपोव्योरिति यलोपोनयलोपो स्थानिवत्वनिषेधस्तु लोप-रूपाजादेशस्यैवेति दिक् । ऐय इति । द्वित्वे ऽभ्यासस्येत्वे इयङि उत्तरखण्डे गुणे रपरत्वे हल्ङ्यादिलोपे विसर्गे आट् वृद्धिः । लावस्थायामाडिति पक्षे ऽपि बहुलं छन्दस्यमाङिति बहुलग्रहणात्तदुत्तरमत्राट् । बहुलंछन्दसीति सिद्धे ऽर्तिपिपर्त्योश्चेत्यत्रार्त्तिग्रहणाज्ज्ञापकाल्लोके प्रयोगे ऽपि छान्दसप्रकरणे पाठा-त्क्वचिदेवलोके साधुत्वं न सर्वत्रेति बोद्ध्यम् । अत एव ऋत्वक्सूत्रे भाष्ये उक्तं अर्त्तिप्रवृत्तिश्चैवलोके लक्ष्यत इति प्रकारान्तरमपीङ्धातावुक्तम् । केचित्वि-त्यादिना । दधन्त इति । ततंस इति वत्र दीर्घः । जजायादिति । ये विभाषे-त्यात्वम् । जिगीत इति । बहुलं छन्दसीत्यभ्यासस्येत्वम् । ईहल्यघोरिति च । इति जुहोत्यादयः ॥

दिवु ॥ उदित्त्वमुदितोवेति क्त्वायामिड्विकल्पार्थम् । सेसिचि ॥ सदृत्य-कारो ऽविवक्षितः । असिचोति पर्युदासात् सादेरित्यर्थलाभो यथा तथा तोष-सहेत्यत्र निरूपितम् । तृप्तिरिति । यद्यपिप्रीणातौपिचक्र्यर्थस्तथापिप्रकृते तृप्तेरेवग्रहणम् । पूरणगुणेति सूत्र सुहितार्थशब्देन तृप्तेरेवग्रहणस्याकरे उक्त-त्वादिति भावः । जरतुरिति । ऋच्छत्यृतामिति गुणे वाजॄभ्रम्वित्येत्वविकल्पः । दीङोयुड । उभयनिर्द्देशे पञ्चमीनिर्द्देशोबलीयानित्यचीति पष्ठ्यर्थसप्तमी तदा-दिविध्यर्थेत्याशयेनाहाजादेरिति । उत्तरार्था च सप्तमीत्यपि बोद्ध्यम् । युटि कृतेपि तस्यासिद्धत्वेन यणप्राप्तिमाशङ्काह । वुग्युटाविति । मीनाति । अत्रच इति उपदेश इति च वर्त्तते । उपदेशपदञ्च तदुत्तरकालपरम् । एच इत्यस्य विषये सतीति शेषः । एवञ्चैचो विषये सति उपदेशोत्तरकाले एव आत्वमित्यर्थः स्पष्टञ्चेदं भाष्ये । एवञ्चाशितीत्यनुवृत्तेः फलंविन्त्यमिति परे । लीलीङो-रिति । क्र्यादिराभूर्षीयश्च निरनुबन्धः परस्मैपदी । स्वादय इतिगणसूत्रमे-तत् । पूङ् इत्यारभ्य व्रीङन्ता इत्यर्थः । ओदित इत्यतिदेशः । सकर्मक इति अत्र मानन्तु चिन्त्यम् । षोन्त । अन्तकर्मनाशनम् । पततेति । अत्र पाठे प्रमाणं प्रयोगमाह । क्षुतक्षामेति । पक्षान्तरे इति । परे तु नित्येषु शब्देषु

स्यात्यादेशत्वानुपपत्तिमाशङ्क्य बुद्धिविपरिणामेन परिहृत्य एवं तर्हि अपवादे उत्सर्गकृतं प्राप्नोतीत्याशङ्क्य नापवादे उत्सर्गकृतं भवति । यदयं श्यन्नादी न्कांश्चिच्छितः करोतीति श्यनः शित्वस्य ज्ञापकतोक्ता । स्थानिवत्सूत्रे भाष्ये न च पित्त्वनिवृत्तये नियमार्थं शित्त्वम् । नित्वसामर्थ्यादेवतत्सिद्धेः । तद्ध्याद्युदात्तार्थं श्यनः पित्त्वे तु पित्त्वादेवानुदात्तत्वे लसार्वधातुकानुदात्तत्वे च धातुस्वरेणैवसिद्धे किंतेनेति तदाशयः । न च ताच्छील्यादिविषये चानशि प्रकृतेराद्युदात्तार्थं नित्वमिति वाच्यम् । अन्यत्र विकरणेभ्य इत्युक्त्या तत्र श्यस्वराप्तेः । न च तस्यापि तत्सामर्थ्याद्बाधः । तद्बाधकल्पनापेक्षया ऽतिदेशप्राप्तपित्वबाधस्यैवौचित्यात् । वावृतु इत्यस्यानेकाचः सत्वे तत्र धातुस्वरेणासिद्धेर्नित्वस्यावश्यकतया तत्सामर्थ्याभावेन पित्वनिवृत्तये शित्वस्यावश्यकत्वाद्भाष्यासङ्गतिः स्येष्टैव भट्टिप्रयोगे तु वाशब्दस्य वार्थतया कामयमानेव न तु तथा किंतु च्छलनार्थमागतेत्यर्थोन्न दोषः वृत्तेतु वृतवावृत्ताविति कोशोक्त वावृत्तशब्दस्तु पृषोदरादित्वात् । पित्वनित्वयोरविशेषमुक्त्वा चानशिविशेषं प्रदर्शयतः कैयटस्याप्यनेकाचोधातोरत्र गणे ऽभावे एव स्वरसः । न च ज्ञापकत्वान्नियमार्थत्व लाघवं सर्वथानुपपन्नस्यैवज्ञापकतया नियमार्थत्वे ज्ञापकत्वस्यैवासम्भवात् । किंच नियमार्थत्वे एकत्रै वातिदेशबाधो ज्ञापकत्वे तु अनेकत्रेति नियम एव युक्त इत्याहुः । क्लेद इति । अत एव क्लिद्येशुक्लमिति प्रयोगः । तशब्द इति । सचात्रात्मनेपदप्रथमैकवचनं पदेस्तस्यैवसम्भवात् । अबोधीति । दीपजनेति चिण् । युधमिच्छतीति । व्यत्ययोबहुलमिति सूत्रभाष्ये तु प्रतीपमन्यऊर्मिर्युध्यतीत्यत्र व्यत्ययेन परस्मैपदमित्युक्तम् । एतद्भाष्यविरोधादनुदात्तत्वपयुक्तात्मनेपदानित्यत्वमपि चिन्त्यमेव । अकर्मक इति । अकर्मकोपीत्यर्थः । अतः सृजियुज्योः सकर्मकयोः कर्मवद्भाव इति कर्मवत्सूत्रस्यवार्त्तिकेन न विरोधः । स्रष्टेति सृजिदृशोरित्यम् । एवकारादर्थान्तरे राधः श्यन्नस्यादत आह । भिन्नेति । अत एवाकर्मकादिति सार्थकम् । उदाहरणमिति । तथा च वृद्धाविव्युपलक्षणम् । अत एव राध्यत्योदनः स्वयमेवेति कर्मवत्सूत्रस्यभाष्यप्रयोगोपपत्तिरिति भावः । हिंसार्थस्येति शत्रुमपराध्नोतीत्यादौ हिनस्तीत्यर्थदर्शनात् चुरादिश्चेति । ज्ञेय इति शेषः । तथा प्रयोगदर्शनादितिभावः शिलष इति । प्रतिप्रसवविधिस्तदाह । अङापवाद इति । पुषाद्यङस्त्वन्ये पुषादयो ऽवकाशः यद्वा वक्ष्यमाणनियमपर्यालोचनया ऽनालिङ्गने चरितार्थस्याङोयमपवाद इति भावः । सिच्फलं दर्शयति । अश्लिक्षत अश्लिष्टा इति । अत्रादादेश झलोझलीति लोपयोः सिद्धिरिति भावः । ररन्धतुरिति । परत्वान्नुमि सत्यकित्वान्न नलोपः । नशेः षाम् ॥ नभाभू इत्यतो नेति वर्त्तते भूतपूर्वेति स्पष्टञ्चेदं भाष्ये

नञाप्रापितनिषेधस्यैव क्रादिसूत्रेण नियम इति मते नाह दुद्रोढ दुद्रोहियेति । वस्तुतो तुद्रोहिथेत्येकमेवरूपं न्याय्यं आगणान्तादिति यत्त्वस्यतेस्थुगिति सूत्रमत्रलिङ्गमिति तन्न अस्यति वक्तीत्यनेनात्मनेपदे तङि तस्य चारितार्थ्यात् । दाहे पठित इति । दिवादावेवेत्यर्थः युपरुपलुपेति पाठः उदित्पठो लेखकप्रमादात् धातुवृत्त्यादिविरोधात् इह पाठः इति दिवाद्यन्तर्गणपुषादावित्यर्थः । श्यन्नर्थे इति । एवञ्च पुषादेः प्रागेव पठितुं युक्त इति भावः । अत्र गणे त्रुटछेदने इति पठन्ति चुरादौ च । चुरादेर्नित्यण्यन्तत्वात्त्रोटतीत्यस्य सिद्धये वा भ्राशेत्यत्र त्रुटि ग्रहणं दद्वत् दृणातेर्दीर्यतेर्वेति भाष्यात् दृधातुरप्यत्र बोध्यः तदाह भ्वादिवदाकृतिगण इति ॥ इति दिवादयः ॥

सुरासन्धानं सुरोत्पादनप्रकारः । सुन्व इति । लोपश्चास्येति वा उलोपः । सुनु इति । उतश्चेति हेर्लुक् सुनवानीत्यत्र हुश्नुवोरिति यणं बाधित्वा परत्वाद्गुणः । सुनोतेः स्यः नरपरेत्यतो नेति वर्त्तते सन्यभिसुसूपतेरप्रत्यये ऽभिसुसूरित्युदाहरणं अन्यत्र स्तौतिण्योरेवेति स्यादिष्वभ्यासे इति च नियमादेवतदभावसिद्धेः विभाषाचेः चञोरिति सूत्रात्कुरित्यभ्यासाच्चेति सन्लिटोर्जेरित्यतः सन्लिटोरिति चानुवर्तते ऋतश्चसं इट्सनिवेत्यत इडिति लिङ्सिचोरिति सूत्रञ्चानुवर्त्तते न च लावस्थायामटि संयोगादित्वाभावादस्तरिष्टेत्यसिद्धिः संयोगादेरिति कर्मधारयोऽङ्गस्येति तद्विशेषणमिति संयोगसञ्ज्ञासूत्रभाष्ये रूपतेष्यङ्गाद्यवयवसंयोगात्परस्य ऋकारस्येत्यर्थादसिद्धिरेवेति वाच्यम् । अत्र सिज्ञनुवृत्तिसामर्थ्येनाडागमे भूतपूर्वसंयोगादित्वमादाय शास्त्रप्रवृत्तेर्ज्ञापनेनादोषात् अत एवास्तर्यतेत्यादौ गुणोर्तीति गुणसिद्धिरिति दिक् । क्रादिनिषेधादेव सिद्धे ववर्थग्रहणं निगमएवेति नियमार्थं तदाह तेनेति । लिङ्सिचो ॥ वृत इति इट्सनिवेत्यत इडिति च वर्त्तते नलिङि वृत इति दीर्घ इति च वर्त्तते अवरीष्टेति वृतोवेति दीर्घः प्रहिणोतीति गुणस्य स्थानिवत्त्वाद्धिनुशब्दोत्र पूर्वत्रासिद्धे नस्थानिवदित्यस्य तस्यदोषः संयोगादिलोपेत्यादिना निषेधात् स्पष्टञ्चेदं भाष्ये बहिरङ्गपरिभाषा तु त्रैपादिकेन्तरङ्गेनेत्यसकृदावेदितंहेरचङीति पर्युदासोन्याय्यः । आप्नुवन्तीति । संयोगपूर्वकत्वाद्धुश्नुवोरिति यण् उतश्चेतिर्हेर्लुक्च न राधो अत इत्यनुवर्त्तमानेपि सामर्थ्यात्तपरत्वन्यायेबाधः श्नाभ्यस्तयोरात इत्यतो मण्डूकप्लुत्या आत इत्यनुवृत्तिर्वा । अशू । अयं परस्मैपद्यपीति उपदेशे ऽत्वत इति सूत्रस्थभाष्यस्वरसः अश्नोतेश्च तस्माचुडिति वर्त्तते अशेरिति वक्तव्ये ऽश्नोति व्यावृत्त्यर्थं श्नुनिर्देशः इहाप्याश्रीयत इति सद्वेः परस्य लिटीति सूत्रस्थः परिषस्वजइति भाष्यप्र-

योगोद्दिभतुरिति अत एकेति सूत्रस्थभाष्यप्रयोगश्चेह मानन्दम्भिश्चेत्यत एकेति सूत्रे भाष्ये वार्त्तिकम् । सुधाकरादय इति । आत्राशचिबीजन्तु अन्यियन्यीत्यत्र लिट्पदस्य क्तिपदस्य च कर्त्तव्यतापत्त्या गौरवमिति मम तु व्याकरणान्तरेप्यसंयोगादिति क्तिग्रहणवैर्तादिति तयोरकर्त्तव्यतास्पष्टैव अत एव भाष्ये प्रथमोपास्थितगालं विहाय दिभतुरित्युदाहृतं दम्भिश्चेत्येत्वविधायके ॥ तृप । अत्रत्योऽयं सेड्कृच्छन्दसीति गणसूत्रम् ॥ इति स्वादयः ॥

आर्द्धधातुके इति । बरीभृज्यतइत्यत्र रीकोरेफस्य न निवृत्तिरभ्यासस्य नैरर्थक्यात् समुदायस्य तु न भ्रस्जित्वं द्वित्प्रयोगपक्षे दुरुपपादत्वात् अतो न तन्मध्यपतितन्यायेन तत्र प्राप्तिशङ्का उपदेश इत्यनुवृत्त्या रीको रेफस्य बरीभृज्यत इत्यादौ रमागमव्यावृत्तिरित्येतत्परभाष्योक्तिस्तु एकदेशिनः । दयतेर्दिगीति सूत्रसम्मतया न्यायसिद्धयोक्तरीत्या प्राप्तेरेवाभावात् रस्यकार उच्चारणार्थः रोपधेत्यत्र रोपधयोः स्थाने प्रसङ्गे रम्प्रयुज्यते रोपधेन प्रयुज्यते इत्यर्थः । बभ्रज्जतुरिति । संयोगात्परत्वात्कित्त्वाभावः । नन्वाशीर्लिङि संप्रसारणं बाधित्वा परत्वाद्रमि सकृद्गतिन्यायेन संप्रसारणाभावे पुनः प्रसङ्गविज्ञानेन संप्रसारणेप्याद्गुणे भर्ज्यादिति स्यादत आह पूर्वविप्रतिषेधेनेति । संप्रसारणरमोर्भृज्जति भर्ष्टेत्यवकाशौ कृताकृतप्रसङ्गित्वमात्रेण संप्रसारणं नित्यमित्यपि सुवचं न च ऋकारान्तर्गतरेफमादाय रमपि नित्यः सिद्धान्ते वर्णग्रहणे वर्णैकदेशाग्रहणादिति स्पष्टं भाष्ये । अतक्षतेति । क्सादेशे तङेकवचने सिचपक्षे बहुवचनेचानत इत्यदादेशे एतदेवरूपं । अक्षन्तेति । क्सादेशे ऽनत इत्युक्तेदादेशानक्ष न्याचेति अवधारणे मात्रशब्दः ऋच्छत्यृतामिति ऋच्छतिशब्देन धातुपाठे साक्षात्पाठादस्यैवग्रहणं न ऋधातोः प्रश्लेषेणैवतस्य सिद्धत्वाच्च अत एव सूत्रे बहुवचनं नन्वस्य तुकि तस्य चुत्वेन चकारे लिटि द्वित्वे ऽभ्याससकार्ये ऋच्छतीति गुणे त्रिहल्त्वान्नुट न स्यादत आह अनेकहलिति ॥ तृपतृम्प । शेमुचादीनामिति सूत्र भाष्ये शेतृम्फादीनां नुम्वाचपः तृम्पति तृम्फतीति पाठदर्शनादाद्योपि सनकार इति प्रतीयते मूलन्तु धातुवृत्त्यनुसारीति बोध्यं अङपवादत्वादिति । उत्सर्गसमानदेशा अपवादा इति न्यायादिति भावः किंच तत्रानयोर्ग्रहणे पक्षे सिजभावे त्रिरेवश्रवणापत्तौ त्रिःक्वापि न श्रूयत इति भाष्यविरोधः । वृणुच । यत्तु रुधादिभ्य इति सूत्रे भाष्ये वृणतीत्यादौ प्वादीनामिति हृस्वाय श्नमः शित्त्वं न बाधीत्वन्यत्वात् पृणिमृणीतीदादिकौधात्वन्तर मित्युक्त्वायर्त्तहि नधात्वन्तरं वृणसे इति तत्तु तद्भाष्य स्यात्वन्तरंनेत्यभिप्रायकं अस्य परस्मैपदित्वात् परेतु व्यत्ययेन श्नम्वत् तेनै-

वात्मनेपदसंभवात्तद्भाष्यप्रामाण्येनास्याप्रामाणिकत्वमेवेत्याहुः करोतेरेवेति । व्याख्यानादिति भावः लिखः । लिखितुमित्यादि प्रामादिकमेव कडमदे । अस्य कुटादित्वसामर्थ्यादनिग्लक्षणवृद्धेरपि निषेध इति कश्चित् अशोकवनिकान्यायेनात्र पाठ इति परे तङित्यानस्याप्युपलक्षणं अन्तरङ्गत्वादिति नाजानन्तर्य इति तु न समकालप्रवृत्तिकत्वात् तस्या असत्वाच्च । अङभ्यासेत्यादि । अत्र यद्वक्तव्यन्तत्तनादौ वक्ष्यते । गिरतेरिति । व्याख्यानात् यायडीत्यत्रास्यैवग्रहणमिति भावः अजादाविति । धातोः कार्यमुच्यमानमिति परिभाषासविधापितस्य प्रत्ययस्याचीति विशेषणमिति भावः अत एव गिराविन्यादौ न । मृजेर्वृद्धिरित्यादौ भाष्ये स्पष्टमेतत् । आद्रियतइति । रिङ् इयङ् । प्रष्टेति । अच्छेतिपः न च षत्वस्यासिद्धत्वात्पूर्वन्तुकि च्छस्य षत्वे प्रत्ष्टेति स्यादिति वाच्यम् अत्रापि सतुक्कनिर्देशात् मज्जतीति सस्य श्चुत्वजश्त्वे अन्त्यात्पूर्व इति । एतत्फलन्तु मग्न इत्यादौ नलोपः ततः संयोगादिलोपः । ममङ्क्थेति । जस्य कुत्वे नस्यानुस्वारे परसवर्णे गस्य चर्त्वं बोध्यम् । मङ्क्ष्यतीति स्य सस्य षत्वं विशेषः तङर्थं इति पूर्वप्राठस्तु कर्त्रभिप्रायेऽपि परस्मैपदार्थः विद्लृ । विदोभोगेति सूत्रस्यकैयटे विदिलाभे इति पठ्यते ॥ इति तुदादयः ॥

जश्त्वं ष्टुत्वमित्यादि । अत्र प्रक्रियादर्शनमात्रे तात्पर्यं न तु क्रमे शिंष्टीति सानुस्वार एव पाठः अनुस्वारस्यादिष्टादचः पूर्वत्वेन स्थानिवत्वाप्रवृत्तावपि दीर्घादाचार्याणामित्युत्तरमनुस्वारस्य ययि वा पदान्तस्य तोर्लि उदः स्था झयोहो शश्छोटीति षट्सूचीपाठोत्तरं झलाञ्जश्झशि अभ्यासेचर्च खरि च वावसाने अणोऽप्रगृह्यस्येति पञ्चसूचीपाठ इति भाष्यसंमताष्टाध्यायीपाठपक्षे परसवर्णवृष्ट्या झरो झरीत्यस्य झलाञ्जशित्यस्य चासिद्धत्वेन ययपरत्वाभावात् परसवर्णाप्राप्तेरित्यन्यत्र विस्तरः । तृणह ॥ श्नमि कृते इम्यथास्यादिति श्नमानिर्देशोऽन्यथा येननाप्राप्तिन्यायेनेम् श्नमो बाधकः स्यात्तदाह श्नमिकृते इति । अञ्जेःसिचि ऊदिल्लक्षणविकल्पापवादः ॥ इति रुधादयः ॥

तन्व इति । लोपश्चास्यामिति वा लोपः । आत्रेयादय इति । अत्राहुचिस्तु सदनित्यत्वे भाष्यानुक्तत्वाङ्क्ष्णु इत्यादिप्रयोगास्तु बहुलमेतन्निदर्शनमिति रीत्या द्विधातुं स्वादावप्यङ्गीकृत्य निर्वाह्या इत्यन्ये । तत्र पठित एव भाषायामर्षात्येके समवायः सबन्धः समूहश्च । उपात्त ॥ यद्यप्यत्र सूत्रे चो वृत्तौ न पठ्यते तथापि संपर्युपेभ्य इति वृत्त्युक्तपाठफलस्य भाष्यमते साधनार्थं तदावश्यकतेत्याहुः । केचित्तु भूषणासंबन्धयोरुपात्परस्य सुटं नेच्छन्ति वेञ्च न पठन्ति सुट् कात्पूर्वः अत्राद्य सूत्रम् अन्त्यं वार्त्तिकम् अभ्यासस्यानर्थकत्वेनोत्तरखण्डस्यैवार्थवत्तया करोतित्वेन च तस्य च समेऽभ्यासेन व्यवधानाद्द्वितये

विकरणान्तभक्ततया ऽटस्तेन व्यवधानात्सुटो ऽप्राप्तौ अन्त्यमारब्धं अड्भ्यासव्यवायेपि सुड् भवति स च कात्पूर्व इत्यर्थः । भाष्यकृता तु अत्र कात्पूर्वग्रहणं कालावधारणार्थं तदा सुट् भवति यदा कृतः कात्पूर्वो भवतीति तेनान्तरङ्गमपि द्वित्वादिकं बाधित्वा पूर्वं सुडिति अड्भ्यासव्यवायेपीति न कार्यमिति तत्प्रत्याख्यातं कात्पूर्व इत्यपि प्रत्याख्यातमित्याह पूर्वन्धातुरिति। उपसर्गेणेत्यस्य तदर्थेनेत्यर्थः । अत एवानुभूयत इति कर्मणिलकारः । एवञ्चान्तरङ्गार्थकोपसर्गनिमित्तकत्वाद्द्वित्वाद्यपेक्षया सुडन्तरङ्ग इत्याशयः । लावस्थायामडिति पक्षे तु संपरिभ्यां परत्वयोग्यस्य करोतेः सुडित्यर्थात्सर्वतः पूर्वं सुडिति न दोषः । सुडित्यंशस्तु संपरिभ्यामित्यत्रैव पाठ्य इति तदाशयः । ऋतश्च संयोगादेरिति । ननुद्वित्वेसमुदायस्यैवाङ्गत्वेन संयोगादित्वन्दुरुपपादं नित्यत्वेन गुणात्पूर्वं शर्पूर्वाः खय इत्यस्य प्रवृत्तेः नचाभ्यासस्य नैरर्थक्येनोत्तरखण्डस्यैवार्थवत्त्वेनाङ्गत्वमिति न दोषः अभ्यासस्य नैरर्थक्यञ्च लोके केवलाभ्यासेनार्थाबोधात् उत्तरखण्डस्य तु प्रत्ययाव्यवहितप्राग्वर्त्तिनः केवलस्याप्यन्यत्रार्थबोधकताया दृष्टत्वेनार्थवत्त्वमेव पेचतुरित्यादौ तदभावेप्यर्थबोधेनतस्यार्थवत्वाच्च अभ्यासप्रयोगस्तुद्वयोर्षंपुष्यतीति बत्साधुत्वार्थ एव यातिरित्यादौ शिष्यमाणं लुप्यमानार्थाभिधायीति न्यायेन शिष्यमाणाभ्यासस्यैवोत्तरखण्डाभावादर्थबोधजनकत्वं इदं केवलस्यानर्थकत्वं समुदायस्यार्थवत्वमिति वदतो प्यावश्यकं अत एव दयतेर्दिगीति सूत्रे ऽस्तेर्द्वित्वेकृते परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्यार्द्धधातुक इत्यस्य विषयसप्तमीत्वेन परिहृतं समुदाये ऽस्तित्वन्तु द्विःप्रयोगपक्षे दुरुपपादं भिन्नानुपूर्वीकत्वात् एवञ्च धातुत्वमप्युत्तरखण्ड एवेति वाच्यन्द्विःप्रयोगोद्विर्वचनमिति सिद्धान्तेनाद्ये प्रत्ययविधानावधित्वप्रत्यभिज्ञया तदादिग्रहणसत्वेन समुदाये एवाङ्गत्वस्यैकाचोद्वे इति सूत्रे भाष्ये उक्तत्वात् अङ्गसञ्ज्ञाया विकरणविशिष्टे समुदाये निरर्थकेण्ड्कोकारेणासमर्थसमासे निरर्थकस्याप्यङ्गत्वदर्शनेन चाङ्गसञ्ज्ञायामर्थवत्परिभाषाया अप्रवृत्तेः यस्मादित्यनेनोद्देश्यतावच्छेदकशब्दानुपूर्वीमात्रावच्छिन्नस्यैव ग्रहणात् धातुत्वादिकन्तूत्तरखण्डे एवेति बोध्यम् । नचास्मदुक्तरीत्या समुदायस्याङ्गत्वमुत्तरखण्डमात्रस्यापि तु तद्द्वारम् द्वैविशेषविषये मुख्यतदादिलाभेन व्यपदेशिवद्भावलब्धतदादेरप्रवृत्तेरिति चेन्न प्रत्ययोत्पत्तिवेलायां संयोगादित्वस्य विवक्षणेनादोषात् अत एव सस्वरतुरित्यादिसिद्धिः सूत्रञ्च सार्थकं सुट्तुसंपरिभ्यां परत्वयोग्यस्य सुट्विधानात्प्रत्ययोत्पत्तेः पूर्वमेवेति दिक् । नित्यमित्यनुवर्त्तत इति । इदञ्च सुट्कादिति सूत्रे कैयटेस्पष्टं परन्त्विदं चिन्त्यं तस्यातिदूरत्वात् र्विच्छिन्नत्वाच्च तस्य तत्सूत्रे विधेयविशेषणत्वाच्च किंच नित्यं संयोगादित्व

न प्रयोगमात्रावच्छेदेन तत्वं क्वाप्यभावात् सस्वरतुः सस्वरियेत्यादौ तदभावात् यगादिघटित प्रयोगमात्रावच्छेदेन तत्त्वमित्यपि न अस्तर्यत्ततरीस्तर्यादित्यादावभावात् अत एव प्रत्येकंसंयोगसञ्ज्ञापक्षे संहृषीष्ट मंह्रियत इत्यादौ इट्गुणापादनपरं हलोनन्तरा इति सूत्रस्थं भाष्यं सङ्गच्छते एतेनेड्विधावुपदेशग्रहणानुवृत्तिरपि परास्ता । तस्मादिड्गुणयोः प्रतिषेधवचनारम्भ एव न्याय्यानिति परे ॥ इति तनादयः ॥

हलः ॥ अङ्गस्येत्यावर्त्तते तत्रैकं हलोविशेषणमवयवसंबन्धे षष्ठी द्वितीयञ्च संप्रसारणस्य विशेष्यं तदन्तविधिस्तदाह अङ्गावयवादिति । तेन निरुतमित्यादौ न । दीर्घनिर्देशेति ॥ अङ्गवृत्तपरिभाषा निष्फलेत्यनेन सूचयति सिज्लोपस्येति प्रत्ययलक्षणसूत्रं विद्धयर्थमेकाच इति सूत्रे ध्वसाहचर्यात्सादिप्रत्ययएव गृह्यते इति मतेनेदं यदा त्विदं नियमार्थं स्थानिवत्सूत्रवृत्त्या च त्रिपादी नासिद्धा तदाल्विधित्वाच्च स्थानिवत्वमिति बोद्धं । तत्र मूलमिति । एत्वाभ्यासलोपावत्रेत्यारभ्य यदुक्तं तत्र मूलं मृग्यमित्यर्थः संयुक्तहल्मध्यस्थत्वात् यन्योरादेशादित्वाच्च सूत्रेणाप्राप्तेर्वार्त्तिकादर्शनाच्चेति भावः । श्यन्प्रत्ययादिति बहुव्रीहिः ग्रहोऽडित्यनुवृत्तस्य ग्रह इति पञ्चम्या षष्ठी कल्प्यते इत्याह एकाच इत्यादि हरदत्तानुरोधेनेद मुक्तम् अग्रहीष्टामित्यादौ लावस्थायामडिति पक्षे एकाचो विहितत्वाभावाद्दीर्घाप्राप्त्या ऽसङ्गतमिदं हरदत्तेनोक्तम् ॥ इति क्र्यादयः ॥

प्रपञ्चार्थमिति न च स्वार्थे विधानार्थमस्तु सत्यस्य कृञ्यापुगिति भाष्यविरोधात् नचापुग्निपातनार्थं सत्यापग्रहणमावश्यकं अर्थवेदार्थभाष्यके वार्तिके एव सत्यपाठेन सिद्धेरिति भावः ॥ स्वार्थे इति । करण इत्यस्य तु नानुवृत्तिः विच्छिन्नत्वादिति भावः णिचश्च लक्षयतेः स्वरितेत्त्वमनार्षम् एतेन लक्षेः स्वरितेत्त्वादिदञ्चरादौ न प्रवर्त्तते इति परास्तम् । इदित्करणमिति । णिचोनित्यत्वे हि तेन व्यवधानान्नलोपाप्रसक्त्या किंतेनेति भावः । न च णिजन्तात्क्विपि नलोपाभावाय तच्चरितार्थं स्थानिवत्त्वन्तु क्वौ विधौ निषिद्धमिति वाच्यम् । असिद्धवदत्रेति णिलोपस्यासिद्धत्वात् क्वौ विधिमित्यस्य क्विशब्दमुच्चार्यविहितविधिविषयत्वाच्च क्वौ लुप्तमिति तु न सार्वत्रिकं, परे त्विदित्वस्य तत्रिमन्त्यादौ व्यभिचरितत्वेन क्वौलुप्तमित्याश्रयणे ज्ञापकतौचित्येन च चिन्त्येति पाठे ऽर्द्धमात्रागौरवेण च णिच्शास्त्रबाधे न मानं भाष्यानुक्तत्वाच्च वक्ष्यमाणेरणाविति सूत्रस्थकैयटासंमतेश्चेत्याहुः । सामान्यापेक्षमिति । चुरादित्वापेक्षमित्यर्थः जगणतुरिति । मन्त्रत्वादाम्नेति तदाशयः नित्यण्यन्तत्वेपि णिलोपेनेष्टसिद्ध्या इयं वृत्तिर्न साधिका गणेरनित्यण्यन्तत्वे णेरणाविति

सूत्रस्थभाष्यासङ्गतिश्च तत्र हि गणयति गणः स्वयमेवेत्यादौ णौ कर्मणोणौ कर्तृत्वे आत्मनेपदाभावाय णेरणाविति सूत्रमित्याशङ्क्येष्यतएवात्रात्मनेपदञ्चुरादिण्यन्तानां नित्यण्यन्ततया केवलानाञ्चुरादीनां प्रयोगाभावात् अणौ कर्मणो ऽसम्भवात् । अत्र सूत्रे हेतुमण्णेरेवग्रहणमित्यहेतुमण्णौ गणस्य कर्मत्वं हेतुमण्णौ कर्तृत्वमिति सूत्रविषयएवायमिति भाष्यकैयटयोरुक्तं किंच ज्ञापकस्य सामान्यापेक्षत्वे घुषिरविशब्दन इति सूत्रस्थभाष्यविरोधः तत्र हि विशब्दनार्थस्य चुरादित्वेन नित्यणिजन्ततया भ्वादेश्चाविशब्दन एव वृत्तेः सूत्रे ऽविशब्दन इति व्यर्थमित्याशङ्क्यैतदेवज्ञापयति घुषेर्विशब्दनेविभाषाणिच् तेन जुघुषुरिति सिद्धमित्युक्तं अत एव चुरादाविरित्वमपि सार्थकमिति बोद्ध्यं । विशेषेति । असंयोगोपधेकारान्तरूपविशिष्टेत्यर्थः । तच्चिन्त्यमिति । नस्योपधत्वाभावेन नलोपाप्रसक्त्या ज्ञापिते पि चारितार्थ्याभावादिति भावः परितेत्यादीति । आदिना ऋकारान्तत्वप्रयुक्तकार्यविशिष्टरूपग्रहणं फलमिति एवञ्च यर्तेति रूपवारणाय दीर्घोच्चारणमिति भावः वस्तुत इदमपि ज्ञापकं चिन्त्यमेव दीर्घपाठस्य सन्दिग्धत्वादित्याहुः षान्त्वसाम । केचित्वत्र षामसान्त्वप्रयोगे इति पठन्ति णिजन्तात्तङिति ॥ चित्रङादावुक्तन्यायस्य क्लृप्तत्वाच्छास्त्रबाधस्यान्याय्यत्वाच्च णिचो वैकल्पिकत्वं नोक्तं । ज्ञापनेचेति । चात् मारणादावपीत्यन्ये । वेष्टनमिति । अण्यन्तपरिविषेर्ल्युडिति भावः नन्वण्यन्ततत्प्रकृतिकल्युडन्तेनादनीय वस्तुतो भोजनार्थं भोजनपात्रे निक्षेपोप्युच्यते तत्राह न तु भोजनेति । उक्तरूपेत्यर्थः भुज्यर्थयमामतोहेतुमण्णावमन्तत्वेन मित्वसिद्धिः ननु ण्यन्ताल्ल्युटि वेष्टनापि परिवेषणशब्देनोच्यते तत्रापि मित्त्वंस्यादत आह नापि वेष्टनेति । अमन्तत्वेनैवसिद्धेः नकमीति निषेधप्रकरणस्थे यमो ऽपरिवेषण इति परिवेषणभिन्नेर्थे मित्वनिषेधके घटाद्यन्तर्गणसूत्रे भोजनाद्वेष्टनापि गृह्यते विनिगमनाविरहादिति भावः घटादिपाठवचने वेष्टनन्तु न परिवेषणशब्देन गृह्यते तस्य हेतुमण्णावेवप्रवृत्तेः फलाभावादिति भावः केचित्वत्र सूत्रे ऽर्थत्रयग्रहणेपि बाधकाभावः विनिगमनाविरहाच्च सर्वग्रहणं घटादिपठिते ऽपरिवेषण इति तु ततोहेतुमण्णौ यामयतीत्येतद्वारणाय नचैवमत्रार्थत्रयग्रहणं व्यर्थं एकाणिज्ञानेनापि धर्मोत्पत्तिबोधनेन सार्थक्यात् इत्याहुः । चिस्फुरो । अत्र णिशब्देन चुरादिणिच एव ग्रहणं प्रतिपदोक्तत्वात् अत एव स्वादेश्चेरन्यस्य स्फुरश्चात्र न ग्रहणं नन्वेवमस्य चिञो ञित्वं व्यर्थं सामान्यग्रहणस्य तवानिष्टत्वेन सामान्यग्रहणाविघातार्थमपि नेत्यत आह ञित्करणेति । एवञ्चास्माण्णिजभावे हेतुमण्णावपि नात्वमिति बोद्ध्यम् इदं माधवाद्यनुसारेण परेतु ञित्वं सामान्यग्रहणाविघातार्थमेवणिशब्देन चिशब्देनचोभयोरपि ग्रहणम् । एवं स्फुर

शब्देनापि ईदृशरीत्या । प्रतिपदोक्तपरिभाषा त्वसार्वत्रिकी चुरादिशब्दमुच्चार्यविहितत्वे ऽपि चिस्फुरोरुच्चार्याविहितत्वाच्च एवञ्च स्वादेर्हेतुमण्णावात्त्वं भवत्येव उत्तरत्र बिभेतेर्हेतुभयइत्यादौ णावित्यस्य शब्दाधिकारश्चनेत्याहुः । आकुस्मादिति । गणसूत्रमात्मनेपदविधायकं तदाह । अकर्तृगेति णिच्संनियोगो नैवेति च भलआभण्डने आलम्बन इति पाठान्तरं नाम्ना वेत्यंशं व्याचष्टे अथवेति । धात्वर्थे इति करोत्यर्थे आचष्ट इत्यर्थे वेत्यर्थः शब्दउपर्गादिति यद्यपि शब्दशब्दात्तत्करोतीति णिचि शब्दयति प्रतिशब्दयतीत्यादि सिद्धं तथापि शब्दवैरेति क्यङाबाधाभावाय विशिष्टे ऽथ साधुत्वान चेदमुक्तं नान्यमित इति नकम्यमीति निषेधस्तु चमिसाहचर्यात्पूर्वोत्तरसाहचर्याच्च हेतुमण्णावेवेति भावः । तस्माद्वेत्विति । नकम्यमीति निषेधाद्वृद्धिर्भवत्येवेति भावः हन्त्यर्थाश्चेति तेषान्तत्तद्गणे पाठसामर्थ्याण्णिच् एवं क्षपेरपि अत एव ज्ञापकान्निवृत्तप्रेषणादित्यसार्वत्रिकं यततालव्यान्तस्यादिः असिष्वददिति षोपदेशलक्षणे स्वञ्जिसाहचर्येण भ्वादेर्निरनुबन्धकपरिभाषया ऽस्य च ग्रहादिति भावः इत्यास्वदीयाः ॥ अर्चपूजायामिति अयमनुदात्तेदिति शाकटायनः अस्य भ्वादौ पाठो ऽनार्षः । अनेनैवसिद्धेः तस्याप्यात्मनेपदितायाः शाकटायनमते माधवेनोक्तेः एवमन्येषामपि परस्मैपदिनां भ्वादिपाठो बोध्यः । लाययतीति । लीलोरिति नुक्तु न लासाहचर्याद्धेतुमण्णावेवतस्य प्रवृत्ते लेतेति विभाषाली- यतेरित्यात्वं तु नलिनातिलीयत्योर्यकानिर्देश इति भाष्यात् नुकमाहुरिति शाच्छासेति सूत्रे भाष्ये ऽस्य पाठात्तत्साहचर्येण हेतुमण्णावेवास्य प्रवृत्ति र्वातैर्विधूनयतीति च हेतुमण्ण्यन्तस्यैव रूपमिति तु परे । हरदत्तेति । अनेन भाष्यासंमतत्वं सूचितम् । स्थानिवत्त्वादिति । अचः परस्मिन्नित्यनेनेति भावः । गणसं । अयं संख्यानिमित्तज्ञानविशेषरूपपरिच्छेदे भागशोवस्थापनेचेति । णेरणावित्यत्राकरः ईचगणः णिचः प्राग्वर्त्तिनोनुकरणं एतेन नित्यणिजन्तत्वाद्गण इत्यसङ्गतमित्यपास्तन्तेन स्वार्थण्यन्ताच्चङ्यपि प्रवृत्तिः गणेरिति । ण्यन्तानुकरणे तु ण्यन्तागणौ चङ्येवस्यात् णौ चङ्परइत्यनुवृत्तेरिति बोध्यम् यद्यपि गण्रूपाभ्यासान्त्यस्य णस्य ई इत्यर्थाद्धलादिः शेषेणान्त्यनिवृत्तावस्याप्राप्त्यानवकाशत्वेनेदन्तद्बाधकं प्राप्नोति तथापि अभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वं हलादिः शेषे ऽवशिष्टान्त्यस्येकारः एकदेशविकृतन्यायेन चावशिष्टस्य गण्रूपत्वं स्पष्टं चेदं गुणो यङ्लुकोरित्यत्र भाष्ये । स्तनगदी । इगन्ताद् द्विवचनं प्रकरणाच्चादन्तत्वम् । ऊन । अस्माण्णौचङि नशब्दस्येष्टं द्वित्वं दुर्लभं द्वित्वादन्तरङ्गत्वादल्लोपात् णिचोर्द्वित्वनिमित्तत्वाभावाद्द्विर्वचनेचीति दुर्लभमत । आह ओः पुयण्जीति । अयंभावः विभावयिषतीत्यादावन्तरङ्गत्वाद्वृ-

द्वावावादेशे सन्यत इत्येवसिद्धं पूङोयैतिश्च सनि स्मिपूङ्सनीवन्तीतीटि द्विर्वचनेचीति सूत्रप्रवृत्या ऽभ्यासे उकारसत्त्वे ऽपि तदर्थं पययोरित्येववाच्यं न च पिपविषते इत्यादौ गुणावादेशयोरचः परस्मिन्निति स्थानिवत्त्वेनावर्णपरयकारादिपरत्वाभावः एतत्सूत्रारम्भसामर्थ्येनैव तदभावात् एवञ्च वर्गादिग्रहणं व्यर्थं सत् णिचो द्वित्वनिमित्तत्वाभावेपि तन्निमित्तकाजादेशस्य द्वित्वे कर्त्तव्ये निषेधं ज्ञापयतीति णाचीति णिज्निमित्तक इत्यर्थः णिचि परत वत्यर्थे तु पुस्फारयिषतीत्यादौ रेफेण व्यवधानान्न स्यात् ज्ञापनफलन्तु तुतावयिषति अतूतवत् ऊर्णुनावयिषति और्णूनवत् पुस्फारयिषति अपुस्फुरदिति न च णाचीत्यस्य सूत्रे ऽभावेन कथन्तल्लाभ इति वाच्यं यतोनानेनापूर्वोनिषेधोज्ञाप्यते किं तु द्विर्वचनेचीत्यस्य द्वित्वनिमित्ते ऽजादौ प्रत्ययेपरे ऽजादेशोनेत्यर्थकस्य येननाव्यवधानमिति न्यायेन एकव्यवधाने प्रवृत्तिरतस्तल्लाभः तेन दिदवनीयिषतीत्यादौ नातिप्रसङ्गः । एतन्मूलकमेवाच इति स्वरूपकथनं एवञ्च द्विर्वचनेचीत्यस्य द्वित्वनिमित्ते ऽजादौप्रत्यये एकप्रत्ययातिरिक्ताव्यवहितपरे तदन्यतरनिमित्तकादेशो नेति सूत्रार्थः । इतीति । इत्यत्र वर्गादिग्रहो लिङ्गमिति पूर्वेणान्वयः यत्रेति यद्यप्यचिकीर्तदित्यत्र त इत्यवर्णपरत्वमस्ति तथापि न दोषः चङ्सहितस्योत्तरखण्डत्वाभावात् । अङ्गोजिति । स्पष्टार्थं तत्रावर्णपरत्व किं द्वित्वप्रवृत्तिवेलायामुत परिनिष्ठिते रूपे नाद्यः चुस्रावयिषतीत्याद्यसिद्ध्यापत्तेः नान्त्यः औननदित्याद्यसिद्धेरत आह प्रक्रियायामिति । नत्वमुकत्रेत्याग्रह इति भावः नन्वेवं सति हलिकल्योरदन्तत्वनिपातनं कृतायां वृद्धौ टिलोपज्ञापकमिति भाष्यासङ्गतिः ण्यन्ताभ्यामाभ्याञ्चङि यथेष्टं नामधातुष्वित्यनेन द्वितीयद्वित्वे ऽहललदित्यादौ अभ्यासे ऽकारश्रवणेन चारितार्थ्यादिति चेन्न एतद्भाष्यप्रामाण्येन कण्ड्वादेस्तृतीयस्येत्युत्तरन्तत्पाठेन च अेकाचामेव तत्र भाष्ये उदाहृतत्वेन च द्वित्वप्रवृत्तियोग्यैकाच्त्रयसन्निधाने एव यथेष्टमित्यस्य प्रवृत्तेरदोषात् तद् ध्वनयन्नाह औननदिति । यत्त्वदन्तत्वसामर्थ्यादल्लोपविकल्प इति तन्न शास्त्रबाधस्यान्याय्यत्वात् मम तु न कस्यापि शास्त्रस्य बाधः एतेन णिज्विकल्पार्थन्तदित्यपास्तं किंचास्यादन्तत्वमग्लोपित्वसंपादनेन ह्रस्वाभावार्थन्तद् ध्वनयन्नाह मा भवानूननदिति । परेतु भाष्ये ओः पुयण्जिषु वचनं ज्ञापकं णौस्थानिवद्भावस्य यद्येतज्ज्ञाप्यते चिकीर्त्तदित्यत्रापि प्राप्नोति तुल्यजातीयस्य ज्ञापकं कश्च तुल्यजातीयो यथा जातीयकाः पुयण्जयः कथं जातीयकश्चैते ऽवर्णपरा इत्युक्तं तत्र णावित्यस्य णिनिमित्तको ऽच आदेश इत्यर्थः णौपर इत्यर्थं रेफेणव्यवधानात् पुस्फारयिषतीत्याद्यसिद्धिः ज्ञापनफलन्तु तुतावयिषतीत्यादितुल्यजातीयस्येत्यस्य ष्वादिघटितधात्वच्तुल्यस्याच

इत्यर्थः षष्ठ्यन्ततया ऽच इत्यस्यैव तद्विशेष्यत्वात् अच्त्वेनतुल्यत्वं कृतेरपीति पृच्छतिकश्चेति उत्तरयति। यथाजातीयका इति । अत्र पुयण्जकारैरचस्तुल्यत्वासम्भवात् पुयणित्यादेस्तद्घटितधात्वच इत्यर्थः धात्ववयवत्वादिना साम्यमत्रापीति पृच्छति । कथंजातीयका इति । उत्तरयति । अवर्णपरा इति । एवञ्च द्वित्वप्रवृत्तिवेलायामवर्णपरत्वसंपादकादेशस्थानिनो ऽच आदेश इत्यर्थः तदैवस्थानिवत्वप्रवृत्त्या तात्कालिकसाजात्यग्रहणस्यैवौचित्यात् एवञ्चावर्णपरत्वसम्पादकादेशस्थानित्वेन तुल्यतेति भावः । एतेनाद्यजवर्णकपरखण्डका इत्यर्थो ऽस्येति परास्तं तत्प्रवृत्तिवेलायां परखण्डाभावात् आद्यजित्यादेः शब्दमर्यादया ऽलाभाच्च एवञ्च यत्र द्विरुक्तौ परभागस्याद्योजवर्णस्तत्रायं स्थानिवद्भाव इति द्विर्वचनेचीत्यादौ भाष्यकैयटयोः स्थितमिति माधवोक्तं चिन्त्यम् । अत्रत्य भाष्यकैयटाभ्यामक्षरमर्यादया तदर्थालाभात् सर्वथानर्दित्यादि चिन्त्यमेव द्वित्वप्रवृत्तिवेलायां स्थानिवद्भावात्पूर्वमुत्तरखण्डाभावेनोत्तरखण्डे ऽकाराभावात् नापि द्वित्वोत्तरं सः द्वित्वेकर्त्तव्ये एव स्थानिवद्भावेन तदुत्तरमुत्तरखण्डे तदश्रवणात् स्थानिवद्भावकृताकारश्रवणस्य तत्प्रवृत्तौ निमित्तत्वायोगाच्च अत एव णौस्थानिवदित्यस्य प्रथमोपस्थितादन्तोदाहरणं विहायोकारान्तोदाहरणं दत्तं भाष्ये इति प्राहुः । णिज्विकल्प इति । सूत्रादरदन्तत्वमनेकाच्त्वेनाधोपदेशत्वार्थमिति न ततो णिज्विकल्प इति भावः अन्त उदात्त इति । तेन गर्वतीति मध्योदात्तं सूत्रमूत्रयोः पाठो फलं चिन्त्यं तत्करोतीत्यस्य सूत्रयतीति भाष्ये उदाहरणात् वस्त्रं वेष्टतीत्यर्थे वस्त्रसूत्रयतीति सिद्धये घटः प्रस्रवतीत्यर्थे घटो मूत्रयतीत्यर्थन्तयोः पाठ इति कश्चित् गणसूत्रमाह प्रातिपदिकादिति यत्तु तत्प्रकृतिकसुबन्तादित्यर्थः तत्करोतीत्यस्यतद्विवरणत्वात् तत्र हि तदिति कर्मपरं द्वितीयान्तात्प्रत्यय इति तृतीये हरदत्तोक्तेः तन्न सुप इत्यस्याप्रकृतत्वात् सुप इत्येवसिद्धे गणसूत्रस्यप्रातिपदिकपदासङ्गतेश्च अत एव स्वार्थे परिपूर्णमिति न्यायोत्र न अत एवाचारक्विप् प्रातिपदिकादेव इदमेवाभिप्रेत्य मूले तत्करोतीति पूर्वस्य प्रपञ्च इत्युक्त माधवस्वरसोप्यवमेव द्वितीयान्तादिति हरदत्तस्य तदन्तार्थकादित्यर्थः । अत एवास्यरराजत् पटयतीत्यादौ न कुत्वं पदत्वाभावात् परेतु तत्करोतीति हेतुमतिचेति सूत्रे वार्तिकात् टेरिति सूत्रे णाविष्ठवत् प्रातिपदिकस्येति वार्त्तिकाच्च गणसूत्राणि प्रातिपदिकाद्धात्वर्थे इत्यत्रेष्ठवच्चेति प्रामाणिकानि तत्र तत्र सूत्रे वृत्तिकारादिभिः ख्युनातित्यादीनां सूत्रावयवत्वेन पठितानामपि वार्तिकेषु दर्शनेनाप्रामाणिकत्वकल्पनस्य सर्वसमतत्वात् वार्तिके करोतीति धात्वर्थोपलक्षणं इष्ठवत्वविधायके प्रातिपदिकस्येत्युक्त्या प्रातिपदिका-

देवतदुत्पत्तिलाभादत एव घटोजायते घटंपचतीत्यर्थे च घटयतीत्यादिने- त्याहुः तन्न वार्त्तिकेणावित्युपमेये सप्तमीदर्शनात्सप्तम्यन्ताद्वतिरित्याह। इष्ट यथेति । अत एव भावयतीत्यादाविष्ठस्य यिट् चेति यिडागमेन प्रस्थेत्यादि आदिना सकलपाष्ठादेशाः पाञ्चमिकः कन् च गृह्यते अत एव भारद्वाजीयैः णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक् कन्विध्यर्थमिति पाञ्चमिकः कनेवोपात्तो न तु तन्त्रादिपदमुपात्तं नापि प्रथमोपस्थितस्योपादानमिति केचित् माधवादयस्तु कन्ग्रहणमुपलक्षणं मत्वा सर्वपाञ्चमिकादेशान्मन्वते यद्यपि भसञ्ज्ञाभाष्ये न दृश्यते तथाप्यु- दाहरणमेतन्न परिगणनमिति भाष्यात्तस्या अपि ग्रहणन्तेन स्रग्विणमाचष्टे स्रजयतीत्यादौ न कुत्वं णयन्तात्क्विपि स्रगित्यादौ बहिर्भूतसुन्निमित्तबहिरङ्ग पदत्वस्यान्तरङ्गेण भत्वेन बाधायोगात्कुत्वं भवत्येव पुंवद्भावोदाहरणमिड विडमाचष्टे एडविडयतीति इष्टनिकृष्टस्यैवातिदेश इति आदिवृद्धेर्नातिदेश इति दिक् परत्वाद्वृद्धाविति अत एव मुण्डमिश्रेत्यत्र हलकलेति हलिकल्यो रदन्तत्वनिपातनं भाष्योक्तं सार्थकं वृद्धेः पूर्वं लोपे तु इकारलोपे ण्यग्लोपित्व- सत्त्वेन तद्वैयर्थ्यं स्पष्टमेव लोपस्य शब्दान्तरप्राप्त्या वृद्धेः स्वत एवानित्यत्वेनो- भयोरनित्ययोः परत्वाद्वृद्धौ आवादेशात्पूर्वं परत्वादाङ्गत्वाच्च लोप इत्यनग्लो पित्वात् सन्वत्वं भवत्येवेति भावः नचात्र पक्षे वारिआख्यदवीवरदित्यादौ वृद्धौकृतायाङ्कृतस्यापि टिलोपस्य स्थानिवत्त्वाद्ध्रस्वत्वं न प्राप्नोतीति वाच्य चङ्परनिर्ह्रासे तन्निषेधात् इदञ्च मुण्डमिश्रेति सूत्रे भाष्ये कैयटयोः स्पष्टम् । वृद्धेर्लोप इति । अत एव नाग्लोपीति सूत्रे ऽग्लोपीत्यत्राग्गिति प्रत्याहारग्रहण चरितार्थम्। इदुदुपधेभ्यो णिजन्तेभ्यो लुङ्तु न भाष्यप्रामाण्यादिति भावः साप्त- मिकमेव ज्यायः मुण्डमिश्रेति सूत्रस्यन्त्वेकदेश्युक्तिः अचकलदित्यादौ वृद्धेरपि नित्यत्वमाशङ्क्य शब्दान्तरप्राप्त्या अनित्यत्वप्रतिपादकस्य मुण्डेति सूत्रस्थभाष्य स्य तत्त्वावश्यकत्वात् लोपस्य स्थानिवद्भावेनातउपधाया इत्यस्याप्राप्तेरचोञ्णि- तीत्यस्याः स्थान्यभावेनाप्राप्तेश्च अत उपधाया इत्यस्य भिन्नलक्षणत्वाद्भिन्न स्था निकत्वाच्च अत एव णौचङीति सूत्रे अवीवदर्दादित्यत्र णिलोपे ऽग्लोपित्वाद्ध्रस्व- प्रतिषेधः प्राप्नोति । न च परत्वाद्वृद्धौ कृतायां लोप इत्यग्लोपित्वाभावः नाग्लोपीति सूत्रे प्रत्याहारग्रहणेन वृद्धेर्लोपस्य बलवत्त्वज्ञापनात् अथवा णयल्लोपाविति पूर्वविप्रतिषेधात्पूर्वं णिलोप इत्याशङ्क्य णेर्णिच्युपसंख्यानेन परिहृतं एतदेवाभिप्रेत्य सतमेकैयट आह . अनाश्रित्यज्ञापकमत्वनिपातन- मुक्त ज्ञापकाश्रयणन्तु ज्याय इति किं च हलकलेत्यकारान्तयोरेव ग्रहणादच-

कलदित्यादि सिद्धं हलिकलिभ्यां णिजेवनास्तीत्यफलमत्वनिपातनं न च तत्करोतीति णिच् इकारान्तयोरकारान्तयोश्च पर्यायत्वेन हलकलग्रहणस्य नियमार्थत्वेन तयोर्णिजभावादिष्टसिद्धिः । एवञ्च चङ्परनिर्ह्रासे स्थानिवत्वनिषेधो न कार्यः तत्साध्यस्यावीवददित्यादेर्णिच्युपसंख्यानेनसिद्धेः अन्येषान्तु तत्साध्यानामनभिधानमेवेति नाग्लोपीति सूत्रे कैयटे स्पष्टं धातुरूपं चेति गणसूत्रं वार्त्तिकमिति हेतुमतिचेति सूत्रे इति शेषः अत्राख्यानशब्देन सर्वं न प्रसिद्धकंसवधाद्येव तेन राजानमनामाचष्टे राजामनागमयतीत्येव आख्यानवाचककृदन्तात्तदाचष्ट इत्यर्थे णिच्णिचप्रकृत्यत्रयवकृतो लुक् तस्यैवकृतो या प्रकृतिर्हनित्यादिस्तस्याविकारपरित्यागेन स्वेनरूपेणावस्थानमित्यर्थः प्रकृतिवच्चेति कृत्प्रकृतिप्रकृतिकणिजन्तवदित्यर्थः तदाह हेतुमणिच इत्यादिना । अत एव पुष्ययोगंजानाति पुष्येणयोजयतीत्यादौ तृतीयासिद्धिः राजानमागमयतीत्यादौ द्वितीयाच द्वितीयान्तमित्युपलक्षणमाख्यानात्तदाचष्ट इति चोपलक्षणं द्वितीयान्तमिति अन्यथा प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थकर्मत्वेन षष्ठीस्यादिति भावः परे तु प्रकृतिप्रत्यापत्तिरित्यत्रापि प्रकृतिपदेन प्रत्यासत्त्या कृत्प्रकृतिप्रकृतिक हेतुमण्ण्यन्तप्रकृतिस्तस्याः प्रत्यापत्तिः प्रत्यभिज्ञाविषया आपत्तिः स्थितिः सा च पृथक् तत्सत्त्वे तत्रत्य कार्यसत्वे च भवतीत्यनेनैवकारकबहिर्भावो वधाद्यादेशनिवृत्तिः कुत्वतत्त्वादिकञ्च योजयतीत्यादौ कुत्वादिनिवृत्तिश्च सिद्धा अत एव रात्रिविवासमाचष्टे रात्रिं विवासयतीत्युदाहरणविषये वचने प्रकृतिप्रत्यापत्तिरित्युक्तिर्भाष्ये चरितार्था अन्यथा तत्र कृत्प्रकृतेर्विकाराभावेन तदुक्तेर्वैयर्थ्यमेवस्यात् मम तु कारकबहिर्भावाय तदुक्तिः सार्थिका एवमपि कंसादेः षष्ठी प्राप्नोतीत्यतः प्रकृतिवच्चेति यद्विभक्त्यन्तं तत्र कारकं तादृशमात्रापीत्यर्थः एवञ्च प्रकृतिपदयोरेकार्यताभवति चकारमूलकं भिन्नंवाक्यंञ्च न कल्प्यं भवतीत्याहुः । कर्तृकरणादिति । न द्वन्द्वो व्याख्यानादित्याशयेनाह । कर्त्तुर्व्यापारार्थमिति । चित्रचित्रात्व्यचा णिचोऽबाधामाभूद्विति पाठः अदन्तेष्विति । वदीत्यादिनिर्देशस्तु सौत्र इति भावः शाकटायन इति । अत्रारुचिस्तु सर्वत्राल्लोपबाधे मानाभाव इति । सङ्ग्रामेति । युद्ध इत्यस्य णिअर्थत्वन्तुन प्रकृत्यैवलोकव्युत्पत्त्या तद्बाधात् अस्य गणसूत्रत्वादच विवक्षितएवार्थः मारणतोषणनिशामनेषु ज्ञेत्यादिवत् अनुदात्तेदिति । तत्वञ्च केवलसङ्ग्रामशब्दस्य क्रियावाचकत्वाभावेनाधातुत्वात्तत्राचरितार्थमिति एयन्त उपकरोतीति बोद्धम् । अकारप्रश्लेषादिति अदन्तप्रकरणान्तेनाग्लोपित्वाद्उपधाह्रस्वोनेति भावः । अस्यानुदात्तेत्त्वे कैयटाद्युक्ते दृढं मानं चिन्त्य भृशादिसूत्रे भाष्ये ऽवश्यं सङ्ग्रामयतेः सोपसर्गादुत्पत्ति-

वेक्त्या असङ्ग्रामयतशूर इत्यर्थन्तनियमार्थं अस्मादेव सोपसर्गाच्चान्यस्मात्सोपसर्गादित्यवोक्तं तस्यायं भावः । ग्रामशब्द एव युद्धार्थकः संशब्दस्तु तस्य तदर्थत्वद्योतकः । एवञ्च प्रातिपदिकादिति णिचि प्रजयतीत्यादौ द्योतकस्य प्रादेरिवास्यापि द्योतकस्य धातावन्तर्भावो न स्यात् एवञ्च संग्रामयतेत्येव स्यादतो ग्रामयुद्धे वेत्येतावतैव युद्धे वर्त्तमानाद्ग्रामशब्दान्तादित्यर्थकेन सङ्ग्रामेति विशिष्टात् णिचि सिद्धे सङ्ग्रामेति पाठो नियमार्थ इति । नियमाकारादिचाये दर्शयिष्यते एवञ्चानुदात्तत्वे मानं चिन्त्यं भाष्यप्रयोगस्य णिचश्चेति पाक्षिकात्मनेपदेनापि सिद्धेरित्यलं । बहुलमिति । भूवादिसूत्रे तु पाठेन धातुसञ्ज्ञेति भाष्ये प्रतीकमुपादाय स पाठो नोपलक्षणार्थं ऽपि त्वियत्ताप्रतिपादनार्थं इति कैयटेनोक्तं तेनेदमनार्षमिति सूचितं नवगणीत्यादिहन्त्यर्थाश्चेत्यसङ्गतेरिदं चिन्त्यञ्चुरादिभ्य इति इदमपि चिति धातौ दूषितप्रायम् । णिङ्ङ्गात् श्वताश्वति च गणसूत्रे मङ्गलार्थः प्रसङ्गात्तदर्थः सिद्धशब्द इत्यर्थः ॥ इति चुरादयः ॥

तत्प्रयोजको ॥ तच्छब्देन स्वतन्त्रः कर्त्तेत्यत्रोपस्थितः कर्त्ता गृह्यते चेन च ॥ हेतुमति च ॥ हेतुशब्देनोक्तः कर्त्तैव एव अन्यथा विक्लित्त्यनुकूलव्यापारादीनामपि हेतुमत्त्वेनातिप्रसङ्गात् हेतुमांश्च प्रेरणादिरेवहेतुः कर्तास्येति व्याख्यानात्तदाह प्रयोजकव्यापारे इति । स च वाच्य एव द्योत्यत्वे तु तस्य विशेषणतापत्तौ गमितोग्रामं देवदत्तो यज्ञदत्तेनेत्यादौ प्राधान्येन गत्यर्थत्वात्कर्तरिक्तस्यापत्तिरिति भाष्ये स्पष्टं विशेष्यत्वे तु पाचयतिर्देवदत्तो यज्ञदत्तेनेत्यादौ प्रधानीभूतव्यापारानाश्रयत्वेन प्रयोज्यस्य कर्त्तृत्वानापत्तिरित्याशयेनाह वाच्ये इति । ओः पुयण् अः परोयस्मादिति बहुव्रीहिर्न तु यस्येति पुयणादीनामाकारावयवकत्वाभावात् णौ कृतादेशस्य स्थानिवत्त्वज्ञापनाद्भू इति द्वित्वे सन्वद्भावेनेत्वे दीर्घस्तदाह अबीभवदिति । अपर इति वर्त्तते तच्च बहुव्रीहिरन्यपदार्थश्च प्रत्यासत्त्या धात्वक्षरमेव तदाह अवर्णपरे इत्यादि । एकहल्व्यवधाने तु सामर्थ्यात्प्रवृत्तिः ओः पुयणित्यस्य तु न व्यवधाने प्रवृत्तिः मानाभावात अत एव पुस्फारयिषतीत्यादिसिद्धिः । अवर्णपर इति किं सुस्रूषति अचीचकासदिति । चङ्परे णौ ॥ यदङ्गन्तस्य योभ्यासो लघुपर इति व्याख्यातॄणामर्वाचां मत एतत् । मतान्तरे इति । चङ्परेणौ यल्लघ्विति भाष्यसंमते पक्षे इत्यर्थः । द्वयोरपीति । अबीवददित्यादौ सन्वत्त्वस्याप्युपलक्षणमिदं णिनिमित्तकणिलोपस्य स्थानिवत्त्वेन चङ्परणिपरोपधायास्तत्परलघोरभावाच्च तयोरसंभव इत्यपि बोद्धम् । णयाङ्कतीति । ते प्रागित्यादौ गत्याङ्कतिनिर्द्देशवदिति

भावः। एतेन वर्णग्रहणे एव जातिग्रहणं नान्यत्रेत्यपास्तम्। एवञ्च चङ्परणित्त्व-जात्याश्रयैकानेकव्यक्तिपरेत्यर्थ इति बोद्धव्यम्। इदञ्च वृत्त्यनुरोधेन। परेतु आकृति-निर्देशो ऽयुक्तः जातेः पौर्वापर्याभावेन ह्रस्वसन्वद्भावविधायके चङ्परेणाविति विशेषणासङ्गतिः व्यक्तिद्वारकं पौर्वापर्यमिति हलन्ताच्चेति सूत्रे कैयटोक्तन्तु न युक्तन्द्वितीयाध्यायस्थे आर्द्धधातुक इति सूत्रे जातिनिर्देशाज्जात्या पौर्वापर्यासं-भवेन विषयसप्तमीति भाष्यासङ्गत्या तद्द्वारकं नपौर्वापर्यमित्यस्यासङ्गतत्वात्। किंच णावित्यस्याग्लोपविशेषणत्वेन णित्वजातिनिमित्तकाग्लोपेत्यर्थेन एक-णिनिमित्तकापरणिलोपस्यापि णित्वजातिनिमित्तकत्वेनाग्लोपित्वं दुर्वारं णित्वजात्याश्रयानेकनिमित्तकेत्यर्थे ऽचकथदित्यादौ दोषः। एकणिजन्ते ता-वन्मात्रनिमित्तकस्यैवाग्लोपस्य ग्रहणमनेकसत्वे ऽनेकनिमित्तकस्यैव तस्य ग्रह-णमित्यर्थस्य शब्दमर्यादया न लाभः। अनेकणिनिमित्तकाग्लोपस्याप्रसिद्ध-त्वाच्च अत एव सन्वत्सूत्रे णौचङीत्यत्र णेर्णिच्युपसंख्यानमेवोक्तं भाष्ये इत्याहुः। णौ चसं॥ अत्र णौ चसंश्चङोरिति विषयसप्तमी एवञ्च तयोर्विवक्षि-तयोरन्तरङ्गत्वाद्वृद्ध्यादेः पूर्वं सम्प्रसारणम्। अन्यथा ऽन्तरङ्गत्वाद्वृद्ध्यायोः कृतयोः पश्चात्संप्रसारणेऽप्यशूशवदित्याद्यसिद्धिस्तदाह संप्रसारणं तदाश्रयञ्चेति । नत्वियं परिभाषेति भ्रमितव्यं तस्याभाष्ये प्रत्याख्यानात्। स्तम्भुसि॥ उपसर्गेति। उपसर्गादिति वक्तव्यमिति वार्त्तिकात् तत्फलमुदाहरति। न्यसीषददिति। अ-त्राभ्यासनिमित्तं षत्वं भवत्येवेति भावः। ऋदित्करणादिति। अन्यथा नि-त्यत्वाद्द्वित्वे उपधात्वाभावात्प्राप्त्यभावे किन्तेन। माभवानिति। अत्र यद्व-क्तव्यन्तदत्येधतीत्यत्रोक्तम्। और्न्दिददिति। चङ्परेणौ यल्लघु तत्पराभ्या-साभावान्नदीर्घः। अजादेरित्येवेति। अजादेरिति च कर्मधारयात्पञ्चमी आदिभूतादचः परे इत्यर्थः तेनेन्दिद्रीयिषतीत्यादौ दस्य न द्वित्वनिषेधः स्पष्टञ्चेदं संयोगसञ्ज्ञासूत्रे भाष्ये तत्र हि नन्द्राइत्यत्राजादेरिति वर्त्तते इत्युक्तम्। अदिद्रवदिति। ननु लावस्थायामडिति पक्षे आदेरचः परत्वम-स्त्येव किंच चङीति द्वित्वात्परत्वादपि प्रथममट्न्याय्य इति चेन्न। नन्द्राइ-त्यस्याधिकारसूत्रत्वेन तत्तत्सूत्रे उपस्थितौ तत्र धातोरिति सत्त्वेन प्रत्या-सत्त्या व्याख्यानेन च धातुसञ्ज्ञाकालिकादादेरचः परा नदरा इत्यर्थान्न दोष इत्याहुः ईदृशानामभिधाने दृढं मानं चिन्त्यमिति कश्चित्। द्वायिवाणि। द्वितीयः पवर्गीयादिः लोटिणोचय इति आद्यष्टवर्गप्रथमोपधः चोपधोन्त्यः। वाणिलोटीति। आद्योदन्त्योष्ठ्यादिः द्वितीयस्तु द्वितीयोपधः अत्र पूर्वं षष्ठ-भाष्ये इत्युक्त्वा न्यासादिमतस्याप्रामाणिकत्वं सूचितम्। स्वापेश्चङि॥ च-ङीति विषयसप्तमी तेन पूर्वं संप्रसारणे द्वित्वम्। शाच्छासा॥ अत्र पाश-

ब्देनालुग्विकरणत्वादलाक्षणिकत्वाच्च पिबतेरेवग्रहणमिति कैयटः । ह्वः संप्रसारणम् । णौचसंश्चङोरित्यनुवर्त्तते सा च विषयसप्तमी । लोपः पिबतेः ॥ अभ्यासेकारसन्नियोगशिष्टत्वाद्द्वित्वेकृते उपधालोपः । अर्पयतीति । वृद्धिंबाधित्वानित्यत्वात्पुकि गुणः । यलोप इति । लोपोव्योरित्यनेन । पातेर्णौ ॥ पुक इति । अत्तिह्रीत्यस्येत्यर्थः अत्र लुगा ऽऽगम एव पालरक्षणे इत्यनेन रूपेसिद्धे प्यागमान्तरनिवृत्तयेवचनम् । वोविधू ॥ अत्र वातेरेवग्रहणम् न वेञा नापि वैइत्यस्य लाक्षणिकत्वात् सानुबन्धकत्वाच्च । केशान्वापयतीति । सुगन्धीकरोतीत्यर्थः । लीयतेरिति । लीङोङारित्यर्थः । लातेश्चेति । आदादिकस्य कृतात्वस्यलीयतेश्चेत्यर्थः व्याख्यानादिति बोद्धम् । निपातनं द्रवीकरणम् । ननु कृतात्वस्यापि स्थानिवत्वेन लीत्वान्नुक् स्यादत आह लीं ई इति । प्रलम्भनाभिभवेत्यादि । यद्यपि भाष्ये लीयतेः प्रलम्भनशालीनीकरणयोर्नित्यमित्येवपठितं तथापि तदात्मनेपदविषयोपलक्षणन्तेन पूजायामपीति कैयटः द्वयोरेवेत्यपि मतान्तरन्तेनैवोक्तं इदमेवभाष्यसम्मतं विशिष्य द्वयोरेवोपादानात् अशितीति तु प्रकरणाल्लब्धं अशिच्चात्र णिरेव क्रीङ्जीनामित्यत्र पाठात् भाष्ये णावित्युक्तेश्च । लियः सं ॥ इहापि द्वयोर्ग्रहणं व्याख्यानात् तदाह लीङ्लियोरिति । शालीनीकरणमभिभवः । प्रयोजकाद्भयञ्चेदिति । हेतुसंबन्धिभयस्याव्यावर्त्तकत्वात्पञ्चम्यन्तेन समास आश्रीयत इति भावः । हेतुभय इत्युक्तेर्भयस्मयावित्यनुपपन्नमत आह सूत्रे इति । भी ई इति स्थानिवत्सूत्रे भाष्ये स्पष्टमेतत् नित्यं स्म हेतु भय इति वर्त्तते भय इति धात्वर्थोपलक्षणं तदाह हेतोः स्मय इति । भापयतीति द्वितीयोपि तालव्यन्तस्थः कथन्तर्हि विस्मापयन्निति आत्वं कृतमात्मनेपदञ्च नेत्यत्र बीजाभाव इति प्रश्नः उभौतालव्ययकारावेवेति न दोष इत्युत्तरं यद्वेति । आत्मनेपद भीस्मी प्रकृतिक ण्यन्तादेव ण्यन्ताण्णावेति भावः । णौचसं । अत्राधिकृतमार्द्धधातुकइति णावति च विषयसप्तमीति स्पष्टमाकरे तत्रादेशस्य णिबुद्धिनिमित्तकत्वेपि णाङोद्वित्वे कार्ये णावच आदेशोनेति न प्रवर्त्तते सति हि तस्मिन्नजादेर्द्वितीयस्येति णिच एव द्वित्वे उत्तरखण्डे वर्णपरत्वभावात् चस्योवर्णादेशत्वाभावाच्च । प्रजनेवीयतेः । नायं श्यन् आदादिकत्वात् यकारनिर्देशस्त्वदृष्टार्थः व्येञोग्रहणार्थन्तु न तस्य प्रजने वृत्तेमानाभावात् तस्य शाच्छासेति पुगपवादयुकोविधानेन रूपे विशेषाभावाच्च वचिस्वपीत्यादिसंप्रसारणयोरण्यण्यन्तेभ्यः काम्यच्सूत्रस्ययोः संप्रसारणविधायके विहितविशेषणपक्ष तदितरपक्षयोः फलैक्याय क्विबभावस्य सत्वाच्च एतेन ण्यन्तात्क्विप्यात्वपक्षेव्याः व्यौ इत्यादिरूपाणि तदभावपक्षे व्यैव्यायावित्या-

दिरूपाणीति विशेष इत्यपास्तं विचो ऽसार्वत्रिकत्वाच्च अत एव भाष्ये विभाषा लीयतेरित्यत्रेवात्र सामान्यग्रहणार्थत्वं नोक्तमित्यलं । वाचित्त । णाविति वर्त्तते । प्राप्तविभाषेयन्त्वनेनैहन चित्तस्य दोषः । जृणातेस्त्विति । तस्य पित्वाभावेन मित्वाभावादिति भावः । आखेट इति । अनेन पद्याखेटेपि रजयति पक्षिण इत्येवेति सूचयति अन्येतु रजयाञ्चकार विरजाः समृगानित्यादिप्रयोगान्मृगरमणं यथाश्रुतमेव अत एव भाष्ये मृगरमण इति किमर्थंरञ्जयतिवस्त्राणीति प्रत्युदाहृतमित्याहुः । ज्ञपादिरिति । तेन मित्त्वाद्ध्रस्वः चिनोतिस्तु चिस्फुरोरित्यात्वे पुकि तस्यामित्वान्न ह्रस्वः पक्षे तालव्यौद्वौयकारौ इदञ्चुरादिलिखिते परे तु मते बोद्धम् । अपुस्फरदिति । आत्वस्य णौकृत्वेतन स्थानिवत्वेन स्फुरित्यस्य द्वित्वमिति भाव: साभ्यासस्येत्यनितेर्विशेषणं व्याख्यानात्तदाह साभ्यासस्यानितेरिति । अनेनोत्तरखण्डे एव तत्तद्धातुत्वमिति सूचयति एतेन प्राधान्यान्नकारविशेषणत्वे ऽभ्याससहितनस्येत्यर्थे रमागमेन रेपधयोरिवाभ्यासनिवृत्तावुभौ ग्रहणान्नस्यैवस्थाने णद्वये प्राण्णदिति स्यादित्यपास्तं अत एव प्रकृतसूत्रे भाष्ये उक्तं साभ्यासस्य द्वयोरिष्टमिति अनितेरित्यनेन तु न सिद्धः अभ्यासस्यानर्थकत्वादुत्तरखण्डस्य व्यवहितत्वात् अत एवेदं सूत्रमभ्यासेनेति अभ्यास्येति वा नोक्तं किंतु साभ्यासस्येत्येवमुक्तमिति तदाशयः परेतु साभ्यासानिति संबन्धिनकारयोरुभौणकारौ भवत इति वृत्तिरुचिता नचाभ्यासस्यानितेरित्यनेन सिद्धिः तस्यानर्थक्यात् अनितेरवयवस्य तत्संबन्ध्यवयवस्य चेत्यर्थे तु तदनुवादकमेवेदं तथार्थाभावे तु विधायकमेवेदमुभयोर्णकारयोः अत एवैकः पूर्वपरयोरिति सूत्रे भाष्ये उक्तम् । उभौग्रहणसामर्थ्याद्द्वावादेशौ भवत इति । कैयटश्च साभ्यासस्यानितेरुभौणकारौ भवत इत्याह एवमेवयुक्तं नतूभौ नकाराविति न इत्यस्य षष्ठ्यन्तस्यैवाधिकारेणोभयोरित्यापत्तेः अत्पूर्वस्येति वत् उभौग्रहणान्त्वादेशद्वयार्थं अन्यथा ज्वरेत्याद्यूट्वत्सकृत्प्रवृत्त्यैवोभयोर्निवृत्तौ स्थान्यभावादेव पुनरप्रवृत्तौ आदेशद्वयलाभो न स्यादित्याहुः पूर्वत्रासिद्धीयमद्वित्वे इत्युक्तेः पूर्वं णत्वे द्वित्वन सिद्धावपि क्वचित्तदप्रवृत्तिज्ञापनार्थमिति बोद्धम् । निमित्ते सतीति । तच्चोपसर्गरेफः । णौगमिः ॥ णाविति विषयसप्तमी अत्र बोधनं शब्दज्ञानं नान्यदितीक्ष धातो माधवः ईर्ष्यतेरिति । ईर्ष्यति प्रकृतिकप्रत्ययान्तधातोरित्यर्थः स च णयन्तः सनन्तश्च विनिगमनाविरहात् ईर्ष्यतेरामः सत्त्वेन लिटो ऽभावात् अन्यत्र द्वित्वाभावाच्चेति दिक् । इति वार्थे इति । नन्द्रा इति सूत्रे भाष्ये स्पष्टमेतत् । पकारस्येति । रेफस्य तु नन्द्रा इत्यनेन वारितमिति भावः । द्वितीयस्यैवेति । अजादेर्द्वितीय-

स्येत्यनेन रेफस्य नन्द्रा इति निषेध इति भावः इहोपन्यासस्तु आद्यव्याख्याने उपयोगादिति बोध्यम् । इति णयन्तप्रक्रिया ॥

धातोः क ॥ इषिकर्मण इति कर्मादिकं धातोर्विशेषणं एवञ्चेषिकर्मवाचकादित्यर्थः ननु कर्तृत्वस्य क्रियानिरूपितत्वात्समानकर्तृकादित्युक्त्या क्रियावाचकाद्धातोरेवभविष्यति किं धातोर्ग्रहणेनेत्यत आह धातोरिति । अत एवेकोझलिति कित्वं सार्थकं कर्मणः किमिति प्रत्ययवाच्येच्छायानियतं कर्माकाङ्क्षतया तदाकाङ्क्षायां प्रत्यासत्त्या प्रकृत्यर्थकर्मिकायामेवविधानं भविष्यतीति प्रश्नः प्रत्यासत्तिः सर्वैर्दुर्ज्ञेयेत्युत्तरं । समानकर्तृकात्किमिति । प्रत्यासत्तिमाश्रित्यप्रश्नः प्राग्वद्वेोत्तरम् ॥ रुदविद ॥ लक्ष्यानुरोधिव्याख्यानाद्विदेः सर्वस्य ग्रहणमित्याहुः । सनिग्रह ॥ चकार उगनुकर्षणार्थः । अन्यथा बुभूषतीत्यादौ कित्त्वात्परत्वादिडेवस्यात् कित्वाभावेन श्र्युक इत्यस्याप्रवृत्तेः गकाजित्येव जिजागरिषति । ननु परत्वेन षत्वकत्वयोः कृतयोर्भषभावेन स्यादत आह षत्वस्येति । किरश्च ॥ सनिग्रहेति एकाच इति च निषेधे प्राप्ते वचनम् । जिगरिषतीति । इट्सनिवेत्येतमपवादत्वादयं बाधते । अचेट इति । इदं वृत्तौ स्पष्टं भाष्येतु न दृश्यते । हलन्ताच्च । हलिति लुप्तपञ्चम्यन्तं अन्तशब्दः समीपवाची इकइत्यनुवृत्तं षष्ठ्याविपरिणम्यते तदाह इक्समीपादिति । यियक्षत इति सतिकित्त्वे यजेः संप्रसारणंस्यादिति भावः । जातिपरमिति । हल्त्वजात्याक्रान्तैकानेकव्यक्तिपरमित्यर्थः सामीप्यमव्यवहित एवेति भावः । अज्झन ॥ च्क्षोरिति सूत्रे भाष्ये झलनुवृत्तेरुक्तत्वादाह झलादौसनीति । जिगमिषतीति । गमेरिडितीट् तत्र हि सर्वोपि गमिर्गृह्यते व्याख्यानादिति भावः । स्नोव्यु ॥ न क्त्वेत्यतः सेडिति वर्तते तच्च क्त्वोसंबद्धमपीहानुवर्त्तमानं सनोपि विशेषणं व्याख्यानात् नोपधेत्यतो वेति वर्त्तते नेतिनिवृत्तं सनिप्राप्त्यभावेन निषेधस्य वक्तुमशक्यत्वात्तदाह सेटोवेति । सामान्यापेक्षेति । णौचङीति सूत्रे भाष्ये यदयमोणिमृदितं करोति तज्ज्ञापयति द्विर्वचनाद्ध्रस्वत्वं बलीय इत्युक्तत्वेन सामान्यापेक्षज्ञापकत्वमस्य चिन्त्यं अत्र हलादेरिति तु एपित्वेत्यादौ नित्यं कित्वाभावाय किंच एपिपिषतीत्यत्र नित्यत्वाद्द्वित्वे ऽभ्यासस्य नैरर्थक्यादिटोनापत्तौ रूपासिद्धिस्तस्माच्छब्दान्तरप्राप्त्या द्वित्वस्याप्यनित्यत्वात् द्वयोरनित्ययोः परत्वादिड्वाच्य इति ततोपि पूर्वं परत्वाद्गुणे नेष्टसिद्धिरिति दिक् । सनीवन्त ॥ अत्रसन्धातुस्तनादिर्भ्वादिश्च विनिगमनाविरहात् ॥ आप्ज्ञ ॥ सनिमीमित्यतो ऽच इति सनीति च सः सीत्यतः सीति चानुवर्त्तते आवादिभिरचोविशेषणादनन्त्ये साभ्रकाशमीत्वं पूर्वविप्रतिषेधेनणिलोपोबाधत इति

नान्त्यस्य णिच इत्वं यदि पूर्वविप्रतिषेधवार्त्तिके दीर्घग्रहणेन नेत्वग्रहणं तदानन्त्यस्येति वक्तव्यम् । अत्रलो ॥ अत्र सनिमीमेत्यादिसूत्रचतुष्टये लोपोऽभ्यासस्येत्युपतिष्ठते इत्यर्थस्तत्फलितमाह सनिमीत्यादि । यद्वा सनिमीमेत्यादिविहितकार्यैकृते सति योऽभ्यासस्तस्येत्यर्थः अत्रालोन्त्यस्येति नोपतिष्ठते नानर्थक इति निषेधात् लोपस्याविकारत्वादनभ्यासविकार इत्यस्याप्रवृत्तिः यद्वा सनिमीमेत्याद्यनुप्रवृत्त्यैवसिद्धे ऽत्रग्रहणादत्राभ्यासत्वेन योनिर्ज्ञातस्तस्य लोप इत्यर्थात्तदनुपस्थितिः । इत्सतीति । पूर्वत्रासिद्धीयमद्वित्वे इति चर्त्वेकृते त्सशब्दस्य द्वित्वं भ्रस्जेरिट्रमागमयोर्विकल्पाच्चत्वारिरूपाणि ॥ उदोष्ठेति । अज्झनेतिदीर्घेकृते इतिभावः । यियविषतीति ॥ द्विर्वचनेऽचीतियुशब्दस्यद्वित्वे ओः पुयणितीत्वं ऊर्णो तेरिडभावे ऽज्झनेति दीर्घः इट्पक्षे विभाषोर्णोरिति वाङित्त्वञ्चौरादिकश्चेति ह्रस्वविशिष्टयोरुभयोरपि लाक्षणिकत्वादिति भावः । क्त्वात्र गुण इति । णिच् इति शेषः । णिलोपेन गुणस्य बाध इत्यपि बोद्ध्यं । आशङ्कायामिति । आशङ्काविषयार्थ प्रतिपादकाद्धातोः स्वार्थे सनित्यर्थः । श्वामुमूर्षतीति । वर्त्तमानसामीप्येलट् आशङ्का च प्रयोक्तृगता । सनिमीमा । सः सीत्यतः सीत्यनुवर्त्तते मीशब्देन कृतदीर्घयो र्मीनातिमिनोत्योर्ग्रहणं व्याख्यानात् शकग्रहणेन च द्वयोर्ग्रहणं द्वयोरपि सानुबन्धकत्वात् । मुचोक । क्त्वाद्गुणाप्राप्तौ वचनं इट्सनिवा । सनिग्रहेत्यस्यापवादः । प्रकृतिप्रत्यापत्तीति । पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके पुष्ययोगेज्ञीति वचने भाष्यकृत्कृतप्रत्यापत्यनुवृत्तिर्ज्ञापिका तत्र हि चजोरिति घिति परतः कुत्वं अन्यथा क्लुकि निमित्तापायपरिभाषयैवकुत्वनिवृत्तौ सिद्धायां किं तदनुवृत्त्येत्यन्यत्र विस्तरः वस्तुत एतेस्तत्परिभाषाभाव एव बोध्यते ॥ पुस्फारयिषतीति । व्यवधानादोः पुयणीति न ॥ स्तौतिण्योरेव ॥ एवकार इष्टतोवधारणार्थः अन्यथा षण्येवेति नियमः स्यात् ॥ तथा च तुष्टावेति न स्यात् सानुबन्धकषणीति किं सुषूप इह । उपसर्गात्त्विति । स्तौतिण्योरिति नियमेन मध्येपवादन्यायबलादादेशप्रत्यययोरिति षत्वमेवबाध्यत इति भावः सोषुप्यतेः सनि सोषुपिषते इत्यादौ तु षत्वं भवत्येव प्रत्यासत्त्या सनि यो भ्यासस्तस्माद्धाप्राप्तिस्तस्या एव नियमेन व्यावृत्तिः अयन्तु यङ्निमित्ताभ्यासः प्रतीषिषतीति अत्राभ्यासान्तस्याज्झनगमामिति न दीर्घः सिषेचेत्यत्र पदादित्ववारणायैकाचोद्वे इति सूत्रभाष्योक्तरीत्या द्वित्वनिष्पन्नस्योत्तरभागस्य प्रत्ययाधिकारस्यत्वाभावेनाप्रत्ययतयायाचा भ्यासान्तसमुदायस्याङ्गत्वाभावात् अतिपातिरूपसत्वन्तस्त्येवेतीत्वंभवत्येव सन्यत इत्यस्य ह्यङ्गावयवाभ्यासस्यात इत्सनिपरत

इत्येवार्थ इत्यलं धातूपसर्गैकादेशनिष्पन्नेण्निमित्तमत्राख्यखण्डे षत्वं नत्वाभ्यासेण् निमित्तं द्विप्रयोगत्वादभ्यासस्य षणपरत्वन्द्वितीयस्य तु न षण्परत्वं । सः स्विदि ॥ नस्विदीति वक्तुं युक्तम् । शैषिकादिति । सन्विधायके भाष्ये इदं शेषाधिकारभवप्रत्ययान्तातदधिकारभावः सरूपेन शालीये इति शालायां भव इत्यर्थः वाक्यमेवेत्येवकारेण च्छ एव व्यावर्त्यते तदाह नत्विति । अण् तु भवत्येवेति भावः । अणन्तादिति । भावाद्यर्थ णान्तादित्यर्थः अत्र साॆरूप्यंशब्दत एव तेन जातार्थच्छान्ताद्भवार्थेऽपि छो नेत्याहुः स्पष्टं चेदं वृत्तौ । न च शालाशीलीययोः पठति पिपठिषत्योश्चैककालिकोपस्थित्यभावात्कथन्तत्तत्प्रत्ययान्तेभ्यस्तत्तत्प्रत्ययप्राप्तिरिति निषेधो व्यर्थ इति वाच्यं नित्यशब्दपक्षेधातुत्वेन प्रातिपदिकत्वेन च सर्वानुवादेन विधिसम्भवात् अत एव त्वप्रत्ययान्तात्त्वप्रत्ययसिद्धिः सत्यभिधाने तथा ऽल्यार्थे सिद्धसर्वकशब्दादर्थान्तरे पुनरकच् सत्यभिधाने इष्ट एव अन्यथा त्वनभिधानान्न सरूपः सनेति साॆरूप्यं शब्दतार्थतो वा तेन समानार्थोविरूपः सरूपश्च न । भिन्नार्थः समानाकारेणेत्यर्थः दण्डिमतीत्यत्र षष्ठीसप्तम्यर्थान्यतरवृत्तेः सप्तमीषष्ठ्यन्यतरार्थे प्रत्यये ऽर्थतः शब्दतश्च सरूपत्वाभावान्न दोष इति मतुप्सूत्रे आकरे स्पष्टं तत्र हि मत्वर्थीयान्मतुबादेः प्रतिषेधोवक्तव्यः तञ्चापि ब्रुवतासमानवृत्तौ सरूप इति च वक्तव्यमित्युक्तं सनित्वर्थसाॆरूप्यमेव विशेषणसामर्थ्यात् ॥ इति सन्नन्तप्रक्रिया ॥

भृशार्थः कार्त्स्न्ये तस्मिन्द्योत्ये इति ॥ वाच्यत्वे तु सन्नन्ते इच्छाया इव तस्य विशेष्यत्वं स्यादिति भावः । पुनः पुनरित्यादि । धातोः क्रियासमभिहारवृत्तिताद्योतकम् । बोभूयत इति । समभिहारे द्वे इति द्वित्वन्तु न क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे इति क्रियासमभिहारे लोडिति सूत्रे भाष्ये पाठेन तस्य लोड्विषयत्वात्, किञ्च यङः क्रियासमभिहारातिरिक्तार्थाभावेन यङैवद्योतनसम्भवान्न तत् । लोटस्तु समुच्चये ऽपि विधानादस्ति तत् द्योतने द्वित्वापेक्षा भृशार्थे यङि ततः पौनः पुन्यविवक्षायान्तु भवत्येव नित्यवीप्सयोरितिद्वित्वं । पापच्यते पापच्यत इति भृशङ्क्रियां सम्पादयत्पुनः पुनः पचतीत्यर्थात् पौनःपुन्ये यङि तु न नित्यवीप्सयोरिति द्वित्व ङ्क्रियासमभिहारे द्वे इत्यनेन पौनःपुन्येऽपि लोडन्तद्वित्वविधानेन पौनःपुन्यस्य केनचित् द्योतने सौत्रद्वित्वाप्रवृत्तेर्ज्ञापनात् अन्यथा भृशार्थइत्येव वदेदिति निरूपितन्द्विरुक्तप्रक्रियामिति दिक् । क्रियासमभिहारे धातोरेववृत्तिसंभवात्पृच्छति । धातोः किमिति । यङ्नेतीति अनभिधानादिति भावः यङ्विधौ धातोःकर्मण इत्यतो वेत्यनुवर्त्तते तेन धातुसंबन्धे पक्षे यङोभावे भवांल्लु-

भनीहि लुनीहीत्येवायं लुनीतीत्यादौ लोट्सिद्धिरिति भाष्ये स्पष्टम् । सूचिसूत्रि ॥ सूत्रे एकाज्झलादिग्रहणप्रत्याख्यानफलमिदं सूत्रे स एकदेशानुवादः भृशंशोभते रोचत इत्यादावतिव्याप्तेः सूच्यादावव्याप्तेश्च तत्प्रत्याख्यातं यथास्थितसूत्रन्यासे तु तेषामुपसंख्यानं कर्त्तव्यं स्यादिति स्पष्टं भाष्ये यथान्यासे ऽपि ऊर्णोतेर्न वक्तव्यः नुवद्भावेन सिद्धेरिति चोक्तं तत्र अकितोऽभ्यासस्येति अकित इति बहुव्रीहिः किद्रहिताभ्यासस्येत्यर्थः । अनन्तरस्येति । न्यायेनैतत्प्रकरणस्थकिद्युतानामेवव्यावृत्तिरिति चाच्छायत इत्यादावन्तरङ्गत्वात्तुकि दीर्घाभवत्येवेति माधवादयः । भाष्योदाहरणादिति । एतेन यङो द्वित्वं प्रति कार्यित्वेन दीर्घनिमित्तत्वायोग इत्यपास्तं, अनेन भाष्योदाहरणेन यं प्रति कार्यित्वन्तं प्रति निमित्तत्वाभावस्यैव न हि कार्यीत्यनेन बोधनादिति भावः नित्यग्रहणं न वाक्यनिवृत्तये विग्रहेण यङन्तप्रतिपाद्यविशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यमिति भाष्यात् तस्मात्कौटिल्यपदान्वय्यवधारणार्थन्तदित्याह कौटिल्य एवेति । इदञ्च वृत्त्यनुरोधेन धातोरेकाच इति सूत्रे भाष्ये तूत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यं क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यमिति चेन विशेषासम्प्रत्ययादित्यनुक्रष्यते विग्रहेण कुटिलङ्गच्छतीत्यनेन चंक्रम्यत इत्यर्थासम्प्रत्ययान्नित्यग्रहणमाद्ये ऽनर्थकं कुटिलं पन्थानं गच्छतीत्येव सम्प्रत्ययात् क्रियासमभिहारे चेत्येतल्लुपसद्वेत्येतद्विषयन्तद्विषयस्यैव भाष्ये उदाहरणात् तस्माद्गत्यर्थेभ्यः क्रियासभिहारे यङ्भवत्येव अतोऽपि वक्ष्यमाणं यत्त्वित्यादिमतमसङ्गतम् । अत एव स्थावरप्रति द्वन्द्वार्थकज्जङ्गम इति सिद्धं स्थितिशीलो हि स्थावरः तत्प्रति द्वन्द्वी भृशंगन्ता हि जङ्गमः योगद्वये नित्यग्रहणाभावेन योगयोरित्यस्यैवमेव व्याख्योचिता चकारस्वारस्याच्च यत्र तत्कृतं तत्र तत्प्रत्याख्याने उत्तरत्रासंबन्धस्य सिद्धत्वाच्च । भावगर्हायामेवेति । इदमपि वृत्तिरीत्यैव । यत्तु गत्यर्थादिभ्यः कौटिल्यभावगर्हयोर्विशेषविहितेन यङा क्रियासमभिहारार्थे यङस्तक्रकौण्डिन्यन्यायेन बाधस्ताभ्यामर्थाभ्यां वा तदर्थस्य बाध इति तन्न, तस्य न्यायस्य विधेयविषयत्वादचरितार्थविषयत्वाच्च अत्र क्रियासमभिहारादेर्यङ्द्योत्पत्तये तद्वृत्तेर्धातोरित्यर्थेनाविधेयत्वं क्रियासमभिहाराविवक्षायां चारितार्थ्यञ्च अत एवाटेरत्तेश्च गत्यर्थकात्क्रियासमभिहारे यङुदाहृतो भाष्ये एकाज्हलादिग्रहणञ्च प्रत्याख्यातम् उत्परस्य । परशब्दसामर्थ्यादभ्यासस्येत्यनुवर्त्तमानं पञ्चम्या विपरिणम्यते तदाह । अभ्यासात्परस्येति । अत इति तपरत्वं स्पष्टार्थं अस्येत्युक्तौ लाघवाभावात् । ग्रो यङि ॥ गिरतेरेवात्र ग्रहणं व्याख्यानात् । सञ्चोस्कीयत इति । न चैवं सङ्कु इत्यस्यामवस्थायान्द्वित्वनिमित्तयङः पूर्वमन्तरङ्गत्वात्सुटिकृते ततेश

यङि द्वित्वात्परत्वाद्रीङश्चापवादत्वाद्यङि चेति गुणः स्यादिति वाच्यं सुट्कात्पूर्व इति सूत्रभाष्यध्वनितेन गुणनिषेधेन न संक्रियत इति वददो षात् तत्र हि भाष्ये सर्वतो ऽन्तरङ्गत्वात्सुडित्युक्तं कैयटे । न च इङ्गुणयोस्तु प्रतिषेधो वक्तव्य एवेत्युक्तं एतच्च तनादिशेषे निरूपितं शापानिर्देशस्य फल-माह । क्रीतीत्यादि । भ्वादेरेव कुङोत्र ग्रहणमिति भावः । नोनवस्तु । कस धातु-र्भ्वादिरेवालुग्विकरणत्वादिति केचित् । अकित इत्युक्तेरिति । नन्वजन्ताभ्यासस्य दीर्घ इत्यर्थे न नुग्गादौ कृते ऽजन्तत्वाभावान्नीकिविशेषाभावाद्रिकि रीग्वि धानेनैवसिद्धे रिग्विधिसामर्थ्यादेव तदभावसिद्धेः किमकित इत्यनेनेति चेन्न अभ्यासविकारविधौ वैयधिकरण्यान्वयज्ञापनार्थत्वात् तेन कृतेः सनि द्वित्वे ऽन्तरङ्गत्वात्तुकि चिच्छासतीत्यादावभ्यासहृस्वत्वेत्वसिद्धिः नचैवमप्यपवाद-त्वान्नीगादिभिर्दीर्घबाधे व्यर्थमेवतदिति वाच्यं, अभ्यासविकारे बाधका न बाधन्त इत्यर्थस्यापि ज्ञापनात् तेषां सति संभवे युगपदेवप्रवृत्तिः यौगपद्या-संभवे क्रमेणैव तत्रान्यत्र बाधकप्रवृत्त्युत्तरं बाध्यप्रवृत्त्यभावः प्रकृते तु तस्मि-न्कृते ऽपि प्राप्तियोग्यं बाध्यं भवत्येव यत्र तु बाधकप्रवृत्त्युत्तरं बाध्यस्य प्रवृत्त्ययोग्यता तत्र पूर्वं बाध्यस्य प्रवृत्तिरनन्तरं बाधकस्य प्रवृत्तिरिति अत एव मीमांसते ऽचीकरदित्यादावित्वे कृते दीर्घः अनुस्वार इति तस्य पदान्त-वत्वात्पक्षे परसवर्णः । घ्रीभाव इति । अत्र यङीति विषयसप्तमीति पूर्वंघ्रीभावे पिप्ये इति वद्द्वित्वं यङ्येवोपसंख्यानाद्यङ्लुकि न ॥ रीगृत्वतइति ॥ एव-ञ्च रीगृदुपधस्येत्यत्र ऋदुपधग्रहणं न कार्यं रुग्रिकौ चेत्यत्र ऋत्वतइत्यस्यै-वानुवृत्तेर्ऋतश्चेत्यपि न कार्यमिति केचित् तन्न ऋदुपधग्रहणप्रत्याख्यानेमा-नाभावात् अत एव तत्र कर्त्तव्यमिति भाष्येनोक्तं रुग्रिकौचित्यत्र ऋदुपध स्येत्यस्यानुवृत्त्यर्थन्तस्यावश्यकत्वात् एवञ्च ऋतश्चेत्यस्याप्यावश्यकत्वमेव अत एव वृत्वमृत्वादौ यङ्लुकि न रुगादिरीत्तुअनेन वार्त्तिकेन भवत्येवेतिपरे । ईघ्रा ॥ दीर्घोच्चारणमस्यच्चावित्युत्तरार्थम् । शाशय्यतइति । यिक्ङितीत्यस्य विषयसप्तमीत्वादन्तरङ्गत्वेन अयङिद्वित्व अन्यथादिग्यादेशेनेव ङित्ययङापि द्वित्वबाधः स्यादिति बोद्धव्यम् ॥ इति यङन्तप्रक्रिया ॥

यङोचि ॥ अत्र प्रत्ययएव व्याख्यानात् चेन बहुलमित्यपकृष्यते अपएव योयूयेरोरूय इत्यादौ न ॥ फलान्तरमप्याह चकारान्तं विनापीति । बहुलग्रहणानुवृत्त्यावाक्यभेदेन तदर्थसिद्धिः स च छन्दस्येव प्रयोगदर्शना-त्तद्विषयएव बाहुलकादेव क्वचिल्लोकेपि बेभिदीति चेच्छदीतीति एतत्प्र-योगद्वयमेव लोके इति हुश्नुवोरिति सूत्रस्थभाष्यस्वरसः । अन्तरङ्गत्वादिति ।

लुक्त्वाच्चेत्यपि बोद्धम् । धातुत्वादिति । चर्करीयमित्यस्यादादौ पाठाद्भ्वादित्वेन भूवादिसूत्रेणेतिभावः । ङित्त्वस्येति । न चायमनुबन्धनिर्देश इति भ्रमितव्यं यदीयानुबन्धनिर्देशस्तत्प्रकृतिकयङ्लुगन्ते तस्याप्रवृत्तिरित्यर्थस्यैव श्तिपानिर्देशादि साहचर्येणाङ्गीकारात् श्तिपाशपानुबन्धेनेति निषेधस्य भाष्ये ऽदर्शनाच्चेति भावः । यत्र हीति । तस्य सूत्रस्य नियमार्थत्वमेव सिद्धान्त इति भावः । अनुबन्धनिर्देशादिति । परे तु तन्निषेधाभावेपि तेति क्ते इति निपातनेनात्रैवात्मनेपदं यङ् लुगन्तेनान्यत्रेति नियमान्न दोषः तिजेर्न निशानार्थस्येदं रूपं तस्य नित्यं सन्नन्तत्वेन ततो यङ भावात् तस्मादर्थान्तरवृत्तेरनुदात्तेत्सु पठितस्य भ्वादेरिदं रूपं अर्थान्तरेप्यनुदात्तेत्सुपाठेनानुदात्तेत्वमस्त्येव अनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदमिति गुप्तिजादिसूत्रस्यभाष्यस्य क्षमादिरूपार्थविशेषेप्यनुबन्धकरणसामर्थ्यादित्यर्थः केषु चिद्धातुषु अर्थसहितो धातुपाठः पाणिनीयइति भाष्यसम्मतं इति निरूपितं प्राक् अर्थान्तरवृत्तेश्चुरादित्वमेवेति मतन्त्वयुक्तमेतद्भाष्यविरोधात् एवञ्चानुदात्तेत्वादात्मनेपदे सिद्धे तदुक्तनियमार्थं अत एवानुदात्तङित इत्यात्मनेपदं सिद्धमित्युक्तं अन्यथा ङित इति आत्मनेपदं सिद्धमित्येव वदेत् उक्तरीत्या ङित्त्वप्रयुक्तस्य तत्राप्राप्तेश्च एतन्मूलक एवादादौ चर्करीतञ्चेत्यस्य परस्मैपदिषु पाठः श्यत्रादयोऽपि न चर्करीतञ्चेत्यस्य विशिष्यादादौ पाठेन तत्र गणान्तरप्रयुक्तस्याप्राप्तेरित्याहुः यङन्तादिति । लुक्यपि प्रत्ययलक्षणेन यङन्तात्परत्वं छन्दसि निपातनादिति सङ्कोचे मानाभावेन यङ् लुगन्तभूधातोः छन्दस्येव तत्रापि लोट्येव गुणाभाव इति नियम इति भावः । तत्र सूत्रे एकाज्ग्रहणं कर्त्तव्यमिति वार्त्तिकारम्भे यङ्लुकि भाषाया सर्वत्र गुण एव लभ्यत इति तदेकफलत्वाय तत्प्रत्याख्यानप्रकारेपि द्विविधनियमस्यैवौचित्यं अत एव वार्त्तिकारम्भे ऽभूदित्यसिद्धिवत् भाषायां यङ्लुकि गुणापत्तिर्दोषत्वेन भाष्ये नोद्भावितेति दिक् । परेतु लोट्येवेत्येवनियमः बोभूत्वित्यस्य छान्दसेषु पाठस्तु यङ्लुकश्छान्दसत्वादेवभाषायामस्य यङ्लुगन्तस्य प्रयोगसत्वेन मानं अत एव भाष्ये बोभूत्विति नियमार्थं अत्रैव यङ्लुगन्तस्य गुणाभावो नान्यत्र बोभवीतीति लेटि उदाहृतमित्याहुः । नचेति । तस्य भूत्वाभावादिति भावः । ग्रहणादिति । परेतु उत्तरखण्डस्य भूत्वादिना भूसुवोरित्यस्य तदन्ताङ्गस्येत्यर्थात्प्राप्तस्य निषेधस्य नियमः द्विःप्रयोगत्वे ऽपि विशिष्टानुपूर्वीभेदात्प्रकृतिग्रहणेन तद्ग्रहणोपपादनासम्भवात् अत एव दयतेरिति सूत्रे भाष्यं अस्तेर्भूरादेशे यदि स्थाने द्विर्वचनं कृते द्वित्वे सर्वादेशो भूभावः प्राप्नोति अथ द्विष्प्रयोगे।द्विर्वचनं तदा परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोतीत्युक्तमित्याहुः । नित्यत्वाद्गुगिति ।

जुसिवेति गुणायेत्तयेत्यर्थः । अपास्या इति । न च दीर्घे सिपि धातोरिति रुत्वमसिद्धं ढ्रलोपसूत्रे ढ्रग्रहणेन लण्सूत्रे ऽजर्घा इति भाष्योदाहरणेन च पूर्वत्रासिद्धमिति सूत्रे पूर्वग्रहणेनैतत्सूत्राग्रहणबोधनात् । वनीवञ्चीतीति । न च नीग्वञ्चिस्वत्यनुबन्धनिर्देशेन यङ्लुकि नीगदुर्लभ इति वाच्यं यङ्लुकोरित्यनुवृत्तिसामर्थ्येनादोषात् अत एव सनीस्रंसो दनीध्वंस इति यङोचिचेत्यत्र भाष्ये प्रयुक्तं नलोपस्तु न यङोलुकालोपात् शितपाशपेत्यस्या असत्त्वाच्च । वनीवक्ति इति । तसोऽङित्वान्नलोपः ईकारोच्चारणसामर्थ्यान्नीगादेर्न गुणः सामान्यापेक्षेति । अन्यथैकाज्विबन्धनस्यैवानित्यत्वं स्यादिति भावः । आशिषि तु वध्यादिति । इदं दयतेरिति सूत्रस्थभाष्यविरुद्धमपि माधवानुरोधेनोक्तं निरूपितञ्चैतत्तनादिशेषे । धातोर्विशेषणमिति । एतदपि अशास्त्रीयस्यातिदेश इति मते । एतेन साभ्यासत्वस्याशास्त्रीयत्वेन तासेनित्यानिट्त्ववदतिदेशालभ्यत्वमित्यपास्तम् । असिद्धत्वेनेति । त्रिपादीस्थत्वेनेति भावः । बहिरङ्गत्वेन गुणोप्यसिद्ध इति चिन्त्यं उदोष्ठेत्युक्ते पोपूर्यत इत्यत्राभ्यासगुणो विप्रतिषेधसूत्रे भाष्ये दृश्यते । नभवन्तीति । एतन्माधवानुसारेण न विद्यतेकिद्यस्मिन्निति बहुव्रीहिगर्भबहुव्रीह्याश्रयणाज्जाहेतीत्यादावकित इति दीर्घनिषेधोन तत्सामर्थ्यादेव व्यपदेशिवद्भावोपि न । उत्वंनेति । संप्रसारणं नेत्यर्थः । इणनेति । एतदपि माधवानुरोधेन चाद्रीगनुवर्त्तत इत्याह रीगिति । अवर्वत् इति इदं माधवानुरोधेन वस्तुतो ऽस्यानभिधानं एत्सस्येत्यत्र तकारप्रश्लेषे तलोपस्य प्राप्त्या सूत्रमते ऽप्राप्त्या फलभेदापत्तेः चाकर्तीति । यङंनिमित्तीकृत्यान्तरङ्गमपि ऋत इद्दितित्वेन ङोलुकालुप्तत्वात् उरदत्वं भवत्येवेति निरूपितं नलुमतेति सूत्रे । न च चाकर्तीत्यत्राभ्यासह्रस्वत्वे ऋत्वत्तया रीगृत्वत इति रीग्दुर्वार इति वाच्यम् अभ्यासस्य ऋकारमादाय ऋत्वतोग्रहणे ऋत्वत इति तपरत्ववैयर्थ्येन तद्ग्रहणस्य वक्तुमशक्यत्वात् नित्यत्वेनोरदित्यस्य प्रवृत्त्या तदभावाच्च स्थानिवत्त्वं तु न अ पूर्वविधित्वात् चाकर्ति चाकीर्त इत्युपक्रम्य करितिञ्चर्करीतान्तं पचतीत्यत्र योनयेत् । प्राप्तिज्ञन्तमहं मन्ये प्रारब्धस्तेन सङ्ग्रह इति भाष्योक्तेः । पचतीति । लटः सञ्ज्ञा तेनान्यत्रास्याप्रयोगः सूचितः । आरतीति । ढ्रलोप इति दीर्घः । न च दीर्घे यणः स्थानिवत्त्वं अभ्यासकार्ये तदनवयवधात्ववयवादेशस्य तत्प्रतिबन्धकस्थानिवत्वं नेत्यर्थस्याभ्यासस्यासवर्णे इत्यसवर्णग्रहणेन ज्ञापिततया ऽचतः दीर्घविधौ तन्निषेधाच्च अरिय्रतीति । यणादेशस्य स्थानिवत्वात्परत्वादिना ततः पूर्वमेव वा इयङ् एकाच इत्यनुवृत्तेरिति इदं हरदत्तानुरोधेन वस्तुतो ऽस्याद्यङ्लुक्सत्वे ऽपि दीर्घस्य प्राप्तिरेवनास्ति भाष्यकृता द्वित्वे ऽभ्यासविशिष्टस्यैवाङ्गत्वाङ्गीका-

रवत् प्रत्ययग्रहणे यस्मादिति न्यायेन विशिष्टस्यैव यङन्तत्वाद्धातुत्वाङ्गी-
कारो न तु तस्य ग्रहित्वमिति इड्योग्यप्रत्ययस्य ग्रहेर्विहितत्वाभावात्तदनु-
वृत्तिर्निष्फलैवेति तनादिशेषे क्र्यादिशेषे च निरूपितं एवञ्च माधवस्य
भाष्यविरुद्धत्वमपि चिन्त्यमिति दिक्। ज्वरत्वर। अत्रोपधायाश्चेति चकारेण
वाक्यभेदादादेशिभेदेनोठ्द्वयन्तयोश्च सवर्णदीर्घे जूरित्यादिसिद्धिः ऊठ्एक
एव रमागमन्यायेन तूभयोर्निवृत्तिरित्यन्ये एतद्द्वयमपि एकः पूर्वेत्यत्र भाष्ये
स्पष्टम्। रात्लोपः। वल्लिलोपेनसिद्धेव लोपविधानमूठोबाधनार्थं नधातुलो
धातुलोप इति बहुव्रीहिस्तदाह धात्वंशलोपेत्यादि। सर्वधातुलोपस्याभावादि-
ति भावः स्पष्टञ्चेदं भाष्ये। गुणवृद्धीनेति। सन्निहितेक्परिभाषानिषेधे तु
दीधीवेवीटामित्यसंबद्धम्। स्यादिति। व्याख्यानाद्गुणवृद्ध्योरेवनिषेध इति भा-
वः। नन्वेवं हलादिःशेषस्याङ्गाधिकारस्यत्वेनाङ्गात्प्रिप्रत्ययनिमित्तत्वाद्वि-
भेदेत्यादावनेन निषेधापत्तिरिति चेन्न अभ्यासस्य धात्वनवयवत्वात् इदञ्च
तनादिशेषे निरूपितं किंच युवोरनाकावित्यादिसूत्रभाष्योक्तरीत्यावृञ्चद्भाव-
स्यैवास्याप्यनैमित्तिकत्वात् निरूपितं चैतन्नलुमतेति सूत्रे सूत्रोदाहरणं लोलुवः
पोपुव इत्यादिधात्विति किं लूञ्लविता तदभावे बहुव्रीह्यलाभेन लोपनिमित्त
इत्यर्थालाभात्। आर्द्धधातुक इति किं तोतोर्ति क्ङितिचेति सूत्रस्यभाष्या-
त्त्वेषां यङ्लुगन्तानामभावएवेति लभ्यते तदार्द्धधातुकग्रहणं स्पष्टतया बहु-
व्रीहिलाभार्थं विषयासंभवनेति भाविज्ञानस्यैवयशब्दीयविषयपदार्थत्वादि-
त्याहुः प्रत्ययलक्षणन्तु न नलुमतेति निषेधात् इति ॥ यङ्लुगन्तप्रक्रिया ॥

सुप ॥ आत्मनःकिं राज्ञः पुत्रमिच्छति पदविधित्वेन समर्थपरिभाषा-
प्रवृत्तये सुप इति ॥ महान्तं पुत्रमिच्छतीत्यादेर्वाक्यान्माभूदिति च काम्यचि
पूर्वस्य पदत्वाय च तत्। अस्य ईदिति। अवर्णान्तस्याङ्गस्येत्यर्थः। नाव्य-
तीति। गोसमानाक्षरनान्तादितित्वेकदेशिमतं न सिद्धान्तः अत एव नः
क्ये इति सूत्रे वाच्यतीति भाष्ये प्रयुक्तम्॥ नः क्ये॥ ककारोच्चारणं साम-
सुसाधुः सामान्य इत्येतद्वावृत्तये अन्यथा तत्रैव विध्यर्थं स्यात् यस्यहल
इति लोपप्राशङ्काह सन्निपातेति। राजीयतीति। नलोपः सुप्स्वरेति नि-
यमादीत्वेन लोपोनासिद्धः चिन्त्यमिति। पुंशब्दमिच्छतीत्यर्थेपि प्रकृतिवदनु-
करणमित्यनेन धातुत्वमस्त्येवेति भावः॥ प्रामादिक इति॥ हलि चेत्यत्र धा-
तोरित्यनुवृत्तेरिति भावः क्यच्व्योश्चेति। आपत्ययलोपोनेन क्रियते। वा-
च्यतीति। अत्र संप्रसारणं न धातोः कार्यमुच्यमानमिति परिभाषणात्।
सर्वप्रातिपदिकेभ्य इति॥ वार्त्तिकस्य दध्यस्यति मध्वस्यति दधिस्यति मधु-

स्यति इत्येवमर्थमिति शेषात् इदं दधिमधु शब्दविषयमेवेति माधवः । काम्यच्च ॥ धातुस्वरेणासिद्धे ऽस्य चित्वञ्चिन्त्यप्रयोजनं कस्येत्संज्ञा तु न फलाभावात् कर्तुःक्यङ् धातोः कर्मणा इत्यतो वेत्यनुवर्त्तते कर्त्तुरिति क्यङ्विधौ पञ्चम्यन्तमपि सलोपविधौ योग्यतया षष्ठ्यन्तं तेन तदन्तविधिरिति बोध्यन्तेन हंसायतइत्यादौ सलोपो न । सन्नियोगशिष्ट इति । सान्तसंबन्धिक्यङित्यर्थः तेन क्यङि तदभावो नेति भावस्तदाह । स च व्यवस्थित इति । इतरेषामिति ॥ भाष्ये नानामतप्रदर्शनेन विकल्पे तात्पर्यादिति भावः । सपत्नीवेति । एतत्तत्त्वं भस्याढ इत्यत्र निरूपितं । युवायत इति । वयोवाचिनां जातिकार्यं वैकल्पिकमिति जातेरस्त्रीति सूत्रे भाष्ये स्पष्टमेतेन जातेश्चेति निषेधादिदं रूपं दुर्लभमिति परास्तं । वाग्रहणादिति । अन्यथा विशेषविहितत्वात्क्विपा क्यङोबाधः स्यादिति भावः एतानतुक्रम्य सर्वप्रातिपदिकेभ्य इत्येक इति भाष्योक्तेरस्यापि प्रातिपदिकादेवोत्पत्तिः सर्वप्रातिपदिकेभ्यो ऽस्य क्यङश्च विधानेन वचनसामर्थ्यलब्धपर्यायस्यैवानुवादको वाशब्द इति माधवः । भूतपूर्वादपीति । अकारस्यानुबन्धत्वेन सांप्रतिकानेकाच्त्वस्यात्राभावात् अत एव धातुभिरेव रूपसिद्धिमाशङ्क्यावगल्भाञ्चक्रे इत्यादौ कास्प्रत्ययादित्याम्यथास्यादिति क्विप्छत इति भाष्ये उक्तं नचावजिगल्भिषते इत्यादावाचारक्विबन्तात्सनि यथेष्टं नामधातुष्वित्यस्य प्रवृत्त्यर्थमिदं वार्त्तिकमावश्यकमिति वाच्यं नामशब्दस्य सुबन्तपरतया तत्प्रकृतिकएवास्य प्रवृत्तेः आचारक्विबन्तेभ्यः सन एवानुत्पत्तेश्च । वृत्तसंभवादिति । नचावारेर्थे सर्वेत्यनेनाजन्तात्क्विपि अवगल्भतीत्यादिवारणायानुबन्धासञ्जनार्थं वचनमावश्यकमिति वाच्यं सर्वप्रातिपदिकेभ्य इत्यनेन क्विपि तथा प्रयोगेइष्टापत्तिरित्यभिमानः । वस्तुत इदं सर्वं हरदत्तानुरोधेनेति ध्वनयन्नाह पूर्ववार्तिकं तु अनुबन्धासङ्गार्थमिति । आचारेजन्तात्क्विपि अवगल्भतीति प्रयोगवारणाय सर्वेत्येतत्क्विबनुवादेनानुदात्तासङ्ग एषां बोद्ध्यत इत्यर्थः । अत्र चातिरिक्तो ऽकारः पररूपेण प्रश्लिष्टो ऽनुनासिक आसज्यते इत्यनेकाच्त्वप्रयुक्तस्यामः सिद्धिरिति भावः । हरदत्तानुसारेणाह प्रत्ययग्रहणमपनीयेति । वस्तुत स्तदपनयेन मानमिति निवेदित प्राक् एवञ्च प्रत्ययान्तत्वादेवात्राम्सिद्धिर्बोध्या किंच तदपनयवादिना एकाज्भ्यो ऽनभिधानात्क्विबनुत्पत्तिरेववाच्या अन्यथा सूत्रवार्त्तिकयोः फलभेदापत्तेः यत्र भिन्नफलार्थमेवोत्तरस्य प्रवृत्तिस्तत्र फलभेदेपि प्रत्याख्यानमस्तु । नचात्र तथा तथासत्यनेकाज्ग्रहणञ्चुलुपाद्यर्थमिति वदेकाज्भ्यावृत्त्यर्थमित्यपि वदेत् किंचैवं सति नक्कादेरित्यादौ अनर्थकः प्रतिषेधो निष्ठायामनिटः कुत्ववचनादितिवत् प्रत्ययादित्यनर्थकं अनेकाच

अभिविधानादिति वदेदिति दिक् । तत्र हरदत्तोक्तमङ्गीकृत्य माधवेनोक्तं प्रक्रियाक्रममाह अतो गुणे ऽत आदेरित्यादि । अतोलोपमत आदेरिति दीर्घञ्च बाधित्वा ऽन्तरङ्गत्वात्पूर्वरूपं वार्णादाङ्गमिति तु नानित्यत्वादिति माधवाभिप्रायः । दीर्घ इति । परत्वादतोलोपं बाधित्वा पूर्वान्तत्वेनाभ्यासत्वादित्यभिप्रायः । मालातीति । आतोनापः आतोधातोरिति न्यासयोः फलैक्याद्यावन्तेभ्य आचारक्विबेवनेत्यपरे । साहचर्यादिति । ईकाररूपङ्यन्तात्क्विस्योरसंभव इति भावः । कैयटादय इति । इदञ्च गोशब्दादाचारक्विपि अरावोदित्युपक्रम्येकोगुणेति सूत्रे कैयटेनोक्तं । अत्रारुचिबीजन्तु नवै संध्यक्षरमन्त्यमस्तीति इकोगुर्णेति वदन्नजेति सूत्रस्यभाष्यप्रामाण्यादोतश्यंनि आदैच इत्यादि सूत्रस्यभाष्यप्रामाण्यादेजन्तेभ्य आचारक्विपो भाव इति । सुगसुग्विधायकवार्त्तिकोक्तमाधवरीत्या ऽस्यापि वार्तिकस्याश्वतिगर्दभतीत्येवमर्थमिति वाक्यशेषात्तन्मात्रविषयतैवास्येति कश्चित् । इदामतीति । हलन्तेभ्य आचारक्विन्नास्तीति ह्रस्वनद्याप इति सूत्रे भाष्ये स्पष्टम् । पर्यीनतीति । इदं माधवानुसारेण क्विबङ्गीकारेपि पयेनतीति तु युक्तं इन्हन्निति नियमेन दीर्घाप्राप्तेः न च नियमस्य सजातीयापेक्षत्वात्सुबानन्तर्ये एव नियमफलनिषेधप्रवृत्तिरिति वाच्यं, वृत्रघ्नः स्त्री वृत्रघ्नीत्याद्यसिद्ध्यापत्तेरित्यपरे । हरदत्त इत्यत्रारुचिं दर्शयति माधव इति । अनाकरमेवेति । अत्र यद्वक्तव्यन्तदुक्तम् । भृशादिभ्यो । भृशादिराकृतिगणः सुमनसादयो बहुव्रीहयः अभूततद्भावग्रहणं कर्त्तव्यमिति वार्त्तिकं तदाह अभूतेत्यादि । वार्त्तिकान्यथासिद्धिमाह अच्वेरिति । चान्वाचये ऽत एव भृशग्रहणं चरितार्थम् ॥ भृशा इति । भृशालोका इत्यर्थः कैयटे तथापाठात् प्रातिपदिकमिति ॥ नधातुस्तथासति भाष्योक्तवक्ष्यमाणज्ञापकानुपपत्तिरिति भावः ॥ उपसर्गसमानाकारमिति । अन्यथा ऽत्र्त्य संशब्दस्य क्रियायोगाभावेनानुपसर्गत्वाज्ज्ञापकानुपपत्तिरिति भावः ॥ उपसर्गस्यापि प्रयोगभेदेनोपसर्गसमानाकारत्वं बोध्यम् । चिकीर्षित इति । पृथक्करणेन समासाभावकल्पने ऽपि तद्विषये क्यङादिप्रत्ययविधायके लक्षणे सुबन्तादित्यंशे यस्माद्विहितस्तदादीत्यंशाप्रवृत्त्या न दोषः । यस्माद्विहित इत्यनेनाधिकव्यावृत्तिरेव न तु न्यूनव्यावृत्तिरिति तत्त्वम् । पृथक्क्रियते इति । तेन जातसमासाभावः कल्प्यते अत एव सुमनाय्येत्यादौ पुनः क्त्वान्तेन समासे ल्यप्सिद्धिः तदुक्तं भृशादिष्विति सूत्रे भाष्ये सङ्ग्रामयतेरेवसोपसर्गान्नान्यस्मात्सोपसर्गादिति ॥ ऊयत । इति उत्तरपदात्पार्थक्येनेति शेषः । आदेशेनेति । एकादेशरूपेणेत्यर्थः अत एव स्वाशश्वत्सम्यांचिचदिति माधवोदाहृतं सङ्गच्छते । अवगल्भ्येति । स्वोत्तरभागेन धातुसञ्ज्ञानिमित्तप्रत्ययप्रकृतिभूतैकदेशधातुना समर्थत्वादिकं

तद्द्वारा तद्घटितविशिष्टार्थेपि त्वान्तेन समर्थतया कुगतीति सूत्रेणसमासे त्वोल्यबादेशः प्रकृत्येकदेशद्वारकमेव च कृत्सु सर्वत्र सामर्थ्यमिति दिक् । चशब्देनेति । एवञ्च विनिगमनाविरहेण बाध्यसामान्यचिन्तायां सर्वबाधकत्वन्तस्येति भावः अन्यथा पुरस्तादपवादन्यायेनैमाङ्गेरित्यस्यैवबाधः स्यात्तसीत्यस्येति बोद्धम् । अत्राच्वेरिति । अत एव भाष्ये लोहितभिचानां लोहितादिगणे पठ्यमानां भृशादिपाठे नित्यात्मनेपदमेवप्रयोजनमुक्तं नत्वभूततद्भावविषयतालाभोपीति भावः असंभवादिति अनुकरणाड्डाज्विधानेनानुकरणत्वभङ्गापत्या तत्र तदसंभव इति भावः तस्य आदिशब्दस्य भृशादिष्विति नित्यमात्मनेपदस्यैवतेभ्य इष्टेरिति भावः । तस्यापीति । ककारस्यापीत्यर्थः । योगं विनापीति । तदर्थसत्तामात्रेणेत्यर्थः । एवञ्च तदर्थविवक्षया डाचि कृते ततस्तदर्थे क्यषिति भावः । तद्भाष्येति । उक्तभाष्येत्यर्थः । कष्टाक्रमणमुत्साहः कष्टयत इत्युक्त्वा गमनाद्यप्रतीतावपि कष्टविषयकोत्साहप्रतीतिस्तदाह उत्साहेर्थे इति पापंकर्तुमिति अन्तरङ्गत्वात्कर्तुमित्यस्यैवान्तर्भावः विग्रहेकर्तुमित्यध्याहारेण क्रियार्थोपपदस्येति चतुर्थी वृत्तिसर्गेति तङ् वृत्तिविषय इति न च तत्रैवतत्त्वे कष्टायक्रमते इति विग्रहो ऽनुचितो ऽस्वपदविग्रहस्यैवौचित्यादिति वाच्यं अस्य सत्राद्यभिप्रायेण प्रवृत्तेः अत एव भाष्ये कष्टायक्रामतीति विग्रहं प्रदर्श्य सत्रादिषु स न दर्शितः । पापञ्चिकीर्षतीति उत्पादनायाः कृञर्थत्वाद्द्वितीया । भाष्ये तु क्रामतीति परस्मैपदं प्रयुक्तं क्रमणं गमनमेव पापोद्देश्यकेन हितेन तद्विषयकोत्साहो गम्यते इति क्रमेरुत्साहार्थत्वाभावः कण्वचिकीर्षायामित्यस्य हि तस्याङ्गम्यायामित्यर्थ इति तदाशयः कर्मण इति षष्ठीप्रतिपादकत्वं पञ्चम्यर्थः कर्मप्रतिपादकरोमन्थतपोभ्यामिति वाच्यार्थः फलितमाह कर्मभ्यामिति । वर्तीति । ण्यन्ताद्धात्वर्थनिर्देशे इक् कैयट इति उक्तञ्च भाष्ये उद्गीर्णस्य निगीर्णस्य वा मन्थो रोमन्थ इति उद्गीर्णउदरादुपर्याकृष्टं अवगीर्णमपानान्निर्गतं मन्थश्चर्वणमिति तदर्थः शब्दवैर कर्मण इति वर्त्तते करणमत्र क्रिया व्याख्यानात् इति न्यास इति भाष्यानारूढत्वमत्रारुचिः । सुखादिभ्यः ॥ वेदना कर्तृसंबन्धिसुखादिप्रतिपादकेभ्यः सुखादिभ्य इति वाच्यार्थः फलितमाह वेदनेत्यादि । पूजायामित्यादिनम आदिभिः क्रमेणान्वेति चित्रङो ङित्वमवयवेचरितार्थमिति क्यजन्तात्तङानैपुच्छादिति अत्र पुच्छादयः स्वकर्मकोदसनक्रियादौ लाक्षणिकाः ततः स्वार्थे णिङ् णाविष्ठवदिति टिलोपः वस्त्रादित्यादि । हल्यादिभ्य इति च भाष्ये न दृश्यते । संवस्त्रयतीति । वस्त्रैः समाच्छादयतीत्यर्थः । परत्वाद्वृद्धाविति । न च नित्योलोपः । शब्दान्तरप्राप्त्या तस्याप्यनित्यत्वात्

व्यक्तिभेदमात्रेण च शब्दान्तरस्य ग्रहणात् । रन्धयतीत्यत्र तु तस्या अनित्यत्वान्न दोषः अत्र यदुक्तव्यं तदुक्तस्वरादौ । सापेक्षेभ्योपीति ॥ स्पष्टं चेदं सुप आत्मन इत्यत्र कैयटे । गमकत्वान्मुण्डयति माणवकमित्यत्र णिज् भवति क्वच् तु नागमकत्वादित्यपि तत्र भाष्ये स्पष्टम् । तदा प्रपञ्चार्थमेव मुण्डादिग्रहणम् । माणवकं मुण्डं तरोतीत्यत्र वाक्ये कर्मसामानाधिकरण्यात् माणवकस्य कर्मत्वम् । वृत्तौ तु मौण्ड्यरूपफलाश्रयत्वात्तत्वं बोद्धम् । सत्यापयतीति । आपुग्विधानसामर्थ्यात् टिलोपो न । एषां लुग्नभिधानम् ॥ अत एव णेरापुडिति मङ्गच्छते घ इति कर्मण्ययं निपातनाल्लुत्वाभावः कर्तर्यजन्त इत्यपि वक्तुं शक्यमित्यन्ये एतयतीति न चात्र परत्वाट्टिलोपः स्यात् अतिदिश्यमानकार्याणामुपदेशदेशस्यैवदेशत्वाङ्गीकारादिति वाच्यं भस्याढ इत्यस्य प्रत्ययोत्पत्तेः पूर्वं प्रवृत्यान्तरङ्गत्वात् तदतिदेशसामर्थ्याच्च न च पुंवत्वस्यासिद्धत्वाट्टिलोपो दुर्लभः आभीयासिद्धत्वस्यानित्यत्वात् अत एव टेरितिसूत्रे भाष्ये एतयति श्येतयतीत्युदाहृतम् । इष्ठनि छन्दस्येव तृनोपप्रवृत्तेर्लोकेन तदतिदेश इति पुंवद्भावादिषु तृलोपोनोक्तो मूले नाप्युदाहृतः अत एव मातयति भ्रातयतित्युदाहृतं रश्च्त इति सूत्रे भाष्ये प्रथमतीति रभावटिलोपावत्र असिद्धत्वादिति द्वित्वे तदसिद्धत्वेन हकारघटितबुद्ध्याद्विन्त्वे ऽभ्यासे श्चुत्वसिद्धिः इदं पूर्वत्रासिद्धमिति सूत्रे वृत्तौ टीत्यस्येति तदमित्यत्वं रभे.साभ्यासस्येति लिङ्गाणत्वमात्रविषयमिति तद्भावः । औडिढदिति । द्वित्वे कृते तदाश्रयस्य कार्यान्तरे कर्तव्येप्यसिद्धत्वनिषेधात्राभ्यासे चुत्वादीति भावः वैयाघ्रपद्यवार्त्तिके शर्पूर्वा इति सूत्रे कैयटे चौजढदिति प्रयोगोदृश्यते इत्यानित्यत्वमन्यविषयेपीति अत्रारुचिः स प्रयोगोपि चिन्त्य इत्यन्ये ऊनयतावुक्तमिति तच्चासङ्गतमिति तत्रैवोक्तं कैयटे ऽभ्यासे ऽकारपाठो लेखकप्रमादात् पूर्वत्रासिद्धमिति सूत्रस्थवृत्तिग्रन्थोपि चिन्त्य एव तत्र हि ऊढमाख्यदौजढदित्युक्त्वा औजिढदिति तु ऊढिशब्दस्येत्युक्तं प्रकृत्येकाजिति तेनातिदिष्टटिलोपेन यस्येति लोपश्च न इष्ठनितस्याद्रष्टत्वेन तदनतिदेशात् नैकाजिति सिद्धे प्रकृत्येत्युक्त्या तस्यापि बाधाच्च वृद्धिपुकाविति ग्रापयतीति भाष्यप्रयोगादचोञ्णितीति सूत्रस्थं नञ्णित्यत उपधाया इत्येवोच्येत किमर्थो योगविभागः सख्यर्थ इति भाष्यन्तु प्रयोजनोपलक्षणमिति भावः अन्तरङ्गत्वादिति वार्णपरिभाषाया अनित्यत्वादप्रवृत्तिरिति भावः । अनित्यत्वाश्रयणे दृढतरमानाभावात् व्याश्रयेपीयायेत्यादौ तत्प्रवृत्तेश्चाद्यमेवन्याय्यमिति परे अन्यथा सिद्धौति एवं हि तत्र भाष्यमिष्ठेमेयः सु प्रकृतिभावे किमुदाहरणं प्रेष्ठ इति प्रादीनामसिद्धत्वाच्च भविष्यति इदन्तर्हि श्रेष्ठः

अकारोच्चारणसामर्थ्याच्च भविष्यति विन्मतोर्लुगयं तर्हि स्रग्वितमः स्रजिष्ठ इति नाप्राप्तेटिलोपे लुकआरम्भेण लुकाटिलोपबाधात् तद्विषये तदभावादिति असिद्धवत्त्वप्रत्याख्याने तु परत्वात्प्रादिषु टिलोपं बाधित्वा कृतेषु सकृद्गतिन्याये टिलोपाप्राप्तिर्बाध्या अत एव प्रेष्ठ इत्यत्रोच्चारणसामर्थ्यादिति नोक्तं किंच विन्मतोर्लुगिवप्रादयः आदयश्च नाप्राप्तेटिलोपे आरभ्यमाणास्तद्बाधका इति तद्विषये न टिलोप इत्यन्यमेव सर्वसाधारणमत एव कनिष्ठ इत्यादौ टेरिति न नस्तद्धित इत्यपि न उच्चारणसामर्थ्यात् सर्वादेशत्वंकेत्यादेशेनापि सिद्धं प्रेष्ठ ज्येष्ठ योराद्ये समाधाने एकदेशिनः । परंतु किमुदाहरणमिति प्रश्ने परोक्तोदाहरणानामन्यथा सिद्धं प्रदर्श्योदाहरणान्तरानुक्तेरस्योदाहरणाभाव एव औपदेशिकोदाहरणाभावे आतिदेशिकफलार्थमात्रं सूत्रारम्भस्यादर्शनाच्च प्रत्याख्याने एव भाष्यतात्पर्यमित्याहुः । टेरित्यस्यैवेति एवकारेण नस्तद्धित इत्यस्य व्यावृत्तिः तेन सह येन नाप्राप्तभावात् तस्याननन्तरत्वाच्च भत्वादिति इष्ठवदित्यतिदेशेन भत्वात् श्वयुवेति संप्रसारणं नान्तश्वादीनामित्यर्थेपि टिलोपस्याभीयासिद्धत्वान्न दोषः परंतु बहुश्वन्शब्दात् स्त्रियाण्डापि नान्तत्वाभावेन संप्रसारणाभावे बहुश्वेत्येव भाव्यमिति डाप्सूत्रे भाष्ये उक्तं तत्प्रामाण्यात्संप्रसारणे ऽनित्यत्वेनाभीयासिद्धत्वाप्रवृत्तेरावश्यकत्वेन कथं संप्रसारणं न च नकारग्रहणं कर्त्तव्यमिति वार्त्तिकप्रत्याख्यानाय भाष्ये ऽन इत्यपकर्षः कृतस्तत्पक्षे संप्रसारणं दुर्वारं लोपस्य स्थानिवद्भावेनान्तया ऽचन्तत्वस्यार्थसमाजग्रस्तत्वात् श्वन्शब्दस्त्वन्तु सर्वसर्वपदादेशा इति न्यायेनेति वाच्यम्, वार्तिकैकवाक्यतया ऽल्लोपोन इत्यस्य श्रूयमाणाचान्त एव प्रवृत्तस्तत्साहचर्येण चार्थाधिकारेण च बहुश्वेत्येवेति भाष्यविरोधेन चास्यापि श्रूयमाणाचन्त एव प्रवृत्तेरदोषात् किंच प्पूर्वेति सूत्रे भाष्ये प्रकृतिभावस्याल्लोपोन इत्येतद्बाधकताया अप्युक्तत्वेन नैकाजित्येवसिद्धे प्रकृतिग्रहणेन प्रकृतिभावविधायके न्यायाप्रवृत्तेर्बाधनेन च नस्तद्धित इत्यस्यापि प्रकृतिभावोन्याय्य इति टिलोपोपि दुर्लभः यत्तु प्रकृत्यैकाजिति सूत्रे भाष्ये यस्येत्यादौ प्रकृतिभाव इत्युक्तं तत्रादिशब्दः प्रकारे लोपत्वेन च सादृश्यमिति नतद्विरोधः एवञ्च वृद्धा श्वानयतीति प्राहुः॥ शुनयतीति । ननु संप्रसारणे पूर्वत्वं बाधित्वा वार्णादाङ्गमिति न्यायेन टिलोपे इदं रूपं दुर्लभमिति वच्यं, शुशुवतुरित्यादौ संप्रसारणे कृते ऽनेन न्यायेनैरनेकाच इति यणि रूपासिद्ध्या पूर्वरूपविषये ऽनित्यत्वेन तन्न्यायाप्रवृत्तेरिति भावः । आहुरिति । अत्रारुचिबीजन्तु ब्रह्मवच्छब्दादिष्ठनि मतोर्लुकि टेरित्यस्याप्रवृत्तौ नस्तद्धितइत्यस्य प्रवृत्तेर्दृष्टत्वेनेष्ठनि तस्यादृष्टत्वादित्यसङ्गतम् । किंच ब्रह्मिष्ठ इत्यादा-

मित्यसङ्गतं तथा हि केवलादगुणवचनत्वेनेष्ठनेवदुर्लभः मत्वन्तादिष्ठनि मतोर्लुकि तेन टेरित्यस्य प्रवृत्तिमात्रबाधनेन लुगुत्तरं तदप्रवृत्त्या परत्वादित्यस्यासङ्गतिः ॥ किंच नस्तद्धित इत्यस्य टेरित्यपेक्षया परत्वमित्यर्थस्य प्रकृतिकाजिति सूत्रे भाष्ये ध्वनिततयापि तदयुक्तमिति नेत्यक इति टिलोपेनासेलोपे वस्त्वं दुर्लभं राजकीयमित्यादावन्त्यवत् एवञ्च संप्रसारणप्राप्तेरेवाभावेनाङ्गवृत्तपरिभाषोपन्यासो वृथेति । अत्रारुचिबीजन्तत्परिभाषाया अभावश्चेति च इदमेवाभिप्रेतद्वये ऽरुचिबीजं रूपन्तु विद्वयतीत्येव सत्यभिधाने । प्रतीचयतीति । अच इत्यल्लोपे चाविति दीर्घः । इको ऽसवर्णे इति । न समास इति तु न पृथक्करणेन समासनिवृत्तिरुक्तत्वात् । सम्यचिचर्दिति । सम्यादेशस्य स्थानिवत्त्वेनोपसर्गत्वात्पृथक्करणं पृथक्करणेन समासस्य निवृत्तेरुत्तरपदपरत्वाभावेपि अन्तरङ्गत्वाज्जातः सम्यादेशो न निवर्त्तते समीचयतीत्यादौ चकारस्याञ्चतित्वन्तु स्थानिवत्त्वेन बोध्यम् । अञ्चेरिति । तिरसो ऽनुपसर्गत्वेन पृथक्करणाभावेनानेकाच्त्वात्प्रकृतिभावाप्राप्तेरिति भावः । बहिरङ्गत्वेनासिद्धत्वादिति । बहिर्भूतणिनिमित्तकत्वादिति भावः । तिरसस्तिर्यलोप इत्यत्रानन्तरत्वेनाच इति लोपस्यैव प्रतियोगित्वेन ग्रहणाट्टिलोपेपि तिरिः स्थानिवत्त्वेन तिरेरव्ययत्वेनाव्ययानां भमात्रइति टिलोपेन नस्तद्धितइति सूत्रे भाष्ये ऽस्य पाठेन परया वृद्ध्या बाधात् । अत एव यस्येति लोपेन, अनेन सर्वटिलोपवारणेपि साधकोक्तामभ्युच्चययुक्तिमाह असिद्धवदिति । अङ्गवृत्तेति । वृद्धिस्तु भवत्येव तस्या अनित्यत्वादिति भावः । अङ्गवृत्तपरिभाषायाः फलाभाव इतीदं चिन्त्यं निरूपितञ्चैतद्युष्मदस्मत्प्रकरणे । देवद्र्यञ्चमिति । विष्वग्देवयोरित्यद्र्यादेशः । स्वयतीति । अव्ययानामिति टिलोपो ऽतिदेशेन भत्वात् । सञ्ज्ञापूर्वकत्वादिति । णावित्यङ्गेनातिदेशेन विनोलुकः सत्त्वादङ्गवृत्तपरिभाषया न वृद्धिरिति कैयटः । अत एव टेरिति सूत्रे इवयतीत्यत्र वृद्धिर्न कृता भाष्ये । परे तु एतद्भाष्यप्रयोगात्प्रापयतीति भाष्यप्रयोगाच्च लक्ष्याविशेषके ऽस्मिन् वाक्ये ऽभावातिदेशेपि तेनेष्टसिद्धिरुदाहरणमात्रमिति भाष्योक्त्या तदनुक्तभसञ्ज्ञातिदेशवत् क्वचिदस्याप्यतिदेशे बाधकाभावात् । एतेन सञ्ज्ञापूर्वकविधेरनित्यत्वं न भाष्यसम्मतमङ्गकार्यं इत्यपि न लक्ष्यसाधकं तच्च तज्ज्ञापकमुक्त्वा किंप्रयोजनं पिबेर्गुणप्रतिषेधः प्रयोजनमित्येवोक्तं नत्वेवं विधलक्ष्यसिद्धिस्तत्प्रयोजनत्वेनोक्तैषां प्रकारान्तरेण सिद्धेर्भाष्याभिप्रेतत्वात् इत्याहुः । श्रीमतीमिति । णिचि पुंवत्वे मतोर्लुक् अशिश्रयदिति । णावच आदेशेनेति श्रीशब्दस्य द्वित्वे उत्तरखण्डे वृद्ध्यायोः कृतयोर्नन्नुघटितानित्यत्वेन नाग्लोपीति निषेधाभावे ह्रस्वत्वमिति भावः ।

एवञ्च माधवानुरोधेन सत्यभिधाने ऽशिश्रायदिति उचितमित्यन्ये । यवयतीति । स्थूलदूरेति यणादिलोपगुणौ अङ्गवृत्तपरिभाषया ऽचन्तत्वाभावेन वा संप्रसारणं । ज्ञापयति नेदयति साधयतीति माधवानुरोधेन पाञ्चमिकयोर्विन्मतोर्लुक् कनोरेवभाष्यकृता इष्ठवद्भावेनाङ्गीकारादित्युक्तम् । कनयतीति । अत्रोपधावृद्धिर्न स्रजयतीतिवत् । उपसर्गस्येति । तत्पृथक्करणेन विशिष्टस्य प्रातिपदिकत्वाभावात्तत्रातिदेशाप्रवृत्तिरिति भावः ॥ इति नामधातुप्रक्रिया ॥

एभ्यो धातुभ्य इति । धातोरित्यनुवृत्तिसामर्थ्यात् भ्वादिपाठेनैषां धातुत्वमिति भावः । कण्ड्वादिराकृतिगण इति । गणरत्नमहोदधौ तेन रैयति भवल्यतीत्यादिसुध्यानुवृत्तौ स्पष्टम् । इति कण्ड्वादयः ॥

प्रथमैकाच इति । अजादेर्द्वितीयस्येत्यस्याप्युपलक्षणमेतत् । तृतीयस्येति । एकाच इत्यर्थः । इत्यनुवृत्तेः एकाच कण्ड्वादेरित्यस्य तद्घटितयगन्तस्येत्यर्थः । भाष्ये कण्डूयियिषतीति यिशब्दद्वित्वकरणात् । नामधातुष्विति । नामधातुष्वित्यर्थः नामशब्देन सुबन्तं तेषु विद्यमानानान्तयागामेकाचां यथेष्टमित्यर्थः अत एव पुपुत्रीयिषतीत्याद्युदाहृतं भाष्ये अतोपि यत्नाच्चङि नास्य प्रवृत्तिः । त्रयाणामिति । एकाचोद्वे ऽजादेः कण्ड्वादेरित्यत्र पूर्वं त्रयाणामेवोपस्थितेः पूर्वत्र बाध्यबाधकभावस्यनिर्णयात्त्रयाणां न युगपद् द्वित्वं तत्राजादेर्द्वितीयतृतीययोः पर्यायेणान्येषां तु त्रयाणां पर्यायेणद्वित्वमिति बोध्यं एषां वचनानन्द्या इति सूत्रे पाठेन तद्वदेवाधिकारत्वादविशेषेण प्रवृत्तिर्यथाभिधानं प्रवृत्तिरित्याहुः । नदराणामिति । तेषां मध्ये आदिभूतादचः परस्यैवेत्यर्थः । द्रीशब्दयिशब्दयोरिति । न च द्विर्वचनेचीत्यल्लोपनिषेधाद्यशब्दस्य द्वित्वप्राप्त्या यिशब्देत्यसङ्गतं नटभार्यावद्वाऽञ्जनानीति न्यायेनेकारसकारसहितस्य द्वित्वप्राप्त्या कार्यानुभवेन न हि कार्यीति निषेधेन द्विर्वचनेचीत्यस्याप्रवृत्तेः न च यिस्शब्दो न नामधात्ववयवः नामधातुघटकवर्णसंबद्धैकाचामित्यर्थेनादोषात् अत एव पुत्रीयियिषतीति भाष्ये उदाहृतं यिशब्दद्वित्वेपि सनवयवेकारस्य द्वित्वानुभवेन द्वित्वनिमित्तत्वायोगो ऽस्त्येवेत्यनास्ययामूले यिशब्देत्येवोक्तम् । चन्द्रिद्रीयिषतीति । इदं माधवानुरोधेन आदिभूतादचः परस्येति भाष्यसंमते ऽर्थे तु चिन्त्यमिदं विवरयिषतीति माधवेन वृद्ध्यङ्गीकारात्तन्मत इदम् ॥ इति प्रत्ययमाला ॥

कर्तरि कर्म ॥ कर्मेह क्रिया कर्मव्यतिहारे वर्त्तमानाद्धातोरित्यर्थेन धातोः क्रियायां वृत्तेरन्तरङ्गत्वेन तस्या एव ग्रह इति प्रकृतसूत्रे संख्यासञ्ज्ञासूत्रे च कैयटे स्पष्टं कर्मव्यतिहारविषये इत्यर्थसम्भवेपि न कृत्रिमकर्मग्रहणमुक्तार्थस्यौचित्यात् तेन देवदत्तस्वामिकं धान्यं स्वद्रव्यं दत्त्वा लवनेन स्वीकरोती-

त्याद्यर्थके देवदत्तस्य धान्यं व्यतिलुनातीत्यादौ न । यद्यपि साध्यस्वभावक्रियाणां परिवर्त्तनरूपोव्यतिहारो न संभवति प्रणिदानं व्यतिहार इत्येको ऽर्थ इति घुसञ्ज्ञासूत्रकैयटात् उदीचां माङोव्यतीहार इति सूत्रोदाहरणस्यापमित्ययाचत इत्यस्य याचित्वा वस्त्राणि परिवर्तयतीत्यर्थ इति कैयटाच्च स्ववस्तुदानपूर्वकपरवस्त्वङ्गीकारो हि परिवर्त्तनं अत एव कर्मव्यतिहारे द्वे वाच्ये इति वार्तिके कर्मव्यतिहारः क्रियाविनिमय इति व्याख्यातमभियुक्तैः एतेनान्यक्रियाया अन्येन करणं व्यतिहार इत्यपास्तं अत एवान्यक्रियामन्यः करोति इतरक्रियामितर इति कर्मव्यतिहारं जयमङ्गलाकारः प्रादर्शयत् तथाऽपि तत्तत्साध्यत्वेन ज्ञातक्रियाणां साध्यसाधनभावव्यत्यासः परस्परकरणञ्च सः यथा संप्रहरन्ते राजान इतीति कैयटः तत्र वर्त्तमानाद्धातोः कर्तरीत्यर्थे विनिगमनाविरहात्तत्कर्तृमात्रे प्रत्ययौचित्येन द्विवचनबहुवचनान्तान्येवोदाहरणानि न त्वेकवचनान्तानि अत एव भाष्ये क्वाप्येकवचनान्तानिनोदाहृतानि एवञ्च व्यतिलुनत इत्यस्यान्योन्यव्यत्यासेन लुनन्तीत्यर्थः एतेन देवदत्तेन सहचैत्रोव्यतिलुनीती इत्येकवचनान्तप्रयोगसम्भवः । अत एव दाणश्चेति सूत्रे कथञ्चतुर्थ्यर्थे तृतीयास्यात् एवन्तर्हि अशिष्टव्यवहारे तृतीयाच विधीयते आत्मनेपदञ्चेति सिद्धान्तिनोक्ते इतरआह यद्येवं नार्था ऽनेन सहयुक्ते तृतीयास्याद्व्यतिहारे तङोविधिर्दास्यासंप्रयच्छत इति भाष्ये उक्तं दास्यैविश्राणय तया सहोपभुङ्क्ष्वइत्यर्थ इति कैयटेन चोक्तमिति परास्तं तस्य भाष्यस्य पूर्वपक्ष्युक्तित्वेनार्थासाधकत्वात् तथा हि यस्यै विश्राणयतामुपभुङ्क्ष्व इत्यर्थे कर्मव्यतिहारे ऽप्यशिष्टत्वप्रतीतेः तया सहोपभुङ्क्ष्व इत्येतन्मात्रेण व्यतिहाराप्रतीतेश्च सूत्रस्यावश्यकत्वात् किंचोपपदविभक्तेरिति न्यायेन विश्राणननिरूपितचतुर्थ्या एव युक्तत्वं किंच धातोर्व्यतीहारे वृत्तावपि उक्तरीत्या कर्तृद्वयस्यापि तिङोक्तत्वात्तेनैवन्यायेन प्रथमौचिता न सहयोगतृतीया अत एव क्रियायोगे पुत्रेण सहागत इत्यादौ कर्तरि तृतीयायाम् सिद्धायामक्रियायोगार्थत्वेन सहेति सूत्रमिति तत्सूत्रे उक्तं भाष्ये भाष्यज्ञतात्वतिफलत्वाचतद्दूषणाभिनिवेशः कृतः एतेन भट्टिकाव्ये विश्वामित्राश्रमे मारीचं प्रति किमर्थं वृत्तवधादिकरोषीति रामेण पृष्टे ममायं धर्म इति तेनोत्तरिते धर्मोऽस्ति सत्यन्तव राक्षसायमन्योव्यतिस्ते तु ममापिधर्मः । ब्रह्मद्विषस्ते प्रणिहन्मि येन सजन्यवन्युधृतकार्मुकेषुरिति रामवाक्ये तवधर्मेण देवब्राह्मणद्वेषरूपेण ममान्योधर्मस्तपोरूपोव्यत्यासेन भवति येन धर्मेण युक्तोहं येन धर्मेण युक्तान् त्वत्संबन्धिनो ब्रह्मद्विषः प्रणिहन्मीत्यर्थके अथवारभ्यत्वद्धर्मः क्रौर्यं मयि भवति मद्धर्मो ऽक्रौर्यं च त्वयि वर्त्तमानसामीप्ये लट् रामबाणपातेन

समुद्रसमीपे पतितो मारीचस्तपश्चरिष्यतीत्येतत्तात्पर्यके व्यतिस्ते इति प्रयोगोपि परास्तः यतो धातोरात्मनेपदं प्रत्यासत्त्या तदर्थक्रियायां तत्कर्त्रा व्यत्यासे एवात्मनेपदौचित्याच्च तासस्त्योरिति सूत्रवृत्त्युदाहृतं व्यतिसे इति तु छान्दसं तत्र हि व्यत्ययेन द्विवचनादिस्थाने एकवचनं रिचेति सूत्रे व्यतिरे इति वत् इरयोरे इत्यस्य छान्दसत्वात्तच्छान्दसमेव हृणतीति सूत्रे व्यतिह इत्यपि तथैव लोकेत्वेकवचनान्तमसाध्वेवेति दिक्। नेर्विशः ॥ नेरिति षष्ठी नेरर्थद्वारसंबन्धिनस्तद्द्योत्यार्थकस्य विशेरित्यर्थस्तेन न्यविशतेत्यादौ न दोषः परिव्यवेभ्य इत्यादावपि षष्ठ्यर्थे पञ्चमी स्पष्टं चेदं शदेः शित इत्यत्र भाष्ये अत एव न्यादीनामुपसर्गाणामेव ग्रहणमिति दिक्। आङोदो। अकर्त्रभिप्रायेप्यात्मनेपदार्थमिदं आस्यविहरणे ददातेरेवप्रसिद्धत्वेन संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेन तस्यैवग्रहणमित्याह। ददातेरिति। आस्यग्रहणमिति। विहरणशब्दस्य क्रीडापादविहरणाद्यर्थत्वाभावबोधपूर्वकं विकासार्थमात्रे तात्पर्यग्राहकन्तदिति भावः। प्रतीकमाददाति भिक्षामाददातीति चिन्त्यमेव। यत्त्वत्र स्मरणे आकारो ङिच्चेत्यात्मनेपदं नेति तन्न, स्मृतस्यार्थस्य स्मृतिविषयताद्योतकस्यैव भाष्यबलेनाङित्त्वलाभात्स्मरणपूर्वकग्रहणे धातोर्वृत्तौ तात्पर्यग्राहकत्वेन क्रियायोगसत्त्वेन ङित्त्वस्यैवलाभाच्च ङकारस्तु अस्यैवार्थस्यानुवादकः। यन्तस्येति। भाष्ये यन्तस्यैवोदाहरणादिति भावः। हन्त्यर्थाश्चेति। गणसूत्रेण णिच् हन्तेर्गत्यर्थत्वस्यापि सत्वात्। मात्वरिष्टा इति। सहस्व कं चित्कालमित्यर्थः। शिक्षेरिति। अत जिज्ञासायामित्युक्तेर्ज्ञानपदाध्याहारे आत्मनेपदन्तात्पर्यग्राहकं वैषयिके आधारे सप्तमीत्याह। धनुर्विषय इति। प्रकार इति। धर्म इत्यर्थः। ताच्छील्यं नियततत्स्वभावता। विषया इति। समभि व्याहृतपदान्तरगम्या इत्यर्थः आलेखनङ्कननम्। अपस्किरतइति। अत्र कृधातोः खननपूर्वके धूल्यादिविक्षेपे वृत्तिः। अपाकरति कुसुममिति। इहालेखनाभावात्सुडभावः म्रियमाणो वृषभः पादैर्भुवमपकिरतीत्यत्र हर्षाद्यभावादप्रवृत्तिः। नेष्यतइति। अत एव भाष्ये समुद्धान्येवोदाहरणानि दृश्यन्ते। गजोऽपकिरतीति। स्वभावाख्यानमत्र। आनुते इति। शृगालउत्कण्ठापूर्वकं शब्दं करोतीत्यर्थ इति कैयटः। शप इति परे तु उपलम्भनेः नेनात्मनेपदं भाष्ये उपलम्भन इत्येव पाठदर्शनात् उपलम्भनं प्रकाशनं धातोः शपथकरणकप्रकाशने वृत्तौ तङ् तात्पर्यग्राहकः शपथश्च लोकप्रसिद्ध एव अतं एवोदाहरणे देवदत्तायेत्यत्र चतुर्थ्यत्र भाष्ये प्रयुक्ता सख्यः शपामि यदि किंचिदपि स्मरामीत्यादौ शपथमात्रविवक्षितं न तु प्रकाशनं मूले उपालम्भ इति पाठ आक्रोशार्थोदित्यादिरा-

ख्यानञ्च वृत्त्यनुरोधेनेति वदन्ति । ईहाकायपरिस्पन्दरूपो व्यापारः शतमुत्तिष्ठतीत्यस्योत्पद्यत इत्यर्थः । उपान्मन्त्र ॥ मन्त्रकरणके ऽर्थे वर्त्तमानादित्यर्थः सङ्गतिकरणमुपश्लेषः मित्रकरणमनुपश्लिष्टस्यापि मैत्रीसंबन्धः । लिप्सायामिति । लिप्सोपसर्जनके ऽर्थे वर्त्तमानादित्यर्थः । उद्विभ्याम् ॥ उद्विभ्यां किं निष्टपति ज्वलतीत्यर्थः । ल्यबन्तं विनैवेति । वाक्ये वाक्यैकदेशप्रयोगन्यायेन यत्र शब्दाध्याहार इति भावः । अस्यायुक्तत्वं मन्यमान आह भेत्तुमित्यादीति । तद्घटितवाक्यस्यैकदेशोयमित्यर्थः । समीपमेत्येति वेति । विषमविलोचनस्य समीपमेत्य स्ववक्त्र आजघ्रे इत्यन्वय इति भावः । वेत्तेर्वेति । व्याख्यानादिति भावः । अर्तीति । दृशे रिति व्याख्यानादिति भावः । सूत्रे स्वच्छतिग्रहणं तौदादिकस्वच्छः सम्पूर्वात्परस्मैपदव्यावृत्तये समृच्छिषत इत्याद्यर्थञ्च समार्त्तेति उश्चेति कित्त्वाद्गुणाप्राप्तावाटश्चेति बाधित्वा परत्वात्सिज्लोपे वृद्धिः । सिज्लोप एकादेश इति सिद्धकाण्डे पाठाद्वृद्धिं प्रति सिज्लोपोनासिद्धः । यत्तु ह्रस्वादङ्गादित्यत्र ङ्गपदसत्वेन वार्णपरिभाषया वृद्धिः पूर्वं सिज्लोप इति तन्न तस्यावर्णाङ्गयोरेकस्थानिकत्व एव प्रवृत्तेस्तज्ज्ञापकस्य सजातीयापेक्षत्वेनाङ्गाधिकारस्थस्यैवाङ्गस्य तत्र ग्रहणाच्च ह्रस्वादिति सूत्रे ऽङ्गपदप्रयोजनन्तु तत्रैवोक्तम् । अध्यैष्टेति तु सिज्लोपस्यासिद्धत्वात्परत्वाद्वार्णादाङ्गस्य बलवत्वाच्च सार्वधातुकेति गुणे वृद्धौ सिद्ध्यतीति भावः । परे तु लावस्थायामडिति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपो दुर्लभस्तदेकवाक्यतया पक्षान्तरे ऽपि तदलोप एवोचितः किंच सिज्लोपएकादेशे इति सिद्धत्वमपि प्रत्यासत्त्या सिज्लोपनिमित्तकैकादेशं प्रत्येवोचितं न तु प्रकृतविषयमपि नचैकादेशपदसामर्थ्यं सवर्णदीर्घपदापेक्षया लघुत्वादित्याहुः । मासमरतेति । सर्त्तिशास्तीति सूत्रे पुषादिसूत्रेण योगविभागसामर्थ्यात्परस्मैपदेष्वित्यस्यासंबन्धादिति भावः अत एव समारन्त ममाभीष्टाः संकल्पास्त्वय्युपागते इति भट्टिः सङ्गच्छते वृत्तौ च स्पष्टमेतत् । परे तु शास इदिति सूत्रे आशास्ते इत्यादावित्ववारणाय यस्माच्छासेरङ् विहितस्तस्य ग्रहणमिति भाष्यमुपादाय सर्त्तिशास्तीत्यत्र परस्मैपदाधिकारादाशास्तेरङिन्त्युक्तं कैयटेन । किं चास्यतिवक्तीत्यनेन सर्त्तीत्यादेर्योगविभागस्य फलं निरूपयितुमशक्यमत एव भाष्ये प्रकृतवार्तिके धातुद्वयसाधारण्येन मासमृतेत्याद्येवोदाहृतं एवञ्च भट्टिप्रयोगवृत्त्यादि चिन्त्यमित्याहुः । अकर्मकादित्यवेति । समागमीत्यत्रोपसंख्यातत्त्वादिति भावः । न च समागमादिषु विद्यादीनामुपसंख्यानमिति भाष्ये आदिशब्दबहुवचनाभ्यां समः क्ष्णुव इत्यत्राप्येषामुपसंख्यानेन सकर्मकेभ्योप्यात्मनेपदेष्टेरकर्मकादित्येवेत्यसङ्गतमिति वाच्यं तेनैव सिद्धे ऽत्रोपसंख्यानस्य वैयर्थ्यापत्तेः

न हि तत्र सकर्मकादित्यस्ति येनाकर्मकार्थमिदं स्यात् भाष्ये बहुवचनन्तु प्रयोगभेदाभिप्रायेणेत्याहुः । वहतीति । प्रापणार्थस्य वहतेरर्थान्तरे स्यन्दने वृत्तिरिति भावः जीवतीत्यत्र जीवनकर्म धात्वर्थेन्तर्भूतं अकर्मकत्वञ्च पृथगुपस्थितैतच्छास्त्रविहितकर्मसञ्ज्ञकानन्वय्यर्थकत्वं स्पष्टञ्चेदं सुपआत्मन इति सूत्रे भाष्ये । वर्षतीति । इदं चिन्त्यं अत्र प्रसिद्ध्या झटित्युपस्थितस्य प्रविशपिण्डीमित्यादाविवान्वयसम्भवेन तद्वाचकानुपादानमात्रं नत्वेतावता ऽकर्मकत्वं न्याय्यं कदाचिन्मेघो जलं वर्षतीति प्रयोगात् । अत एव तपरसूत्रे ऽयुक्तोयं निर्देश इति प्रतीकमुपादाय न्यायेनासंबद्ध इत्यर्थः न्यायशब्दस्य तु प्रयोगः प्रसिद्धत्वान्न कृतः कदाचित्तु प्रसिद्धार्थस्यापि प्रयोगो दृश्यते न्यायेनायुक्त इति धात्वर्थेन्तर्भूतस्य तु प्रयोगाभावो न हि भवति जीवति प्राणानिति कैयटेनोक्तं एवं रीत्या ऽकर्मकत्वस्य भाष्ये ऽनुपलम्भाच्चेति कर्मणो ऽविवक्षानामकर्मविशेषान्वयाविवक्षा सा च क्वचित्सार्वत्रिकी यथा मूलोदाहृते तत्र निर्बाधं भावे लादीनां साधुत्वं क्वचित्तु कार्यप्रवृत्तिवेलायान्तदविवक्षा पश्चात्तु तद्विवक्षा यथा तु कृतपूर्वीकटमित्यादिवृत्तिविषये किंच कर्मणोधात्वर्थं प्रति सम्बन्धसामान्येनान्वयविवक्षा न तु कर्मत्वेनेत्ययमप्यविवक्षापदार्थः । अत एव मातुः स्मर्यत इत्यत्राविवक्षितकर्मतया भावे ल डुक्तो ऽधीगर्थेत्यत्र भाष्ये हितात्रय इत्यत्रापि हितात्पुरुषाद्धितार्थस्य यो न सं शृणुते न जानातीति प्रतीतेर्मातुः स्मर्यत इति वदेवाविवक्षा एतेनेदं प्रसिद्ध्या गतार्थमित्यपास्तमित्यन्ये । निवृत्तमिति । सोपसर्गास्यत्यूह्योः सकर्मकत्वेनाकर्मकादित्येतत्संबन्धस्य वक्तुमशक्यत्वादिति भावः । स्पर्द्धायाम् । स्पर्द्धाविषये इत्यर्थः आह्वयतेः शब्दत एव वृत्तिरिति भावः वेः शब्द ॥ शब्दः कर्मकारकं यस्य ततः कृञो विपूर्वादात्मनेपदमित्यर्थः । प्रयोगोपाधय इति । यथा शास्त्रेनयत इत्यत्रनयतेः प्रापणमर्थः शिष्यादिसंमाननन्तु तत्फलतया मानसबोधविषयः एवं माणवकमुपनयते इत्यत्र विधिना वेदाध्ययनफलकमुपनयनाख्यसंस्कारेणात्मसमीपप्रापणं नयते रर्थः । एवं हि सोध्यापकआचार्यो भवतीति आचार्यकरणं मानसबोधविषयः कर्मकरानुपनयते इत्यत्रा त्मसमीपप्रापणं नयत्यर्थः तच्च भृतिदानकरणकमेवेति तन्मानसबोधविषय इति भाव । कर्तृस्थेकर्मणीति । कर्तृस्थ कर्मकारके सतीत्यर्थः । शरीरशब्देनेति । शरीरतादात्म्यापन्नस्यैवकर्तृत्वेन शरीरस्य तत्स्थत्वासम्भवः अवयवानान्तु संबन्धविशेषेण तत्स्थत्वसम्भव इति भावः । कर्तृस्थेतिकिं राज्ञः क्रोधं विनयति अन्ये तु विध्यर्थमिदं अकर्तृगेपि क्रियाफले नयन्ति पौरुषमिति तु प्रमाद इत्याहुः । उपपराभ्यां । अस्य नियमत्वं वृत्तिसर्गेत्यनुवृत्त्या बोध्यं विधित्वे

तु अनेनैवसिद्धे प्रोपाभ्यामिति सूत्रे उपग्रहणवैयर्थ्यापत्तिः प्रात्प्रारम्भे इत्येवसिद्धेः। वेःपादवि॥ धातूनामनेकार्थत्वं बोधयितुं सूत्रे पादविहरणादित्युक्तं अनुपसर्गाद्वा इदं सूत्रं लिटि आशीर्लिङि च न अस्य विकरणेभ्यो बलीयानित्यर्थज्ञापकतापरानुदात्तङित इति सूत्रस्यभाष्यप्रामाण्यात्। नित्यमेवेति। पूर्वविप्रतिषेधेनेति भावः। सम्प्रतिभ्याम्॥ उत्कण्ठापूर्वकं स्मरणमाध्यानम्। योगोविभज्यत इति। अत्र वृत्त्यादिकमेवमानं। भासमान इति। शिष्यैः स्तूयमानो हि भासेत तथा चोपर्युपरिशास्त्रार्थप्रति भासात्सुष्टूक्तिर्निर्वहति तेजो भक्तेतु न शक्नुयाद्वदितुमिति भावः। ज्ञाने इति। शास्त्रेवदत इति। बोधोत्तरं शास्त्रविषयकज्ञानवत्त्वं मनसाबुध्यत इति भावः। यत्नउत्साहः। क्षेत्रे वदत इत्यस्य तद्विषयकमुत्साहमाविष्करोतीत्यर्थः। विवदन्त इति। वैमत्यहेतुकं नानाविधं भाषन्त इत्यर्थः वदेर्व्यक्तवागर्थत्वेन व्यक्तवाचामित्युपादानसामर्थ्याद्येषां प्रसिद्धतरं व्यक्तवाक्त्वं त एवेह गृह्यन्तेतेन वरतनुसम्प्रवदन्ति कुक्कुटा इत्यादौ न॥ रतिविराममनिच्छन्तीं तरुणीं प्रति तद्विरामैचित्यद्योतिकोक्तिरियन्तदाह मनुष्यादीनामिति। समुच्चेत्यादिकिं क्रमेण संप्रवदन्ति। विभाषाविप्र। युगपत्परस्परविरोधेन कथनं विप्रलापः। भाष्यमिति। एवञ्च तुदादेरेवग्रहणमिति भावः। समस्तृतीया॥ तृतीयेत्यादिकिं उभौलोकौ सञ्चरसीमञ्चामुञ्चदेवलेति। दाणश्च॥ इदमशिष्टव्यवहारे इष्यते दानपूर्वके भोगे ऽत्र दाण् धातुः। सूत्रद्वयमिति। शर्दोरिति सूत्रभाष्यात्तु सर्वत्रैवषष्ठीव्यवहिते प्रवृत्तिरश्चेति लभ्यते स्वकरणं स्वीकार इति च्विस्तु प्रकृतिविकृतिभावाविवक्षणाच्च स्वत्वोत्पादने इत्यर्थात्। स्वीकार इत्यव्युत्पन्नं प्रातिपदिकमिति बोद्धव्यम्। पूर्वसूत्रस्यैवेति। एवञ्च तस्य सकर्मकविषयत्वेन सकर्मकस्यैव निषेधो ऽकर्मके तु परत्वात्पूर्ववत्सन इत्यात्मनेपदमिति भावः। प्रत्याङ्भ्याम्। प्रत्यासत्त्या श्रुधात्वर्थविशेषकावेवप्रत्याङौ गृह्येते तौच उपसर्गावेवेत्याशयेनाह। कर्मप्रवचनीयत्वादिति। तेहि संबन्धपरिच्छेदका न क्रियाविशेषका इति स्पष्टमेव। पूर्ववत्सनः। प्रत्यासत्त्या सनः पूर्वं इत्यर्थलाभः। प्रकृतिगतमेवनिमित्तं सनाव्यवधानेप्यात्मनेपदं प्रवर्त्तयतीत्यर्थः। ननु शिशत्सतीत्यादौ शिदादिविषयशदेरात्मनेपदविधानाच्छिद्विषयसन्नन्तादपि प्राप्नोतीत्यत आह। वाक्यभेदेनेति। स्वराद्यन्तेति। स्वराद्युपसर्गात्स्वरान्तोपसर्गाच्चेत्यर्थः। णेरणौ। इह वाक्यत्रयम्। णेरिति। अणौयत्कर्मणौचेदिति च। सकर्तेति च। तत्र स्यादित्यन्तेनाद्यं व्याख्यातम्। द्वितीयं व्याचष्टे अणाविति। कर्मात्र क्रिया यत्तदोर्नित्यसंबन्धात् यच्छब्देन तच्छब्दोपात्तस्यैवचेदित्यर्थलाभः। नचात्र सत्त्वप्रतिपाद्यन्ताद्भिमेवकारेणेति वाच्यम्। अध्या-

रोपितप्रेषणाद्वितीयकक्ष्यायामधिकप्रवेशेऽपि तत्सत्ताया अहत्या वाक्यवैयर्थ्याप-त्तेः । तृतीयं व्याचष्टे । अणावत्कर्मेत्यादि । अत्र पूर्ववाक्यमनुवर्तते कर्मशब्दश्च कारकपरो व्याख्यानादिति भावः । सकर्तेति । सर्वनाम्नां पर्यायेणोद्देश्यविधेयान्यतरलिङ्गतेति भावः । तत्रासतिप्रतिबन्धके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धतया ऽण्यन्तावस्थास्यकर्मकारकत्वावच्छेदेन णौकर्तृत्वलाभस्तेन देवदत्तो गां याचते देवदत्तो गां याचयति यज्ञदत्तेन यज्ञदत्तो गां याचयतीत्यादौ नात्मनेपदं यच्छब्देन न तच्छब्दाक्षेपे ऽपि स इति स्पष्टार्थम् । ननु णौचादिति व्यर्थं अणौ यत्कर्म सकर्तेत्यत्र कुत्रेत्याकाङ्क्षायां प्रत्यासत्त्या यात्रात्मनेपदं तत्रेत्यर्थलाभादिति चेन्न यत्तच्छब्दवत्स्पष्टार्थत्वात् । अत्र फलकल्पना तु भाष्यानुक्तत्वादयुक्तेति प्रामाणिकाः । अणावकर्मकादिति । यत्र क्वाप्यण्यन्तावस्थायामकर्मकादित्यर्थेन प्राप्तिरिति भावः । पूर्वविप्रतिषेधेनेति । अत्र च मानं दर्शयते राजेति भाष्योदाहरणम् । प्रेरणेति । सौकर्यविवक्षयेति भावः । अत्र कर्मस्थक्रियत्वाभावेन कर्मकर्तर्यपि शबादि । तत इति । फलवाचकात्तद्धिकरणे व्यापारे इत्यर्थः । पुनर्ण्यर्थस्येति । ण्यन्तस्य तद्रहिते ऽर्थे लक्षणा । गङ्गादिपदस्य तीरलक्षणायामपि टाप्स्थितिवत् णिचः स्थितिरिति भावः । प्रथमतृतीययोरिति । सर्वनाम्नोवृत्तिमात्रे इति पुंवत् । एवं तृतीयकक्ष्या-मित्यत्रापि । यावतीषु सोपानस्थानीया स्वार्थविभागभूमिषु पदं विन्यस्येयं प्रायोगिकीभूमिः प्राप्यतेताभूमयः कक्ष्या इत्युच्यन्ते ऽवस्था इति च तथा हि आरोहन्ति हस्तिनं हस्तिपका इत्येका कक्ष्या । ततो णिचि व्यापारान्तरप्रतीतिः स्यात् अतो मध्ये ऽन्या कक्ष्यारुह्यते हस्तीस्वयमेवेति । अत्र न्यग्भवनमात्रमर्थः । ततो णिच्यारोहन्तीत्यनेन समानार्थातृतीया । इयञ्च तृतीय वाक्यार्थव्यावर्त्य भूताउदाहरणकक्षोपपादिका च । ततो व्यापारत्यागे आरोह्यते हस्ती स्वयमेवेत्युदाहरणभूता । तदुक्तम् । न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते । न्यग्भावना न्यग्भवनं ण्यन्ते ऽपि प्रतिपद्यते । अवस्थां पञ्चमीं प्राहुर्ण्यन्ते तां कर्मकर्तरि । निवृत्तप्रेषणाद्धातोः प्राकृते ऽर्थेणिजुच्यत इति । अत्र पञ्चमीत्वं यथाकथञ्चिदुपपाद्यम् । न्यग्भवनमधोदेशस्थित्यनुकूलोव्यापारः । तदनुकूलो व्यापारश्च न्यग्भावना । तत्राद्यकक्ष्यायां न्यग्भवने स्वरूपयोग्यतानिश्चयेन न्यग्भावनायां कर्तुः प्रवृत्तिरिति प्रतीतिः । अन्यथा शिलायामङ्कुरोत्पादनायेवाप्रवृत्त्यापत्तिः द्वितीयायान्तु प्रयोज्यस्य स्वव्यापारेणैवप्रवृत्तिरिति सौकर्यप्रतीतिः । तृतीयायां न्यग्भवने स्वत एव प्रवृत्तं दृष्ट्वा तत्क्षेमाय कर्तृप्रवृत्तिरिति सौकर्यप्रतीतिः । उदाहरणे तु क्षेमार्थमपि न

स्वव्यापारभिन्नप्रयोजकव्यापारापेक्षेति सौकर्यातिशयप्रतीतिरिति बोध्यम् ।
अत्र रुहौ शुद्धे प्रतीयते इत्यनेनार्थप्रतीतिर्न तु तद्वाच्यत्वन्तयोरिति सूच-
यति । तथाहि । ऊर्द्ध्वदेशावच्छिन्नसंयोगानुकूलव्यापारो रुहर्थः । रुहिर्गत्यर्थ
इति यद्वितु परमित्यत्रभाष्यात् । तदवच्छिन्नसंयोगाश्रयत्वेनैवगजस्य कर्मत्व-
म् । अत एवायं कर्तृस्थक्रियः संयोगस्य कर्तर्यपि सत्वात् । उपरिगमनस्य
ण्यभवनं विना ऽसम्भवात् तस्यापि मानसोबोध इति बोध्यम् । यद्वेति ।
अत्रापि पक्षे क्रियासाम्यंनिवृत्तप्रेषणाद्वितीयकक्ष्यामादाय बोध्यम् । तस्या
अप्येतन्मूलत्वात् । आधिक्येनाऽत्रव्यवच्छेदेत्वेतत्पक्षीयप्रथमामादायापि तद्बो-
ध्यम् । अयमपि पक्ष उक्तो हरिणा । केषाञ्चिद्देवदत्तादेर्व्यापारो यः सकर्मके ।
सविना देवदत्तादेः कटादिषु विवक्ष्यते । स यदा प्रयोजककर्त्तारमन्तरेणापि
कर्मणि विवक्ष्यते तदेत्यस्या अर्थः ॥ स्वीकृतप्रेषणं कर्म स्वस्य कर्तुः प्रयोज-
कम् । प्रेरणान्तरसंबन्धे ण्यन्तेनाभिधीयत इति । प्रेरणास्वीकारे सौकर्या-
तिशयप्रतीतिः प्रयोजनम् । प्रेरणान्तरसंबन्धे । कर्तृविषयप्रेरणान्तरसंबन्धे ।
तेन स्वविषयप्रेरणा सर्वत्र स्वस्मिन्नस्तीति दर्शितम् । अत्र पक्षे स्वयं दूती-
स्पष्टं निदर्शनम् । आद्यपक्षे आदौ या दूती सा पेक्षा । ततस्तदनपेक्षा ।
सा ऽपि निदर्शनम् । द्वितीयकक्ष्यायां न तङिति । नन्वेतत्समानार्थान्तर्भा-
वितण्यर्थस्यापि वक्तुं शक्यत्वेन तामादाय क्रियासाम्यमत्रापि । न च सा ण्य-
न्तस्य न मूलभूता तत्तत्कक्ष्यास्थण्यन्तधातुप्रकृतित्वं हि ण्यन्तमूलत्वमिति
वाच्यम् । एवं हि निवृत्तप्रेषणाचतुर्थकक्ष्यायां कर्मणः कर्तृत्वमाद्यकक्ष्यामादा-
योपपाद्यमानमनुपपन्नं स्यात् । तुर्यकक्ष्यायान्तत्प्रकृतिकण्यन्तत्वाभावात् ।
द्वितीयकक्ष्यास्थप्रकृतिकण्यन्तत्वस्यैव तत्र सत्वात् । न च यदर्थकाद्यदर्थमू-
लकाद्वा प्रयोगात् कक्ष्यान्तरे ऽर्थस्य त्यागो वृद्धिर्वा सा मूलभूता । अस्ति-
न्याद्यकक्ष्यार्थैकदेशस्योदाहरणभूतकक्ष्यायान्त्यागः । द्वितीयकक्ष्यामूलक तृती-
यकक्ष्यार्थैकदेशस्यापि तस्यान्त्यागाच्च तस्या अपि मूलत्वं नैवं प्रकृते इति
वाच्यम् । कक्ष्ययोर्मूलमूलिभावस्य सूत्रभाष्याद्यारूढत्वात् । अन्तर्भावि-
तण्यर्थकक्ष्यास्थधातोर्निवृत्तप्रेषणताङ्कृत्वा णिचि कृते तत्समानार्थण्यन्तप्रयो-
गेण तस्या अपि तन्मूलत्वाततेश्च । तदर्थकमूलकात्तत्र वृद्धेः स त्वादिति
चेन्न । गमकं विनान्तर्भावितण्यर्थताया अभावात् । अणाविति किम् ।
निवृत्तप्रेषणपक्षीय तृतीयकक्ष्यास्थकर्मणोहेतुत्वारोपेण द्वितीयहेतुमण्णे दर्श-
यति भवोभक्तैरित्यत्रैव माभूद्दिति कर्मनिष्ठप्रयोजकव्यापारश्च ज्ञानवि-
षयीभवनमेवेति दिक् । मध्वपाययतस्वच्छं सोत्पलं दयितान्तिके ।
आत्मानं सुरता भोगविघ्नंभीत्यादनं मुहुरिति भट्टिश्लोके आत्मानं सुरता

भोगविघ्नभीत्पादनं दर्शयित्वेति शेषः । समधुपिबति मध्वपाययते-त्यर्थादनेनैवात्मनेपदम् । ध्वनितश्चेदं जयमङ्गलायां करेणुरारोहयते-निषादिनमित्यत्रेवात्रापि णिचश्चेत्येवात्मनेपदमित्यन्ये । स्मरयतीति । मित्वाद्ध्रस्वः । अपरे तु कर्तरिकर्मव्यतिहारे इति सूत्रे क्रियाग्रहणं कर्त्तव्यमिति सूत्रकारशिक्षां कुर्वतो वार्तिककृतः कर्मपदस्य क्रियापरत्वं नाभिप्रेतमित्यशयं तस्य यत्कर्म यदा णयन्ते तदेवकर्मभवति तदा आत्म-नेपदमित्युपक्रमवार्तिकस्य कर्मशब्दस्य क्रियापरत्वेन व्याख्यानं न युक्त मित्युभयत्रापि कर्मशब्दः कारकपर एव । अत एव तद्व्याख्यान भाष्ये ऽपि कर्मशब्दप्रयोग एव कृतो न क्रियाशब्दप्रयोगः । नापि कर्मव-द्भाव इवात्र सकर्मकाणां प्रतिषेधो वार्तिककृतोक्तः तत्र द्वितीयवाक्येनाणौ यत्कर्मणौ चेत्तदेवकर्मेति कर्मान्तरनिवृत्तिः प्रतिपाद्यते नत्वणौ कर्मणोणौ कर्मत्वं उत्तरवाक्येन तस्य कर्तृत्वप्रतिपादनात् । एकस्यैकस्यांक्रियायामुभय-रूपत्वासम्भवात् । न च दर्शयते भृत्यान् राजेति भाष्योदाहरणविरोधो भृत्यरूपस्य कर्मणः सत्वादिति वाच्यम् । एतद्भाष्योदाहरणप्रामाण्यादणौ ये कर्तृकर्मणी तद्भिन्नकर्मव्युदासे तात्पर्यात् । कर्त्तरिकर्मेत्यतः कर्त्तृग्रहणमनुवर्त्य प्रथमया विपरिणमय्य यच्च यश्चयदित्येकशेषेणायमर्थो लभ्यः । कर्मान्तरनि-वर्तकवाक्यफलन्तु आरोहन्ति हस्तिनं हस्तिपका आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानिति भाष्योक्तम् । तत्र हि स्थलमधिकं कर्म तस्य मूलभूताण्यन्तावस्थामनुष्या हस्तिनमारोहन्तीत्येव सौकर्यातिशयप्रतिपाद-नाय प्रेरणावृद्धिवत्तत्प्रतिपादनायैवफलांशवृद्ध्याद्विकर्मत्वम् । अत्रोर्ध्वदेशत-त्स्थवस्तु एतदुभयसंयोगानुकूलोव्यापारो धात्वर्थः । स्थलशब्देन गजपृष्ठस्थं काष्ठादिमयमुपवेशनस्थानमुच्यते । गजोर्द्ध्वदेशसंयोगानुकूलव्यापारेण तच्चभव-नरूपेण तत्स्थवस्तु संयोगोपि जात इति सौकर्यातिशयोत्र बोद्ध्यः आरोहन्ति-हस्तिनं हस्तिपका इत्युपात्वारोहमाण इत्यस्यैवमूलभूता आरोहयमाण इत्यन्तं सूत्रोदाहरणप्रदर्शनं दृष्टान्तार्थं यथा तत्रात्मनेपदं तथात्रापि स्यादिति तदाशयः । किंचास्योदाहरणस्य न मनुष्याः स्थलमारोहन्तीति मूलकत्या नापि तत्स्थलमारोहयतीति स्थलकर्तृ आरोहयमाणो हस्तीति शानजन्तप्रयोगेण मनुष्यकर्मकारोहणे स्वरसतो हस्तिन एव कर्तृत्वप्रतीतेः । शतृशायजाद्यन्तार्थानां स्वभावतः क्रियान्तरसाकाङ्क्षत्वात् । क्रियान्तरस्य चानुपस्थितेः । एवञ्च त्वद्रीत्या मूलकृत्यानिरूपणे ऽणौ कर्मणोणौकर्तृत्वा भावादप्राप्तेः प्रत्युदाहरणासङ्गतिस्तीत्यन्तस्य शुद्धदृष्टान्तार्थत्वे तु तिङन्त-

मेवोच्चारयेत् । किं च कर्मपदस्य क्रियापरत्वे समानक्रियत्वप्रदर्शनाय द्वितीयकक्ष्याप्युदाहर्त्तुमुचिता । कर्मणः कर्तृत्वबोधनाय प्रथमकक्ष्यावदिति तदनुक्त्या कारकपरत्वमेवाभिप्रेतं लक्ष्यते । एवं प्रथमप्रघट्टकेनाकर्मकाणामेवैतदुदाहरणत्वं मन्यमानेन सकर्मकाणां प्रतिषेधस्य सूत्रकृता ऽनुक्तत्वेन सूत्ररीत्या तेष्वपि कर्मवद्भावप्रवृत्तिं मन्यमानेन वा ऽऽचार्यदेशीयेन कर्मकर्तृत्वात्सिद्धमित्युक्ते अनाध्याने इति प्रतिषेधस्य प्रतिषेध्यसमर्पणायेदमित्याशङ्क्याध्यानार्थकानां कर्तृस्थभावकत्वात्तत्र कर्मवद्भावस्यैवाप्राप्तेर्निषेधेन फलमित्यन्तेन मध्यमप्रघट्टकेन सूत्रवैयर्थ्यं आचार्यदेशीयेन शङ्किते यथा तवाध्यानविषये कर्तृस्थभावकत्वादप्राप्तेर्निषेधवैयर्थ्यं तथा कर्मवद्भावाप्राप्तियोग्ये विषये आत्मनेपदार्थं सूत्रमित्याशयेनाचार्येणैतदेव ज्ञापयति भवत्येवं जातीयकानामात्मनेपदमिति विध्यर्थमिदमिति तृतीयप्रघट्टके सिद्धान्तितं, तत्र एवं जातीयकानामित्यस्य कर्तृस्थभावकजातीयानामित्यर्थः । तज्जातियत्वं च कर्मवद्भावाप्राप्तियोग्यत्वेन । एवञ्च कर्तृस्थभावक्रियवत्सकर्मकाण्यप्यस्योदाहरणानीति ध्वनयतोदाहृतं दर्शयते भृत्यान् राजेति । अत एव द्वितीयपक्षव्युत्पादकहरिकारिकयोः प्रेरणावृद्धिप्रदर्शनवत्प्रेरणाद्वयत्यागविषयोदाहरणकक्ष्याप्रदर्शनं न कृतमाद्यपक्ष इव तेन तत्र द्वितीयकक्ष्याप्युदाहरणमिति सूचितम् । किंच गम्भीरायां नद्यामित्यादौ गभीरनदीतीरबोधेन लक्षणातात्पर्यग्राहकतया गभीरादिपदसार्थक्यवदिह कर्मपदस्य णिचश्च सार्थक्यमन्वयेन वा नोपपादयितुं शक्यः । न च कर्मपदणिज्घटितस्य तद्रहिते स्वार्थसंबन्धे लक्षणेति न दोषो ऽत एव णिच्स्थितिरिति वाच्यम् । प्रेरणारूपेऽर्थे शास्त्रेण साधुतया बोधितस्यान्यार्थे लक्षणयापि साधुत्वस्य वक्तुमशक्यत्वात् । तस्माद्दर्शनविषयीभवनसमानाधिकरणप्रेरणावास्तवी आरोपिता वा णिजर्थ इति णिचः साधुत्वं कर्तृत्वं च स्वस्योपपन्नम् । अत एव ण्यन्ताण्यन्तयोर्न्यग्भवनतदनुकूलव्यापारयोः प्रतीत्युपपत्तये पञ्चम्यामवस्थायां णिजुपपत्तये च हरिणा निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ब्रवीति पचतेरर्थे सिध्यति न विनाणिचा सण्यन्तः पचतेरर्थे सर्वथैवावतिष्ठते । तद्वद्दुहेरणौणिचतुल्यार्थत्वं प्रतीयते इत्युक्तमिदमुक्ततृतीयकक्ष्योदाहरणभूतपञ्चमकक्ष्योभयसाधारणम् । तत्र द्वितीयकक्ष्यायां न्यग्भवनसमानाधिकरणो व्यापारो ऽर्थः । ततो णिचि तृतीयकक्ष्या ॥ तत्र णिजर्थव्यापारस्य प्रकृत्यर्थव्यापारस्य च त्यागे आरुह्यते हस्तीति तुर्या कक्ष्या । ततो न्यग्भवनसमानाधिकरणे प्रवर्तनात्वेनापि विवक्षिते व्यापारे णिच्युदाहरणभूताकक्ष्या । एवञ्च तस्याः हर्युक्तपञ्चमकक्ष्यात्वं स्वरसत उपपद्यते । एवञ्च पूर्वण्यन्तादयं ण्यन्तस्तत्समानाकारो भिन्नार्थ

एव । एतत्सर्वमन्वाख्यानोपायमात्रमिति बोध्यम् । एवञ्च समानक्रियत्वासम्भवेऽपि बोध्यः । कर्मवद्भावात्सिद्धमिति प्रतीकमुपादाय लावयति केशाते देवदत्तेनेत्यत्र कैयटे परस्मैपदं तु तद्रीत्या बोध्यम् । प्रायेणात्मनेपदपाठ एव तत्र दृश्यते । कारिकाप्रमाणसिद्धान्तानुसारी तु सः । एवं पूर्वविप्रतिषेधोऽपि चिन्त्यः । भाष्ये ऽनुक्तेः । दर्शयते राजेत्यत्राणावकर्मकादित्यस्याप्राप्तेः स भाष्यप्रयोगो न मानं अणावकर्मकादित्यत्रोद्देश्यतावच्छेदकावच्छेदेनान्वयस्य लोकव्युत्पत्तिसिद्धतया ऽण्यन्तावस्थात्वावच्छेदेनाकर्मकत्वप्रतीत्या ऽण्यन्ताविद्यमानकर्मकेष्वेवतत्प्रवृत्तेरिदन्त्वण्यन्तसकर्मकेष्विति विषयभेदात् । विभाषोपपदेनेत्यस्य च बाधेनैवमानं पश्याम इति प्राहुः । विभाषोप । इयं प्राप्तविभाषेति न वेति सूत्रे भाष्ये । स्वरितेत्यादि पञ्चसूत्र्यत्रानुवर्त्तते । कर्त्रभिप्रायक्रियाफलविषये आत्मनेपदमिति तदर्थः । अथा ऽपि तदर्थद्योतकमात्मनेपदमेवमपि व्यतिलुनीत इत्यादौ व्यतिभ्यां द्योतिते कर्मव्यतिहारे आत्मनेपदमिवेहापि प्राप्नोतीति प्राप्तविभाषेवेति तदाशयः ॥ इत्यात्मनेपदप्रक्रिया ॥

कर्त्तव्य इति । कार्यातिदेशेप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति मते इयमेवकल्पना बोध्या । अतत्य भाष्यस्वरसोप्यत्रैवपते । तृज्वत्सूत्रे ऽपि भाष्ये शास्त्रातिदेशकार्यातिदेशयोरभेद एव सूचितः । एवमप्येपि । केचिदिति । नैतद्भाष्ये दृष्टम् । उपाच्च । उत्तरत्रोपेत्यस्यैवानुवृत्तये योगविभागः । बुधयुध । अत्राकर्मकाणां यदान्तर्भावितण्यर्थत्वेन सोपसर्गत्वेन वा सकर्मकत्वं तदर्थमचित्तवत्कर्तृकार्थं च ग्रहणम् चित्तवत्कर्तृकाणान्तु सकर्मकार्थम् । प्रीतिं भक्तजनस्य योजनयते इत्यादिप्रामादिकम् । यद्वा भक्तजनः प्रीतिं जनयत्यात्मनस्तस्य तामीश्वरो जनयते इति ण्यन्तात्प्रयोज्यकर्तुः शेषत्वविवक्षायां भक्तजनस्येति षष्ठीत्याहुः निगरणेत्यत्र निगरणशब्देन न पादमीति सूत्रे याग्रहणात्पानमपि गृह्यते इमां क्रमाचाप्रयसेन चक्षुषी इति श्रीहर्षे पद्ये इमामित्यस्यैतन्मुखचन्द्रचन्द्रिकामित्यर्थेनाचामयतेः सादरज्ञानलाक्षणिकतया निगरणार्थत्वाभावान्नानेन परस्मैपदमत एव चक्षुषोः कर्मत्वं ज्ञानार्थत्वादिति बोध्यं । यदि तु तृप्तिनिवर्त्तकस्तत्क्रियाव्यापार एव पानं सर्वेन्द्रियाणाञ्च स्वस्वविषयविषयकेतृत्तृशे इत्यर्थस्यैतरेयोपनिषदिस्पष्टत्वादत्र न लक्षणा किंतु मुख्यमेवनिगरणं तदाचिन्त्य एवायं प्रयोग इति बोध्यं । प्राप्तस्यैवायमिति । अनन्तरस्येति न्यायादिति भावः अणावकर्मकाचित्तवदित्यादिकिं शुष्यन्ति व्रीहयस्तान् शोषयते अकर्मकात्किं कटङ्करोति तं प्रयुङ्क्ते कटङ्कारयते इतरे इति द्विकर्मकेपि एतत्प्रामाण्यात्

अत एव दमिः सकर्मक इति दिवादिस्थयन्थेनाविरोधः । परेतु अकर्मकत्वे ऽस्य सूत्रस्य मानत्वे ऽपि सकर्मकत्वे मानं चिन्त्यमित्याहुः वासयत इति लुग्विकरणपरिभाषया ऽदादेः सकर्मकतया च भ्वादेर्ग्रहणं वसेः परस्मैपदं स्यादेवेति अनन्तरस्येति न्यायेन योगद्वयप्रापितपरस्मैपदस्यैवनिषेधादिति भावः पाययतीति शाब्कासेति युक्तं । इतिपदव्यवस्था ॥

सार्वधातुकेयक् । धातोरेकाच इत्यतो धातोरिति चिण्भावेत्यतो भावकर्मणोरिति चानुवर्त्तते उत्पादना फलोत्पत्त्यनुकूलो व्यापारः फलत्वञ्च कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थविशेषणत्वे सति तद्धात्वर्थत्वं अनेकपर्यायोपादानं चेतना चेतनवृत्तिफूत्कारयत्नादीनां क्रियात्वं धात्वर्थत्वञ्च बोधयितुं अत एव पचति पाकं करोतीत्यादिक्रमेण कृञा सर्वधातूनां विवरणमिति भूवादिसूत्रे भाष्ये स्पष्टं क्रियात्वं धातुवाच्यत्वसमानाधिकरणो जातिविशेषः तत्परिचायकञ्च भूवादिसूत्रम् । धातुत्वेनेति । तत्राप्यपचित्वादिनेत्यर्थं फूत्कारादीनां च तत्तद्रूपेण शक्यताप्रामाणिकत्वाच्च नामाशक्तिकल्पना नदोषाय धातुत्वन्तु न शक्ततावच्छेदकन्तदजानतो ऽपि बोधात् सर्वधातुभ्यः सर्वक्रियाबोधापत्तेश्च सकलेति अकर्मकाणामप्यंशद्वयाभिधायकत्वात् फलव्यापारयोर्वैयधिकरण्ये सकर्मकत्वं सामानाधिकरण्ये ऽकर्मकत्वं बोध्यम् । धातुवाच्येति । करोतिकर्त्तेत्यादौ तथा कृत्त्वादिति भावः । सामानाधिकरण्याभावादिति । असत्त्वभूतक्रियायाः सत्त्वार्थकयुष्मदादिसामानाधिकरण्यासम्भव इति भावः तिङ्वाच्येति तिङ्नुक्तेत्यर्थः लिङ्गाद्यनन्वयित्वं सर्वनामपरामर्शायोग्यत्वं वा ऽसत्त्वं औत्सर्गिकत्वेनेति एकवचनमित्येवसूत्रमुत्सर्ग इति भावः परे तु क्रियायामेकत्वमस्त्येव एका क्रियेति कृपवादिसूत्र स्थभाष्यात् एवञ्च तस्य प्रकृत्यर्थे ऽन्वयात् एकवचनं द्वित्वादिकं स्वोत्तरतिङ्वाच्यकारकगतं तत्रारोप्यते इति कर्तृकर्मतिङ्षु द्विवचनादिसिद्धिरिति तस्यान्वयः प्रकृत्यर्थ एव यथा हतशायिकाः शय्यन्त इत्यादौ हतशयनसदृशा निशयनानीत्यर्थके उपमाने बहुत्वोपादानसामर्थ्येनोपमेये तिङर्थक्रियारूपे उपमानगतबहुत्वारोपेण बहुवचनं तद्वत् तिङ्वाच्यकारकगतया एवारोपो नान्यकारकगतायाः इत्यत्रार्थशक्तिस्वभाव एव बीजन्तदुक्तं हरिणा एकत्वे ऽपि क्रियाख्याते साधनाश्रयसंख्यया भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रय इति न च प्रथमपुरुषोपि न स्यात् तस्यापि शेषसामानाधिकरण्यनियतत्वादिति वाच्यं शेषग्रहणन्त्यक्त्वा प्रथमस्य उत्सर्गत्वकरणेन तत्सिद्धेः तव तत्रैकवचनवत् एकवचनमित्युत्सर्गेण तु अन्यप्रकारेणोक्तरीत्याः ख्यपेक्ष्य इव सर्वैकवचनापत्तेः स्पष्टञ्चेदं युष्मदीति सूत्रे भाष्ये इति वदन्ति । स्यसिच्,

अत्र यथासंख्यं नास्वरितत्वात् उपदेशे इत्यच एव विशेषणं नान्येषामव्यभिचारात्तदाहोपदेशे य इति अजिति पृथक्पदं लुप्तविभक्तिकं सौत्रो वा समास इति भावः इड्विधायके स्यादीनामिति विभक्तिविपरिणामः अङ्गस्य तु नेट् भाष्ये आर्द्धधातुकस्येति योगं विभज्य यावानिट् स आर्द्धधातुकस्यैवेति परिभाषणात् लक्ष्यानुरोधाच्च चिण्वदिति सप्तम्यन्तावृत्तिः उपमेये सप्तमीदर्शनाच्चिण्वद्भावो ऽत्र प्रधानमिट्तु चेन तत्सन्नियोगशिष्टः भावकर्मणोरिति न स्यादीनां विशेषणं सीयुटोभावकर्मवाचित्वेऽपि स्यसिच्तासीनान्तत्वाभावात् नापि भावकर्मवाचिनिप्रत्ययेपरे ये स्यादय इत्यर्थः स्यादीनान्तादृक्प्रत्ययपरत्वसम्भवे ऽपि सीयुटो ऽसम्भवात् आममविशिष्टे प्रत्ययत्वार्थवत्त्वाद्यङ्गीकारात् अतो विषयसप्तमीत्याह गम्यमानयोरिति चिण् भावकर्मणोरिति चिणते इत्यतस्ते इति चानुवर्त्तते पुनश्चिण्ग्रहणन्तु न रुध इति निषेधाननुवृत्तये इत्याहुरिति अत्रारुचिबीजन्तु साहचर्याश्रयणे दृढामानाभावः ननु ण्यन्तस्योपदेशाभावात्तत्र चिण्वदिट्न स्यात् उपदेशे यो ऽच् तदन्ताङ्गस्येत्यर्थे ऽपि आरितास्मारितेत्यादौ नित्यत्वाद्गुणे रपरत्वे च चिण्वदिण्न स्यात् न हि रान्तस्योपदेशे यो ऽच् तदन्तत्वमस्तिभूनीप्रभृतीनाङ्गुणे उपदेशे योच् तदन्तत्वाभावाल्लोप एवेति चेन्न अतोलोप इत्यत्रैवार्द्धधातुकोपदेशे यदजन्तमित्यर्थनादोषात् तत्रैवाचाप्यावृत्त्या सीयुड्विशेषणत्वमपि कधातोस्तदुपदेशे ऽजन्तत्वं व्यपदेशिवद्भावेन बोद्ध्यं तयोऽनुता वादचः कर्मकर्त्तरीत्यतः कर्मकर्त्तरीत्यनुवर्त्तते चिणते इति सूत्राच्चिणीति न रुध इत्यतो नेति च वर्त्तते भावे वा लुङित्याह पापेनेति अविचार्यकर्मकृत्वा पश्चादशोचीत्यर्थः कर्मकर्त्तरत्तूदाहरिष्यते अचिण्णलोरिति प्रसज्य प्रतिषेधे चिण्वद्भावेन निषेधः पर्युदासे ऽपि न दोषः । अतिदिश्यमानधर्मविरुद्धस्वाश्रयस्यातिदेशस्वाभाव्येनानङ्गीकारादिति भावः घानिष्यत इति ऋद्धनोरिति बाधित्वा नित्याच्चिण्वदिट् वलीति हि तत्र वर्त्तते नन्वार्द्धधातुके इत्यादेर्विषयसप्तमीत्वेन वधादेशस्यान्तरङ्गत्वेन चिण्वत्त्वं बाधित्वा स एव स्यादत आहाशीर्लिङीति अपवाद इति वाक्यार्थबोधवेलायां बाधकाभावेन हन्तेरपि सीयुटासंबन्धेन तस्य निरवकाशात्पश्चाल्लक्ष्यसंस्कारवेलोपस्थितबधबाधस्तेन न्याय्यः सीयुट् तु तदविषये चरितार्थ इति भावः परे तूभयाचापि द्वन्द्वनिर्देशासमुदायस्य समुदायेन संबन्धो न्याय्यो न तु प्रत्येकं चतुर्णां संबन्धः शब्दाल्लभ्यते एवञ्च न निरवकाशत्वमत एव भाष्ये विप्रतिषेध उक्तः वधिभावात्सीयुटि चिण्वत्त्वं विप्रतिषेधेनेति चिण्वद्भाववाक्येपि स्यादिष्विति विषयसप्तमीति भाष्याशय

इत्याहुः । अदर्शिपातामिति न दृश इति निषेधात् क्लेः क्सेन सिचःक्त्वा-
दिति लिङ्सिचावात्मनेपदेष्वित्यनेन लत्वमचिविभाषेत्यनेन ढत्वं विभाषेट
इत्यनेन द्वित्वत्रयम् । मस्य ढधयोश्चानचीति वस्य यणोमय इति त्रयम् ॥
ढत्रमानामिति अचोरहाभ्यां यणोमयो ऽनचिचेत्येतैः नस्थानिवदिति आभी-
यासिद्धत्वन्तु न व्याश्रयत्वादिति भावः । भाष्येत्विति । नपदान्तसूत्रस्थे इत्यादि
नन्वेवं ण्यन्ताण्णौ दीर्घविकल्पानापत्तिर्व्यवधानादत आह णावितीति
नपदान्तसूत्रस्थभाष्यापेक्षया प्रकृतसूत्रस्थं णिज्व्यवेतानां यङ्लोपे चोपसं-
ख्यानमिति वार्त्तिकस्य स्थानिवत्त्वनिषेधेन प्रत्याख्यानपरं भाष्यं दुर्बलं प्रका-
रान्तरेणापि प्रत्याख्यानसम्भवादित्यभिमानः प्रकृतसूत्रस्थे कर्मणीङिति सूत्र-
स्थे च भाष्ये ऽत्रापि दीर्घस्थानिवत्त्वनिषेधो ऽत एव दीर्घग्रहणञ्चरितार्थ-
मित्युक्तं तत्प्रामाण्याद्वरेयलोपस्वरवर्जन्द्विर्वचनादीनि न कर्तव्यानीति
वार्तिके वर्ज्यकोटौ दीर्घो ऽप्युपलक्षणीयो हेडधातुश्च घटादावसांप्रदायिकः
ण्याकृतिनिर्देशस्य वक्तुमशक्यत्वञ्चोपपादितं प्राक् किंच भिन्नो यङ्लुक्-
सत्वे वार्तिकवैयर्थ्यापत्त्या तदनभिधानावश्यकत्वेन यङ्लोपेत्यंशस्य प्रत्या-
ख्यानासम्भवः.दीर्घे नस्थानिवदित्यंशस्त्रैपादिकपर इत्यभिमानेन वचनार-
म्भस्तदभिमानत्यागेन भाष्यकृत उत्तरमिति नमे कश्चिद्दोषः तदाशय
इति नपदान्तसूत्रभाष्याशय इत्यर्थः निर्देशइत्युत्तरं दीर्घग्रहणञ्चेदं मा-
स्त्वित्यपाठः हेडेर्घटादौ पठिताच्चिणि अहिडि अहिडीति रूपार्थन्तत्सत्वात्
ह्रस्वविकल्पेत्वहेडीति स्यात् इदं कैयटादौ स्पष्टं भाष्यरीत्या तु स्थानिव-
त्त्वनिषेधायैव दीर्घग्रहणमावश्यकमित्याहुः शामिष्यत इति स्यादीना-
ञ्चिण्वत्वाद्दीर्घे शम्यते मुनिनेति अकर्मकत्वाद्भावेलः नोदात्तोपदेश उपदेशे-
त्यनेन शमीत्यादौ घिनुणि वर्ज्यमामानस्वरेणानुदात्तत्वे ऽपि निषेधः
अनाचमीति यद्यपि भाष्ये आङ्रहित एव पठ्यते तथाप्याचाम इत्येव भाष्ये
उदाहरणादाङ्पूर्व एव पर्युदस्यत इति भावः विभाषाचि लभेश्चेत्यतो लभेरिति
वर्त्तते प्रादेरित्युपसर्गोपलक्षणं भाष्यस्वरसात् तत्र हि उपसर्गात्खल्घञोरित्यत
उपसर्गादित्यनुवर्त्य नसुदुर्भ्यामित्यतोनेति चानुवर्त्योपसर्गात्परस्य लभेर्विभा-
षानेति व्याख्यातं चिण्णमुलोरनुपसर्गस्येति वक्तव्यमिति वचनमेववार्त्तिक-
कृता कृतन्द्विकर्मकेषु लादीनां व्यवस्थामाह द्विकर्मकाणान्त्विति । दुह्यादेरि-
त्यनेनाकथितञ्चेति सूत्रविषयाणां ग्रहणम् । प्रधाने इति एतेन तेषां दुह्या-
दिपाठो ऽसङ्गत इति दर्शयति अन्येषाङ्गत्यर्थाकर्मकहृकरोतीनां एतद्वाचनि-
कमेव स्पष्टं चेदमकथितञ्चेति सूत्रे भाष्ये एतदप्यनेकसन्निधौ तदभावे तु
मुख्ये ऽपि भवति गवादोग्धव्यं पय इत्यादि तदुक्तमकथितञ्चेति सूत्रे भाष्ये

गुणकर्मणि लादिविधिः स परे ध्रुवचेष्टितयुक्तिषु चाप्यगुणे अपरे आह प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां एयन्तेकर्तुश्च कर्मण इति उत्तरमते भाष्यादुक्तेयति स्तुर्यपादेगमिव्दाहृतः अकर्मकाणामिति लः कर्मणीति सूत्रे निर्णीतमेतत् ॥ इति भावकर्मप्रक्रिया ॥

न विवक्ष्यत इति । तत्तत्कारव्यापारश्च प्रधानधात्वर्थत्वेन विवक्ष्यत इत्यपि बोध्यं कर्मणाऽस्त्विति फलसमानाधिकरणतद्व्यापारस्यैव प्राधान्येन विवक्षायामित्यर्थः प्रायेणाकर्मका इति व्यापारव्यधिकरणफलाश्रयस्याभावादिति भावः । द्विकर्मकाणां कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वात्प्रायेणेति अकर्मकत्वफलमाह तेभ्यो भावे इति क्रियायाः कर्मणासाधनेन तुल्यत्वासम्भवात्कर्मशब्दस्तत्स्थक्रियालक्षकः मञ्चाः क्रोशन्तीतिवत् तुल्यक्रिया इति बहुव्रीहिः कर्मसञ्ज्ञक इत्याशङ्कावारणायवतिः तादृशे ऽर्थे हि सकर्मकत्वाद्भावे लो न स्यात् कार्यातिदेश इति प्राधान्यादिति भावः न च कार्यातिदेशेप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति भाष्यसम्मते पक्षे परत्वाच्छप् परस्मैपदेएव स्यातां न तु यगात्मनेपदे इति वाच्यं नदुहस्नुनमां यक्चिणौ कुषिरजे।रित्याद्यारम्भसामर्थ्येन परमपि बाधित्वा तयोरति देशात् तदाह तेनेत्यादि द्वितीयास्यादिति नचोक्तरीत्या परत्वात्तृतीयापत्तिः द्वितीयापत्तिः द्वितीयेत्यनेन कृत्यादेरुपलक्षणेनादोषात् कार्यातिदेशे ऽतिदेश देश एव देश इति मते मूलमित्यन्ये अतिदेशेन स्वनिष्ठाकर्मकत्वस्यानिवारणेन भावे लो न स्यादिति न शङ्क्यं यदि तु अतिदिश्यमानविरुद्धस्वाश्रयाभावो ऽतिदेशस्वभावस्तदा सोपि दोषो बोद्ध्य इति केचित् । लकारवाच्य इति तत्र तस्य विधानादिति भावः द्विलकारकादिति सूत्रनिर्देशो वान्यपदार्थः ल इतीति अनेन तस्य लुप्तषष्ठ्यन्तत्वं दर्शयति कृत्यक्तेति इदमुपलक्षणं कतीहभिन्दानाः कुसूला इत्यत्र चानशिनकर्मवत्त्वामिति नयगित्यपि बोध्यं क्तेन निष्ठेति सूत्रविहितः कर्मार्थको गृह्यते तेनाकर्मकत्वप्रयुक्तः कर्तरिक्तो भवत्येव अत एव सिनोतेर्ग्रासकर्मकर्तृकस्येति सङ्गच्छते तेन परशुभिन्नः कुसूल इत्यादौ तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरस्याभावसिद्धिः ॥ एतेन सृजस्यात्मानमात्मनेत्यादावविवैपाधिकभेदमाश्रित्य स्वयमित्यस्यात्मनेत्यर्थात्कर्तृत्वे नोदनस्य कर्मत्वान्मुख्य कर्मण्येवप्रत्ययो ऽस्तु किमतिदेशेनेत्यपास्तङ्गादीनामप्यापत्तेर्निवृत्तप्रेषणतायां साध्वसिद्धिनतीति वत्यचत्योदन इत्यस्यापत्तेश्च नमते दण्ड इत्यादौ यक्चिणोः प्रतिषेधे शप्चङोरनापत्तेश्च क्वचिन्मज्यमानं स्वयमेवेति तु कर्त्रन्तराभावप्रतिपादनपरमिति दिक् व्यवहार इति उपपादितमेतत् प्रत्यासत्त्या समानधातौ कर्मस्थक्रियया तुल्यक्रियत्वाश्रयणात्पचत्यो-

दनं देवदत्त इत्यत्र कर्मणो राध्यत्योदन इत्यत्र कर्तृत्वेपि न कर्मवत्त्वमिति बोध्य-
म्। ननु करणत्वाद्यवस्थायां वस्तुतः सत्त्वासिस्थाल्योर्व्यापारो न धातुनोपात्तः
प्रकृत सूत्रे च धातोरेकाच इत्यतो धातोरित्यनुवर्त्य धातोर्वाच्यया क्रियया तुल्य-
क्रिय इत्यर्थो ऽतो नायं दोषो ऽत आह क्रियेति । कर्मणेत्येतत्सामर्थ्यात्
दृश्यमानकर्मनिष्ठविशेषप्रयोजककर्मस्थक्रियालभ्यत इति भावः । नेतरत्रेति ।
राजदर्शन ग्रामगमनादौ कर्तर्येव हर्षश्रमादिलक्षणविशेषदर्शनात्कर्तृस्थेत्येव व्य-
वहार इति भावः । उत्पादनार्थ इति । उत्पत्त्यनुकूलव्यापारार्थः । उत्पत्ति-
फलको यत्नो वाच्य इति तु न युक्तं बीजेनाङ्कुरः कृत इत्यनापत्तेः । एतेन,
ज्ञानस्य कर्तृस्थत्वेन । नत्वात्मनेपदमिति । शानजित्यर्थः । यगात्मनेपदयो-
स्त्वनुव्यवसीयमाने इति स्यादिति भावः । अन्योन्यं स्पृशत इति । अयं
भावः कर्मपदेन तत्स्थक्रिया लभ्यते न तु कर्मत्वोपयोगिनी तत्स्था क्रिया माना-
भावात् एवञ्चान्योन्यमित्यादावुभयोः शब्दभेदेन कर्तृत्वकर्मत्वसत्त्वाद्यदैवैक-
स्मिन् संयोगानुकूलक्रियासंयोगो वा सैवापरस्मिन्कर्तरीति कर्मस्थक्रियया तुल्य
क्रियकर्तृसत्त्वात्प्राप्तिः। आश्रयभेदाद्भेदेन च तुल्यत्वाव्याघातः । यद्यपि इमौ
गङ्गां स्पृशत इत्यत्र कर्तृस्थः स्पर्शस्तथापि प्रकृते कर्मणोस्तयोरन्योन्यसंयोगकृ-
तहर्षादिलक्षणविशेषदर्शनात्कर्मस्थः स इति । अजामिति । इदन्तु चिन्त्यं
गमनानुकूलव्यापाररूपेणाजानिष्ठफलेन नेतृव्यापारेण वा तत्र विशेषादर्शनेन
कर्मस्थक्रियत्वाभावात् यदि ग्रामसंयोगस्तथेत्युच्यते तर्हि ग्रामङ्गच्छतीत्यादौ
ग्रामे ऽपि पुरुषसंयोगरूपविशेषदर्शनाद्गम्यर्थस्यापि कर्मस्थत्वं स्यात् अत एवा-
न्योन्यमाश्लिष्यत इत्येवभाष्ये उदाहृतम् । दुहिपच्योरिति । अनयोर्द्विकर्मक-
तयैकस्य कर्मणः कर्तृत्वेप्यपरेण सकर्मकत्वादप्राप्ते वचनं द्व्यर्थत्वात्पचेस्तण्डु-
लानोदनं पचतीति वद्द्विकर्मकत्वं यद्वा वृक्षपाकमन्तरेण फलपाकासम्भवात्प-
रत्र विषये द्विकर्मकः कालस्तु तदा कर्ता बहुलग्रहणं नेह पक्षे परस्मैप-
दार्थन्तस्याचानिष्ठत्वात् । विकल्पेनेष्यत इति । दुहेश्चेत्यनेनेति भावः ।
कर्मकर्तरि तशब्दे परे दुहेश्चिण्वेति तदर्थः । गौः पय इति । अप्रधानगोरू-
पकर्मण एव तथा विवक्षानान्यस्येति भावः । गौः पयस्त्यजतीत्येतदर्थः ।
अचःकर्त ॥ चिणते इत्यतश्चिणिति दीपजनेत्यतो ऽन्यतरस्यामिति चानुव-
र्तते इदञ्च सूत्रमत्रास्थानेपतितं करोति प्रसङ्गेतूचितम् । अत्रोपपन्नइति ।
स च मुख्यकर्तैवेति तत्रात्यन्ताप्राप्तकर्मवद्भावार्थं युजेस्तु कर्मकर्तरिसकर्मक-
त्वेन प्रतिप्रसवविध्यर्थं युज्यते । ब्रह्मेति । योगीब्रह्मचारिणं युनक्ति संबन्धा-
नुकूलव्यापारवान् भवतीति पूर्वकक्षा ततो युजेः प्रतियोगित्वावच्छिन्नसंब-

ब

न्यार्थकत्वे ब्रह्मचारिणः कर्तृत्वं प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वं बोध्यम् । मूषाकर्मेति । कर्मशब्दः क्रियापरः यद्यपि मूषावाचिण्यन्तेषु णिश्रीत्यनेन यक्चिणोः प्रतिषेधः सिद्धस्तथापि चिण्वदिड्भावायेदम् । अन्यत्रात्मनेपदादित्युक्तेस्तयाणामपि निषेध इत्याह यगित्यादि । अवकिरते इति । कश्चित्परश्वादिना हस्तिनमवकिरतीति पूर्वकक्षा । कृ गृ वृ धृ प्रच्छः किरादयः । तत्राद्ययोः कर्मस्थक्रियतयात्मनेपदव्यतिरिक्तनिषेधार्थमन्येषां कर्तृस्थक्रियत्वेनात्मनेपदविद्ध्यर्थमिदम् । विध्यर्थमिदमिति । अयंभावः । उपवासादि तपस्तापसन्तपति दुःखयतीत्यर्थः एवञ्च तापसस्य कर्मत्वे तपेर्दुःखजननमर्थः कर्तृत्वेत्वर्जनमर्थस्तापसस्तपस्तप्यते ऽर्जयतीत्यर्थः एवञ्च क्रियाभेदात्सकर्मकत्वाच्चाप्राप्तेर्विधिरिति वृत्त्यनुसारिण इति, भाष्ये त्वेवकारसामर्थ्यान्नियमार्थत्वमुक्तं तत्र हि सकर्मकाणां प्रतिषेधो वक्तव्य इत्यस्य प्रत्याख्यानाय तपेर्वा सकर्मकस्य वचनं नियमार्थन्तपेरेव सकर्मकस्य नान्यस्येति तपेरिति योगविभागेनायं नियमः तस्य च तपःकर्मकस्यैव कर्ताकर्मवदिति तेनेह न उत्तपति सुवर्णं सुवर्णकारः उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपतीत्युक्तं तस्यायं भावः। यद्यप्युपवासादिरूपन्तपस्तापसन्तपतीत्यत्र तपिर्दुःखार्थः तपस्तं दुःखयतीत्यर्थात् । तापसस्तप्यत इति । तापसस्य कर्तृत्वे ऽर्जनार्थस्तापसस्तदर्जयतीत्यर्थात् एवञ्च कर्मस्थक्रियया तुल्यक्रियत्वस्य कर्तरि अभाव इति न कर्मवद्भावप्राप्तिस्तथापि शरीरसन्तापलक्षणायाः क्रियाया अवस्थाद्वये ऽपि तुल्यत्वात्तत्प्राप्तिः। तथा हि तपस्तापसन्तपतीत्यत्र ज्ञानजनकोपवासादिरूपसन्तापविशेषः तापसन्तापयतीत्यर्थः अन्तर्भावितण्यर्थो ऽत्र तपिः तापसवृत्तिशरीरसन्तापसामान्यानुकूलव्यापारानुकूलव्यापारः सन्तापविशेषवृत्तिरिति बोधः। तदनुकूलव्यापारश्च सन्तापविशेषे स्वरूपावस्थानरूप एव सन्तापे शरीरसन्तापसामान्यानुकूलव्यापारविशेषः स्वीकार एव ण्यर्थत्यागे तापसस्य कर्तृत्वन्तापसस्तपः इत्यत्र सन्तापविशेषाभिन्नशरीरसन्तापानुकूलव्यापारस्तापसकर्तृक इति बोधः सव्यापार एव चार्जनं तत्र क्रियाविशेषणत्वात्स्तोकमेधत इत्यादाविव तपसः कर्मत्वं भाष्यप्रामाण्यादेवसामान्यविशेषभावेनान्वयिनि क्रियाविशेषणे तापसेन तपस्तप्यत इत्यादौ कर्मणिलकारोभवत्येवेति बोध्यन्तदुक्तं भाष्ये यथागोपोषमपुषदित्यादौ समान्यपुषेरवयवपुषिः कर्म एवन्तापसेन तपस्तप्यत इत्यादौ सामान्यतपेरवयवतपिः कर्मेति अवयवतपिरित्यस्य विशेषतपिर्ज्ञानजनकोपवासादिरूपन्तप इत्यर्थः अत एव कर्मणि लेः कः प्रत्ययार्थ इति प्रश्ने स एव संताप इति भाष्ये उक्तम् । प्रस्नुते इति । प्रस्नवनानुकूलोत्कण्ठोत्पादनं धात्वर्थः । प्राक्षोष्टेति । दुहस्नोरिति नियमाद्दुलादिलक्षण

दृश् न । केवलनमतेरकर्मकत्वादाह अन्तर्भावितेति । चिरखदिट् त्विति । बीजमेतत् । बूते कथेति । उच्चारणेनशब्दे प्राकृत्यरूपविशेषदर्शनात्कर्मस्थ-उक्तक्रियत्वमस्येति बोद्ध्यम् । णिश्रन्थि । अत्र कर्मकर्तृत्वं विना ये ऽकर्म-कास्ते आत्मनेपदाकर्मकशब्देन गृह्यन्ते कर्मकर्तृत्वेनाकर्मकत्वस्याव्यभिचरित-त्वात् तेषामन्तर्भावितण्यर्थत्वेन सकर्मकतां कृत्वा पुनः सौकर्यातिशयवि-वक्षायां कर्मकर्तृत्वं बोद्ध्यम् । उदपुपुच्छतेति । पुच्छमुदस्तवानित्यर्थः । व्यकारिष्टेति । चिणिनिषिद्धे ण्यन्तत्वाभावाच्चङभावे सिचि चिरखदिटि वृद्धिः तदभावपक्षे आह व्यकृतेति । ह्रस्वादङ्गादिति सिचो लोपः ॥ इति कर्मकर्तृप्रक्रिया ॥

लकाराणां कालविषये उत्सर्गापवादशास्त्राण्याह । अभिज्ञा ॥ भूत इत्यधिकारः अनद्यतनेलङित्यतो ऽनद्यतन इति वर्त्तते। एवं बुध्यसे इत्यादि। अत्र मानं दृढं चिन्त्यम् । अभुञ्ज्महीति । अभिज्ञेति लृटो ऽनेन निषेधे औत्सर्गिकोलङ् । साकाङ्क्षइति । विद्यमानाकाङ्क्षे इत्यर्थः तेनाकाङ्क्षानिवृ पक्षे तद्विषये च सिद्ध्यति । वत्स्याम इति । लक्ष्यलक्षणभावस्य विवक्षितत्वा-त्साकाङ्क्षतावोद्ध्या। लक्षणं ज्ञापकं लक्ष्यं ज्ञाप्यम्। परत्वादिति । तेनोभयत्रवि-भाषैर्यमिति भावः । चित्तविक्षेपादिनेति । आदिना स्वीयमनो ऽसन्निधाना-दिसङ्ग्रहः । अत्यन्तेति । अपरोक्षार्थमिदन्तद्वेशगमनोत्तरकालिकवासप्रश्ने तत्कारणगमनस्यैवापलापादत्यन्तापह्नव उदाहरणे बोद्ध्यः अबाधितपरोक्षवि-परीतबोधनाय तदुपपादकाभावप्रतिपादनमत्यन्तापह्नवः अत्र कलिङ्गवासा-द्युपपादकं कलिङ्गगमनादितेन विना तदसम्भवात् । नाहं कलिङ्गान् जगामेत्येव पाठः जनपदवाचिनो नित्यबहुवचनान्तत्वात् । प्रश्ने चासन्न ॥ प्रश्नविषयीभूतासन्नकालिकभूतानद्यतनपरोक्षार्थाद्धातोरित्यर्थः । यजति-स्मेति । स्मशब्दो भूतकालद्योतकः । एवंस्मेति । एवंशब्दो ऽपरोक्षत्वद्यो-तकः । ननौपृष्ट ॥ पृष्टग्रहणं वचनंवचनं प्रतीत्याद्यर्थसम्भावनावारणाय यदा भ्रमादिदर्शनेन तत्क्रियानुवृत्तिमारोप्य वर्त्तमानेलट् तदा ननु कुर्वन्तं पश्येति शत्रादिभवति सूचन्तु तदनारोपे भूतत्वविवक्षायां लुङ्बाधनाय शता ऽनन्तरस्येति न्यायात् । वर्तमानेलडिति । विहितस्यैवेति स्पष्टमाकरे । नन्वोः ॥ अनयोर्योगे भूतसामान्ये पृष्टप्रतिवचने लड्वित्यर्थः पक्षेलुङ् अनद्यतने तु लङेव । अनुवर्त्तते इति । यदि भूते एव स्यात् लुङ्ग्रहणमनर्थकं स्यादिति भावः । यथा प्राप्तमिति । लङित्यर्थः । पारोक्ष्ये तु लिडेव । अनुवर्तमाने इति । भविष्यति गम्यादय इति सूत्रात् । किंवृत्ते ॥ किमा वृत्तं निष्पन्नं तस्मिन्नुपपदे इत्यर्थः तेच कः कतरः कतम इति त्रय एवेति वृत्तिः यद्वृत्ता-

चित्वमिति सूत्रस्थभाष्यरीत्या सर्वेकिंवृत्तग्रहणमित्यन्ये उदाहरणे तादृशप्रश्नेन प्रष्टुर्लिप्सागम्यते उत्तरसूत्रोदाहरणेपि तादृशप्रयोगेण वक्तुर्लिप्सा गम्यते अत्र किं वृत्तग्रहणान्तु लिप्स्यमानसिद्धिरहितायां लिप्सायामकिंवृत्ते लटोनिवृत्त्यर्थम् । लोडर्थ ॥ लोडर्थे प्रैषादिविषयधात्वर्थलक्षणे इत्यर्थः । कृष्णभोजनं प्रैषविषयगोचारणस्य लक्षणं बोद्धम् । ऊर्द्ध्वमिति द्वितीयान्तमकर्मकधातुयोगे कालादीनां कर्मत्वोक्तेः ऊर्द्ध्वमिति दिक्शब्दयोगे मुहूर्तादिति पञ्चमी तद्धितार्थेत्यत्र दिक्संख्ये इत्यनुवर्तनात्समानाधिकरणाधिकाराच्चेह समासो दुर्लभो ऽत आह निपातनादिति । भवार्थे कालाट्ठञ् । स्वार्थे ष्यञिति । चातुर्वर्ण्यादित्वात् । ननु करणस्यानर्थमाह येनोपाधिनेति । आशंसायां । अप्राप्तप्राप्तीच्छा आशंसा तस्यावर्त्तमानत्वपि तद्विषयस्य वर्षादेर्भविष्यत्वाद्भविष्यतीत्युक्तं आशंस्यमानक्रियावाचकाद्धातोरित्यर्थः । देवश्चेदिति । वृष्टिचापयोरुभयोरप्याशंसाविषयत्वादुभयत्रापि लकारः । पूर्वविषये इति । आशंसायामित्यर्थस्तेन तदपवादोयन्तदाह नेतीति । न भूतवदिति । नापि वर्त्तमानवदित्यपि बोध्यं अस्याशंसायामित्येतदपवादत्वात् क्षिप्रप्रयोगेपि परत्वादिदमेवेत्याहाशंसे क्षिप्रमिति । नानद्यतनवत् ॥ प्रबन्धः सातत्यम् । लङ्लुटौ नेति । भूतानद्यतने लङ् न भविष्यत्यनद्यतने लुट् नेति भावः । सामीप्यञ्चात्र कालकृतं तच्च प्रयोगकालापेक्षया कालस्य सामीप्यन्तुल्यजातीयेनाव्यवधानं देशसामीप्येयं देशो ऽतिक्रान्त आगामीवार्तास्मिन्नाधित आधास्यत इत्युदाहरणमिति केचित् । भविष्यतिम ॥ अक्रियाप्रबन्धार्थमसामीप्यार्थञ्चेदं यद्यपि भाष्ये ऽक्रियाप्रबन्धार्थमिदंक्रियाप्रबन्धार्थत्वे वचनानर्थक्य सिद्धं क्रियाप्रबन्धेपूर्वेणैवेत्युक्तं तथापि तद्सामीप्यस्याप्युपलक्षणमिति कैयटः असामीप्ये एतद्विषयोदाहरणानभिधानमित्यन्ये अभविष्यति अमर्यादायां परस्मिन्नहोरात्रविभागे वा क्रियाप्रबन्धेनानद्यतनवदिति पूर्वसूत्रमेवेष्यत इति भाष्ये स्पष्टम् । भविष्यति किं योयमध्वा ऽतिक्रान्त इत्यादौ सक्तूनपिबामेत्येव । मर्यादेति किं योयमध्वागन्तव्यो निरवधिकस्तस्य यदवरं साकेतादित्यादौ यातास्मेत्येव । अवरस्मिन्निति किं तस्य यत्परमिति प्रयोगे पातास्मेत्येव यथास्यादिति । कालवि ॥ कालकृतमर्यादोक्तावपरविभागे सतीत्यर्थः अहोरात्रसंबन्धिनीति अनहोरात्राणामिति शेषषष्ठी न कर्तरि नापि कर्मणीति भावः । मर्यादावरयोरन्यतरस्मिन्नप्यहोरात्रसंबन्धिनिनेति तात्पर्यम् । प्रतिषेधार्थमिति । क्रियासातत्याद्यसत्वे इत्यर्थः तत्सत्वे ऽहोरात्रसंबन्धिनि विभागेपि नानद्यतनवदित्यस्येष्टेः तस्य यो ऽवरो पञ्चदशरात्र इति

बहुव्रीहिरच्प्रत्ययन्वचेति योगविभागात्समासान्तः पुंस्त्वं पक्षे ऽन्यपदार्थः पृषोदरादित्वात् मयूरव्यंसकादित्वाद्वासाधुत्वम् । परस्मिन् वि ॥ कालविभागेष्वेदमिति भाष्ये स्पष्टम् । वर्ज्यमिति । ण्यन्तात्कर्मण्यचेोयत् भूतेच ॥ पूर्वसूत्रमिति । अनुवृत्तपूर्वसूत्रकोऽयमधिकारः समानकर्तृकेष्विति यावत् उताप्योरित्यतः पूर्वन्तु वाग्रहणसंबद्धमेतदधिक्रियते तत्र गर्हायां लडपीत्यत्र नास्य संबन्धः लड्विधानेन तद्विषये लिङ्निमित्ताभावात् । गर्हायामिति । भविष्यतीत्यादिनिवृत्तं तदाह कालत्रये इति । परत्वादिति । उत्कृष्टत्वादनवकाशत्वादित्यर्थः । अत्र भविष्यतीति क्रियातिपत्तावित्यपि बोध्यं कथमोगर्हायाश्च लिङ्निमित्तस्य सत्वादिति भावः । किं वृत्ते ॥ कालत्रयेऽप्ता स्तः । लड्विति नोक्तं लड्वारणाय प्राग्वदिति भूते वा भविष्यति नित्यमित्यर्थः लिङ्निमित्त इति सूत्रमत्रानुवर्त्य वाक्यभेदेन संबध्यत इति भावः एतेन तद्विषयेऽपि परत्वादिदमेवोचितमित्यपास्तम् । अनवक्लृ ॥ एतयोर्विषये कालत्रये लिङ्लृटावित्यर्थः इह यथासंख्यं नेष्यते । प्राग्वदिति । भूतेवाभविष्यति नित्यमित्यर्थः । लिङोपवाद इति । पूर्वसूत्रेणोभयोः प्राप्तयोर्लङ्ग्रहणेन लिङो निवृत्तिरिति भावः अत्र लड्विति लिङोनिवृत्त्या एतद्युक्तानवक्लृप्त्यादेर्लिङ्निमित्तत्वाभावादिति भावः । यच्चयत्रयोः ॥ अयमपि लडपवादः योगविभागउत्तरत्रानयोरेवनुवृत्त्यर्थः लङ् प्राग्वत् । शेषेलङ् ॥ अत्र लङ् न यदि सोऽधीयीतेति जातुयदोरित्यत्र यदाद्योरित्युपसंख्यानाल्लिङ् । भूतेपीति । वाग्रहणस्य निवृत्तत्वाद्भविष्यतीवभूते ऽपि नित्यमित्यर्थः । कामप्रवेद ॥ सर्वलापवादः अकच्चित्तीत्यस्य कच्चिच्छब्दप्रयोगाभावे इत्यर्थस्तदाह नत्विति । कच्चिज्जीवतीति अयं प्रश्न एव कामप्रवेदनद्योतक इति भावः क्वचिच्छब्दस्येच्छार्थकत्वाभावादिच्छार्थेष्वित्यप्यत्र न प्रवर्त्तते । प्रोढिः क्रियायाः कृत्यसाध्यताविरहबोधनं संभावनं क्रियायोग्यताविषयोत्कटकोटिकंज्ञानं विपरिणम्यत इति आवर्त्य विपरिणम्यत इत्यर्थः तच्चेदिति । इमाङ्क्रियामनुष्ठातुं समर्थं इत्येवं रूपञ्चेतत्सम्भावनमिति भावः । अत्रापि लङ्प्राग्वत् । सिद्धाप्रयोगे इति । यत्र तत्प्रयोगं विनापि तदर्थो गम्यत इत्यर्थः । अपिगिरिमिति । सम्भावनस्य धात्वर्थविषयसामर्थ्यविषयताध्वनको ऽपि शब्दः क्वचित्प्रकरणादिकमपि तथेति बोध्यम् । सम्भावयामीति । भोजने भवान्शक्त इत्युत्प्रेक्षेत्यर्थः ॥ प्रत्युदाहरणे पूर्वेण लिङ् वा स्यादिति विभाषेति पूर्वसूत्रादनुवर्त्तते । इष्यतइति । लिङ्वर्त्तमाने पुर्नलिङ् ग्रहणादेतद्विशेषलाभः । हन्तीति । हननं हेतुः पलायनं कार्यं गर्हायां लडपीत्यतो भविष्यतीति निवृत्या कालत्रयेप्यते । प्रत्यथा इति । अत्र प्राप्तिः लङ्प्राग्वत् उपसंवादाशङ्कयोरपि

लिङ्बाध्यः उपसंवादः कर्तव्ये पणबन्धः यदिमेभवानिदं कुर्यादहमपि ते इदं दद्यामित्युदाहरणं अत्रावध्यवधिमद्भाव एवप्रतीयते न हेतुहेतुमद्भाव इति न हेतुहेतुमतोरित्यनेन सिद्धिः आशङ्कायामेवा तेन सर्पिषोपि स्यात्प्रासाद आसामिष्टकानां स्यादित्यादेः सिद्धिः स्पष्टं चेदमुपसंवादाशङ्कयोरिति सूत्रे भाष्ये। इच्छार्थेषु ॥ सर्वलापवादः लङ्प्राग्वत्। इच्छार्थं उपपदे इति सूत्रार्थः। कामप्रवेदनं स्वाभिप्रायाविष्करणं तच्च प्रयोक्तुरिति बोध्यं इदं न स्वतन्त्रं विधायकं किंतु सूत्रशेषभूतमन्यव्यावर्तकमेवातो व्यावर्त्यमेवदर्शयति नेहेच्छन्निति। विधिनि ॥ प्रवर्तनाविचारप्रार्थनाविषयार्थवाचकाद्धातोरित्यर्थः। प्रैषाति ॥ अनयोर्विध्यामन्त्रणाभ्यामभेदेपि निमन्त्रणादिषु कृत्य व्यावर्त्तये ऽत्र ग्रहणं प्राप्तकाले च कृत्याश्चेत्युक्ते हि तेष्वपि तेस्युः सामान्यविहितकृत्यानां प्रैषादिषु लोटाबाधामाभूदिति कृत्यविधिः। प्राप्तकालार्थमिति। प्रैषातिसर्गयोः पूर्वेण लोट् चेति सूत्रेण सिद्धत्वादिति भावः। लिङ् चो ॥ प्राप्तकालेऽप्राप्तकालस्य लिङोविधानार्थमिदमन्ययोर्विध्यादिसूत्रेण सिद्धेः चाक्षथाप्राप्तं लोट्च कृत्याश्च अन्यथा लिङातयोर्बाधः स्यात् मुहूर्तादूर्द्ध्वं यजनं प्राप्तकालमित्यर्थः। स्मे लोट् ॥ प्रैषादय ऊर्ध्वमौहूर्तिक इति चानुवर्तते यजतां स्मेति स्म शब्दो ऽधिकारसूचकोभवानत्राधिकृत इत्यर्थः। अधीष्टेति। लिङो ऽपवादः योगविभागादूर्ध्वमौहूर्तिक इति निवृत्तम्। लिङ्यदि ॥ कालसमयवेलास्वित्यनुवर्तते यद्भवान् भुञ्जीत तस्य काल इत्युदाहरणार्थः भावे परत्वात्तुमुनमयं बाधते सर्वलापवादोयं अर्हे कृ ॥ योग्ये कर्तरिगम्यमाने कृत्यादय इत्यर्थः। शकिलि ॥ भावे क्विप् शक्तौ गम्यमानायामित्यर्थः सर्वलापवादत्वाच्छक्नुते कर्यमिति माशब्द इति सूत्र सर्वलकारविषये ऽडाड्रहितलुङन्तप्रयोगार्थं वस्तुतः स नास्त्यव आङ्माङोश्चेति सूत्रभाष्ये तथा ध्वनितत्वात् धातुसंबन्धे प्रत्यया इत्युक्तेर्विधिरयन्धातुसंबन्ध इत्युत्तरत्राप्यनुवर्तते स्वरितत्वात् संबन्धस्य द्विष्ठत्वात् द्विवचनान्तेन समासः धातुशब्देन तदर्थो लक्ष्यते तेन गोमानासीद्भवितेति सिद्ध्यति तदाह धात्वर्थानामिति। द्विवचनान्तत्वमुचितं यत्र काले इति वर्तमानसामीप्यइत्यादष्व कालान्यत्वप्रतिपादनस्यैवदर्शनादिति भावः नन्वेवं वसन् ददर्शेत्यादौ भूतेर्लडिववर्त्तमाने लिडित्यपि स्यादत आह तिङन्तेति। भूते लडिति। अयं भावः। अनेन प्रयोगे श्रूयमाणानां कालान्तरे विधानं क्रियते एवञ्च भूते शतुः साधुत्वे बोधिते ऽर्थापत्यातदर्थको लडपि कल्प्यते एतेनानेन लट्यपि पुनरेतद्व्यापारे मानाभावाच्छतादुर्लभ इत्यपास्तं भाष्यकृतस्तु भाविकृत्यमासीज्जनिष्यमाणः पुत्र आसीदित्यत्र भाव्यादिशब्दे ऽनेन

प्रत्यये आसीच्छब्दपर्यायतया युगपत्प्रयोगानुपपत्तिः यद्वियन्तंकालं भावित्वा-
दिना व्यवहृतं तदासीदित्यन्वयस्तर्हि ज्योतिष्टोमयाजीत्येवं व्यवहरिष्यमाणो
भवितेत्येवमत्रापि बोधसम्भवाद्गोमानासीदित्यत्रा ऽपि गोमानित्येवं व्यवह-
रिष्यमाण आसीदिति बोधसम्भवाद्गोमद्रूपस्यातीतत्वाद्वा भूते प्रत्यये ऽर्था-
द्भवामप्यतीतत्वप्रत्ययसम्भवात्सूत्रं व्यर्थं वसन् ददर्शेत्यादौ च दर्शनकालिकं
वासस्य वर्तमानत्वं बुद्धिस्थीकृत्य प्रत्ययस्तत्फलञ्च तत्समानकालत्वप्रत्ययो-
दर्शने शतृस्थले क्रिययोः समानकालत्वप्रतीतिः ननु चोत्पततैव वचनलोपश्चो-
दिताः स्म इति सरूपसूत्रस्थभाष्यप्रयोगस्याप्येवमेवोपपत्तिरित्याहुः । क्रियास-
मभिहारे । धातुसंबन्धइति वर्तते क्रियासमभिहार इत्येतत्प्रकृत्यर्थविशेषणं
तद्विशिष्टक्रियावाचकाद्धातोर्लोट् सर्वलापवादस्तदाह द्योत्ये इति । तस्येति ।
लोट इत्यर्थः यदि तिबादीनां स्थाने स्यातान्तदा स्थानिवद्भावेन पित्वाल्लुनी-
हीत्यादावत्वादि न स्यादिति भावः । तौचेति । लोडित्यनुवर्त्य हि स्वौ लोडा-
देश हिस्ववदित्यर्थे इति भाव उक्तातिदेशबलादेवाह तिङ्सञ्ज्ञौ चेति । तेन
पदत्वसिद्धिः उक्तातिदेशबलादेवसार्वधातुकत्वात् ईशिध्वेशिध्वेन्येवायमीष्टे
इत्यत्रेशः से इत्यस्य प्रवृत्तिः ननु वाचतध्वमोरिति वाक्यशेषासङ्गतिः तिङां
हिस्वाभ्यां बाधेनतध्वमोरभावादत आह तध्वमोर्विषय इति । विषयसप्तमी-
येति भावः तशब्दो मध्यमबहुवचनमेव व्याख्यानात् । हिः कर्तरीति । कत्रांद्य-
र्थश्च कालसंख्यावदनुप्रयोगगम्यैवनिर्णेयाः एवञ्च कर्तरीत्यादेः कर्त्राद्यर्थकानुप्र-
योगे इत्येवार्थः भावकर्मार्थकानुप्रयोगे परस्मैपदिभ्योपि स्व इति युक्तम् । समुच्च-
यन्य ॥ अत्र समभिव्याहारपठितं पूर्वसूत्रं संपूर्णमनुवर्त्तते समुच्चीयमानक्रिया-
वृत्तेर्धातोरित्यर्थः अत एव कारकसमुच्चये नास्य प्रवृत्तिः विकल्पस्य लोटैवा-
न्वयो न तु हिस्वाभ्यां व्याख्यानात् । यथाविध्यनु ॥ अस्य व्यवहितादिप्रयोगेपि
लुनीही लुनीहीत्येवायं लुनातीति भाष्यप्रयोगात् । समुच्चयेसा ॥ सामान्यव-
चनत्वं समुच्चितार्थबोधकधात्वपेक्षयैवोपस्थितत्वात् तत्वञ्चानुप्रविष्टसमु-
च्चितधात्वर्थकत्वं अस्तिचाभ्यवहरतीत्यस्यानुप्रविष्टखादनपानादिरूपार्थबोध-
कत्वन्तेनोभयार्थगतसंख्यापुरुषकालाद्यभिव्यक्तिः । द्वुवाच्ये इति । इदमाद्यसूत्र-
विहितलोडन्तविषयमेवेति अत्रैव प्रकरणे भाष्ये स्पष्टं लवनादीत्यादिनामोप-
पादरणे । अव्ययमिति । प्रथमान्तं क्रियाविशेषणमिति भावः इत्थशब्द उक्तः
क्रियायां सामान्यभूतचक्रे इत्यर्थेऽभेदान्वयतात्पर्यग्राहक इति तात्पर्यं पुनः
पुनरिति लोडन्तवाच्य इति हि तेषां व्याख्यानम् । अननुवृत्तेरिति । भाष्यादाव-
नुक्तेरिति भावः । लोडन्तेति । उभयविवक्षायामपि समुच्चयस्यानेकविषयत्वेन
समभिहारस्यैकविषयत्वेनान्तरङ्गत्वात् पूर्वसूत्रस्यैवप्रवृत्तिरिति द्वित्वापत्तिरिति

भावः । परेतु अवस्कन्देत्यादिपदोपस्थितानामित्थं पदेनाकाङ्क्षामुत्थाप्यास्वास्थ्यपदेन मनोदुःखार्थकेनान्वये जाते तस्य चक्रे इत्यनेन कर्मतया ऽन्वय एवञ्च प्रथमानासङ्गतिरित्थमित्यस्यास्थानस्थत्वञ्च न तत्र प्रकरणाद्बलीपदेन रावणस्यैवोपादानात्कर्त्रर्थकत्वावगतिः तस्यातीताया लोकप्रसिद्धतया तत्कर्तृकक्रियाणामपि तत्त्वावगतिः बलीत्यस्यैवकर्तृत्वात्पुरुषोऽप्यवगत इति नात्रानुप्रयोगापेक्षा किंच क्रियामात्रप्रतिपादने तात्पर्यात्तदनुयोग एव पौनः पुन्यमपि अहर्दिवमिति समभिव्याहाराद्रावणस्य तथा कर्मशालित्वेन प्रसिद्धत्वाच्च व्यञ्जनयैव बुध्यते यद्वा ऽव स्कन्देत्यादीनि विधिलोडन्तान्येव स्वसेवकप्रेरणाविषयावस्कन्दनादिजन्यमस्वास्थ्यं मनोदुःखं चक्रे इत्यर्थः । अत एव तानीमानिक्षुद्राण्यसकृत्प्रवर्तीनि भूतानि भवन्ति जायस्वम्रियस्वेत्येतत्तृतीयं स्थानमिति श्रुतावनुप्रयोगाभावेऽपि समुच्चये लोट् भवति क्रियामात्रविवक्षयेन संख्याकालाद्यभिव्यक्त्यानुपयोगेनात्रानुप्रयोगाभावो ऽत एवानुप्रयोगविधायकं द्वयमपि भाष्ये प्रत्याख्यातं श्रुतौ पौनःपुन्यमसकृत्पदगम्यं एतच्छ्रुतिसमानार्थके आच सत्यलोकादाचावीचेर्जायस्वम्रियस्वेति विपरिवर्त्तमानमात्मानं जीवलोकस्यालोक्या ऽस्मिन्संसारे नित्या शुचिदुःखात्मकं प्रसंख्यानमुपावर्तत इति वाचस्पतिप्रयोगेप्येवमेव बोध्यं आचावीचेराचसत्यलोकादिति विपरिवर्त्तमानमिति च यदसमभिव्याहारेण पौनःपुन्यावगतिः यत्तु कल्पतरुणा क्रियासमभिहारे इति सूत्रेण पौनःपुन्ये लोडित्युक्तं तच्च हित्व । पत्तेरिति वदन्ति इति सर्वेष्टसिद्धिः विस्तरस्तु बृहच्छब्देन्दुशेखरे बोध्यः ॥ इति शिवभट्टसुतसती गर्भज नागोजीभट्टकृते लघुशब्देन्दुशेखरे तिङन्तं सम्पूर्णम् ॥

---

ॐ ॥ धातोः ॥ सोपसर्गाणामङ्गत्वव्यावृत्तये इदं स्यादित्यप्रधाने आदेशप्रवृत्तिस्तु धातोर्विहितस्य तस्यादेश इत्यर्थादत्र लुनातीत्यादौ लादेशव्यावृत्तये आतृतीयसमाप्तेरधिकार इति भावः । तत्रोपपदं ॥ कृदतिङ् ॥ व्याख्याते । वासरूप ॥ परिभाषेयं अधिकारत्वे स्वरितत्वप्रतिज्ञागौरवमिति भावः । असरूप इति लिङ्गं यत्रासरूपप्रत्ययविधानं तत्र वेत्युपतिष्ठत इत्यर्थः न च प्रत्ययत्वस्य वाक्यार्थबोधोत्तरं ज्ञानेन पूर्वन्तद्विधित्वज्ञानासम्भव इति वाच्यम् यस्य प्रत्ययत्वं भावि तद्विधावित्यर्थात् यद्वा कप्रत्ययो भवति स च वेति वाक्यभेदेनान्वयः । असरूप इति च्छेदः । तत्रासरूपत्वं किमपेक्षयेत्याकाङ्क्षायां यस्य सर्वत्रप्रवृत्तिस्तदपेक्षयोपस्थितित्वात्सचोत्सर्ग एव नापवाद उत्सर्गविषये सर्वत्रापवादाप्रवृत्तेरत एव विप्रतिषेधविषये तदप्रवृत्तिस्तदाह असरूपोऽपवाद इति । उत्सर्गस्य बाधको ऽपवादो वा भवतीत्यर्थः बाधकत्वविकल्पे प्राप्ति-

पोरिवपक्षे समावेशः स्यात् अत एव नवेति सूत्रे साधुत्वविकल्पे तस्यैवपक्षे ऽसाधुत्वमापादितं धर्मनिषेधे धर्म्यभावे मानाभावात् । एवञ्चापवादो वा भवतीत्येव सिद्धे उत्सर्गस्य बाधक इत्यस्य फलं चिन्त्यं अपवादपदार्थनिरूपणत्वादित्यन्ये । स्त्रियामित्यस्य स्वरितत्वादाह स्त्र्यधिकारोक्तमिति । अपवाद मिति शेषः । तेन व्यावक्रोशी व्यवक्रुष्टिरिति सिद्धति कर्मव्यतिहारे णचः स्त्र्यधिकारोक्तत्वाभावात् असारूप्यञ्चौपदेशिकमेवेति क्विपादिषु न दोषः तदप्यननुबन्धकत्वमेव ददातिदधात्योरिति णबाधकशस्य विकल्पात् अतः कार्योर्न समावेश इति दिक् । कर्त्तरिकृत् ॥ न च धातोः परः कृत्प्रत्ययः कर्त्तरि वर्त्ततामित्येवमस्य सूत्रस्यार्थे ऽतोर्थादन्यत्र वृत्त्यभावेन प्रत्ययनियमोऽयं भवतीति काष्ठभिदत्रास्त्रम इत्याकारस्यापि तत्र वृत्तिरिति तस्यापि कृत्सञ्ज्ञा प्रत्ययसञ्ज्ञास्यातामिति वाच्यम्, यः स्वभावतः कर्त्तरिवर्त्तते स एव कृत्सञ्ज्ञो नान्य इति सञ्ज्ञानियमेनादोषात् । अत एव न शब्दार्थसंबन्धनित्यताहानिः एवं सर्वत्रार्थबोधकेषु बोध्यम् । स्पष्टं चेदमत्रैव भाष्ये । तयोरेव ॥ तच्छब्देन लःकर्मणीति सूत्रस्थभावकर्मणोः परामर्शः तत्रासत्त्वभूतस्यैवभावस्य निर्देशेनात्रापि तथाभूतस्यैव परामर्शेन भावे एकवचनस्वभावाच्चास्य भावस्य नपुंसकत्वं बोध्यं, अत्र भावे ऽकर्मकेभ्य इत्यनुवृत्त्या भावे ऽकर्मकेभ्य एव एवकारः स्पष्टार्थः । कर्त्तृव्यावृत्तये तु न निर्दिष्टार्थत्वेन कर्त्तरिकृदित्यस्याप्राप्तेरिति दिक् । स्वरार्थाविति । तित्स्वरितम् उपोत्तमंरितीति स्वरार्थः । तद्भाष्येति । तत्र भिदेलिमा इत्यस्य भेत्तव्या इति विवरणादिति भावः । कृत्यच । कृतीति विषयन्यध्याहारेण तस्य विशेषणं तदाह कृत्स्थस्येति । अत्र च व्याख्यानमेवशरणम् । अचः परत्वाभावादिति । इकारस्य नकारेण व्यवधानादिति भावः । नकारेण व्यवधानाच्चेति पाठे चोहेतौ बोध्यः अजपि कृत्स्थएवेति तु न शक्यं वक्तुं प्रहीण इत्याद्यसिद्ध्यापत्तेः । हलश्चेजु ॥ कृतः प्रत्ययत्वेन प्रत्ययग्रहणे यस्मात्प्रविहितस्तदादेरिति पञ्चम्यन्तोपस्थियातस्येमे विशेषणे तत्रेजुपधस्य हलन्तत्वाव्यभिचारादाह हलादेरिति । अचः किं प्रस्विन्नः । इजादेः । हलादेरित्यर्थकं हल इत्यनुवृत्तमपि सामर्थ्याद्धलन्तपरं इजादेर्हलादित्वासम्भवात् विहिताविहितविशेषणञ्च तेनास्य नियमत्वं अन्यथा णिलोपे हलन्तात्परत्वेन प्रत्ययलक्षणप्राप्तणेर्विभाषेति बाधित्वा नित्यार्थो विधिरेव स्यात् यद्यपि नियमे प्राप्तबाधः सिद्धस्य पुनरुपादानादनुवाददोषश्च तथापि तद्व्याख्यानुसारिभाष्यमेवनियमे मान मिति बोध्यम् । अनुस्वारश्च सर्वोपि गृह्यते व्याख्यानात्तदाह प्रोम्भणमिति । वानिंस ॥ कृतीत्यनुवृत्तं निन्दामिति षष्ठीनिर्देशसामर्थ्याण्णत्वनिमित्तमित्याह कृतिपर इति । पूजएवेति । भादिषु

पूजो ग्रहणं कर्तव्यमिति वार्तिकादिति भावः । ण्यन्तभादीनामिति । प्रभापनमित्यादौ णत्वनिषेधाय भादीनामिति विहितविशेषणं एवञ्च ण्यन्ते ऽप्राप्तिरिति भावः । प्रकरणोपरीति । अत्र च णत्वं पर्याख्यानमिति ख्याञादेशसूत्रस्थं भाष्यं मानम् । कृत्यल्युटो ॥ पादाभ्यां ह्रियते पादहारक इत्यादिसिद्ध्यर्थं कृतोबहुलमित्येवं भाष्ये उक्तम् । शक्यमकर्तुमिति । ऋवर्णान्तादिवहलन्तादपि ण्यतोबाधादिति भावः । ईद्यति ॥ आतोलोप इत्यत आत इति वर्त्तते । स्वरार्थ इति । यतोनाव इत्याद्युदात्तार्थ इत्यर्थः । पोर ॥ तपरकरणादाप्यमित्यत्र न आङोपि इदित इत्यतो नुमिति लभेश्चेत्यतो लभेरिति च वर्त्तते । विवक्षित इति । एतदत्रैवभाष्ये स्पष्टम् । गदमद ॥ अनुपसर्ग इत्यर्थाभावे नञ्तत्पुरुषः प्रत्यासत्त्या गदादिसंबन्ध्युपसर्गाभावे सतीत्यर्थ इत्येके । नियमार्थमिति । पोरदुपधादित्येवसिद्धेरिति भावः । गर्हायामेवेति । वदः सुपीत्यत्र भाव इति नापकृष्यते इति सिद्धान्त इति भावः । अजर्यम् ॥ सङ्गच्छति प्राप्नोति पुरुषमिति सङ्गतं मैत्री कर्तरिक्तः अजर्यमिति च निपातनात्कर्तरीति बोध्यम् । वदः सुपि । अत्र सुब्ग्रहणे उपसर्गग्रहणं न सत्सू इति सूत्रे उपसर्गेपीत्युक्तेः । तत्र हि सुपीत्येवसंबध्यते । इत्याकृष्यत इति । भुवो ऽकर्मकत्वेनोत्तरत्र व्यर्थत्वात् यद्यपि प्राप्तावन्तर्भावितण्यर्थत्वे वा सकर्मकस्तथापि अप्रसिद्धत्वात्तद्ग्रहणमिति भावः । इदं चिन्त्यं भुवोभावे इति सूत्रे उत्तरार्थं भावग्रहणमिति भाष्योक्तेः सोपपदस्य कालादिकर्मयोग एव नास्ति अनभिधानादिति तदाशयः । हृक इति । सकर्मकत्वादिति भावः । अयमेवयुक्तः पक्षः भाष्यवृत्त्याविसम्मतत्वात् । भावे । ब्रह्मोद्यमित्यादि तु छान्दसंबाहुलकादिति बोध्यम् । अत एवानुपसर्ग इत्यस्य प्रवाद्यमिति प्रत्युदाहृतम् ण्यत्वस्मात्कर्मण्येवान्यथा प्रवाद इति भावघञन्तमप्युदाहर्तव्यस्यात् । हनस्तच ॥ तकारस्यादेशत्वं व्याख्यानात् । सुपीति किं घातः । ण्यत्तु न सकर्मकत्वेन तदप्राप्तेः । भावेकिं श्वघात्योवृषलः । अनुपसर्गेकिं प्रघातः । निरुपपदं हत्येतित्वसाधुरित्यन्ये इति । शास इत् सर्तिशास्तीत्यादौ प्रसिद्धत्वाच्छास्तेरेवग्रहणं नत्वाशास्तेरिति भावः । न वृङ इति । वृञो ग्रहणं कर्तव्यमिति वार्तिकमूलाद्व्याख्यानादिति भावः । वार्या इति । अत्र निरोधस्य विवक्षणाच्चावद्येत्यस्य प्राप्तिरिति भावः । पुनरिति । तकारस्यादेशत्वेन चकारं विनापि पूर्वसूत्रे क्यप्संबन्धसम्भवेन तत्र तस्य चानुकृष्टत्वादिति भावः स्पष्टञ्चेदं भाष्ये । पाङ्पूर्वादिति । ण्यति तु कत्वनलोपाभावतित्स्वराणामापत्तिरिति भावः । ह्रस्वः सुपठ इति । येविभाषेत्यत्र य इत्यस्य विषयसप्तमीत्वे ऽपि जनादिसाहचर्येण यादिप्रत्ययोत्पत्तिपूर्वकाले नान्तस्यैवात्वविधानेनात्र तदप्राप्त्या नस्येत्वे आद्गुणेन

रूपसिद्धेरिति भावः । एतत्क्लेशपरिहारायैवदीर्घोच्चारणमिति तत्त्वम् । क्यच्विति । अयं स्त्र्यधिकारस्थश्च युक्तेः साम्यात् । नन्वेवं भार्यावधूरिति वत् भार्याः क्षत्रिया इत्यस्यापि सिद्धावसञ्ज्ञायामिति व्यर्थमिति चेन्न, भरतेर्भार्यायाङ्क्ष्वारणाय तस्य सत्वात् । मृजेर्वि ॥ ऋदुपधत्वात्प्राप्तविभाषेयम् । चजोः कु ॥ यथासंख्यं न रागादित्यादिनिर्देशात् । न्यङ्क्वादीनाञ्च ॥ एषु उणादिपाठो व्युत्पत्तिवादिव्याकरणान्तराभिप्रायेणेत्याहुः । राजसूयो । यज्ञविशेषः । निपातनादिति । पूर्वोत्तरान्वयि क्यपोऽडिति निपातनादिति शेषः । एवमग्रे ऽपि । कृष्योनिपातनात्कर्तरि एवमग्रे ऽपि । धनं धातु पात्रादिरूपं न तु वस्त्रादितत्वेनाप्रसिद्धेः । पूङिति न्यादिसाहचर्येण शप्विकरणस्यैवग्रहणमिति भावः । पाप्यमिति । तैलादावौषधेक्षिप्ते पाकानन्तरं यद्गृह्णीयन्तच्चेत्याहुः । जित्य इति । जि अभिभवे काष्ठमिति हलिशब्दवाच्यमित्यर्थः । पदास्वै ॥ एषु चतुर्षु ग्रहेः क्यबित्यर्थः । पदविषये ऽसन्निकर्षे ग्रहेरर्थः यस्य पदस्यावग्रहप्रगृह्यसञ्ज्ञा च क्रियते तदाभ्यामुच्यते गृह्यका इत्यनुकम्पायां कन् । ग्रामगृह्येति । बहिर्भावोत्र ग्रहेरर्थः । युग्य इति । युज्यते शकटादिनेत्यर्थः । युग्यमिति । सूत्रे सामान्येनपुंसकं पत्रपात्रवहित्रच्छत्राः पुंसिचेति लिङ्गानुशासनात् पत्रशब्दः पुंस्यपि युग्यं पत्रञ्च वाहनमिति कोशे उपलक्षणं । युग्ययुग्या इति । क्रुद्धाः सारथींश्च व्यनोदयन्नित्युद्योगपर्वणिप्रयोगः एतेन युग्य इत्यसङ्गतमित्यपास्तम् । अभाव ॥ अत्रान्यतरस्यामिति निपात्यमान हृस्वसवर्णं एयत्तु नित्य एव सूत्रे तकारोच्चारणन्तु प्रकरणप्राप्तस्यापि सम्प्रसारणाभावनिपातनशङ्कावारणायेति बोद्ध्यम् । यथोत्तरमिति । वार्तिकस्य सूत्रदूषणाय प्रवृत्तत्वाद्भाष्यकृता च वार्त्तिकमते शोक इत्यस्यासिद्धिमाशङ्क्यसूत्रमते ऽपि एयति कुत्ववारणाय नियमार्थमावश्यकेन शुचेर्घञीति वचनेन समाधानाद्वार्तिकमतस्यैवाभ्यनुज्ञानाच्चेति भावः । भुजन्युब्जौ ॥ भुजेरगुणत्वं निपातनात् बाहोभुज अर्शआद्यजन्तं । न्युब्जन्तीति । चेष्टारहिता अवाङ्मुखाः शेरत इत्यर्थः यद्यपि न्युब्जयतीति अचिरोपेन्युब्जः सिद्धस्तथापि न्युब्ज इत्येतन्मात्रवृत्तये न्युब्जग्रहणमिति बोद्ध्यम् । अवश्यपाच्यमिति । आवश्यकाधमर्ण्ययोरित्यनुवर्त्तमाने कृत्याश्चेति एयत् । प्रवाच्यमिति । इदं वृत्त्यनुरोधेन । भाष्येतु प्रवाच्यः शब्दसञ्ज्ञायामेवेति वचोशब्देत्येवसिद्धिरित्यत्र प्रवचिग्रहणं प्रत्याख्यातम् । चिन्त्यमिति । पूजेर्नित्यण्यन्तत्वेन तद्ग्रहे फलाभाव इति भावः । तदाह भाष्येति । भोज्यं भ ॥ भक्ष्यमत्र सर्वं न तु खरविशदमेव व्याख्यानात् । पुनिति । पुनातेरित्यादौ व्यवहृतत्वेन प्रसिद्धत्वादिति भावः । निरनुबन्धकपरिभाषा युगपद्द्वयोरुपस्थितावेवेति तात्पर्यम् । आचार्यमिति

पाठः । चाम्यमिति पाठे वृद्धिर्दुर्लभा । विशेष इति । योगार्हपत्यादानीयते तत्रेत्यर्थः । प्रणाय्यो । असम्मताविति बहुव्रीहिः ॥ अतीयुगिति । मीनातीत्यत्वे कृते इति भावः । माङोवाहांवविशेष इति । ऐन्द्रं पयोदधिवेत्यर्थः । संबाह्यमिति । वहिसमानार्थो हेत्यन्तात्सिद्धे सूत्रे समूह्येति व्यर्थमिति भाष्यम् । क्वचिच्चेति । अत एव क्त्वाप्रत्ययेन तुमुनो न नित्यबाध इति आसित्वाभुङ्क्ते आस्यते भोक्तुमिति च भवतीति भावः । कर्त्तरिचेति । कर्तरिकृदित्यत :कर्त्तरीत्यनुवर्त्तते इति भावः । आवश्यकाधमर्ण्ययोरित्यनुवर्त्तमाने कृत्याश्चेति सूत्रं तच्च भव्याद्यर्थम् ॥ इति कृत्यप्रक्रिया ॥

ण्वुल्तृचौ ॥ अनयोर्वर्तमानकालादन्यत्राप्रयोगो ऽनभिधानादिति भाष्यं, तत्र हि तृजादिषु वर्त्तमानकालोपादानं कर्त्तव्यं न कर्तव्यमन्येषां प्रत्ययानां कालमात्रे दर्शनात् चर्चायाह इत्युक्तं तृचश्चकारस्तुश्छन्दसि तुरिष्ठेमेयस्स्वित्यत्र तृन्तृचोः सामान्यग्रहणाविघातार्थश्चकार इति भाष्ये स्पष्टं उणादीनां व्युत्पन्नत्वमते तृप्रत्ययान्तमात्रादिष्यश्छन्दसिनेष्ठेयसोर्दर्शनमिति तद्भावः अव्युत्पत्तिपक्षाश्रयणेन मातयतीत्यादौ नेष्ठवद्भाव इति रक्षत इति सूत्रे कैयटः । वोढुमर्ह इति । अर्हेकृत्यतृच इत्युक्तेरिति भावः । वधहिंसायामिति । अत एव जनिबध्योरित्यत्र वधिग्रहणं चरितार्थं वधादेशेत्वल्लोपस्य स्थानिवद्भावात्सिद्धं एतेनार्द्धधातुके प्रयोगोनेत्यपास्तं इदं सर्वं वृत्तौ स्पष्टम् । परेत्वेवंसति चक्षिङितिसूत्रे बहुलन्तण्यन्तवधकगात्रविचक्षणाजिराद्यर्थमिति वार्तिके वधकग्रहणवैयर्थ्यापत्तेः अनेन धातुनासिद्धत्वात् घातक इति त्विष्यत एव बाहुलकाद्वधकमित्युपादाय ण्वुलि वधादेश इति कैयटः तथा स्थानिवत्सूत्रे वार्तिकं वध्यादेशे वृद्धितत्वयोः प्रतिषेधः वधकं पुष्करमिति अत्रोयंकिदौणादिको वधकशब्दोरुचक इति यद्येत भाष्यञ्चासङ्गतंस्यात् तस्मादयं निर्मूलः आर्द्धधातुके वास्य प्रयोगोनिर्मूलः जनिवध्योश्चेति सूत्रे वधिग्रहणंत्वादेशो हलन्त इत्यभिप्रायेण अत एव हनोवधेति सूत्रे किमयमदन्त आहोस्विद्व्यञ्जनान्तः किंचातः यदिव्यञ्जनान्तः वृद्धितत्वप्रतिषेध इड्विधिश्च अथादन्तो न दोष इति भाष्यमुपादाय कैयट आह अवधीदित्यत्र हलन्तलक्षणावृद्धिः प्राप्नोति तत्प्रतिषेधो वक्तव्यः वधक इति ण्वुलि बहुलन्तणीति वधादेशे ऽत उपधाया इति प्राप्तावृद्धिर्जनिवध्योश्चेति प्रतिषिध्यते स्थानिवद्भावाद्वनस्त इति तत्वं प्राप्तं तत्प्रतिषेधो वक्तव्यः अवधीदित्यादावेकाच्त्वादिण्निषेधे प्राप्ते इड्विधेयः अदन्तत्वेत्वल्लोपस्य स्थानिवद्भावाद्वृद्ध्याद्यभाव इडभावश्चेति एवञ्चादन्तत्वपक्षे वधिग्रहणं सूत्रे न कर्त्तव्यमिति स्पष्टमेवोक्तमिति वृत्तिश्चिन्त्येत्याहुः । नेड्वशिकृति रधिजभोरिति प्राप्तनुमो निषेधोयम् ।

रभेरिति लभेश्चेति च नुम्विधायके । क्रमेः कर्तरीति । सुक्रमेरित्यत्र वार्तिकम् । अनन्यभाव इति । अत एव भाष्ये सोपसर्गमेवोदाहृतम् । केचिदिति । कैयटस्वरसस्त्वत्र पक्षे दृश्यते । तङानयोरभावमिति । फलोपहिततङा न निमित्तत्वाभावं लक्षयतीत्यर्थः । पापाचक इति । यङ्लुको ऽत्रानैमित्तिकत्वाच्चधात्विति निषेधो न इश्लक्षणत्वाभावाच्च मधुसूधने सात्पदाद्योरिति षत्वनिषेधः । स्यायीति । आदन्तलक्षणे स्यायोर्पिके प्रस्यादिरपि । षत्वमपीति । निपातनादित्यनुकृष्यते । बाधकेति । तेन मेपसेवदेवादयः सिद्धाः । आगमस्येति । न च दीर्घागमोच्चारणं सवर्णदीर्घबाधार्थं स्यादिति वाच्यं, अनन्तरस्येति न्यायेन हलादिः शेषस्यैवबाध इत्याशयात् । वस्तु तो दीर्घप्रवृत्तिकाले एव वैयर्थ्योपस्थितेस्तद्बाध एव न्याय्यः हलादिःशेषबाधनन्तु अभ्यासस्यानचीति भाष्योक्तेन वचनेन साध्यं अभ्यासस्य यदुच्यते तदङ्गनिमित्ताभ्यासभिन्नस्येत्यर्थः अत एव लोलुव इत्यादौ गुणः यद्यप्यत्र वचनेनेति भाष्ये नास्ति तथापि रात्रिञ्चर इत्यादिप्रयोगदर्शनादाश्रितं तत्र ठ इत्यन्ये । घत्वञ्चेति चात् । द्वित्वमाक्षच णिलुक्चेति चाद्द्वित्वं णिलुक्करणमवृद्धये ज्ञे आलोपः प्रियेइयङ् क्रिरेचेत इत् सूत्रे सौत्रमेकवचनम् । प्रज्ञ इति । परत्वादिदमेवन्याय्यमित्यभिमानः । पघ्रा ॥ अत्रालुग्विकरणत्वात्पिबतेरेवग्रहणम् । हरदत्त इति । अत्रार्चिकीजन्तु भाष्याननुग्रहः टिड्ढेति सूत्रे प्रत्यासत्त्या टिदाद्यवयवाकारस्यैवग्रहणौचित्यात् । टित्वसामर्थ्यादिति चेत् धयेत्यत्राप्यापत्तिः तस्मात्स्तनन्धयीत्यस्य प्रामाणिकत्वे गौरादित्वं बोध्यं ङीष्यप्युदात्तनिवृत्तिस्वरप्राप्त्या स्वरे विशेषाभावादित्याहुः । लिम्पविन्द इति । शेमुचादीनामिति नुम् धार्यादयो हेतुमण्ण्यन्तास्तेभ्यः शे शपि गुणायादेशौ । अरविन्दमिति । भाष्ये ऽरविन्द इति पुल्लिङ्गं दृश्यते । पक्षे ऽजिति । इदमुपलक्षणं इगुपधेभ्यः क इत्यस्य । इहेति । अवतात इति भाष्योदाहरणादिति भावः । श्याद्व्यधा ॥ श्या आदिति छेदोव्याख्यानात् । तेन जलचरे इति । इदं शाच्छोरित्यत्र भाष्ये स्पष्टम् । गेहे कः । यत्तु गृहग्रहण इति चुरादेरदन्तात्खचि पचाद्यचि भ्वादेर्वा गृहधातोरिगुपधलक्षणे के गृहं सिद्धं रुढिस्वीकाराच्च नातिप्रसङ्गः तत्स्येषु दारेष्विवेति इदं सूत्रं शक्यमकर्तुमिति तन्न तौधातूच्छान्दसाविति सूत्राशयात् धातुषु पाठार्थोदावागमभ्रंशस्य क्षीरस्वामिनोक्तत्वेन सूत्रपाठे च तद्ग्रहणाभावेनैवमेवौचित्यात् । उच्छृङ्खलास्तु तयोर्धात्वोरप्रामाणिकः पाठः वेदे तत्साध्यप्रयोगो यदि भवेत्सवर्णव्यत्ययादिना ग्रहेरेवसाध्य इत्याहुः । अत एव भाष्यवार्त्तिककाराभ्यां नेदं व्याख्यातम् । नृतिखनीति वार्तिकम् । एवेति । तेन वेजो वायकः सिद्धः । रञ्जेरिस्त्वति । इदमनिदितामिति सूत्रे भाष्ये स्पष्टं ननु भाष्यमते रजकीति न स्यादत आह पुंयोगे-

ष्विति । तत्रैवेत्यर्थः रजनीत्यत्र तु गौरादित्वान्ङीषित्याहुः । नन्दक इति ।
आशास्यमाननन्दनक्रियाकर्त्तेत्यर्थः । कर्मणः शेषत्वेति । ओदनपचादयस्तु यदि-
ष्टास्तर्ह्यनभिधानेन वारणीयः । ह्व ॥ ह्वेञ्साहचर्यात्सानुबन्धकस्य वेञ एव
ग्रहणम् । आतोनु ॥ उपसर्गाभावेसतीत्यर्थः तत्फलितमाह । अनुपसर्गादिति ।
गोसन्दाय इति । सत्सू इति सूत्रे उपसर्गेपीत्यनेनात्र प्रकरणे सुप्पदेनोपसर्ग-
ग्रहणबोधनाच्च सुपीति कः आतोनुपेति सूत्रारम्भसामर्थ्येन तस्य कर्मण्युपपदे
ऽप्रवृत्तेर्वा ऽत्रोपसर्गाणामव्यवहितप्रयोगाद्विशिष्टक्रियायां कर्मकारकान्व-
याच्च गतिसमासगर्भोपपदसमासः अत्र कर्माद्युपपदे बुद्धिस्थे एव प्रत्ययः
एतेन कुम्भंकरोतीति द्वितीयान्तस्योपपदत्वे कुम्भङ्सित्यस्यानुपपदत्वेन तेन
समास इति सिद्धान्तसङ्गतिः अणुत्पत्तेः प्राक् षष्ठ्यभावेन षष्ठ्यन्तस्यानुपप-
दत्वात् किंचोपसर्गसंबन्धात्पूर्वं कारकवाचिभिन्नपदासंबन्धेन साधनकार्यात्पू-
र्वमुपसर्गासंबन्धेन च भेदाच्च इत्यादेरसङ्गतिरित्यपास्तम् । आह्व इति । नन्वत्र
कप्यालोपं बाधित्वात्संप्रसारणे ततो बार्णादिति न्यायेन पूर्वत्वं बाधित्वा
लोपे तस्याभीयासिद्धत्वेनोवङोप्राप्तौ यण्याहू इति सिद्धमिति वाच्य आभी-
यासिद्धत्वानित्यत्वे बार्णादिति न्यायानित्यत्वे वा ऽस्य ज्ञापकत्वात् तेन
जुहुवतुरिति सिद्धमित्याहुः । योगो विभज्यते इति । इदं केवलोपसर्गेन आतश्चो-
पसर्गे इत्येवसिद्धेः । कर्मण्युपपदे ऽपि न आतोनुपेत्यारम्भात् । प्रष्ठोगौरिति ।
आतश्चोपसर्गे इति कः अग्रगामित्वेन मुख्यत्वं लक्ष्यते । द्वयमपीति । चरेष्ट
इति सूत्रे कर्मणीत्यपि वर्त्तत इति भाष्यदर्शनेन सुपीत्यधिकारं दृष्ट्वापि न
तन्निवृत्तिः तेन तुन्दशोकयोरित्यादीनां कर्मण्यप्रवृत्तिः सुपीत्येतत्वकर्मकेषु
सावकाशमिति भावः । आलस्येति । तयोर्गम्यमानयोरित्यर्थः तत्र सामर्थ्यादल-
ससुखाहर्त्रोरिति बोध्यम् । मूलविभुजादिभ्य इति । तादर्थ्ये चतुर्थी भेदाज्ञः
जनेनायं निर्देशः खनोघचेत्यादौ धातुनिर्द्देशे ऽल्लोपाकरणात् व्याख्यानाच्च ।
इत्युक्तेरिति । अनुवृत्तेरित्यर्थः गोसंख्ये चाचिङः ख्याञादेशः : हरतेर ॥ उत्क्षेप-
णादन्यत्रार्थवर्त्तमानाद्वित्यर्थः शक्तिलाङ्गलेतितूद्यमनार्थं शक्तिः शस्त्रविशेषः ।
सूत्रे चेति । धार्यर्थे गम्यमानेसति सूत्रशब्दउपपदे इत्यर्थः । स्तम्बकर्णयो ॥
रमिजपावकर्मकौ टामाभूद्वित्ति परत्वादिति भावः । शङ्करेति । शृणातेः शङ्करै-
षानशङ्करेति भाष्येणेदं प्रयोजनं खण्डितं । आधिकरणेशेतेः ॥ इत उत्तर इति
सुपिकर्मणीति त्रयमनुवर्त्तते यथा योगं संबन्ध इति चरेष्ट इत्यत्र भाष्यम् ।
उत्तानादिष्विति । कर्तृभूतेषूत्तानादिषूपपदेष्वित्यर्थः चरेःसकर्मकत्वे ऽपि चरेष्टः
कर्मण्युपपदेन भिक्षासेनेति सूत्रे भिक्षाग्रहणात् स्पष्टञ्चेदं भाष्ये ऽत आह
अधिकरणे इति सेनाचरसेनायां भ्रमतीत्यर्थः । आदायचर इति गृहीत्वा

गच्छतीत्यर्थः अयेणेति पुरोयतः शब्दयोरव्ययत्वेन कर्मत्वासम्भवात्तदसंबन्धे तत्साहचर्येणाग्रशब्दे ऽपि तदसंबन्धादिति भावः । हरदत्त इति । अत्राहुचि-रयेसर इत्यस्यालुक्सिद्ध्या एदन्तत्वनिपातने न मानं पूर्वनिपातस्तु बहु-शोव्यभिचरित इति । कृञो हे ॥ हेतुःकारणमात्रं आनुलोम्यमाराध्य चित्तानु-वर्त्तनम् । क्षोत्येष्विति । उपपदानि तु न व्याख्यानात् । दिवाविभा ॥ दिवाप-दार्थस्यापि वृत्तिविषये शक्तिमत्परत्वेन कर्मत्वादत्र कर्मणीति संबध्यते । अहेत्वादावपीति । हेत्वादिग्रहणाननुवृत्तेरिति भावः । अत इति । तपरकरणा-दतः क इत्यस्याप्राप्तेराह कस्कादित्वादिति । नञि जहातेरत्यन्तत्वेनोत्तरपद-स्थत्वादतः क इत्यस्याप्राप्तेराह कस्केति पाणिनिसम्मते ऽव्युत्पत्तिपक्षेत्वतः क इत्येव नित्यंसमासे इति प्रत्ययावयवत्वात्सस्येदुदुपधस्येत्यस्य न प्राप्तिः । परत्वादिति । अजहेत्वादौ चरितार्थः सूत्रे च किमादिग्रहणं न कार्यमित्य-भिमानः । कर्मशब्दे इति । कर्मणीति चास्य विशेषणान्तेन करणादौ नातिप्र-सङ्गः । पशाविति । कर्तृविशेषणं पशुत्वोपाधिः प्रत्ययान्तवाच्यत्वात् एवं ब्रीह्यादिष्वपि द्रष्टव्यं स्यादबन्ध्यःफलेग्रहिः । अरुर्द्विषत् ॥ कालिमन्यादावनव-काशत्वात्पूर्वं ह्रस्वे कृते ततोमुम् अन्यथा मुम्यजन्तत्वात्स न स्यात् । इहानव्ययस्येति वर्तते तेन दिवामन्यादावव्ययानां न मुम् । वातशुनीति वार्तिकेवागन्धर्वेष्विति पाठान्तरम् । भावा इति । मृगा इति भाष्ये पाठः । असू ॥ यथा संख्यमत्र असूयशब्दस्यानर्थकत्वे ऽपि उपपदमिति महासञ्ज्ञया तस्य सुबन्तत्वं सुप् च द्वितीयैव प्रकृत्येकदेशस्य कर्मत्वेनान्यापेक्षया युक्तत्वात् ललाटसाहचर्याच्चेति बोद्धम् । प्रियवशे ॥ खचश्चित्वं व्यर्थं खचिह्रस्व इत्यादौ । ख्ये इत्येव खशोऽव्यावृत्तिः सिद्धा कुलीन इत्यादौ च णावित्यनुवृत्त्या नदोष इत्याहुः । मितङ्गम इति । वृत्तौ मतङ्गम इति पाठः । खच्च डिद्वेति । योगविभा-गादत्र विहाय स इत्यस्यासंबन्धस्तदाह भुजङ्ग इति । तापेरिति । चुरादेर्हेतुम-ण्ण्यन्तस्यादेश्च ग्रहणमिति वृत्तिः । अनित्येति । उपपदविधाविषर्नेति ज्ञापसूत्रे भाष्योक्तेरिति भावः । वाचि य ॥ वाक्शब्दे कर्मणीत्यर्थः । संकल्प विशेषो व्रतम् । भयशब्देनेति । येनविधिरितिसूत्रस्थभाष्यप्रामाण्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरत्रेति बोद्धम् । क्षेमंकर इति । क्षेमंकरीत्यत्रगौरादित्वान्ङीष् । आशिते । भु ॥ अशभोजन इत्यतो ण्यन्तात्प्रयोज्यकर्मणिक्तः उत्तरसूत्रात्सञ्ज्ञा-यामित्याकृष्यते तेनासञ्ज्ञायां न अत एव ग्रैव्यगतीत्यादिना भावकर्माधि-करणेषु यः क्तस्तदन्तो न गृह्यते सोपसर्गस्य प्राप्त्यर्थस्य वा भुवः सकर्मकत्वे ऽपि कर्मणीति न संबध्यते तस्याप्रसिद्धत्वात् व्याख्यानाच्च तदाह आशिता-भवतीति । अन्यत्रापिति । अनेनैवसर्वत्र सिद्धौ सर्वत्रेत्यादिप्रपञ्चार्थं वस्तु तः

सप्तम्याञ्जनेरिति प्रकरणस्थेनान्येष्वपि दृश्यते इत्यनेन सिद्धे इदमपि प्रपञ्चार्थमेव तत्रापि ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादिति बोध्यम् । दाराविति। शब्दोपेक्षया पुस्त्वं अन्त्यग्रहणं स्पष्टार्थम् । कुमारशीर्ष ॥ अयं णिनिर्भविष्यद्वर्तमानयोरेव न भूते भूते इत्यधिकारे कर्मणिहन इत्यस्य पाठेनायमेवणिनिर्भूते इति एतदारम्भसामर्थ्येन तत्र नियमात् यत्तु तक्रकौण्डिन्यन्यायात्कुमारशीर्षयोर्विशेषविहितेन णिनिना कर्मणिहन इत्येतद्विहितणिनिसहचरितभूतकालो बाध्यते अत एव कुमारेत्यादि पुनर्विधानं चरितार्थं न च तत्सामर्थ्याद्वासरूपबाधः शास्त्रबाधापेक्षया कालबाधस्यैवौचित्यात् अत एव कुमारहन्तीत्यपीति तन्न, तस्य न्यायस्य विधेयविषयत्वात् तत्तत्कालवृत्तेर्धातोरित्यर्थेन कालस्यानुवाद्यत्वात् भूते इत्यधिकारसत्त्वेचोक्तनियमोपपत्तेरिति अस्य भूताधिकारप्रयोजननोक्तिर्भूते इति सूत्रे भाष्ये इति दिक् । पतिघ्नीति। गमहनेत्युपधालोपष्टित्वान्ङीप् पाणिघ ॥ शिल्पिनिकर्तरीत्यर्थः । आढ्यसु ॥ च्व्यर्थेष्विति आढ्यंकुर्वन्त्यनेन कर्तरि तु नायं करणरूपार्थेन तक्रकौण्डिन्यन्यायेन कर्तृरूपार्थबाधनात् अर्थस्यापि विधेयत्वात् अत एव कायशब्दवादे नियोगतः कर्तारं ब्रुवन् सकृत्सञ्ज्ञ इत्यर्थो भाष्ये दर्शितः नियोगः शास्त्रं नित्यशब्दवादे तु स्वभावतः कर्तारं ब्रुवन् कृत्सञ्ज्ञः स्वभावतः करणं ब्रुवन् ल्युडन्तकृत्सञ्ज्ञ इत्यादिक्रमेणार्थः तदाकर्तर्यस्याप्रसक्तिरेवेति दिक् । कर्तरिभुवः॥ अच्व्यन्तेष्विति आढ्योभविता इष्णुच् तु न गतिपूर्वेभ्यः प्रायेण ताच्छीलिकाप्रवृत्तेः । स्पृशो ॥ अनुदकेकिं उदकस्पर्शः अनुदके इत्येतत्सामर्थ्यात्क्विन्नपि न ह्युसदितिसप्तम्यन्तेतरत्पूर्वपदं सप्तम्यन्तत्वे कृदद्धु भ्यामित्यलुगापत्तिः । सत्सू ॥ अनुपसर्ग इत्यस्य निवृत्त्यैव सिद्धे उपसर्गेपीति अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति ज्ञापनार्थन्तेन वद्सु इत्युपसर्गेनेति भाष्यं, गदमदेत्यत्रानुपसर्ग इत्यस्यस्वरितत्वमेव मध्ये ऽसंबन्धात् अत एव प्रगृह्यमित्यादिसिद्धिः प्रष्ठे चातश्चोपसर्ग इति क इति दिक् । भजोण्विः ॥ सुप्युपसर्गेपीति च वर्तते । अणबाधनार्थमिति । स्पष्टञ्चेदं भाष्ये । उपपदस्येति । क्रव्येति सूत्रं तु आममांसभक्षके क्रव्याद इत्येतद्व्यावृत्त्यर्थमिति भावः अन्ये तु गङ्गाधरादिवत्पचाद्यच सवर्णदीर्घे ससाधुरित्याहुः । वस्तु तौ ऽयमसाधुरेवेति परे । निवृत्तमिति । आतोमनिन्नित्यत्र विजुपे इत्यतो ऽनुवर्तमानमित्यर्थ दृशिग्रहणादुपपदस्यापिव्यभिचारः वनिपः शर्वरीत्युदाहरणम् । रोट्रेडिति रुषरिषहिंसायाम् । क्विप्च ॥ अत्रापि दृशिग्रहणमनुवर्तते क्विप् चान्येभ्योपिदृश्यत इति भाष्योक्तेस्तदाह दृश्यत इति । अन्येभ्योपिदृ ॥ अत्रविचोपिसंबन्धः इति यूस्त्याख्याविति सूत्रे भाष्ये । इस्मन् ॥ खचि ह्रस्व इति ह्रादेर्घ

इत्यतश्छन्दादेरिति चानुवर्त्तते । लोपश्चेति । अन्त्यस्येति शेषः । शंस्था इति । अन्त-
र्भावितण्यर्थत्वे शमित्यस्य कर्मत्वं अन्यथा तु न तत्वं प्रत्ययस्तूभयथापि
सुपीत्यस्यैवसंबन्धात् अत्रविच् वार्त्तिकमित्यत्र क्विप्पदेन सादृश्याद्विजेवोच्यते
अत एव नेत्वम् । अचं बाधितुमिति । अन्यथा धातुग्रहणसामर्थ्येन क्तेनोहेत्वादिषु
टबाधवत् शंपूर्वक स्याधातोः कक्विपावप्यच् बाधेतेत्यर्थः । उपसर्गभिन्न एवेति ।
सुपीति वर्त्तमान पुन सुप्ग्रहणेनोपसर्गेपीत्यस्य निवृत्तेरिति भावः । भाष्येति ।
अत एवोपसर्गादृतीति सूत्रे वासुपीति भाष्यप्रयोगो ऽनुगादिनो विसारिण
इति सौत्रप्रयोगश्च सङ्गच्छते । साधुकारिणीति । करोतिरत्र सर्वधात्वर्थानुवा-
दकस्तदाह साधुदायीति । कर्त्तर्यु ॥ कर्तृभूतोपमानवाचके उपपदे इत्यर्थः ।
व्रते ॥ सुप्युपपदे व्रतेगम्ये णिनिरित्यर्थः । स्थण्डिलेति । स्थण्डिल एव शेते इत्येवं
व्रतमत्र गम्यते स्थण्डिलेशेति एवेति तु न तस्य व्रतत्वाप्रसिद्धेः । बहुलमा-
भीक्ष्ण्ये ॥ बहुलग्रहणादाभीक्ष्ण्योपपदयोरभावे ऽपि व्रत इति सूत्रभाष्यबो-
धिते व्रतार्थे स्थायीत्यादौ णिनिः । आत्ममाने च ॥ आत्ममाने इति किं दर्शनी-
यमानी देवदत्तोयज्ञदत्तस्येति सूत्रे ऽमिति तन्त्रेणाम्पदद्वनिर्देशः एकंविधे-
यसमर्पकं अपरं प्रत्ययविशेषणमिति भाष्ये स्पष्टं तदाह स च स्वादीति ।
अन्त्यस्यामः प्रत्ययस्यातिदेशयोग्यकार्याभावात्स्वाद्यमेवगृह्णते इति भावः ।
श्रिमन्यमिति । परे तु स्वमोरिति लुगत्र न बाध्यसामान्यचिन्तया सुपोधा-
त्विति लुग्वत् अस्यापि अम्विधानस्य मर्थ्येन बाधात् किंचास्यामोबहिरङ्ग-
तया ऽसिद्धत्वादपि न सुपोधात्विति लुक् उत्तरपदाधिकारे एषापरिभाषा-
नेत्युक्तिस्तु भाष्ये उक्तप्रत्युक्तिक्रमेण पूर्वपक्षिण इति स्पष्टं तद्विदां परन्तप
इत्यस्य सिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्या सुसाधत्वेन फलाभावेन
मानाभावेन चोत्तरपदाधिकारे तत्प्रवृत्तेः सत्वात् । तस्मात् श्रियं मन्य इत्येव-
रूपं भाष्य सम्मतं अत एवोपक्रमे श्रियं मन्य इति भवितव्यमिति भाष्ये
सिद्धान्तिनोक्तं एवञ्च पूर्वपक्ष्युक्तात् श्रिमन्यमित्येवभवितव्यमिति भाष्यस्थात्
श्रिमन्य इति प्रयोगात् ह्रस्वस्य मुममोरभावस्य च कल्पनमनुचितमित्याहुः ।
अयमम् प्रत्ययवत्पादेव परः मुमासिद्धे ऽजादिप्रत्ययनिबन्धने यङादिसिद्ध-
मिदर्थम् । सोमेनेति । सोमेन लताविशेषेणयागं कृतवानित्यर्थः । अग्निष्टोमेति ।
अग्निष्टोमसंस्थाकयागेनापूर्वं भावितवानित्यर्थः यजेस्त्यागकरणके व्यापारे
शक्तिः तत्र व्यापाररूपभावनाया भाव्याकाङ्क्षायां धात्वर्थस्य करणत्वेनोपस्थिते
स्वतः पुरुषार्थत्वाभावाच्च साक्षात्सुखसाधनमपूर्वं भाव्यत्वेनान्वेति त्यागस्य
करणत्वंञ्च भावना भाव्यभावकत्वमेवसर्वत्रकारणादीनामीदृशमेवकरणत्वं
संस्थावचनस्यापि ज्योतिष्टोमशब्दस्य तद्वति लक्षणया त्यागसामानाधिकर-

यथात्करणत्वं स्वर्गादेः कर्मत्वमपि भाव्यत्वरूपमेव न तु फलाश्रयत्वरूपं अत एवेदृशानां कामान्तपदेनैवोल्लेखः केचित्तु त्यागानुकूलव्यापार एव यजेरर्थः ज्योतिष्टोमादिशब्दाश्च शब्दव्यापाराः शब्दस्यापि संकल्पद्वारा करणत्वमित्याहुः। कर्मणि ॥ कर्मण्युपपदे भूतार्थाद्धन्तेर्णिनिरित्यर्थः। इदं शक्तिस्वभावात्कुत्सायामेव तेन चोरं हतवानित्यादौ नेति वृत्तिः। चतुर्विध इति। ब्रह्मादिषूपपदेषु भूते वर्त्तमानाद्धन्तेः क्विबिति सूत्रार्थः तत्राविशेषाच्चतुर्ष्वपि एवकारो विनिगमनाविरहात् तत्र ब्रह्मादिष्वेवभूतार्थाद्धन्तेरिति नियमे हन्तेरुपपदान्तरसंबन्धनिवृत्तिफलो धातुनियमः ब्रह्मादिषु भूतार्थादेवहन्तेरिति नियमेनान्यार्थाद्धन्तेरिति प्रत्ययनियमः ब्रह्मादिषु भूतार्थाद्धन्तेरेवेति ब्रह्मादीनान्धात्वन्तरसंबन्धनिवृत्तिफलोधातुनियमः ब्रह्मादिषु भूतार्थाद्धन्तेः क्विबेवेति नियमेनान्यार्थादिति कालनियम इति भावः। भाष्यमिति। तथा च भाष्यं उभयतो नियमोयं ब्रह्मादिष्वेवेति क्विबेवेति च। युक्तञ्चैतत् श्रुत्युपस्थितोपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधातुकालयोरेवोपरोधोन्याय्यः एवञ्च तद्विरोधाद्वृत्तिरयुक्तेति भावः। काशिकेति। धातुनियमश्त्विह नेष्यत इति तद्भावः अत्रापि द्विविध एव निमयः। सुकर्मादिष्विति। कृञ एवेति च एवं सोमेसुञ इत्यादावपि कुत्सितेति वार्तिकमिदं यत्कर्मक्रियया संबध्यमानं कर्तुः कुत्सामावहति तत्रेत्यर्थः सोकादयश्च विक्रीयमाणाः शास्त्रनिषिद्धत्वात्तदावहाः तेनेह न धान्यविक्रायः। निवृत्तमिति। असत्त्ववचनत्वेनेहान्वयादुत्तरत्रानुपयोगाच्च। सहयुध्वेति। तेन सहयुद्धवानित्यर्थः। सवापाधीति। भाष्ये त्वन्येभ्योपि दृश्यते इति वक्तव्यं परिखेत्युक्तम्। क्तक्तवतू ॥ यद्यपि प्रयोगे ऽनुबन्धो न श्रूयते तथापि तदुपलक्षितकालकारकादिदर्शनेन तत्रानुबन्धस्मृतौ निष्ठात्वप्रयुक्तकार्यसिद्धिः इत्सञ्ज्ञककारवानित्याकारात्र स्मृतिः अत एव लोत इत्यादौ न तत्प्रयुक्तकार्यं प्राभित्तत्यादौ एकत्वावगमाल्लुङन्तमेतदिति निर्णयाच्च दोषः। क्षियोदी ॥ यद्यपि निर्देशादेवदीर्घग्रहणमत्र अन्यथा गुणः स्यात्तथापि क्षियोनिष्ठायामण्यदर्थे इत्यत्रेव चिक्षियतुरित्यादौ यद्रूपं तदनुकरणत्वस्य सत्वादत्र दीर्घग्रहणं स्पष्टञ्चेदं भाष्ये अत एव दीर्घविधायकवृत्तावपि क्षिय इत्येवोक्तम्। रदाभ्याम् ॥ चोवाक्यभेदार्थस्तदाह। निष्ठापेक्षयेति। रदाभ्यांकिं चरितं, तद्धि निष्ठासंबन्धितकारविशेषणं पूर्वग्रहणं भिन्नवद्भ्यामित्यादौ परदस्य माभूदितिस्पष्टं भाष्ये कार्त्तिकेत्योर्वृद्ध्युत्तरं नत्ववारणाय वृद्धेः परस्य नत्वप्रतिषेध इति वक्तव्यं बहिरङ्गासिद्धत्वन्तु त्रैपादिके ऽन्तरङ्गे नास्तीति निरूपितम्। ओदितश्च ॥ अस्मात्परस्य निष्ठातस्य न इत्यर्थः स्वादयोदिवाद्यन्तर्गणभूताः। शीतं जलमिति। अनेन सूत्रे स्पर्श-

त्वेन गुण एव प्रसिद्धत्वाद्व्याख्यानाच्च गृह्यते न तु रोग इति ध्वनितम् । अत एव प्रतेश्चेति सार्थकं तद्विषये नत्वञ्च । विभाषाप्य ॥ पूर्वग्रहणमभिसंशीन इत्यर्थमिति वृत्तिः । व्यवस्थितेति । एतदपि वृत्तौ स्पष्टं भाष्ये तु एतच्च दृश्यते वृत्तावपि यदि नेष्यते ततो व्यवस्थितविभाषेति वदतैवामनभिधानं सूचितं नत्वपादाने इति चेत्तदीयमपादानं न प्रयुज्यत इत्यर्थः व्यक्तमितित्वञ्जेः प्रकाशार्थस्य रूपं तदर्थादञ्जेस्तु निष्ठानभिधानमिति बोध्यम् ॥ यस्यविभाषा ॥ आर्द्धधातुकस्येत्यनुवर्त्तते इड्विहित इत्यध्याहारः अचेकाच इति वर्त्तते तेन दरिद्रित इत्यत्र न निष्ठादेश इति स्वरप्रत्यययोरुदाहरणं चीवः चैविकः अत्र च निष्ठाचद्व्यजनादिति निष्ठान्तस्य द्व्यचो विधीयमानमाद्युदात्तत्वं नौद्व्यचष्ठन् च न प्राप्नोति इदन्चेट्सहितस्य निष्ठातकारस्य लोपोनिपात्यत इति पत्ते यदा तु तकारमात्रस्य लोपो निपात्यते तदा नेदं प्रयोजनमिति ,व्यर्थत्वयोर्ग्रहणं इड्विधिग्रहणान्तु चीवे उल्लाघे इड्व्यावृत्तये । परिस्कन्दः प्रा ॥ अत्रैवनिपातनाचिष्ठायान्तलोप इति मते अस्यात्रोपसन्यासः अचप्रत्ययान्ते षत्वाभावनिपातनमित्यन्ये एतन्मतद्वयमपि वृत्तौ स्पष्टम् । वातश्चेदिति । इदं वृत्तिरीत्या एतन्मते निर्वाणोग्निर्वाणेनेति प्रयोगो वातस्य करणत्वे बोद्ध्यः भावे निर्वातं वातेनेत्येव भाष्ये तु अवाताभिधान इति वक्तव्यं निर्वाणोग्निर्वातेनेत्युक्तं भावे निर्वाणं वातेनेत्येवेति तदाशयः । क्षाम इति । क्षैतय इत्यस्यादेच इत्यात्वम् । स्त्यः ॥ प्रेत्यत्र पूर्वग्रहणं प्रसंस्तीत इत्यर्थं मत्वन्तु न प्रस्त्य इत्युक्तेः । अत्र स्त्यैष्ट्यै इत्युभयोरपि ग्रहणमिति वृत्तिः एतत्सर्वं भाष्ये न दृष्टम् । लत्वमिति । उत्वं चरफलोरित्यनुवर्त्तमाने ति चेत्येव सिद्धं तत्र फलनिष्पत्तौ ञिफलेत्युभयोरपि ग्रहणं व्याख्यानात् एकानुबन्धकपरिभाषाया असार्वत्रिकत्वात् फलनिष्पत्ताविन्यस्य नात्र निपातनं इडभावस्यापि निपात्यतापत्तेः एतेन पुल्लविकसने इत्यस्य निष्ठातलोपो निपात्यत इत्यपास्तं फलेर्लत्वे इत्यादिभाष्यविरोधाच्च । नचानुपसर्गादित्युक्तेः परिकृश इत्यस्यानुपपत्तिः परितः प्राप्तः कार्श्यनेत्यर्थेन परेः कृशं प्रत्यनुपसर्गत्वात् वृत्तौ कृशशब्दः कार्श्यपर इति स्पष्टं भाष्ये । इष्यत इति । वृत्तिकारैरिति शेषः । इटोभावश्चेति । निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्ध इति सिद्धत्ववार्त्तिके इड्विधिग्रहणमेतन्निपातनसिद्धार्थानुवाद इति भावः । तादौकितीति । निर्मूलं निष्फलञ्च ताभ्यां परस्य तादेः कित एव सम्भव इत्याशयो वा । नुदविदोन्द ॥ मण्डूकप्लुत्या रदाभ्यामित्यतो न इति वर्त्तते ह्रियो ऽप्राप्ते ऽन्येषां प्राप्ते विभाषेयम् । परेणेति । यदि तु पूर्वसाहचर्यमन्तरङ्गमित्युच्यते तदा व्याख्यानादेवास्य ग्रहणं बोद्ध्यम् । उत्त इति । एतेनैालसजीत्यादेर्लुग्न इत्यत्रेणनिषेधेनास्य सिद्धत्वात्रे-

डुशीति निषेधे सिद्धे ऽन्नेदिद्ग्रहणं व्यर्थमित्यपास्तम् । वरमनादाविति परिगण-
नेनात्र तदप्राप्तेः । ख्यात इति । ख्यादेशस्य ख्शादित्वात्स्वतन्त्रस्यार्द्धधातुके
प्रयोगाभावाच्चात्र ख्याग्रहणं व्यर्थमिति बोद्धम् । क्सावेट्त्वादिति । एकाच
इति निषेधाच्चेत्यपि बोद्धम् । भित्तमिति । शकलत्वजातिविशिष्टे रूढोयन्तेन
भित्तशकलयोः पर्यायत्वाच्च सहप्रयोगः निष्पन्नस्य शकलस्यान्यस्मिन्विदारणे
प्रतिपाद्ये भित्तं भिन्नमिति भवत्येव किंच भिन्नं विदीर्णमिति सामन्योपक्रमे
भित्तमिति प्रयोग इति स्पष्टं भाष्ये । ङ्युनिष्ठायाम् ॥ इडिति वर्त्तमाने पुनरिड्-
ग्रहणं नित्यत्वाय निष्ठायामित्येतत्तु यस्यविभाषेति निषेधबाधनार्थं स्यात् ।
वसतिक्षु ॥ अत्रापीड्ग्रहणं प्राग्वत् ॥ पूजार्थादिति । पूजाविषयार्थकादित्यर्थः
नागांश्चाञ्चितगामिन इत्यादौ समाधानेन पूजागम्यत इतीट्सिद्धः । न
तु गार्ध्य इति । गार्ध्यार्थदैवादिकस्य सूत्रे न ग्रहणं किंतु विमोहनार्थतौ
दादिकस्यैवेत्यर्थः । लुब्ध इति । धनाकाङ्क्षावानित्यर्थः उदाहरणे प्राप्तमोह
इत्यर्थः । आदिकर्मणि ॥ निष्ठेति । आद्येषु क्रियाक्षणेषु भूतत्वाभावादप्राप्ता-
निष्ठेति वचनं आदिभूतावयवे समूहरूपमारोप्य तस्य समाप्त्या भूतत्वं
यच्चाश्रीयते तदेदं प्रत्याख्यातं तदुक्तं यत्कृतं तदभिसमीक्ष्य प्रयोगे प्रकृतः
कटं वाकार्षीत्कटमिति च यदा वेणिकान्तः कटोभिसमीक्षितः तदा
प्रकरोति कटमित्येवभवतीति भाष्ये । विभाषा भा ॥ आदितश्चेति निषेधे
प्राप्ते इदम् । सेण्निष्ठेति । अस्यानिटोभावादिदं स्वरूपकथनं अत्र मृषिः
सर्वापि गृह्यते । श्वीदित इतीति । ननु नित्यत्वात्संप्रसारणपूर्वत्वयोः श्युक
इत्येवनिषेधे सिद्धे श्विग्रहणं व्यर्थमिति चेन्न श्युक इत्यत्रोपदेश इत्यनु-
वृत्तेरत एव स्तीर्त्वेत्यादिसिद्धिः । शून इति । अत्राल्विधित्वे ऽपि हल इत्यार-
म्भसामर्थ्यात्पूर्वरूपस्य संप्रसारणत्वन्तत्सामर्थ्यादेव क्रदतिङ् सूत्रस्यभाष्यरीत्यै-
कादेशस्याचः परस्मिन्निति स्थानिवत्त्वम् । वतस्तत इति । अनुदात्तोपदेशेत्यनु-
नासिकलोपः । अनित्यत्वज्ञापनाद्वेति इदं भाष्ये न दृश्यते क्नन्ततेरीदित्वमना-
र्षमिति परे । दरिद्रित इति । तन्निपतीति सनो वेट्कत्वात्प्राप्तिः । यदि मन्यादि-
साधने धात्वर्थे तुब्धादयो निपात्यन्ते तर्हि तुभितं मन्येनेति न स्यादत
आह समुदायेनेति । अन्यत्र प्रयोगस्तु सादृश्यात् स्वान्तशब्देन वाह्यविषयेषु
अविक्षिप्तमनाकुलं मन इत्युच्यते इति कैयटः । ननु धृषेरादित्वाद्विकल्पे प्राप्ते
तदंशे नित्यार्थोविधिः स्यात्तत्तश्च भावादिकर्मभ्यामन्यत्र वैयात्याभावे ऽपि
आदितश्चेति निषेध एव स्यादत आह भावादीति । वैयात्यमविनीतता । हर-
दत्त इति । अत्रारुचिबीजन्तु अवैयात्ये भावादिकर्मणोरनभिधानं मानाभाव
इति तच्चादित्वं सफलमिति तदाह माधवस्त्विति । इदितो नलोपश्चेति

अनिदितस्तु नलोपवर्जमिति भावः । इदं वृत्तिरीत्या भाष्ये तु इदित एव निपातनं अनिदितस्तु बृंहितमित्येवेत्युक्तं । बृहश्चहीति । प्रभौ तदर्थस्यैवानुगमादिति भावः घुषिर ॥ शब्देनाभिप्रायप्रकाशनं विशब्दनं तदाह शब्देनेति । णिलुक् चेति । तेनोपधागुणो न । अधीयमाने इति । तदर्थं चेत् क्तान्तं वर्त्तते इत्यर्थः वृत्तंछन्द इति । कर्मणिक्तः वृत्तं छन्दस इति प्रयोगस्तु केवलाद्वृते रकर्मकाद्भावे बोध्यः तत्र हि यस्य विभाषेतीट्प्रतिषेधः ण्यन्तात्तु भावे क्तो दुर्लभः नपुंसके भावे इत्यस्याऽप्यकर्मकेभ्य एव विधानादिति स्पष्टं भाष्यादौ केवलः श्रातिः कर्मव्यापारे वर्त्तते ततोऽकर्मकत्वात्कर्त्तरिक्तस्तदाह स्वयमेवेति । ततो णिचि पचिनासमानार्थात्कर्मणि तदाह पक्वमिति । क्षीरेत्यादि । तथा च भाष्यं किं निपात्यते श्राश्रपोः शृ भाव इति श्रातिः पच्यमानकर्तृकव्यापाररूपे कर्मकर्तृविषयपच्यर्थे वर्त्तते ततो कर्मकत्वात्कर्त्तरिक्तः णिजन्तस्तु मुख्यपच्यर्थे ततः कर्मणिक्तः शृतं क्षीरं देवदत्तेनेति कैयटः क्षीरहविषोरिति वक्तव्यं क्व माभूत् श्राणा श्रपिता वा यवागूरिति श्रपेः पुनर्व्यापारे णिचि याचनालब्धयोर्थे श्रपितक्षीरं देवदत्तेन यज्ञदत्तेनेत्येव न तु शृतमिति श्रपेः शृतमन्यत्र हेतोरिति वक्तव्यमिति वार्तिकात् अन्तर्भावितण्यर्थे पचेर्घञि पाकपादेन तस्याप्यभिधानसम्भव इति तदाशयः एतेन तस्य पाकत्वाभावादेवनिपातनाप्राप्त्या इदं वार्तिकं व्यर्थमिति कैयटोक्तं परास्तम् क्षीराज्याहविषां शृतमित्यमरस्य तु प्रमादः । वा दान्त ॥ दान्तशान्तयोर्णिलोपेडभावौ निपात्येते अनुनासिकस्येति दीर्घः दस्तस्पष्टच्छन्नेषु णिलुगिडभावौ ज्ञप्ते अमित एव णिलुगिडभावौ पक्षे ज्ञापित इति केचित् ज्ञपमिच्चेति चुरादेर्णिलोपे डभावो इति कैयटः छन्न इतित्वमित एव निपातनमिति स्पष्टं भाष्ये । हृष्यम ॥ सङ्घुषास्वनोर्विषये उभयत्र विभाषेति नवेति सूत्रे भाष्यम् । लोमस्विति । कर्तृष्वित्यर्थः । इदमजर्यमित्यत्र भाष्ये स्पष्टं केशानामपि लोमत्वात्तत्रापि विकल्पः । अन्यत्र त्विति । अर्थभेदेन रूपद्वयमर्थैक्ये ऽपि विस्मितप्रतिघातयोर्द्वैरूप्याय सूत्रम् । अपचिते चायश्चिभाव इडभावश्च निपात्यते क्तिनि नित्यं चिर्वाच्यः अपचितिः । प्यायः पी । अत्र भाष्यं आङ्पूर्वादन्धूधसोरेव नेह अप्यायनश्चन्द्रः तथा आङ्पूर्वादेवान्धूधसोः नेह प्यानोन्धुः अप्यानमूध इति । आङ्पूर्वादेवेति नियमेनोपसर्गान्तरमेवनिवर्त्यते तेन केवलस्याप्यापत्तिः आङाश्रयणेन नियमद्वयविधानात् केवलस्य सर्वत्र पीभावः पीनोन्धुः पीनमूधः पीनं पुण्यं पीनमुखी कन्येति । तेन विभाषाग्रहणानुवृत्तिरेवात्र लभ्यते व्यवस्थितेत्यादि मूलन्तु वृत्त्यनुरोधेनेति बोद्धम् । द्यतिस्यति ॥ दोसोमास्थेति सिद्धे शितपानिर्देश उपसर्गात्सुनोतीति वत् ,

ईत्वेत्यादि । तत्वन्तु स्वविषये परत्वादस्य बाधकमिति भावः । मामाङिति । गामादाग्रहणेष्वविशेषादिति भावः । तकारादाविति । यस्मिन्विधिरिति न्यायादयमेवार्थो न तु तान्ते दधातावितीति भावः । स्वशास्त्रकृत्पठितचर्त्वासिद्धत्वबाधापेक्षया यस्मिन्विधिरित्यस्याकरणान्तरपठितताया बाधेन तान्तदाधातुघटितोत्तरपद इत्येवार्थ उचित इति तान्तेदोषो दीर्घत्वं स्याद्वान्तेदोषो निष्ठानत्वं धान्तेदोषो धत्वप्राप्तिस्यान्ते ऽदोषस्तस्मात्यान्त इत्येतद्भाष्याशयः द इति च षष्ठीसप्तम्यर्थे । सन्निपातेति । न च नत्वधत्वयोरसिद्धत्वादस्या अप्रवृत्तिरिति वाच्यं असिद्धस्यापि तद्विघातकविधेरनया वारणस्य कृन्मेजन्तसूत्रे भाष्ये ध्वनितत्वात् जग्धमित्यादौ धत्वानापत्त्या ईदृशे विषये सन्निपातपरिभाषा ऽनित्यत्वाश्रयणमावश्यकमिति तु भाष्याशयः । चशब्दादिति । अत एव प्रकृतसूत्रस्थं प्रवत्तमवत्तमित्यवकाश इति भाष्यं दस्तीति सूत्रस्थं नीत्तावीत्तेत्युदाहरणपरभाष्यञ्च सङ्गच्छते नीत्तमित्येवपाठः सूत्तमितित्वपपाठः गतिश्चेति सूत्रे भाष्ये सोस्तत्वे उपसर्गत्वप्रतिषेधात् । वाक्रोश ॥ अत्राप्यण्यदर्थ इति वर्त्तते निनदीभ्यां निपूर्वस्नातेः कौशलेर्थे निष्ठान्तस्यैव प्रचुरप्रयोगदर्शनादिदमत्रोपन्यस्तम् । कपिष्ठलो ॥ गोत्रमिह पारिभाषिकमिति भाष्यस्वरसः गोत्रप्रत्ययस्य प्रकृतित्वेन दृष्टो यः कपिष्ठलशब्द इति व्याख्येयं अस्यात्रोपन्यासः प्रासङ्गिकः एवं विकुशमिपरीत्यस्यापि । गत्यर्थाक ॥ आदिकर्मणिचेति सूत्रात् क्तः कर्त्तरिचेति वर्तते । क्तोधिक ॥ स्थैर्यार्थाः प्रायेणाकर्मकाः अत्र वदन्ति गत्यर्थेत्यनेन सकर्मकेभ्यो ऽपि भावे क्तः विशेषविधानात् अत एव भ्रान्तं देवमित्यादिसिद्धं अत एवाजर्यं सङ्गतमिति सूत्रे गत्यर्थानाङ्गः इति सङ्गते कर्तरिक्तस्य दृष्टत्वात्कर्तरीदं निपातनं तर्हि कर्मण्यपि तत्र तस्य दृष्टत्वात् कर्मण्यपि स्यात् जीर्यतेरकर्मकत्वात् तत्र न एवन्तर्हि भावे ततः क्तस्य दृष्टत्वात्तत्र प्राप्नोति तस्मात्कर्तरिनिपातमिति वक्तव्यमिति भाष्ये उक्तं अत्र हि भावेक्तो न कर्तरि कर्मणि वा तथा हि सतिकर्तृकर्मवाचकेनाप्रथमाया इत्युत्तरवार्त्तिकेन तत्र समासोदुर्वारः स्यात् क्तोधिकरणेनेन भक्षणार्थेभ्यस्तु न भावेव्यवहितपाठेन तत्र कर्तरिभावकर्मणोरित्यनुवृत्तेः अत एव पीताब्राह्मणा इत्यादिसिद्धये कर्मक्तान्तादर्शआद्यजन्ततान्विता भाष्यकैयटयोः अत एवात्र सूत्रे चाद्यया प्राप्तमित्येवव्याख्यातं गत्यर्थेति सूत्रे ऽविवक्षितकर्मकाणामपि ग्रहणं नचाशितः कर्तत्यत्रत्यभाष्यविरोधः तत्र आङ्पूर्वादेशः सकर्मकत्वात्कर्तर्यप्राप्तः क्तो निपात्यतइत्युक्तमन्यथा मातुःस्मर्यत इति वदविवक्षितकर्मत्वेनाकर्मकतायां सूत्रेणैव सिद्धे निपातनं व्यर्थं स्यादिति वाच्यं तस्य भाष्यस्याशितओदनं देवदत्त इत्युदा-

त्तप्रयोगस्येष्टत्वेन तदर्थं निपातनमित्याशयस्यापि वक्तुं शक्यत्वात् अत एवाशितः कर्त्तेति निर्द्देशस्यायुक्तत्वं न विचारितं भगवता । दत्तवानित्यर्थे दत्त इति तु नापाद्यं विवक्षायाः प्रयोगाधीनत्वादित्यलम् । भुक्तमस्तीति भुक्तमन्नमित्यर्थः । इत्यादीति । अत एव सुवतेः सूत इत्यत्र वर्त्तमाने क्त इत्यजेर्वीत्यत्र कैयटः जीतः क्त इत्यादौ मण्डूकप्लुत्यावर्त्तमानइति संवध्यते चानशर्नाजङो सर्वकालतायाः भूत इति सूत्रे भाष्ये उक्तेः । जीर्ण इति । जीनो जीर्णो जरन्नपीत्यमरः । तस्येति । अनन्तरस्येति न्यायेन लिटः कानज्वेत्यत्र पर्वलिट एव ग्रहणात् योगविभाग उत्तरत्र क्वसोरेवसंबन्धार्थः । कानज्वेति वाग्रहणान्तु पक्षे तिङ श्रवणार्थं वासरूपन्यायस्त्वादेशेषु न अत्र चेदं वाग्रहणमेवलिङ्गमिति ध्वनितम् । भाष्यकैयटयोरिति । स्पष्टमेव तेन सदादिभ्यो भूतसामान्ये लिटः पक्षे तिङामश्रवणं शतृविषये यथा तिङस्तथा वक्ष्यन्ते इमौ कानच्क्वसू छान्दसौ इत्यत्रैव भाष्ये स्पष्टं विभाषापूर्वाह्णापराह्णाभ्यामिति सूत्रे पपुष इदं पपिवद्रूप्यमिति प्रयुक्तन्तेन लोके ऽपि क्वचित् क्वसोः साधुतेति सूचितं प्रकृतसूत्रस्थभाष्यं त्वछ्रूप्रकृतिकक्वसुपरमिति बोध्यं एकाज्ग्रहणसामर्थ्यलभ्यमाह कृतद्वित्वेति । द्वित्वोत्तरमभ्यासादिकार्येषु कृतेष्वेकाचामित्यर्थः तद्धि नानेकाज्व्यावृत्तये तत्र लिट्याम: सत्वान्मन्त्रे तथा प्रयोगाभावाच्च । नचामभावे जागर्तिर्व्यावर्त्यः नचैकमुदाहरणमिति न्यायात् दरिद्रातेस्तु कृतद्वित्वानामित्यर्थाभावे आद्ग्रहणस्य भूतपूर्वाकारान्तग्रहणेन दरिद्रात्यर्थतया न तद्व्यावर्त्यत्वमित्येकाज्ग्रहणसामर्थ्येन दरिद्रातौ न भवत्येवेडिति बोद्धुं घसिग्रहणाभावे तु द्वित्वात्परत्वान्नित्यत्वाच्च घसिभसोरिति लोपे द्वित्वनिमित्ताज्निमित्तत्वाभावेन द्विर्वचनेचीत्यस्याप्राप्त्या ऽनक्त्वेन द्वित्वं न स्यात् तत्सत्त्वेड्लोपयोर्नित्यत्वेन परत्वादिटि ततो हल्ग्रहणानर्थक्यमन्यत्रापि भावादित्युक्तेर्लोपे द्विर्वचनेचीति सिद्धमिष्टम् । नान्येषामिति ॥ क्रादिनियमात्प्राप्तस्य नियमोयमिति भावः । न च पपिवानित्यादौ सन्निपातपरिभाषया आतोलोपो न स्यादिति वाच्यं तस्या अनित्यत्वात् व्याख्यानाद्वा ग्रहणमेतद्विधेर्यलिटैवसंबध्यते तेन पक्षे लुङादिछन्दसीत्यस्य निवृत्त्यैवसिद्धे भाषाग्रहणं सर्वत्रवृत्त्यर्थन्तेनाद्यतनेलङ् परोक्षेलिडित्येतद्विषयेप्यस्य प्रवृत्तिरस्य लिटो वैकल्पिकत्वात्पक्षे तयोः प्रवृत्तौ तिङां श्रवणमिति दिक् । अश्नोतेरिति । अत एव न नुट् । साहचर्यादिति । लुग्विकरणपरिभाषासहकृतादित्यर्थः एतेन हनिसाहचर्याद्वृत्तेरपि ग्रहणं स्यादित्यपास्तम् । दृशेश्चेति वार्तिकम् । लटः श ॥ अनन्तरस्येति न्यायेनैतौ वर्तमाने लडि-

त्ति विहितस्यैवेति वर्तमानसामीप्य इत्यादौ भाष्ये स्पष्टं । पचमानमिति । अत्रा-तोऽङित इति न मुक् इयपवादत्वात् अत इति तपरत्वाच्चेति तु चिन्त्यं यदा-गमा इत्येतल्लक्षस्य तपरत्वेनाव्यावृत्तेः । अत एवादुपदेशात्परत्वप्रयुक्तस्वरसि-द्धिरिति दिक् । क्वचिदिति । कदाचिदित्यपि बोद्धव्यन्तेन पचतिन्नास्मण इत्यादि-सिद्धिः । वासरूपन्यायस्तु आदेशेषु नेति स्पष्टमेव । भाष्ये तु लटः शतृशानचौ विभाषावर्तते ऽप्रथमासमानाधिकरणे नित्यार्थेदिमित्युक्तन्तेन यत्प्रथमासमा-नाधिकरणे विकल्पबोधकं सदादिभ्योबहुलं ङ्धार्योर्वेति वार्तिककारेणोक्तं तच्च कार्यं योगविभागेन सिद्धेरिति बोध्यं । संबोधनेच । इदमुत्तरञ्चसूत्रं प्रथ-मासमानाधिकरणे नित्यार्थं । शयाना इति । शयनं भुज्यर्थपरिचायकं तदुपल-क्षितभुज्यर्थेन च यवनाः परिचाय्यन्ते इत्यन्यत् अर्जनं वा तस्य फलं हरिद-र्शनं मोक्षसाधनं इह लक्षणत्वादिद्योत्यं शत्राद्यर्थस्तु कर्त्रादिरेव । क्रियाया इति किं यः कम्पते सोऽश्वत्थ इत्यादौ माभूदिति । वेत्तेरिति । सत्ताविचारार्थ-योरात्मनेपदित्वात्तयोः शतुरसम्भवः लाभार्थस्य विकरणेन व्यवधानमिति भावः । तौ सत् ॥ अनुवृत्त्यैव सिद्धे तौग्रहणं शतृशानज्मात्रग्रहणार्थन्तेन द्विषन् द्विष्यमाणा इत्यादावपि पूरणगुणेति निषेधः । क्वचिदिति । कदाचिदित्यपि बोद्धव्यं तेन तिङां सिद्धिः लटः सद्वेत्यस्यापि भविष्यदधिकारविहित लृट्शे-षेचेति लृटे यत्प्रवृत्तिरित्यनवक्लृप्त्यमर्षेत्यत्र भाष्ये स्पष्टम् । अलङ्कृणीति । अना-यासेन क्रियानिवर्तक इत्यर्थः ॥ द्विषोमि ॥ अमित्रेऽक्लिन्दुरिष्टं पतिं भार्याना-भिनन्दतीत्यर्थः । सर्वे इति । सत्रिणः सर्वे यजमाना एवमुच्यन्त इति शेषः ॥ भ्राजेः । भ्राजभासेति क्विपमा इत्यर्थः ताच्छीलिकाः प्रायेणसोपसर्गेभ्योनेत्या-द्येति सूत्रे भाष्ये स्पष्टं तच्छीलः फलनिरपेक्षप्रवृत्तिः तद्धर्मास्वधर्मायमिति यः प्रवर्त्तते साधुकारी तौ विनापि धात्वर्थस्य साधुकर्ता । तृन् । कर्तेति षष्ठी-निषेधः तद्धर्मं मुण्डयितारः श्राविष्ठायनाभवन्ति वधूमूढां साधुकारिणि कर्त्ताखेटमिति ॥ भुवश्च । योगविभाग उत्तरार्थः इदं लोकवेदसाधारणमिति आढ्यसुभगेति सूत्रस्थभाष्यस्वरसः तत्र हि अच्वावित्यनुवर्त्य आढ्यीभवित्रि त्यत्र कर्तरिभुव इति खिष्णुच् खुकञौ नेत्युक्त्वा ताच्छीलिक इष्णुच् कस्मान्न भवतीत्याशङ्क्य रूढिप्रकारास्ताच्छीलिका न च रूढिशब्दागतिभिर्विशेष्यन्ते इत्युक्तं । नैतदिति । छान्दसत्वमनुक्तसङ्ग्याह कल्पेचेत्यर्थः । शमिनीतरेति । स-ञ्ज्ञापूरण्योश्चेति निषेधात्पक्षे पुंवत्त्वं नेति बोध्यम् । अलंग्रहणमिति । युवोरना-कावित्यत्र भाष्ये स्फुटमेतत् घिनुणकर्मकेभ्य एवेति भाष्यं घित्वं संपर्च्यादौ कु-त्वार्थम् । रागीति । अत्र रजेति निपातनान्नलोप इत्यनिदितामित्यत्र भाष्ये स्पष्ट-म् । पूर्वेणेति सकर्मकपक्षेस्तु युचोनभिधानमिति भावः । ननु वासरूपन्यायेन यु-

जपीत्यत आह तेनेति । ज्ञाप्यत इति शेषः । कूयितेति । तृनयम् । शयालुरिति । लुप्रत्यये प्रयोजनाभावाल्लस्येत्वाभावे शय्यतो दीर्घेण स्पृहयालुप्रभृतौ सिद्धे निपातनाच्छच्छब्दस्य धाशब्देन समासे अजन्तात्यधितन्द्रावत् विशिष्टात्प्रत्यये धातोर्विधानाभावात्सार्वधातुकत्वाभावाच्छप आलोपस्य चाभावे श्रद्धालौच सिद्धे आलुज्विधानमन्यतो ऽपि विधानार्थन्तेनेदं सिद्धमिति स्पष्टं भाष्ये । घस्मरेघसिः प्रकृत्यन्तरं भङ्गुरः कर्मकर्तर्येवघित्वात्कुत्वं । अजस्रमिति । निपातनाद्धातुना समासेः ॥ आदृग । अत्र क्या च्छन्दसीत्यतः छन्दसीत्यनुवर्त्तते अत एव भाषायां धाञ्क्रसिति वार्तिके भाषाग्रहणं चरितार्थं आदिति दकारः तेन चरगेन दीर्घान्तस्यापि तृ गृ इत्यादेः स्वरूपबाधेनातिदेशप्रवृत्तेस्तिबादयो न असंयोगादित्येवकित्त्वे सिद्धे पुनः कित्वज्जगुरिस्ततुरित्यादौ च्छन्दृतामिति गुणनिषेधार्थं । काशिकेति । भाष्ये तु नेत्यर्थः । ईश्वरेति । ईश्वरीति तु पुंयोगे विधाडिति । व्रश्चेति षत्वं । धूरिति । राल्लोप इति वलोपः । तृचेति । वासरूपविधिस्तु ताच्छीलिकेषु निषिद्ध इति भावः । दीर्घो संप्रसारणंचेति । अत्रासंप्रसारणंचेति दीर्घं वचनसामर्थ्यानुवादः तथा हि प्रत्ययसन्नियोगेन विधानादन्तरङ्गतया दीर्घत्वे कृते संप्रसारणे पूर्वत्वे च कृते लक्ष्येलक्षणस्येति पुनर्दीर्घाप्रवृत्तेर्वचिप्रच्छयोस्तद्विधानमनर्थकं स्यात् । अन्यथा क्विप्सूत्रेण सिद्धेस्तयोस्तत्र ग्रहणं व्यर्थमेव स्यादिति स्पष्टं भाष्ये एतद्भाष्यप्रामाण्यादेव लक्ष्येलक्षणस्येति न्याये विकारकृतलक्ष्यभेदानाश्रयणमित्याहुः । वार्तिके इति । अन्येभ्योऽपि दृश्यत इति सूत्रमप्येवमेवेति बोद्धव्यम् । वस्तुत उणादिसूत्राण्यपाणिनीयानीत्यनुपदं निरूपयिष्यामः । दिद्युदिति । द्युतिस्वाप्योरिति संप्रसारणम् । जगदिति । गमः क्वाविति मलोपे तुक् दीर्यतीतिदीर्यतेर्वा ददिति भाष्याद्विवादावप्ययमिति भावः । भुवः सञ्ज्ञायाम् ॥ इदं संज्ञान्तरयोः क्विबेवेति नियमार्थं विपरीतनियमस्तु न विधेयसङ्कोचापत्तेः । मितद्रुरिति । क्विपि तुक् स्यात् मितद्रव इत्यत्र चोवङ् स्यात् घेटो धाञश्चेति प्रयोगेषु द्वयोरर्थनिर्देशादिति भावः अत्र कर्मणीति नोपपदं व्याख्यानात् । दाम्नी ॥ दशेति शपानिर्देशो दंशसञ्जेति नलोपः दंष्ट्रायामजादित्वाट्टाप् । नध्रीति । नहोधः षित्वान्ङीप् । करणे इति । नोपपदं व्याख्यानात् वृत्तिरीत्या यथासङ्ख्यमभिप्रेत्याह । च्छन्दसीकरणे इति । एवमन्वये द्वन्द्वस्यासाधुत्वापत्त्याऽभयान्वय इति कर्त्तरिकृदिति सूत्रस्यभाष्यस्वरसः । पवित्रमिति । पावमान्यादिसूक्तमित्यर्थः । अथोणादयः ।

प्राय उणादिप्रत्ययान्ताः रूढिशब्दा अवयवार्थशून्या असन्तमप्यवयवार्थमाश्रित्य व्युत्पाद्यन्ते तत्रापि प्रायः कर्तरि बाहुलकादन्यत्रापीति बोध्यम् । तत्रापि प्रायोवर्त्तमानकालएवेति भूते इति सूत्रे भाष्ये तत्र हि नञ्साहने

एहचेत्युणादिसूत्र विहितासिप्रत्ययान्तोनेहस्शब्दो वर्त्तमानकाल एवान्यत्र नाहन्तेत्युक्तं तृच्ण्वुलोः वर्त्तमानकाले एव साधुताया ण्वुल्तृचाविति सूत्रे भाष्ये उक्तत्वेनेदं भाष्यमेकदेश्युक्तिः । अत्र वदन्ति कृवापेत्यादिसूत्राणि सर्वं नामधातुजमिति नैरुक्तमतानुसारि शाकटायनादिप्रणीतव्याकरणान्तरादभियुक्तैः सङ्गृहीतानि अत एवोणादय इति सूत्रे बहुलवचनं किमर्थमिति प्रतीकमुपादायोणादय इत्येवोणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थमस्त्विति भावः इति कैयटेनोक्तं नह्येषां पाणिनीयत्वे शास्त्रान्तरशब्दप्रयोगो युज्यते अत एवामेर्गुरिश्चलोवेत्युणादिसूत्रैर्बाधितसाधुत्वानामण्वङ्गुलीलोमशुक्लादीनां साधुत्वाय रस्य लत्वार्थं कृपोरो ल इति सूत्रे वचनमारब्धं वार्तिककृता बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषां कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवन्ति सुसाध्विति बाहुलग्रहणप्रयोजनमुक्तं शास्त्रान्ते तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते प्रत्यया अपि प्रायेण समुच्चिता न सर्वे तथा कार्याण्यपि सशेषाणि कृतानि अतो बाहुलकमुक्तं ननु यावदुक्तमेवप्रकृतिप्रत्ययकार्यमस्तु किंबाहुलकग्रहणेनेत्यत्राक्तं नैगमेत्यादिवैदिकानां रूढानां सञ्ज्ञाशब्दानाञ्च सर्वेषां प्रातिस्विकरूपेण साधुत्वबोधनस्याशक्यत्वाच्छास्त्रान्तरे प्रायः समुच्चयनादिकृतन्तेषां सर्वेषां साधुत्वाभ्यनुज्ञानाय चानेनाचार्येण बहुलग्रहणं कृतन्तेनात्र व्याकरणे सर्वेषां सङ्ग्रहसन्दिग्धं साधुत्वं बोधितं पाणिनिशास्त्रबोधितानामेवेदानीं साधुत्वात् ननु के ते वैयाकरणा यैर्नैगमरूढिभवानां प्रकृतिप्रत्ययविभागेन व्युत्पादनं कृतं तत्रोक्तं वार्तिककृता नामचधातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकमिति निरुक्ते नैरुक्तव्याकरणे शाकटायनश्च सर्वं नामधातुजमाहेति ते व्युत्पन्नत्ववादिनः एवं च पाणिनिर्न तद्व्युत्पन्नत्ववादीति स्पष्टमेवोक्तं ननु यत्रावयवार्थानुगमो नास्ति तत्र कथं व्युत्पादनं शक्यमत उक्तं यत्र विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यमिति अवयवार्थज्ञानपूर्वकं न यत्र समुदायार्थप्रतीतिः शास्त्रज्ञानामित्यर्थः उक्तप्रत्ययसादृश्यं दृष्ट्वा तदितरोभागः प्रकृतित्वेन कल्प्यः उक्तप्रकृतिसादृश्यं दृष्ट्वा तदितरः प्रत्ययत्वेन कल्प्यः नैवं सर्वत्रोहः कार्यः किंतु साधुत्वेनाभिमतासु सञ्ज्ञास्वेवेत्युक्तं, सञ्ज्ञासुधातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु इति एतदुपलक्षणं कार्यान्तराणामपि तदुक्तं कार्यसशेषविधेश्चेति अनेन भाष्यावार्तिकसमूहेनोणादयोबहुलमिति व्याकरणान्तरव्यवस्थापकमिति स्पष्टमेवोक्तं उणाद्यन्ता ये शास्त्रान्तरे व्युत्पादिताः शब्दास्तत्र बहुलमिति

वक्तव्यं वर्त्तमानाधिकारे च ते वक्तव्याः भूतेपीति च वक्तव्यमिति सूत्रार्थश्च सूचितः स्वशास्त्रे तेषां साधुत्वबोधनं चैतावताकृतं पाणिनेस्तु तेष्वव्युत्पत्तिपक्ष एवाभिमतः तदुक्तमायनेयीति सूत्रे भाष्ये प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमिति तत्र पाणिनेरित्युक्त्या तस्याव्युत्पन्नात्युणादयो ऽव्युत्पन्नानीत्युक्तं ततः शङ्कित्रा येषां सर्पिरादीनां सर्पिरित्यादौ रुत्वानुरोधेन सान्तानां सर्पिषेत्यादौ षत्वानापत्तेरिति शङ्किते सिद्धान्तिनोक्तं एवन्तर्हि बहुलवचनात्सिद्धं बहुलं प्रत्ययसञ्ज्ञाभवतीत्युक्तं बहुलमित्युक्तेरव्युत्पन्नत्वे ऽपि प्रत्ययसञ्ज्ञानिमित्तं कार्यं भवति व्युत्पन्नत्वे च कार्यविशेषे प्रत्ययत्वं कार्यविशेषे तदभाव इति वर्समित्यादावङ्गत्वप्रयुक्तगुणस्य षत्वाभावस्य च सिद्धिरिति तदर्थः एवञ्चायामन्तेति सूत्रे इत्न्वादीनाङ्ग्रहणं न्यङ्क्वादीनाञ्चेति सूत्रे उणादिव्युत्पन्नन्यङ्क्वादिग्रहञ्च व्याकरणान्तरस्थप्रत्ययानुवादेन तदनुमतिपरं अनेहावर्त्तमानकाल एवेति भूत इति सूत्रस्थं भाष्यं व्युत्पत्तिवादिव्याकरणान्तररीत्या अव्युत्पन्नत्ववादिपाणिनिमते तु न तदिति बोद्धव्यम् । एवन्तृचश्चकाराभावे मात्रादिशब्दे दीर्घापादनादिपरखल्तृचाविति सूत्रस्थभाष्यमपि तद्रीत्यैव अत एवायामन्तेति सूत्रे भाष्यं किमयं क्नुः आहोस्वित् इत्नुः कश्चात्र विशेषः क्नुर्वाविटि णेर्गुणवचनं तत्र णेर्गुणो वक्तव्यः स्तनयित्नुः गदयित्नुः अस्तु तर्हि इत्नुः प्रत्ययान्तरं कर्तव्यमयादेशे चोपसंख्यानमुभयङ्क्रियते न्यासे एवेति अस्यार्थः । अयामन्तेति सूत्रं नापूर्वायादेश विधायकं किन्त्वेचोयवायाव इत्येतद्विहितानुवादकं लाघवात् तत्फलन्तु णिलोपाभावबोधनं तत्र किमन्तादिवद्व्याकरणान्तरविहितः क्नुरेव कृते ऽडागमोत्र सूत्रे निर्दिष्टः अथ ततो ऽन्य इत्नुः प्रत्ययान्तरमिति प्रश्नः क्नुर्वाविटीति तस्येडादित्वाण्णिलोपाभावे कित्वाद्गुणाभावेनास्यानुवादत्वासम्भवेनापूर्वस्य विधाने गुण एव विधेयो व्याकरणान्तरवत् अन्यथास्य सूत्रस्याद्यन्तांशे ऽनुवादत्वमेतदंशे विधित्वमिति वैरूप्यापत्तिरिति भावः इत्नो प्रत्ययान्तरमिति व्याकरणान्तरे ऽस्यासत्वादपूर्वं प्रत्ययस्वरूपं कल्प्यं अयादेशेचेति अयादेशविषये ठकिलोप इति सूत्रे निमित्तत्वाश्रयणेन पितृष्वसुर्ढगुपसंख्यानवत् एयन्तेभ्यो यथाप्रयोगं निमित्तत्वाश्रयणमूलकमुपसंख्यानं कर्त्तव्यमित्यर्थः । आनुमानिकं वचनमेवात्रोपसंख्यानपदेनोच्यते सूत्रपाठ एवो पसंख्यानमत्रोच्यते इति कैयटोक्तम् क्नुग्रहणेप्यत्र सूत्रे गुणविधायके वा तत्पाठस्यावश्यकत्वेनात्र पक्ष एव विशिष्य तदुक्तो बीजालाभात् मम तु तत्पक्षे व्याकरणान्तरे विहितस्य स्वानुमतत्वानुमानमात्रं न तु धर्मिणः कल्पनेति नैतदुक्तिः उभयङ्क्रियते

इति। इगुः प्रत्ययान्तरं तस्य च निमित्तत्वबोधनद्वारा ण्यन्तेभ्यो ङुविधाना-नुमानरूपमुपसंख्यानं चेत्यर्थः । एवञ्चास्य सूत्रस्यैकरूपतया यादेशानुवादक-त्वसिद्धिरिति लाघवमिति भावः एतेन यदात्र क्नुग्रहणमयादेशार्थं क्रियते स्तन्यादिभ्यश्च क्नुरेव स्यादेवलाघवमिति कैयटोक्तमपास्तम् तत्तदिष्टस्वर-विशिष्टानामेवान्तादीनामनुवादात्स्वरविशेषोऽपि नास्ति एवञ्च स्तनिहृषीति सूत्रं व्याकरणान्तरस्योणादिसूत्रेषु प्रक्षिप्तमिति बोध्यम् अन्यथा बहुलग्रहणा-त्क्वचिदन्यदेवे त्यर्थकात्कार्यान्तरवदेषामपि कार्याणां सिद्धौ तवाप्येतद्वैयर्थ्यं स्पष्टमेव एतेन क्विब्वचीत्युणादिसूत्रेण सिद्धे क्विब्वचीत्यादिवार्त्तिकं तच्छीला-दौ तृनाबाधामाभूदित्येतदर्थमित्यपास्तम् तेषां पाणिनीयत्वाभावात् अत एव अजेर्वीति सूत्रे वालिटीत्यतो वाग्रहणमनुवर्त्य व्यवस्थितविभाषामुक्त्वा न तर्हीदानीं वायाविति वक्तव्यं वक्तव्यञ्च किं प्रयोजनं नेयं विभाषा किं तर्ह्या-देशोविधीयते वा इत्यादेशो भवति अजेर्यौ परतः वायुरिति भाष्योक्तं सङ्ग-च्छते अन्यथा कृवापाजीत्युणादिसूत्रेण वायोः सिद्ध्या तस्याकर्तव्यतामेव वदेत् युश्चानेनैवानुमेय उपसंख्याने अनुनासिकयणत्वाभावादनेन न च कैयटोक्तरीत्या यजिमनीति बाहुलकाद्युचिवारणार्थं तन्न्यायस्तदभावेन तद्रू-पापत्त्यभावात् मम तु तेषामपाणिनीयत्वात्पाणिनिशास्त्रे तदारम्भोयुक्तः यत्तु विप्रतिषेधसूत्रे येनविधिरिति सूत्रे च बहिरङ्गपरिभाषायां स्योनः स्योने-त्युदाहृतं तद्व्याकरणान्तररीत्यैव तत्र हि बाहुलकादौणादिको नप्रत्ययः यथा विप्रतिषेधसूत्रेन्तरङ्गपरिभाषाया अन्तरङ्गत्वाद्यणादेशे वैयाकरण इत्यादौ इकारोकारयोर्वृद्धिप्रसङ्गे इयुवाविति व्याकरणान्तरलक्षणविहितयोरियुवोरप्रा-प्तिरूपोदोषः शङ्कितः प्रैयमेध इत्यत्र तयोर्वारणायाचीत्यस्यावश्यकत्वेन समाधानमुक्तम् । यदपि कर्मवत्सूत्रे किमिदन्तय इति तदेरयमौणादिकोस्कारो-भावसाधन इत्युक्तं तदपि पररीत्या योगप्रदर्शनेन स्वमते तच्छब्दस्य रूढत्वो-तनायेति न तद्विरोधः एवमन्यदप्येवं जातीयकं व्याख्येयमिति सुधियो वि-भावयन्त्विति । अनुबन्धद्वयेति । स्वरार्थे ङित्वमेवास्त्विति भावः । वल्गु इति । कण्वादिपठितप्रातिपदिकेनैव सिद्धे इदं व्यर्थन्त्वेवेति । सौत्र इति तु इति । सौत्रा-त्प्रत्ययो णिदिति युक्तं वक्तुंणिलोप इति तत्र स्याधातोरातोलोप इत्यनेन अन्यस्य तु निपातनादिति बोध्यं कमिमनि अनेनैवकन्तोः सिद्धौ अर्जिदृशीति सूत्रे कमिग्रहणं व्यर्थं । केचित्त्विति । अचार्यचिः कैयटमाधवादिग्रन्थविरोधः यो ऽट्चगर्भुच्छब्दः प्रत्ययस्वरेणान्तोदात्तः अत एव गर्भुतमित्यत्राज क्वचिद्वेदे चाद्युदात्तपाठस्तु छान्दसः सर्वेनिघृष्वअतन्त इति व्याचष्टे अकर्तरीति । इण्-शीभ्यामित्येवसिद्धे शेवेति व्यर्थमत आह अन्तोदात्तेति ॥ इति प्रथमः पादः ॥

छतेः छः । उमागमेनैर्वासिद्धे छू आदेशविधानं प्रक्रियालाघवार्थं रञ्जेः क्युन् रजनी गौरादित्वान्ङीषिति बोध्यं वृन्नृचो शास्ति वदादिभ्य इति पाठान्तरं शास्तामूलस्यपाठे तु वदादित्वादयं साधुः ॥ इति द्वितीयः पादः ।

सिवेष्टेः । उकारादेशेनैव सिद्धे यूकरणं स्पष्टार्थं स्योन इति । अनित्यत्वा-द्गुणेत्यस्या अप्रवृत्तेर्नोपधागुणः दाकेत्यादौ केण इति ह्रस्वोन नकपीति साहचर्येण तद्धि तस्यैव कस्य तत्र ग्रहणात् लोष्टमिति वृज्वत्सूत्रे लुशेर्लोष्ट-मिति भाष्यं समलोष्टाश्मकाञ्चन इत्यत्रोभयोरुपादानङ्गोबलीवर्दन्यायेन लोष्टरूपाश्मकाञ्चनयोरित्यर्थः अश्मपदेन मणयः लोष्टतुल्यत्वेनात्यादराभाव-ध्वननार्थन्तदिति वा । वर्त्तिकेतिशकुनौ प्राचांमते वर्त्तकेत्यर्थमुदीचांमते वर्तिकेत्येवरूपार्थे वर्त्तकाशकुनौ प्राचामितीत्वप्रकरणस्थं वचनं बोध्यम् । अस्यौति । क्थिनोनित्त्वं चिन्त्यप्रयोजनं नञ्विषयत्वेनाद्युदात्तत्वसिद्धेः ॥ इति तृतीयः पादः ।

जूर्णिरिति । बाहुलकादाङ्पूर्वादृतेरपि आर्त्निः धनुः कोटिः ङीषि आर्त्नी इत्यपि आर्तिः पीडाधनुः कोट्योरित्यार्तिशब्दस्तु आङ्पूर्वादृतेः क्तिनि बोध्यः अयं ह्रस्वादिरपि उणादिषु साधुः । अचेः कोवेति । अत्र चिदित्यनुवृ-त्यान्तोदात्तोयं मध्योदात्तोबाहुलकात् । मरीचिरिति । मिदचोन्त्यात्सूत्रभाष्ये मञ्चेर्ण्यन्तादच इरीमागमश्चेत्युक्तं । कुर्वश्चडिति । दीर्घविधानसामर्थ्यान्नगुणः बाहुलकाद्दीर्घगुणयोरभावे कुचोऽपि समीणः । चट्दीर्घश्चेति । वर्त्तते जम्बालेति कर्दमेत्यर्थः षण्ठ इति शण्ठः प्रागुक्तः ठस्येक इति सूत्रे शण्ठ इति प्रती-कमुपादाय जनिदाच्य इति ठप्रत्यय इति कैयटः प्रेत्वरीति यदागमा इति न्यायेन तुड्विशिष्टस्य ग्रहणान्ङीप्रौ च हशन्ताद्विहितत्वेन निषेधापत्तिः कथञ्चात्र तुक् छान्दसत्वादिति वनोरचेति सूत्रस्थभाष्येणास्य छान्दसत्व-बोधने तत एव तदप्रवृत्तेः । वर्णिः सौत्र इति ण्यन्तस्य वर्णादेश इत्युचितं किंच बलप्राणन इत्यस्य बलौसिद्धे वर्णादेशविधानं व्यर्थमिति बोध्यं वसौ वापीति सूत्रे वादिर्ण्यन्तोनिर्दिष्टो बाहुलकादण्यन्तादपि एतच्च भूवादिसूत्रे आकरे पातेर्डुमिति सूतेः सस्य पः ह्रस्वोम्सुन् प्रत्यय इति स्त्रियामिति सूत्रे भाष्ये उक्तं अगस्तिरिति अत्र क्तिच्क्तौचेति क्तिजित्यन्ये एतत्समानार्थो ऽग-स्त्यशब्दो ऽपि अगस्त्यायतीति विग्रहे आतोनुपसर्गेक इति कान्तः द्वयोरप्य-पत्ये ष्यण्णि यकाररहितमागस्त्य इत्यादस्य आगस्त्य इति द्वितीयस्य आद्यस्य बहुत्वे आगस्ता इति द्वितीयस्य अगस्त्य इति आगसत्यकौण्डीन्य-गस्त्यादेशः अगस्तिशब्दो गर्गादिष्वित्यन्ये भूरञ्जिभ्यामिति शृञ्जिभ्यामिति

पाठ इति अनिदितामिति सूत्रे हरदत्तः पुरञ्जिभ्यामिति कैयटः मिथुनेऽसिः धातूपपदयोर्मिथुनं उरुव्यचा इत्यप्यस्यैवोदाहरणमिति ग्रहिज्येति सूत्रे कैयटस्वरसः । दीर्घ इति । बाहुलकात्तदभावे पुरूरवा अपि प्रायेणेति तेनाप्सरा इत्येकवचनान्तमपि । ध्वनितञ्चेदं वर्णद्वित्वप्रकरणे भाष्ये ॥ इति चतुर्थः पादः ॥

समानेख्य इति इणीति डिदिति यलोप इति चानुवर्तते स चोदात्त इत्यस्य समानस्य सादेश उदात्त इत्यर्थः स च समासोत्तरमिति तित्स्वरेण व्यवस्थासमानस्येति योगविभागेन सदृशपर्यायसह शब्देन वा समासे सादेशसिद्धेरस्यानुवादत्वात् । शीङो ॥ अत्र डित्स्वनेरित्यत उदात्तग्रहणमनुवर्त्तते तच्च शीङोर्विशेषणन्तेनाद्युदात्तोयं ह्रस्वविधिसामर्थ्याद्गुणो नलोप इति अलोन्त्यस्य ॥ इति पञ्चमः पादः ॥

उणादयो ॥ अत्रोणादिशब्देन व्याकरणान्तरप्रसिद्धपञ्चपाद्युक्ता एव नाष्टाध्यायीस्थाः तथा सति कृत्यल्युट इत्यत्र रोगाख्यायामित्यत्र च बाहुलग्रहणवैयर्थ्यापत्तेः एवञ्चात्र निर्णीतस्वात्ताभ्यामन्यत्रेत्यत्रापि पञ्चपाद्युक्तानामेवग्रहणं बहुलग्रहणप्रपञ्चभूतानि सूत्राणि व्याचष्टे भूतेपित्यादि तुमुन्ण्वुलौ ॥ भविष्यतीत्यनुवर्त्तते उपपदमिति महासञ्ज्ञयापदन्तद्वाचकपरं क्रियाचात्र तिङन्तापस्याप्येव तेन भोक्तुं पाक इति न उपपदमतिङिति भाष्यस्वरसादिति निरूपितं पुनर्ण्वुलिति अकेनोरित्यत्र भविष्यदधिकारविहितस्याकस्य योग इति व्याख्यानेन फलं न च वर्षशतस्य पूरक इत्यादौ ण्वुल्तृचाविति ण्वुलि पदान्तरसंबन्धाद्भविष्यत्वप्रतीतावपि षष्ठीसिद्धिः फलं तथा एतत्कर्मकयाजनकर्तार इत्यर्थके ऽङ्गयजतांलप्स्यन्ते ऽस्य याजका इत्यादौ षष्ठीसिद्धिरपि फलमिति वाच्यं शब्दशक्तिस्वाभाव्येन क्रियानुपपदकाकान्तस्य कर्तृप्रतिपादकतया पदान्तरसंबन्धादिनाभविष्यत्वप्रतीतावपि अकस्य भविष्यदर्थकत्वाभावेन तत्र निषेधाप्राप्तेरिति भावः लृट्तु सामर्थ्याद्भवत्यवेति बोद्धुम् । अनन्तरत्वादिति । अत्र व्याख्यानमेवशरणं कालः पचतीति अत्र धात्वर्थमात्रं विवक्षितं न तु वर्तमानत्वादिभूतभविष्यत्वाकस्यापि विवक्षितत्वात् इति प्राप्तिरिति भावः भाववचनाइति बाहुलकात्कर्मणिल्युट् भावाधिकारविहिताश्च भाववचनाः न च भावे इत्येतावतैव भावे ये विहितास्ते ततोन्यत्रापीत्यर्थे नेष्टसिद्धिरिति वाच्य याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्ययाविहितास्तभ्यस्तेनैवविशेषेणते भवन्त्वित्यर्थं वचनग्रहणसत्वात् तदाह भावे इत्यधिकृत्येति अण्कर्मणि च चात्क्रियार्थायामित्याद्याकृष्यते उपपदसंचियोगश्च क्रियते उपपदत्वन्तु प्रत्येकमेव प्रत्येकं सप्तमीनिर्द्देशात् इदं सूत्र ण्वुला णो बाधा मा भूदित्यर्थं न च वासरूपन्यायेन निर्वाहः पुनर्ण्वुल्विधानेनैतद्विषये न्यायाप्रवृत्तेरत एवैतद्विषये तृजचो

न कृते चास्मिन्वासरूपन्यायेन ण्वुलपि तदाह ण्वुलोपवाद इति एवञ्च प्रतिप्रसवविधिरयं पुनरनुवादेन ज्ञापकसिद्धवासरूपनिषेधाप्रवृत्तिमात्रं अत एवापूर्वविध्यपेक्षया लाघवं नन्वेवं कम्बलदाय इत्यादावण् न स्यादनेन सूत्रेण ण्वुलाप्राप्तबाधस्य प्रतिप्रसवेऽपि केन बाधस्य दुर्वारत्वात् अत आह परत्वादिति आवृत्त्यास्य पुनरणविधायकत्वे नाण उत्कृष्टत्वात्कस्यापि बाध इत्यर्थः वचनसामर्थ्याच्चावृत्तिरिति भाष्ये स्पष्टं पदरुज ॥ एरजित्यतः प्राक् घञधिक्रियते अयं कर्तरि सारोबलमिति भाष्ये तु बलेखदिरसार इत्युदाहृतं सिद्धावस्येति अत एवास्य स्त्रियामिति विशेषणं सङ्गच्छते इगन्तस्यैवेति अत्र घञीत्यनुवृत्त्योपसर्गस्य घञीत्येवसिद्धे नियमोयमिति भावः प्रायिकमिति स्पष्टं चेदं भाष्ये । इङश्च ॥ अयमपि प्रकृत्याश्रयस्यैवबाधको न क्तिनो व्याख्यानात्तदाह अस्मादिति उपाय इत्यस्य पर्यायउत्प्रेवेति । निरभ्योः ॥ अत्रोपसर्गाभ्यान्धात्वोर्यथासंख्यं धान्येति धान्यविषयकप्रक्षेपार्थप्रतिपादकादित्यर्थः ॥ यज्ञे समि ॥ यज्ञविषयकेऽर्थे वर्त्तमानात्स्तुव इत्यर्थः ॥ समि मुष्टौ ॥ मुष्टिविषयकार्थवृत्तेर्यह इत्यर्थः ॥ परिन्योः द्यूताभ्रेषविषयकार्थाद्धातोरित्यर्थः पदार्थानामनपचारोयथा प्राप्तस्य च करणमभ्रेषः राज्ञोपशाय इति राजसमीपशयनस्य पर्याय इत्यर्थः हस्तादानेचेति निश्चेयमेववक्ष्यमाणापः पूर्वविप्रतिषेधेनेति भाष्ये काशीनिकाय इति काशीनिवासदेश इत्यर्थः गोमयनिकाये भावेघञ् । कर्मव्यतिहारे ॥ णचस्त्वकारो णच्स्त्रियामित्यादौ विशेषणार्थः आक्रोशेवन्योः अनन्तरोपीनुण न संबध्यते अस्वरितत्वात् वृणोतेरा ॥ समुदायेनाच्छादने गम्ये इत्यर्थः आच्छेति प्रवराणैः कल्प्यादिभ्य एरजेति वार्तिकं कल्पोर्थामन्तः एरजण्यन्तानामिति त्वनार्षं अचश्चकारर्थेति विशेषणार्थः निश्चय इति अभिधानसामर्थ्येन थाथादिस्वरः न प्रवर्त्तते एवञ्चोत्तरपदप्रकृतिस्वरेण मध्योदात्तमेतत् एवनाचैवसिद्धं थाथघञित्यस्य प्रवृत्त्य स्वरविशेषाभावात् न च हस्तादानेचेरिति घञोबाधनार्थमस्तये ऽस्मादयोऽनिष्ठेरिति परात्वं घञर्थक इति स्याण्णायाहनिव्यधियुध्यर्थमित्युदाहरणमात्रं बोध्यं प्रस्थविघ्नयोरधिकरणे कः प्रतिष्ठन्ते ऽस्मिन् धान्यानीति प्रस्थः विघ्नन्ति तस्मिन्ननांसीति विघ्न इति भाष्योक्तेः । व्यधजपो ॥ अनुपसर्गस्योपसर्गेनेत्यर्थस्तदाह व्यध इति उपजापो मन्त्रभेदः अनुपसर्गेचेति उपसर्गभावे चेत्यर्थस्तदाह क्वाण इति मदोनु उपसर्गभिन्ने उपपदे इत्यर्थः ग्लह इत्यत्राप्प्रत्ययो लत्वं च निपात्यते । हनश्चव ॥ चो वध इत्यस्यानन्तरं प्रत्ययसमुच्चायको योज्यो व्याख्यानात् अत्र वधादेशोन्तोदात्तोनिपात्यत इति उदात्तनिवृत्तिस्वरेण प्रत्यय उदात्तः स्वतन्त्रवधे घञर्थे केन सिद्धे ऽनुपसर्गा-

दिति विशेषं वक्तुमिदं वस्तुतो वधिः स्वतन्त्रो नास्त्येवेत्युक्तं यत्तु माधवेन वधेर्घञा सिद्धेन्तोदात्तार्थमिति तन्न एरजित्युत्तरं वध इत्येवसिद्धे हन इत्यस्य वैयर्थ्यतावदवस्थात् घनान्तर्घनप्रघणप्रघाणोद्घनापघनेति निपातनं हनेर्दन्ता एते आदेशा अप्प्रत्ययश्च वेति पदद्वयमपि स्तम्बेकचेति सूत्रे भाष्ये स्पष्टं अन्त्ये अतो लोपे कृते अप् उदात्तनिवृत्तिस्वरेणोदात्तः आद्ये फिषोन्त इत्यन्तोदात्तत्वं बोध्यं अन्त्ये हनुइत्यस्य संबन्धः अभ्रघने अभ्रसंबन्धिघन इति विग्रहः। कर्मण्यधि ॥ व्याख्यानात्कर्मोपपदमधिकरणमर्थः अधिकरणग्रहणमर्थान्तरनिरासार्थं भावादाविति तत्र यथाभिधानं व्यवस्था अयमनेकाज्भ्यो नेत्याद्यन्तवत्सूत्रस्यकैयटस्वरसः स्त्रियामित्यधिकारः कृत्यल्युट इतियावत् अजपीत्विति अजव्रज्या स्त्रीखलना इति वार्त्तिकोक्तेरिति भावः प्रवृत्तिरिति भाष्ये नैतद्दृष्टं दृश्यत इति बाहुलकादिति भावः ज्ञापकादिति तेन बाहुलकादङपीति भावः वर्तते इति मन्त्रेवृषेतिति सूत्रादिति भावः भावादाविति क्यप्विधावधिकरणेचेति वार्त्तिकात् तत्र चेन करणसङ्ग्रहः भृञो ऽयङ्क्यप् भाव एवेति भृञोऽसञ्ज्ञायामिति सूत्रस्यभाष्यस्वरसः परिचर्येत्यादि भावे शो निपात्यते यक् तु सिद्ध एव अकर्त्तरिकारके ऽभिधानसत्वे तत्र यगपि निपात्यः मृगयेति णिनिमित्ताजन्तलक्षणवृद्ध्यभावो ऽत्रत्यार्वेति दीर्घाभावश्च निपातनादिति बोद्ध्यं अदन्तरोरिति तत्र अतोऽङ्विधावेव अन्तःशब्दस्याङ्किविधिणत्वेष्विति भाष्ये स्पष्टन्तेनान्तर्द्धा अन्तर्द्धरन्त्तर्णयतीत्यादिसिद्धिः एवञ्चान्तरदेशे ऽयनञ्चेति सूत्रद्वयं न कर्तव्यं देशे प्रतिषेधः क्षुभ्नादित्वात्सिद्ध इति अन्तरपरिग्रह इति सूत्रे कैयटः आद्यं प्रज्ञाश्रद्धेति। निर्देशसिद्धं। रादिफः रादिति निर्देशात्पक्षे प्रत्ययसामान्याभावेऽपि मत्वर्थीय इति मतुशब्देन तदर्थो लक्ष्यते ततो बहुव्रीहिः स्वार्थे छो बोद्ध्यः शरीरसुखमिति अर्थात्स्पृश्यमानस्य कर्त्तुः शरीरस्वास्थ्यजनकं सुखमित्यर्थः कर्मणिकिं तूलिकाया उत्थानं सुखं स्पर्शादिति किं अग्निकुण्डस्योपासनंसुखं शरीरेति किं पुत्रस्य परिष्वञ्जनं सुखं मानसीप्रीतिरत्र वायौ इदं सूत्रं अजेया परतो वा इत्यादेशे वायुरित्येवं भाष्ये व्याख्यातं। छादेर्घे ॥ अत्रोपधाया इति वर्तते णाविति च छादेरिति णिप्राग्भागानुकरणं आगन्तुनेकारेण घपरेणाङ्गस्य छाद उपधाया ह्रस्व इत्यर्थः एतेन णेरेव ह्रस्वः स्यात्तत्सामर्थ्याच्च णिलोपो न स्यादित्यपास्तं अवे तृस्त्रो ॥ करणाधिकरणयोरित्यनुवृत्ते ऽपि यथासंख्यं नास्वरितत्वात् ॥ हलश्च । अत्रापि प्रायेणेति वर्त्तते अवहारादयस्त्रयोप्यधिकरणसाधनाः । उदङ्कोनु ॥ अनुदकविषयकार्थप्रतिपादकाञ्चेरुदङ्क इति निपात्यत इत्यर्थः घृतोदङ्क इति बासरूपन्यायेन

घृतोदञ्चनोऽपीति कश्चित् गोदोहनप्रसादनयोर्बाहुलकाद् घघञो नेति बोध्यम् । आनाय इति । निपात्यते जालञ्चेद्वाच्यमित्यर्थः जालशब्दस्तु जलघातन इति धातोर्ज्वलितीति णान्तः । भगः पदमिति, क्वचित्प्रयोगः । ईषद्दुः ॥ खित्त्वमुत्तरार्थं लकारः स्वरार्थः खलचोरिति पचाद्यच् एरच्वृह्यते । नसुदुर्भ्यां ॥ तृतीयापञ्चमीवेयं आद्ये प्रत्युदाहरति । सुप्रलम्भ इति । द्वितीये आह अतिदुर्लभमिति । अत्र केवलशब्देन सूत्रोपस्थितातिरिक्तं सजातीयमुपसर्गान्तरं व्यावर्त्यते न कर्मप्रवचनीयइतरः शब्दो वा तनद्धुनयन्नाह यदास्वतीति । सूत्रोपात्तातिरिक्तेति विशेषणात्सुदुर्लभमित्यस्य सिद्धिरिति कैयटः सुदुरोरुपसर्गत्वप्रतिषेधस्तु केवलसुदुर्विषय एव अतिसुलभमित्यत्रैव भाष्यप्रयोगात् आतोयुच् ईषदादयोऽनुवर्त्तन्ते न तु कर्तृकर्मणोरिति दुष्पाने इदुदुपधस्येति षः । पात्यदां ॥ कृत्यच इति भावकर्मणोरिति च प्राप्तं निषिध्यते । पदेऽन्त इति । अत्र चान्तग्रहणमेवमानं । क्तिच्क्तौ च । क्तिचाबाधामाभूदिति पुनः क्तविधिः । नक्तिचि । अनुदात्तोपदेशवनतीत्याद्यनुवर्त्तते । दीर्घेति । अनुनासिकस्येति प्राप्तः वन्तितन्त्योस्तु तितुत्रेति नेट् । सनः क्तिचि । अस्य विकल्पत्वाद्द्वयोर्ग्रहणे फलाभावादाह सनोतेरिति । सन इत्येववक्तुं युक्तं । अलंखल्वोः ॥ छन्दसि भावलक्षण इति निवृत्तं अव्ययकृत्त्वादसत्त्वभूतोभावः क्त्वार्थः पक्षे ल्युडादौ तु ससत्त्वभूत इत्यन्यत् । अलङ्कार इति । भावेघञ् मेङ्प्रणिदान इत्युक्त्या व्यतीहारार्थस्य तस्यैवक्तत्वात्वस्य सूत्रे निर्देशः समानकर्तृकयोरित्यनेन सिद्धिमाशङ्क्याह । अपूर्वेति । पूर्वं ह्यसौ याचित्वापश्चादपमयते वस्त्रादिपरिमयतीत्यर्थो विवक्षित इति भावः परावर शब्दोत्र पूर्ववृत्तिवाचो । समानक ॥ कप्रत्ययदर्शनाद्बहुव्रीहिः पूर्वकाले इति तद्विशिष्टेऽर्थे वर्तमानाद्धातोरित्यर्थः अत एव समानकर्तृकयोः पूर्वकाल इति क्रियाप्रधानोनिर्देश इति भाष्ये उक्तन्द्वित्वमिति पूर्वत्वस्य समानकर्तृकत्वस्य च भेदघटितत्वेनानेकक्रियालाभेऽपि सौत्राद्द्विवचननिर्देश इति भावः पूर्वकालत्वञ्च व्यवहितमपि व्यवधानस्य च तात्पर्यबलेन व्यवस्था अत एव भुक्त्वाव्रजति अद्यभुक्त्वा श्वोव्रजिष्यतीत्याद्युपपत्तिः । पूर्वविप्रतिषेधेनेति । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादित्यर्थः । न क्त्वा सेट् । अनेन कित्कार्यं निषिध्यते कित्त्वनिषेधे हि क श्रवणं स्यात् क्त्वेतिकिं निगृहीतः । झलादाविति । अनुनासिकस्य क्वीत्यतो झलीति वर्त्तते झलादावितीति अनिदितामित्यतः क्ङितीत्यनुवर्त्त्य कितिक्त्वि इति व्याख्येयमित्यर्थः सेट्क्त्वा च नकिदिति भावः । समासेनञ् । अनञिति पर्युदासः तेननञ् सदृशाव्ययपूर्वपदके प्रत्यासत्त्या क्त्वान्तोत्तरपदक इत्यर्थः तेन ह्यत्वाकालक इत्यादौ नदोषः अनञ

इत्येवसिद्धे पूर्वग्रहणं स्पष्टार्थम् । अधीत्येति । यद्यपि पदान्तपदाद्योरेकादेशो ऽसिद्धो ऽत्र च उत्तरखण्डे सुबुत्पत्तेः पूर्वमेव समासस्तथापि तत्र पदशब्दे-नार्थवत उपलक्षणाच्च दोषः गतिकारकेत्यस्यानित्यत्वात्सुबन्तेन वा समासः वा ल्यपीत्यस्य स्थाने ल्यपि च वा म इति वार्तिकन्यासः । नान्तानिटामिति । प्रयोगाभिप्रायेण बहुवचनम् ॥ आभीक्ष्ण्ये णमुल च ॥ यद्यपि वासरूपन्यायेन क्त्वासिद्धस्तथापि विभाषाग्रे इति सूत्रेणोभयोर्विधानाय चकारः तत्र सूत्रे साधनान्तरजन्यस्वसजातीयक्रियापेक्षपौर्वकाल्यरूपसाधनपौर्वकाल्यविषयाग्रा-दीनामेवग्रहणेन तद्विषये समानादिसूत्रेण क्त्वस्तेन न्यायेन दुर्लभत्वात् नाप्यनेन आभीक्ष्ण्ये पूर्वविप्रतिषेधेनास्येष्टत्वेनानाभीक्ष्ण्ये एव तत्प्रवृत्तेः द्वित्वमिति नित्यवीप्सयोरित्यनेन यद्यप्याभीक्ष्ण्यं णमुलादिना द्योतितं तथाप्यर्थान्तरे ऽपि तद्विधानाद्द्वित्वरहितये.न तत् द्योतने सामर्थ्यमिति भावः । नाकाङ्क्ष इति । यद्यपि क्त्वाप्रकृत्यर्थक्रियायाः सर्वत्राकाङ्क्षास्ति तथाप्याख्या-तोपात्तक्रियाया आकाङ्क्षानिषेधविषयः नाकाङ्क्षितश्चेदिति युक्तः पाठः । पक्षे लडादय इति । कर्त्रादिविवक्षापक्ष इत्यर्थः । भावेऽप्येतौ तदाह अग्रे भुङ्क्ते इति । अत्रैवार्थे विभाषाग्रहणन्तात्पर्यग्राहकं एतद्विषये कर्त्रादिविवक्षापि पूर्वसूत्र विषये तु न सामानाधिकरण्याभावादिति दिक् । चोरङ्कारमाक्रोशतीति । चोरश-ब्दमुच्चार्येत्यर्थः नचात्रानुकरणञ्चानितीति निपातत्वाव्ययत्वयोः सत्वान्मुम नापत्तिः अरुर्द्विषदित्यत्र खित्यनव्ययस्येत्यनुवृत्तेरिति वाच्यं खित्करणसामर्थ्या त्तत्सिद्धे यद्वा कृत्साधुत्वार्थं चोरमाक्रोशतीत्येवबोधः ॥ यथातथयोर ॥ असूय याप्रतिवचने इति विग्रहः ॥ वर्षप्रमाण ॥ वर्षा वृष्टिः । गोष्पदपूरमिति । गोष्पदपू-रंतरामितीष्टं गोष्पदप्रन्तरामिति तु न अनभिधानात् प्रातः के गोष्पदप्रतरमिति चेष्यत इति भाष्ये स्पष्टं ॥ समूलाकृत ॥ यथासंख्यमत्रेष्यते ॥ करणे ह ॥ हिंसार्थानाञ्च समानेत्येवसिद्धे ऽहिंसार्थं वचनं हिंसार्थवचनं हिंसायां नित्य-समासार्थञ्च तेन प्रथमे तु तृतीयाप्रभृतीनिति विकल्पेन सस्यात्तदाह यथा-विधीति । हस्तार्थ इति । व्याख्यानादर्थग्रहणं ॥ अधिकरणे बन्धः ॥ अत्र संज्ञा-यामित्याकृष्यते तेन ग्रामे बद्ध इत्यर्थे ग्रामबन्धंबद्ध इति न ॥ कषादिषु ॥ स एवेति । सचाविशेषात्कृदन्तस्तिङन्तश्चेति बोध्यं शय्येति एवं हि नाम-त्वरा यदावश्यकं मुखक्षालनाद्यकृत्वैवधावतीत्यर्थः । येन विनेति । एवञ्च येनविना जीवनं तदध्रुवमिति फलितं । यद्यपीति । क्त्वानिवृत्तिस्तु नष्टेति भावः । उपपदेति । द्वितीयान्तस्येत्यादिः तेन पाक्षिकोपपदसमाससिद्धिरिति भावः । गेहस्येति । व्याप्यमानतया द्रव्यस्य द्वित्वमासेव्यमानत्वेन णमुलन्त-स्येति भावः केवलेन णमुलासमासाभावे द्वित्वं विना तयोर्वक्तुमशक्यत्वमिति

तात्पर्यम् । अस्यतितृषोः ॥ अनयोः किं त्र्यहमुपोष्य भुङ्क्ते । क्रियान्तरे किम् अहरत्यस्येषूनागतः नगतिर्व्यवधीयते कालेषु किं योजनमत्तस्य गाः पाययति ॥ नाम्न्यादि ॥ नामशब्दे उपपदे आङ्पूर्वाद्दिशेर्ग्रहेश्च णमुलित्यर्थः तिर्यचीति सौत्रोनिर्देश इति भाष्यं तिर्यक्कृत्येत्ययं समुदायोऽपवर्गे तदाह समाप्यगत इति ॥ स्वाङ्गे त ॥ स्वाङ्गे उपपदे इत्यर्थः तसप्रत्यय इति कर्मधारयः ॥ नाधार्थे ॥ यथासंख्यमत्र नेष्यते आनुलोम्यमानुकूल्यं तच्च परचित्तानुसरणमिति सर्वेष्टसिद्धिः ॥

इत्युपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते लघुशब्देन्दुशेखरे सिद्धान्तकौमुदीव्याख्याने कृदन्तं समाप्तम् ॥ विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः ॥



श्रीगणेशायनमः ॥

अथ वैदिकेषु विशेषमाह ॥ छन्दसिपुनः ॥ पुनर्वस्वोर्द्वितारे । लोके त्विति । उद्भूतावयवभेदे समुदाये रूढत्वादिति भावः । एवं विशाखयोरपि द्वितारे तेन लोके द्विवचनमेव योगविभागः छन्दसीत्यस्योत्तरत्र निवृत्त्यर्थः । एवं हि चानुकृष्टत्वान्नोत्तरत्रानुवृत्तिः । वतीति । वत्प्रत्यये इत्यर्थः । मनेरिति । आदेशप्रत्यययोरिति षत्वम् । अनङ्गत्वादिति । अङ्गस्य भस्येति तत्राधिकारात्प्रत्यासत्याऽङ्गभसञ्ज्ञानिमित्तयोरेकत्वाश्रयणेन भसञ्ज्ञानिमित्तवसुशब्दनिरूपिताङ्गत्वाभावादिति भावः एतद्वार्त्तिकद्वयं छन्दोविषयमिति कैयटः । संज्ञाद्वयमिति । तत्प्रयुक्तं कार्यमित्यर्थः । अयस्मया ॥ अयसोविकार इत्यर्थे द्व्यचश्छन्दसीति मयट् तेप्रागित्यनुवृत्तिप्रदर्शनार्थः इन्धिभवतिभ्याञ्चेत्यस्य क्रमप्राप्तप्रथमोपन्यासत्यागे बीजमाहेन्धेरिति ॥ इति प्रथमोध्यायः ॥

हविषि वर्तत इति । हूयते तत्होत्रन्ततो ऽग्निपदेन षष्ठीतत्पुरुषः अग्नये हूयत इतित्वर्थप्रदर्शनम् यथाग्वेति वाक्ये जुहोतिस्त्यागपूर्वके प्रक्षेपे वर्तते । द्वितीया ब्राह्मणे ॥ सोपसर्गस्य दिवेर्विभाषोपसर्गे इति व्यवस्थितविभाषया सिद्धे निरुपसर्गार्थोयमारम्भः । पुरुषमृगश्चन्द्रमसे इति । बहुलग्रहणाच्चन्द्रमसश्चतुर्थीव्यत्ययोबहुलमित्यस्यैवायं प्रपञ्चः । अडभाव इति । बहुलं छन्दस्यमाङ्योगेपीत्युक्तेः । सग्धिरिति । क्तिनि घसिभसोर्हलिचेत्युपधालोपः समानस्य छन्दसीति सः न च भवति अत्तां प्रकृत्यन्तरन्तु सार्वधातुकमात्रविषयमिति बोद्धम् । हेमन्तशि ॥ शिशिरशब्दस्य हेमन्तः शिशिरो ऽस्त्रियामित्यमरादुभयलिङ्गत्वे ऽपि हेमन्तशिशिरे इत्येतन्निवृत्तये स्पष्टार्थं हेमन्तशिशिराविति । अमरस्य प्रमाद इत्यन्ये । अहोरात्रे इति । रात्राह्नाहाः इति पुंस्त्वं प्राप्तं द्वित्वमतन्त्रं अहोरात्राणिविदधत् । घस्लादेशस्येति । लुङ्सनोरिति विहितस्य । वृ इति । वृङ्वृञोः सामान्येन ग्रहणं । आप्रेति । प्रापूरणे आङ्पूर्वः मध्यमपुरुषैकवचनम् । परावर्गिति । परापूर्वस्य वृजेः अक्रन्निति हृजः । अनुगमन्विति । गमेर्गमहनेत्युपधालोपः अन्नतवेत्यस्येतरेयब्राह्मणे सत्त्वादाह मन्त्रग्रहणमिति ॥ इति द्वितीयः ॥

अक्रारिति । कृञोलुङि तिपि मन्त्रेघसेति च्लेर्लुकि सार्वधातुकगुणे तिपो हल्ङ्यादिलोपे रूपम् । अजूगुपतमिति । गुपेर्लुङ् तसस्तन्तुजादित्वादभ्यासस्य

दीर्घः । छन्दसि निष्ट ॥ निष्टर्क्येत्यत्रायं विश्चाविसः षत्वं निपातनादिति व्यत्ययोऽत्र प्रत्ययवर्णयोः दीर्घश्चेति अत एव तुगभावः शिवेरिति शासेरित्यर्थः धूहूच्छने यजेयं इति देवशब्दे उपपदे इत्यादिः प्रत्ययस्वरेणान्तोदात्तत्वे कृदुत्तरपदप्रकृतिस्वरः स्त्रीलिङ्गएवेदं निपातनम् । पृच्छेः । प्रच्छज्ञीप्सायामित्यतः । सीव्यतेरिति । प्रतिपूर्वादित्यादिः । ब्रह्मणीति । उपपदे इत्यर्थः । लोकेत्विति । ब्रह्मोद्यं वदतीत्यादौ व्यत्ययेन क्यप् बोध्यः । गोषणिति । गांसनतीति विग्रहः अत्र सनोतेरन इति नकारान्तस्य निषेधात् ॥ गोसनिशब्दस्य सवनादिषु पाठः करिष्यतइति सनोतेरन इति सूत्रस्यभाष्याच्च यद्यप्यत्र षत्वं न प्राप्नोति तथापि दन्त्यस्यैवमूर्धन्यवत्पाठो वैदिकसंप्रदायात् अत एव पदकाले दन्त्यमेवपठन्ति गोसनिमिति यत्तु सुषामादित्वात्षत्वमिति तन्न उक्तसूत्रतद्भाष्यविरोधात् । येषथामिति । षन्यानं रक्षन्ति हविर्मन्यन्तीति विग्रहः । छन्दसिसहः । लोके तुरासाहमित्यादिप्रयोगाश्चिन्त्या इति हरदत्तः । वहश्च । अस्य लोकेऽपि प्रवृत्तिं केचिदिच्छन्ति । हव्येनन्तः । हव्यशब्दे उपपदे वहेर्ञ्युट् पादयोर्मध्यस्यनेत्यर्थः तदाह पादमध्येत्विति । जनसन ॥ उपसर्गे सुपि चोपपदे एभ्यश्छन्दसि विट् विड्वनोरित्यत्र विशेषणार्थेष्टः वेरपृक्तस्येत्यत्र सामान्यग्रहणार्थश्च अप्सूत्पद्यते गोषूत्पद्यते गाः सनति नृन्सनति बिसानि खनति दधिक्रामति अग्रेगच्छतीत्युदाहरणार्थः सर्वत्र विड्वनोरित्यात्वं अग्रेगा इति सप्तम्याअलुक् । अवेयज इति । योगविभागउत्तरार्थः । विजुपे ॥ मन्त्रे इत्यनुवर्त्तमाने छन्दोग्रहणं स्पष्टार्थं छन्दोब्राह्मणानीति सूत्रबलेन ब्राह्मणे मुख्यछन्दस्त्वस्यानङ्गीकारात् सुधीवेत्यादौ घुमास्थेतीत्वं वनिपि तु क्वित्त्वाभावान्नेत्वम् उपपदान्तरे इति । ब्रह्मभ्रूणेति नियमादप्राप्तः क्विप्प्रतिप्रसूयत इति भावः बहुलग्रहणात्क्वचिन्न पितृघातः । छन्दसिलिट् । छन्दसिलुङ् लङ् लिट इति धातुसंबन्धाधिकारस्तं क्वसुश्चेति योगविभाग उत्तरार्थः अनन्तरस्यैवलिटोयमादेशः लिट इति तु प्रत्ययान्तरत्वाभावाय अनयोः कित्वन्तु चच्छृत्यतामिति प्रतिषेधविषयगुणस्य तेरतुरित्यादाविव तितिराणस्तितीर्वानित्यादौ प्रवृत्तिवारणाय ईजान इत्यादौ लिटः कित्वादेवसंप्रसारणं सिद्धम् । अञ्जेराजिवानित्यादौ नलोपोपि छन्दस्युभयथेत्यनेन सार्वधातुकत्वाङ्कित्वादेवसिद्धः नचैवमारिवानित्यत्रापि गुणो न स्यात् ऋकारान्तप्रश्लेषेण ऋधातौ पुनर्विधानादिति प्राञ्चः । क्याच्छन्दसि । क्विद्धो य इति व्याख्यानात्कण्ड्वादियगन्तादपि यमस्य योनौ शकुनं भुरण्युमिति यथा लोके ऽस्सूयव इति तु लोहितादिसूत्रभाष्यरीत्या प्रसाधु । मन्त्रेवृषेष ॥ सूत्रे पञ्चम्यर्थे प्रथमा वृषुसेवने इषद्-

च्छायां मनज्ञाने मनुबोधने इत्युभयोर्ग्रहणं विदादीनामपि यथादर्शनङ्कौविधातव्य उदात्तवचनमुत्तरार्थे व्रजयजोर्भावेक्यबुदात्तोयथास्यादिति प्रसक्तौ तादौ च नितीति पूर्वपदप्रकृतिस्वारर्थञ्च लोडर्थे इति पूर्वपरान्वयि अकरमिति क्षमृदृहहिभ्यश्छन्दसीति क्लेरङ् ऋदृशोङिगुणः उदाहरणेषु धातुसंबन्धो मृग्यः सिब्बहुलं अयंविकरणः यासिसीष्ठा इत्यादौ सिपाव्यवधानादिविनिषेधो न विहितविशेषणे ऽपि छान्दसत्वान्न तत एव च ललार्वधातुकानुदात्तत्वं वेतोन्यत्रेत्यतो वेति वर्तते तदाह लोपोवेति । परस्मैपदेष्विति । षष्ठ्यर्थे सप्तमी परस्मैपदतिङामिकारान्तानामित्यर्थः । पतातीति । पत्लृगतौ तिप आट् । जिह्मायन्त्य इति । छन्दसिपरे च्छायामिति क्यच् । अश्वाघस्यादिति । योगविभागेनात्वं अन्यस्य पापेच्छावन्त इति इदमेवजिह्माचरणंनाम अन्येतूपमानादन्यत्रापि छान्दसत्वादाचारेक्यचमाहुः अपिशब्दाच्छानजिति अपिशब्दादेवाहावपि यो ऽस्कभायदुत्तरं अस्कभ्नाहीत्यर्थः । व्यत्ययो । व्यतिक्रम्यगमनं व्यतिपूर्वादिणो भावेणच् तच्च क्वचिदन्यविषयावगाहनं क्वचिद्द्वौ क्वचित्त्रय इत्यादि लिङिति तस्य यमस् धातोर्गुणः नित्यं ङित इति सलोपः यासुट् अतोयेयः यलोपः आद्गुणः विकरणप्रकरणे व्यत्यय इत्येवसिद्धे बहुलग्रहणं सर्वविधिव्यभिचारार्थं तदाह सुप्तिङिति । बहूनर्थांल्लातीति आदत्त इति बहुल तस्य भावो बाहुलकं मनोज्ञादित्वाद्वुञ् दक्षिणाया इत्यत्र स्याडभावश्छान्दसत्वात् उपग्रहपदेन लादेशव्यङ्गस्यार्थत्वपरार्थत्वादितत्प्रतीतिनिमित्तलादेशोप्युपग्रहणादेनोच्यते इत्याशयेनाह उपग्रहइत्यादि । मधुन इति । प्राप्ते इति । अमृतक्षीरयोर्वाचको मधुशब्दो नित्यक्लीब इति भावः । वियूयादिति । युमिश्रणे विपूर्वः विशेष इति अचि अव अदायेत्यवग्रहः अणि आदायेति स्यात् न लक्षणेन पदकारा इति न्यायेनात्र फलान्तराभावाद्व्यत्ययफलं चिन्त्यम् । लिङ्याशिष्यङ् । स्था गा गमि वचि विदि शकि रुहिष्वेवायमङ्विकरणः प्रायेण दृश्यते बहुलं छन्दसीति अन्यथा स्तत इदितीत्वंस्यात् गुणस्तु न क्त्वादिति भावः तुमर्थाभावः अव्ययकृतो भाव इत्युक्तेर्भाव इत्येवसिद्धे तुमर्थग्रहणात्साध्यावस्थभावस्यात्र ग्रहणं शृणध्ये इति बाहुलकादगुणत्वं पिबध्यै इत्यादौ यगभाववत् एवञ्च बाहुलकेनैव पिबाद्यादेशकित्वकार्यं स्वीकृत्य कध्यैकध्यैन् शध्यैशध्यैनिति प्रत्ययचतुष्टयं व्यर्थमिति सूचयति आहुवध्यै इति । ह्वेञः संप्रसारणे उवङि रूपम् नव्येच्छितवै इति । ष्वादेर्म्लेच्छधातोस्तवे इट् अवगाहे इत्यत्र केन् भावलक्षणे भावस्य लक्षणत्वे गम्ये इत्यर्थः आविजनितोः आप्रसवादित्यर्थः । इति तृतीयः ॥

रात्रेश्चाजसौ ॥ अजसादिष्विति वक्तव्यं रात्रिंरात्रिं सहोषित्वा अजसादाविति किं यास्ताराात्रयः । लोके त्विति । असञ्ज्ञाविषये इत्यर्थः सञ्ज्ञायान्तु लोकेपिङीबन्तएववृत्तौसञ्ज्ञाछन्दसोरित्यनुवर्त्तनात् शशदिभ्यान्निबितिञ्चिवत्तआद्युदात्तोरात्रिशब्दः । नित्यग्रहणमिति । आरम्भसामर्थ्यान्नित्यत्वसिद्धेरिति भावः उत्तरार्थं भुवश्चेत्यर्थंएङूप्रत्ययान्तस्या भूरिति स्यादत आह उवङिति । गुग्गुल्वादीनां छन्दसिव्यत्ययेनस्त्रीत्वं पतयालुर्विशेष्यलिङ्गः शौनकादिभ्यश्छन्दसि अस्या नलेखो लेखकप्रमादात् छन्दसि अभिधे इति तदर्थात् अत एव शौनकीयाशिक्षेति तत्प्रत्युदाहरणमाकरे । वर्ध्रामिति । बर्ध्रीति तु वधेरौणादिकेष्ट्रनिबोध्यं वर्ध्रिकाः यस्येति भाष्ये प्रयोगात् मेघ्यायेति यतोनाव इत्या द्युदात्तत्वं प्राप्नोति अन्तस्वरितश्च पठ्यत इति हरदत्तः वैशन्तीभ्य इति वेशन्ते पल्वले भवा आप इत्यर्थः । स्रोतो जलप्रवाहः भगर्भस ॥ तन्नित् यद्यपीति छान्दसत्वात् चातुर्घानिति यतः पूर्वेणैव सिद्धे व्यवहितस्यापि घनः समुच्चय इति भावः लोकत्वयिम इत्येव अग्रादित्येवसूत्रयितुमुचितं यतोऽधिकारात् बर्हिर्षिदत्तं भव इति निवृत्तं बर्हिः कुशहुताशयोः दूतस्य ॥ कर्मक्रिया तत्र भागे तस्येदमित्यणि कर्मणिच दूतवणिक्भ्याश्चेति ये प्राप्ते वचनम् रक्षाया ॥ विरूपाणामपीत्येकशेषो न कृतोऽसन्देहायशैषिकाणकयोरपवादः प्रशस्य इति बाहुलकाद्भावेष्यप् तद्योगे कर्मणिषष्ठी तदाह रेवत्यादीनामिति रयिरहत्यस्यारेवती रयेर्मतौ बहुलमिति संप्रसारणं ॥ मायाया ॥ असदर्थप्रकाशानशक्तिर्माया असुरस्य सुरप्रतिपक्षस्य माया आसुरी मूर्धन्वतोरिति यद्यपि मूर्द्धा वयः प्रजापतिश्छन्द इत्यन्त्यमन्त्र एव मूर्द्धन्शब्दोऽस्ति तथाऽपि तत्साहचर्याच्छत्रिन्यायेन विष्टम्भोवय इत्यादयश्चत्वारोपि मन्त्रा मूर्धन्वन्त उच्यन्ते वयस्यास्विति किं अग्नेयशस्विन् यशसेसमर्पयायं मूर्धापरमेष्ठीति केवलमूर्धशब्दवता वयःशब्दरहितेन मन्त्रेणोपधेयासु माभूदिति मत्वर्थमा ॥ मत्वर्थे यत् स्याच्छन्दसि मासतन्वोर्वाच्ययोः मासतन्वोः किं स्वध्वरासोमधुलन्तोऽग्नयः सूत्रे तनूशब्दो दीर्घान्त इति हरदत्तः अनन्तरार्थेचेति वक्तव्ये मध्वनन्तरमस्मिन्मध्व्यो माधव्योमासः लुगकारेकाररेफाश्चेति वाच्यम् लुक् मधुस्तपोनभः अन्त्ययोः क्लीबत्वमार्षं अकारः इष ऊर्ज्ज इट् अन्नमूर्ज्जेलं तद्वानित्यर्थः इकार आतपाधिक्येन देहशोषरूपाशुगस्मिन्नस्ति शुचिः रेफो रशब्दः शुक्रः अयस्मयादित्वाज्जश्त्वं न ओजसोह ॥ ओजःशब्दान्मत्वर्थे यत्खौ स्तोहनिवाच्ये । वेशोय ॥ एतदादिकाद्भगशब्दाद्यल्खौ भगः श्रीकाममाहात्म्य वीर्ययत्नार्ककीर्तिषु । पूर्वैः कृत ॥ पूर्वशब्दात्तृतीया बहुवचनान्तात् कृतमित्यर्थे इन इति य इति च प्रत्ययः अद्भिः संस्कृतमित्यर्थे

यदित्यर्थः । सोममर्हं ॥ सोमशब्दाद्द्वितीयान्तात्तदर्हतीत्यर्थे य प्रत्ययः । मयोय इति । निवृत्तञ्चान्मयडर्थे इति स्वार्थे इत्यपि बोध्यं अग्निरीशेवसव्यस्येत्यादिः स्वार्थे इति समूह इति निवृत्तं पचाग्रजिति एवञ्च क्षुद्रेणागलत्तया षष्ठी समर्थविभक्तिः फलितमाह शिवंकरोतीति । शिवशम् ॥ अरिष्टाः प्रकृतयः ॥ इति चतुर्थः ॥

साप्तानीति । आर्षं क्लीबत्वं वर्गः प्राप्यप्राणित्रिषः विंशिन इति आङ्गिरसत्र्यास्य गार्ग्यगौतमेत्यादिप्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः । सादन्यमिति । सदनमर्हतीत्यर्थः इद्वत्सरे दावत्सरसंवत्सरपरिवत्सराः पञ्चवर्षे युगे चतुर्णां वर्षाणां सञ्ज्ञा उद्वत इत्यादि देशाः विशेष्याः साधनशब्देन शक्तिमद्द्रव्यमिति लिङ्गसंख्यायोगाद्दन्वर्थाव्ययसञ्ज्ञान । यट्च ॥ च चात्य मट् युक्त तु अत्र न कृतः नलोपानापत्तेः दीर्घश्चेति द्वयोभयहृद यविषयमिदं छन्दसीव ॥ चाद्वुः अन्यतरस्याङ्ग्रहणानुवृत्तेर्मतुप् च रयोस्यास्ति सुमङ्गलमस्या अस्तीत्यर्थः । मघन्धनमस्यास्ति मघवा उन्नतसंबन्धिनीत्यर्थे उद्वा उद्वतीति वमतुपोरुदाहरणे तयोरिति व्याचष्टे इदन्तदोरिति आनन्तर्ययोगे षष्ठी कथेति कुतोहेतोः केनप्रकारेणेवेत्यर्थः तुश्छन्दसि अजादीगुणवचनादेवेति नियमबाधेन प्रकृत्यन्तराभ्यनुज्ञामात्रं क्रियते न त्वपूर्वाविधिस्तेनोपाधिसङ्करो न । करिष्ठ इति । कर्तृशब्दात्तृजन्तादिष्ठनिति कर्मणिद्वितीया अतिशयरूपेष्वनर्थस्य विशेषणत्वात्तृजन्तस्य शक्तेश्च न कृतपूर्वोक्टतुल्यता तेन तद्वदत्र तृजन्तप्रकृतिकत्वे ऽपि न षष्ठीति परास्तन्दोग्धीशब्दे सिद्धश्चप्रत्ययविधाविति वचनाद्वस्याठ इति पुंवत्त्वे न दोग्धृशब्दात्प्रत्यये तुरिष्ठेमेयस्स्विति तृलोपः ततः प्राग्वत्रजश्चेतु न असिद्धत्वात् । यत्रपूर्वविश्वमात्याल् ॥ इमशब्द इदमासमानार्थं प्रकृत्यन्तरं । प्रतरमिति । प्रकर्षप्रकर्षे तरप् प्रकृष्टतर इत्यर्थः उदित्त्वमिच एकाम्प्रत्यवदित्यत्रास्यग्रहणं माभूदिति तेन स्त्रियं मन्य इत्यादौ यस्येति लोपो न स्वार्थे इति प्राशस्त्यविशिष्टे स्वार्थे इत्यर्थः सखो प्रशंसायामित्यतस्तदनुवृत्तेः अनसंब्रह्मणः सामदेवस्य छन्दसीति विग्रहः बहुप्रजा इति बहुव्रीहिः ॥ इति पञ्चमः ॥

छन्दसि वेतीति । लिटि धातोरिति सूत्रे भाष्ये स्पष्टमेतत् तुजादीनामित्यत्रापिछन्दसीति वक्तव्यमिति भाष्यन्तुजादीनां छन्दसि सर्वविधीनां वैकल्पिकत्वान्ममहान इत्यपि माहुव इति आङ् पूर्वात् ह्वयते र्लेटि आत्मनेपदोत्तमैकवचने बहुलंछन्दसीति शपो लुकि संप्रसारणे उवङ् न च भवतिह्वयामिमरुतः । रिवानिति । रयेर्यस्य संप्रसारणे इकारेण पूर्वरूपे आद्गुणे छन्द-

सीर इति वत्वं तत्रविहितविशेषणाश्रयणात् । चायः की ॥ चायतेश्छन्दसि बहुलं कीत्यादेशः स्पर्द्ध्वलङीति अपपूर्वस्य स्पर्द्धः संप्रसारणमकारलोपे बहुलं छन्दसीत्यडभावः द्विपदे अपेति स्पृधेयामिति प्रकारान्तरं मनोरमायां लिट्युसीति संप्रसारणाकारलोपौ नियात्येते इति शेषः । आनर्चुरानर्हुरिति भाषायां यासीति । अभ्यासस्य संप्रसारणमनिट्त्वञ्च निपातनात् । यासः से । यत्वञ्चच्युविषे इति । भाषायां यष्टीति । अभ्यासस्य संप्रसारणं निपातनात् तत्याजेति भाषायां निष्ठायामिति आद्ये आभावो ऽन्त्ये हृस्वो निपातनात् बहुषु सोमेषु आभावो ऽन्यत्र हृस्व एव सोमादन्यत्र क्वचिदेकस्मिन्नपि आभावः यदि आत्ताजुहोतनेत्यादौ आता इति बहुत्वमविवक्षितं सोमे तु बहुत्वएवेति भाष्ये स्पष्टं निष्ठायाञ्चेतिश्रिरादेशो निष्ठायानत्वाभावश्च निपातनात् चखादेतिव्यत्ययेन परस्मैपदं आत्वस्यानैमित्तिकत्वेन द्विर्वचनेचीत्यस्याभावादभ्यासेवर्णान्तताचिखादेति क्वाचित्को ऽपपाठः इदं पदमञ्जर्यां स्पष्टम् । शीर्षंश्छन्दसि ॥ सर्वविधीना वैकल्पिकत्वाच्छिरस्शब्दस्यापि वेदे प्रयोगः वाराहीति वराहस्य विकार इत्यजन्तान्ङीप् द्विवचने पूर्वसवर्णदीर्घः उपानहौ विशिष्यं मानुषीरिति जसि पूर्वसवर्णदीर्घः शम्यञ्चेति ॥ पूर्वत्वाभावे विकल्पविधानसामर्थ्यात्पूर्वसवर्णदीर्घौ न तयोरत्र विषये विशेषाभावात् याते इति यानिते इत्यर्थः शेलोपे प्रत्ययलक्षणेन नुमि सर्वनामस्थानेचेति दीर्घे नलोपः त्वाएमनिति त्वा ओद्मनिति च विग्रहः हृदय्या इति अकारस्यायादेशः प्रकृत्यान्तः अतीति वर्त्तते प्रकृत्या स्वभावेन न विकारमापद्यत इति यावत् । अव्याद ॥ अयमिति इदमः सौ अवतेर्लोटि अवन्तु आपो इत्यादीनि लुप्तविभक्तिकानि पृथक्पदानि अनुकरणानि आपोजुषाणोवृष्णोवर्षिष्ठे इत्येत शब्दा अम्बिकेशब्दात्पूर्वौ अम्बे ऽम्बाले इत्येतौ च यजुषिस्थितावतिप्रकृत्येत्यर्थः अम्बिके पूर्वे इति चास्मादेवनिपातनात्पञ्चमी समासः आपो जसन्तं जुषाणो इति स्यन्तं वृष्णो इति शसन्तं वर्षिष्ठे इति ङ्यन्तं इतरे संबुद्ध्यन्ते अम्बे ऽवालिके इति यजुष्येवमेव पठ्यते । अस्मादेवेति । अम्बे इत्येतद्विषयमिदम् । अङ्गशब्द इति । विद्यमान इति शेषः तदादौ चेति षष्ठीतत्पुरुषः सूत्रे इति शब्दस्तच्छब्दसमानार्थः कुधपर इति बहुव्रीहिः धकारे ऽकार उच्चारणार्थः आद्युदात्त इति । अजेन्द्राद्यैत्यत्र निपातनादिति भावः । आङोनु ॥ विभक्त्यर्थेवृत्तेराङोत्र ग्रहणमिति हरदत्तः । प्रकृतिभाव इति । तन्मात्रमित्यर्थः । न तु हृस्वोपि । एषस्य इति । एषसभानुरित्यर्थः उभयनिर्देशे पञ्चमीनिर्देशो बलीयानित्याह चन्द्रशब्दस्येति । विष्व । विष्वग्देवयोरिति इदं सर्वनाम्नोप्युपलक्षणं तदाह विश्वाचीति । विश्वमञ्चतीति विग्रहः बहुलग्रहणादन्यत्रापि क्वचित् तेन कद्रीचीसिद्धा

सधस्थमिति । सह तिष्ठतीत्यर्थः । पथिचक्षं ॥ विभाषापुरुषे इत्यतो विभाषेति वर्त्तते चात् का । साढ्य ॥ द्वयोश्चेति अस्य आचार्यस्य एत्यस्थित इति शेषः सडकारः जिह्वामूलतालुस्थानीयो डः जिह्वामूलन्तालुचाचार्यं आह स्थानं डकारस्य तु वेदेमित्र इत्युपक्रमात् स एव स्वरद्वयमध्यगः उष्मणासंप्रयुक्तः उष्मयोगे जात इत्यर्थः यद्वा स एव लकारे हकारेणोष्मणासंयुक्तळ्हकारतामापद्यते ऽतोस्याचार्यस्य मतेन ढकारो ळ्हकारतां यातीत्यर्थः छन्दसि च अष्टन इति दीर्घ इति चानुवर्त्तते फलितमाहात्म्यंस्यादिति नलोपे कृते ढकाराकारस्य दीर्घः क्वचित्तु अष्टानां दीर्घः षादेशस्येति तस्थस्थमिपामित्यनेन । इकः सुञि ॥ ऋचीति अन्येषामपीति सूत्रे मन्त्रे इति निवृत्तमिति हरदत्तोक्ते मन्त्र इत्यस्यानुवृत्तिरेव युक्ता । द्व्यचोऽतः ॥ द्व्यचस्तिङन्तस्यातोदीर्घः द्व्यच इति किं अश्वाभवतवाजिनः । धातृणामिति । वृत्तिकृतस्तिसृचतसोरत्रानुवृत्तिस्त्वयुक्तेति भावः षपूर्वस्याच इति दीर्घश्रुत्योपस्थितस्याच इत्यस्य षपूर्वस्येति विशेषणं उपधाया इति च अत एव पुल्लिङ्गाविरोधः । जनितेति । जनयितेत्यर्थः तृचिरूपं । शमिता य ॥ यज्ञविषये प्रयोगे इडादौ णिलोपे निपात्यते सूत्रे प्रथमैकवचनमविवक्षितं शमितारोयदत्र सुकृते शमितृभ्यश्चैवैनं शामित्रमित्यादिदर्शनात् । वियूयेति । युमिश्रणे वियुत्य विप्लुत्येत्यर्थः आनडिति नशेरूपं आवरिति । वृञोलुङि मन्त्रेघसेति च्लेर्लुकि अमाङ्योगेपीति अपिशब्दान्माङ्योऽपि ननु परत्वाद्रेभावे कृते ऽनजादित्वादालोपो न प्राप्नोतीत्यत आह रेभावस्येति नन्वेवं रेभावेकृते तस्यैवेट् प्राप्नोति न च रेभावो व्यर्थः क्रादिष्वनिट्सुचरितार्थत्वादत आहाचेति ननुलाक्षणिकत्वात्कथं रेभावः पुनरत आह तदर्थञ्चेति द्विवचनात्परिभाषाया अप्रवृत्तिरिति भावः क्ङितीति अजादावित्यर्थः वितनिर इति वितेनिर इत्यर्थः लोपविधानसामर्थ्यात्तस्यासिद्धत्वेप्येत्वाभ्यासलोपौ नपप्तिमेति लिट् मसइट्पेति सेत्यर्थः ॥ श्रुशृणु ॥ एभ्योहेर्धिः स्याच्छन्दसि श्रुधीहवमिति अन्येषामपीति दीर्घः पृपालनादौ उरुणसिति नश्चधातुस्थोरुषुभ्य इति णत्वं शृणुधीत्यत्र धिभावविधानसामर्थ्यादुतश्चेति लुग्न इतो ऽन्यत्र व्यत्ययेन शप् बहुलंछन्दसीति लुक् अङित इति हेर्विशेषणं छन्दसि पक्षे ऽपित्वाद्ङित्त्वं शपोलुगिति बहुलंछन्दसीति आङिति टासञ्ज्ञात्मन्यासमञ्जन्नित्याङो ऽन्यत्रापि लोपदर्शनादाङीति व्यर्थं अत इत्यनुवृत्तेरादेरित्यपि व्यर्थं ॥ ऋत्व्यवास्तव्य ॥ ऋतुवास्तुशब्दयोर्भवार्थे यति यणादेशो निपात्यते वास्तेरणिच ॥ इति षष्ठः ॥

पक्षे इति । सर्वविधीनां छन्दसिवैकल्पिकत्वात् दुह्रे इति झस्यात् तलोपे रुटि अतो गुणे अदृश्रमिति इरित्वादङ् देवेभिरिति अतो न भवति

क्वचिदनतो ऽपि भवति नद्योरिति त्स्वापि अपि नाल्यवपि उद्धृत्यतान् जुहोतीति ॥ सुपांसु ॥ सुपां स्थाने एते आदेशा इत्यर्थः पन्था इति जसः स्थाने सुः छान्दसत्वात्सर्वादेशः उकारोच्चारणसामर्थ्येन भोतपूर्वकानेकाल्त्वेन व व्यत्ययोबहुलमित्यस्यायं प्रपञ्चः सुपां सुप इत्याद्यप्येवं पूर्वसवर्ण इति आन्तर्यादीकारस्ततः सवर्णदीर्घः परमेव्योमन्नित्यत्र पूर्वसवर्णो ङकारे ऽनङीति निषेधाच्च लोपाभावे संयोगान्तलोपे न सिद्धावपि संयोगान्तलोपस्यासिद्धत्वाल्लुगेवेति बोध्य यत्सन्वन्तीत्यादौ यत् इ इति स्थिते पूर्वसवर्णे ङकारेस्मिः नापत्तिरिति तदर्थमनेकालमात्रार्थञ्च लुगावश्यक इति दिक् यमिति प्राप्ते इति अम आत् नविभक्ताविति इत्त्वनिषेधः आङस्तृतीयैकवचनस्य मृण्मयमिति शाखान्तरे आद्युदात्तपाठादिदमेवेकि भाष्यस्वरसः तत्र च व्यत्ययेन ङीप् शित्वादिति। मस्यापि मवचनमनुस्वारनिवृत्त्यर्थः स्यादिति भावः ॥ वधीमिति हन्तेर्लुङि वधादेशः सिच इट् मिपो ऽमोमश् तस्यास्तिसिच इतीट् सिज्लोपः सवर्णदीर्घत्वम् ॥ लोपस्त ॥ आत्मनेपदेषु विद्यमानतकारस्य लोपः स्यात् अदुह्रेति दुहेर्लङो झस्यातो बहुलंछन्दसीति रुट् तलोपे द्वयोरकारयोः पररूपं छान्दसत्वादेव क्वचिन्न तत एवात्मानमादृतं कुरुते छन्दसि दृष्टानुविधानादाह मध्यमपुरुषेति ॥ कृणुतादिति धिन्विकृण्व्योरचेत्युप्रत्ययः वस्याकारो ऽतोलोपः शृणोतेति। पित्त्वेनाङित्त्वाद्गुणः अत एव दधातनेत्यत्र श्नाभ्यस्तयोरित्यालोपेन थादेशतस्यैते आदेशाः यतीत्यस्य व्याख्यायत्संख्याका मति यतिष्ठनेति सुषामादित्वात्षत्वं एमसीति इणआङ्पूर्वस्य रूपं यगागमे ऽकारोविवक्षितः ॥ आज्जसेर ॥ असुकि कृते जसः सकारस्य श्रवणं अतुकः सस्य विसर्गः उभयास इत्यादौ परत्वादसुकि सकृद्गतिन्यायेन पुनः शी न श्रीग्रामण्योरिति पञ्चम्यर्थे षष्ठी इदं व्यर्थं श्रीणामित्यस्य वामीति नदीत्वेन सिद्धेः छन्दस्य। पाद्यमानरूपाभावात् सूतग्रामणीनामित्यपि समाहारद्वन्द्वोत्तरमेकशेषे सिद्धं छन्दसीति तु गोः पादान्ते इति सूत्रे चकाराद्यस्यैव ग्रहणार्थमावश्यकं चक्रपादान्तेवर्तमानगोशब्दात्परस्यामो नुडिति तदर्थः ॥ छन्दस्यपि दृ ॥ यत्र विहितस्ततोन्यत्रापि दृश्यते अस्थभिरस्यान्युत्कृत्यास्यन्वतेत्यादि अनोनुडिति मतुपो नूटि अनङो नस्य लोपः ॥ ई चाद्व अस्थ्यादीनामीकार उदात्तो द्विवचने छन्दसि अपरिह्वृता इति बहुवचननिर्देशश्छन्दसि तदन्तस्यैव प्रयोगदर्शनात् उत्तभिते उदस्या इति पूर्वसवर्णः माभूदिति इडिति शेषः सूत्रे इतिः प्रकारे तेन क्वचिदीकारोपि वित्तमध्यमीति वरुण इति वृत्तिः ॥ सनिंस सनिमित्यस्य छान्दसत्वादानुपूर्व्या आविवक्षितत्वाच्छन्दस्यैवेतन्निपातनं पावका इपि पुनन्ति पावयन्ति वेत्यर्थः ॥ घोर्लोपो ॥ घुसञ्ज्ञकानां

लेटिपरतो लोपो वा दधातेर्ददातेश्च लेट् तिपन् इतश्च लोपः परस्मैपदेष्विती कारलोपः लोपेप्याडागमेन ददादित्यस्य सिद्धौ वाग्रहणं स्पष्टार्थं जसादिष्वित्यादिशब्दः प्रकारे तेन दर्वेदर्वि अम्बेअम्बेत्यादि सिद्धनाभ्यस्तस्येत्यादि जुजोषत् इत्युदाहरणं अपुत्रादीनामिति चादिग्रहणस्य प्रयोजनान्तरं मृग्यमिति हरदत्तः गजुर्वेदस्ये यजुर्वेदीयकठशाखास्ये ॥ कव्यध्वर ॥ कव्येत्युदाहरणं दीलाविभाषा जहातेर्हिर्वास्यात् जिव हात्वेति पाठे छान्दसत्वाभावः वसुधितमिति कर्मधारय इति हरदत्तः नेमधिते कर्मधारयः । माद्भिरिति । पद्भन इति मासस्य मासादेशः आद्यास्त्रय इति धृङः शपः श्लुरभ्यासस्य दीर्घः परस्मैपदञ्च निपात्यते धारयतौ तु श्लुणिलुगभ्यासदीर्घत्वानि अन्त्ययो श्लुणि लुग्गागमाः धृङ स्तुश्लुडूपरस्मैपदानि यद्वा धृङो यङ्लुकि इगभाः वमात्रमाद्ये तन्निपातनप्राप्तइगभावस्य बाधाय दर्धर्तीत्यत्र इग्निपातनं धर्षीत्यत्र तु यङ्लुक्पक्षे न किं चिन्निपात्यं किं तु श्लावेव यङ् लुगन्तस्येति लोटीति शेषः तेन भाषायामिति लोडतिरिक्ते च बोभवीति बोभोतीति यङोवेति पक्षे ईट् संपूर्वस्येति संपूर्वत्वमतन्त्रं चासनिष्यददिति दर्शनादिति वृत्तिः करोतेर्यङ्लुगन्तस्येति शतरीति शेषः । रिकु इग्निकौचेति सिद्धः निगागमश्चेति चादडभावः बिभर्त्तेरिति यङ्लुगन्तस्य शतरीति शेषः । द्युतेरिति यङ्लुगन्ताच्छतरीति शेषः तरिचत इति जसन्तं नाभ्यस्तादिति नुम्न मर्मृज्येत्यत्र वृद्ध्यभावोपि छान्दसत्वात् । इति शब्द एवं प्रकाराणामन्येषामपि सङ्ग्रहार्थः ससूवेत्यपि दाधर्त्यादिष्वेव पठितुं युक्तं इकार इति श्लाविति शेषः न च भवति ददातीत्येवं ब्रूयादिति ॥ इति सप्तमः ॥

प्रसमु ॥ समाहारद्वन्द्वः अनित्यत्वाट्टच् समासान्तः घस्येति तरप्तमपोरित्यर्थः ॥ नसत्तनि ॥ एषां शब्दपराणान्द्वन्द्वः निपत्ते सदिरप्रतेरिति षत्वं अवोरक्षणं ॥ भुवश्चम ॥ इत्रौ रेफौ वा महाव्याहृतेरिरिति किं भुवोविश्वेषु सवनेषु भवतेश्छन्दसि लुङ्लङ्लिट इति वर्त्तमानेलङ् सिपुशप् अगुणश्छान्दसः तत एवाड भावः ॥ ओम ॥ अभ्यान्दानमारम्भः तत्र वर्त्तमानस्येत्यर्थ इति वृत्तिः नसुब्रह्मण्यायामिति सूत्रे कैयटस्तु सुब्रह्मण्योमित्यत्र ओमभ्यादान इति प्लुतोदात्तत्वं न भवति तस्यायज्ञाकर्मविषयत्वात् इति वदन्नप्रारम्भे ऽपि अनेन प्लुतमाह अत एव शुद्धप्रणवजपे ऽपि तंप्लुतमेव जपन्ति अभ्यादानपदेनायज्ञकर्मोच्यते इति तदाशयं वर्णयन्ति प्लुतश्रुत्या ऽच इत्युपस्थिते एचः प्लुतः मकारस्त्वर्धमात्र इति अर्धचतुर्मात्रोयं । येयज्ञकर्मणि ॥ यज्ञेतिकिं स्वाध्यायकाले माभूदिति येयजामहे इत्यत्रैवायं

प्लुत इष्यते तेनेह न येद्देवासोदिव्येकादशस्थेति पिच्चायाये स्वधेत्यत्रापि भवति एतत्स्थानापन्नत्वात्तस्य । प्रणवष्टेः ॥ टिस्थानिकस्त्रिमात्रओकार ओंकारो वा प्रणव इति भाष्यादौ स्पष्टं इदञ्चाथर्वणप्रातिशाख्ये ऽपि स्पष्टं टेरिति तु प्रातिशाख्योक्तटिस्थानिकत्वानुवादः हलन्ते इति तदभावे टेरित्यननुवृत्त्या तदन्त्यस्यैव स्यात् व्यभिचाराभावाद्धि प्रणवः प्लुतत्वेन न विशेष्यते येनाच परिभाषाप्रवृत्त्या ऽदोषः स्यात् इति भावः याज्यामन्त्रा इति याज्यानुवाक्याकाण्डमिति समाख्यातप्रकरणस्था इत्यर्थः अन्तः किमिति यद्यन्तग्रहणटेरित्यस्य निवृत्त्यर्थन्तदा प्लुतश्रुत्योपस्थिते नाचान्तेविशेषिते ऽजन्ताया एव याज्यायाः स्याताटिविशेषणत्वंत्वनर्थकणटेरन्तत्वाव्यभिचारात् इति प्रश्नः ब्रूहिप्रे ॥ ब्रूहिस्थानापन्ने ऽपिच्चायामनुस्वधेति प्रैषेपि प्लुतो भवति एवं श्रौषट्स्थानापन्ने अस्तुस्वधेति प्रत्याश्रावणे ऽपि भवति एवं वौषडिति वौषट् वौत्रा इत्येवं त्रिधसर्वेवषट्काराणामुपलक्षणमिति हरदत्तः आवहदेवान् यजमानेत्यादौ न प्लुतः छन्दसिसर्वविधीनां वैकल्पिकत्वात् तस्मादिति आदिभूतादित्यर्थः ओश्रा३वय आश्रा३वयेत्यनयोरेवायं नेह अग्नीदग्नीन्विहारेति ॥ प्लुतमात्रस्य वैकल्पिकत्वात्सिद्धमिदं ओ३स्व३धेति प्रत्याश्रावणे तत्स्थानापन्नत्वाद्भवत्येवपृष्टप्रतिवचनं प्रश्नोत्तरं विगृह्णेतिल्यबन्तं वादिनं स्वमतात्प्रच्याव्येत्यर्थः अनुयोगः यस्मादसौ प्रच्यावितस्तस्य पक्षस्य शब्देन प्रकाशनं एवन्त्व विरूपपत्तिकमात्थेति । आम्रेडितं भ ॥ ल्यबन्ते उदाहरणे वाक्यादेरामन्त्रितस्येति द्वित्वं वाक्यस्य टेरित्यधिकारेप्यत्रानन्त्यस्य भवति वाक्यादेरेवपदस्य भर्त्सने द्वित्वविधानात् उपलक्षणमिति तत्रैकैकस्येत्यनुवृत्त्या पर्यायलाभः अङ्गयुक्तं आकाङ्क्षतीत्याकाङ्क्षं पचाद्यच इदानीमिति कूजनफलमिदानीमेवज्ञास्यसीत्यर्थः अङ्गशब्दो ऽमर्षे प्रत्युदाहरणेत्वनुन ये अङ्गदेवदत्तेत्येकं वाक्यं एतच्च मिथ्यावदसीत्येतदपेक्षते विचार्य ॥ कोटिद्वयस्पृक्ज्ञानं विचारः ताद्दृशज्ञानविषयीभूतो विचार्यमाणः इह तु विचार्यमाणार्थविषयत्वात् वाक्यानि विचार्यमाणानि गृहा३ इति गृहेशब्दस्य प्लुतविकारः पूर्वन्तु पूर्वमेवेत्यर्थः उदाहरणे नुशब्दो वितर्के प्रतिश्रवणमभ्युपगमः प्रतिज्ञानं श्रवणाभिमुख्यञ्च हन्तते इति प्रार्थिताङ्गीकारोगम्यते आद्ययोरर्थयोः प्रतिश्रवणशब्दे गतिसमासः तृतीये लक्षणे नाभिप्रतीति अव्ययीभावः क्रमेणोदाहरणानि अनुदात्तप्र ॥ प्रश्नवाक्ये यच्चरमं प्रयुज्यते सप्रश्नान्तः दूराद्धूतादिष्विति प्रश्नान्ताभिपूजितयोर्यः प्लुतः सोनुदात्तोभवतीत्यर्थादिति भावः तत्राभिपूजिते दूराद्धूते चेति इतरत्रानन्त्यस्यापि प्रश्नाख्यानयोरिति आद्योदाहरणे अगमः पूर्वान्३ग्रामा-

नित्यादिः टेरनुदात्त इति अगम इत्यादावनन्त्यस्यापीति प्लुतः स्वरितः प्लुत इति स च पूर्वभागस्य उत्तरस्य तु उदात्ताविदुतौभवतः अग्निचिदिति व्याचष्टे अग्निरिवेति कथञ्चिदिति क्वचिच्चिच्छब्दः अग्निर्माणवक इति अग्निरिवमाणवको दीप्यतेत्यर्थः यद्यप्यन्येषामप्युपमार्थानामिवादीनामस्ति प्रतीतिस्तथापि चिच्छब्दस्याप्यस्ति इति स्यादेवप्लुतः प्रयोगाभावात्तु नेति भावः चः प्लुतसमुच्चयार्थः एतदेवज्ञापयति पूर्वसूत्रे गुणमात्रं विधीयत इति बोध्यं उपरिस्वि ॥ अनेन विचार्यमाणानामिति विहितप्लुतस्यानुदात्तत्वमात्रं विधीयतइति हरदत्तः उपरीत्यादेः कृत्यं दर्शयति अधः स्विदिति ॥ स्वरितमा ॥ उदाहरणे वाक्यादेरामन्त्रितस्येति द्वित्वं अयमपि प्लुतो वैकल्पिकः क्षियाशीः ॥ क्षिया आचारोल्लङ्घनं इष्टप्रार्थनमाशीः प्रैषः प्रेषणं उदाहरणेषु पूर्वतिङन्तमुत्तरमाकाङ्क्षति । अनन्त्यस्यापिप्र आद्योदाहरणे भो अग्निभूता इति शेषः तत्रान्त्यस्य तु अनुदात्तं प्रश्नान्ताभिपूजितयोरिति अनुदात्तोपि पक्षे इति वृत्ति यद्यपि तत्र विकल्पो न श्रुतः तथाप्यपिशब्देनान्त्यस्यापि अनेन स्वरितप्लुतविधानात् पाक्षिकत्वं फलति आख्यानं प्रश्नस्योत्तरं तदवयवाविति वचनसामर्थ्याद्गुणैकदेशयोरिह ग्रहणं उदाहरणे दूराद्धूते गुरोरनृत इति प्लुतः चतुर्मात्राविति ऐचोर्मात्रा ऽवर्णस्य मात्रे वर्णावर्णयोरिति उत्तरखण्डस्य त्रिमात्रत्वे चतुर्मात्रतेति भावः स्पष्टञ्चेदं भाष्ये अत्र चतुर्मात्रस्याच्त्वमपि तेन प्रत्यङ्ङेतिकायनेत्यादौ ङमुडादि सिध्यतीति बोद्ध्यम् । याज्यान्तेष्वेवेति । अनेनास्य परिगणनत्वं दर्शयति । पूर्वार्धस्य आदिति च्छेदः । अत्राकारः प्लुतः स प्रश्नान्ते ऽनुदात्तः स्वरितोवा । शेषेपूदात्त इति बोद्ध्यम् । इतुतौ टेरुदात्त इत्यधिकारादुदात्तावेव । व्याख्यानादुदात्तग्रहणं प्लुतेनेदुद्भ्याञ्च संबध्यते प्लुतपदञ्च तत एवाद्ग्रहणेनैवनेदुद्भ्यामिति बोद्ध्यम् । अदूराद्धूतइति न वक्तव्यमिति । परिगणनसत्वे तेनैवसिद्धत्वादिति भावः । इदञ्च वृत्त्यनुरोधेन । केचित्तु परिगणनेपीदं कार्यमेव । अत्रदूराद्धूत पदं संबोधनमात्रोपलक्षणं किंतु यथाश्रुतमेवेति । दूरादाहूानसंबोधनविशिष्टाभिपूजितार्थेष्वागच्छ भोमाणवकाग्निभूते इत्यादौ नास्य प्रवृत्तिरिति न परिगणनेन प्रत्याख्यानं युक्तमदूराद्धूत इति न वक्तव्यमित्यनुक्त्या भाष्यात्तथैवलाभादित्याहुः । गोरिति । सावपि पदमिति पक्षे वाक्यान्तत्वाभावान्न दोषः । पदशब्देन वाक्यमप्युच्यत इति बोद्ध्यम् । आमन्त्रिते छन्दसीति अप्राप्ते प्लुत विकारे इदन्दूरादाहूानसत्वात्परिगणनाच्चाप्राप्तिः । प्लुतस्तु गुरोरनृत इति प्राप्नोत्येव । तेन वा-

क्यान्तपदानन्त्यस्यैव प्लुत इत्यत्र तु न मानम् । तयोर्य्वा । तयोः पूर्वसूत्राभ्यां विहितयोरिदुतोरित्यर्थः । नन्विकोयणचीत्येवसिद्धे इदं व्यर्थमत आह । इदुतोरसिद्धत्वादिति । ननु प्लुतस्य प्रकृतिभावविधानात्सामान्यापेक्षज्ञापकात् प्लुतप्रकरणीयकार्यस्य स्वरसन्धिषु सिद्धत्वज्ञापनेन सिद्धो यणत आह । सवर्णदीर्घत्वस्येति । अग्ना इन्द्रमित्यादौ ॥ शाकल्यस्य वेति । अग्नाइ याशेत्यादौ शाकल्यिकोऽसवर्णे इति प्रकृतिभावः । ननु भो इन्द्रेति स्थिते भोः शब्दस्य छान्दसे प्लुते ततः परस्येकारस्य निपातत्वत्प्रकृतिभावे प्राप्ते यणादेशार्थमिकः प्लुत पूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घशाकलनिवृत्त्यर्थमिति वचनमावश्यकम् । न च तत्रानेन सिद्धिः । इकः प्लुतविकारत्वाभावात् एवञ्च तेनैव यण्सिद्धेरित आह । यवयोरसिद्धत्वादुदात्तेत्यादि तेन हि यणि तस्य सिद्धत्वादयं स्वरोदुर्वार इति भावः । यद्यपीह प्लुतप्रकरणे बहूनि सूत्राणि लोकवेदसाधारणानि तथापि तस्य वैकल्पिकत्वेन लोके तदादराभावाद्वेदे च तदादराद्वैदिक्यामेवलिखितानीति ध्येयम् । मतुवसोरुः । पदस्येति वर्त्तते । प्रसङ्गादाह । दाश्वानिति । दाशेः क्वसावद्वित्वमनिट्त्वञ्च निपात्यते । षहमर्षण इत्यस्य परस्मैपदं क्वसुरद्वित्वं अनिट्त्वमुपधादीर्घत्वं च निपात्यते । मिहसेचन इत्यस्मात्क्वसावद्वित्वमनिट्त्वं च निपात्यते । सूत्रे एकवचनमतन्त्रम् । दाश्वांसो दाशुषः सुतमिति प्रयोगदर्शनात् । यद्यपीदं लोकवेदसाधारणं तथापि लोके प्रयोगप्राचुर्याभावादत्रैवोदाहृतं मीढ्व इत्यत्र मतुवसोरिति रुत्वम् । अत्रानुनासिक इत्यादि वसोरुत्वे फलम् । अनुबन्धस्येहेति । अत एव वनोरचेति सूत्रे सामान्यग्रहणमुक्तम् । एवञ्च हश्च व्रीहीत्यादौ सामान्यग्रहणस्य निर्बाधत्वे जहातेः ककारः सामान्यग्रहणनिर्वाहार्थं इति प्राचां ग्रन्थाश्चिन्त्याः इणः क्वनिबिति प्रातरेतीत्यर्थे ऽन्येभ्योपि दृश्यन्त इत्यनेन ह्रस्वस्य तुक् नस्येति नान्तपदस्येत्यर्थः एकपादेति ऋत्विति प्रकृतत्वात् । ऋक्पाद एवेह गृह्यते समानशब्दएकपर्यायः देवां अच्छेति वक्ष्यमाणेनातोटीत्यनेनानुनासिकः उभयथेति एवञ्चाटिसमानपाद इति व्यर्थं छन्दस्यपाद्यमानरूपाभावात् एतेन महान्हिस इति बह्वृचानां पाठो व्याख्यातः आकरे तु महांहीत्युदाहृतं तच्छाखान्तरेन्वेष्टव्यं भिन्नपादे ऽपि क्वचिद्दृश्यते तत्सूचरीत्या छान्दसत्वाद्बोध्यं आतः आकारस्य महाइन्द्र इति दीर्घादटीति रुत्वं एवञ्चेति सर्वविकल्पानां छन्दसिव्यवस्थिततया प्रकृतसूत्रत्यागे महल्लाघवं सूत्रारम्भे तु व्यत्ययः शरणीकर्तव्य इति महान् क्लेश इति भावः तुधातोरसुन् स्वन्तवो यस्यासौ स्वतवान् दृक्स्ववः स्वत-

वसां छन्दसीति नुम् । छन्दसिवा ॥ व्यवस्थितविकल्पेनैव सिद्धे प्रेत्यादि स्पष्टार्थं एवमुत्तरसूत्राण्यपि करिति कृञोलुङ् मन्त्रेघसेति च्लेर्लुक् तिपि गुणः तिपो हल्ङ्यादिलोपः बहुलं छन्दसीत्यड्भावः करदिति कृञ एव लुङ् कृमृदृ इति च्लेरङ् करतीति लट्व्यत्ययेन शप् कृधीति कृञो लोट् सेर्हिः बहुलंछन्दसीति शपोलुक् छान्दसत्वाद्गुणाभावो वा श्रुशृणुपृकृवृभ्य इति हेर्धिः कृतमिति कृञः क्तः सः स्यादिति षत्वस्याप्युपलक्षणं अत एवादिति प्रतिषेधः यत्र तु शंनः करदित्यादौ सत्वं न दृश्यते तत्र छान्दसत्वात्सत्वभावो बोध्यः पञ्चम्याःप ॥ अध्यर्थे इति परेर्विशेषणं दिवस्परीति दिव उपरीत्यर्थः व्यत्ययेन षष्ठीस्थाने पञ्चमी पर्योज इति अत्र परिः सर्वतो भावे पातौ च न च भवति परिषदः पातुपातावितिलोडन्तपातुइत्यस्यानुकरणेपष्ठ्याः षष्ठीविसर्गस्यसादेशः पत्यादिषुपरेषुवा चस्यत्यादौ तत्पुरुषेकृतीत्यलुक् षष्ठ्या इतिकिंमनुः पुत्रेभ्योदायमिति इडाया इति षष्ठ्यन्तानुकरणं पतीत्याद्यनुवर्त्तते निसस्तपता अस्य लोकवेदसाधारणत्वादत्रोपन्यासश्चिन्त्यः । उदाहरणे सन्तप्तमित्यर्थः । युष्मत्त ॥ ह्रस्वात्तादावित्यतस्तादाविति वर्तते तच्च युष्मदोविशेषणं नेतरयोरव्यभिचारात् ततनुस् इति सान्तानुकरणात्परस्य सुप्सकारस्य नुम् विसर्जनीयेति षत्वं पूर्वस्य ष्टुत्वं सू तादाविति विशेषणात् युष्मदादेशानां ग्रहणं तदाह त्वमित्यादि । यजुष्ये ॥ यजुर्विषये इत्यर्थः स्तुतस्तो ॥ एकेषामिति वर्त्तते प्रपञ्चार्थमिति पूर्वपदमिति सामान्येन तत्राश्रीयते न तु समासावयव एवेति वाक्ये ऽपि तेनैव सिद्धं षत्वमिति भावः । पूर्वपदात् छन्दसीति वर्तते एकेषामिति च पूर्वपदमात्रस्य ग्रहणमित्याशयेन षत्वाभावे उदाहरति युवंहिस्थेति सुञः सुञिति निपातग्रहणं छन्दसीति वर्त्तते अभीषुण इति इकः सुञीति दीर्घत्वं नश्चधातुस्थोरुषुभ्य इति णत्वम् । सनोतेरनः ॥ अनकारान्तसनोतेरिण्कुभ्यां परस्य सस्य षश्छन्दसि गोषा इति जनसनेति विट् विड्वनोरित्यात्वं गोसनिरिति छन्दसिवनसनरक्षिमथामितीन् प्रत्ययः पूर्वपदादित्येवसिद्धे नियमार्थमिति भावः केचिद्धोसनेः सवनादिपाठात्सिद्धिमङ्गीकृत्य सिसानयिषतीति नियमफलं वदन्ति यद्यप्यण्यन्तः सूत्रे उपात्तः तथाप्यण्यन्तस्य प्रतिषेधवचने फलाभावात् ण्यन्तार्थत्वं विज्ञायते स्तौतिण्योरेवेति नियमात् सिसनिषतीत्यादौ षत्वाप्राप्तेरिति तदाशयः सिसनिषतेरप्रत्यये सिसनीरिति नियमफलमित्यन्ये वचसन् षत्वभूतानेति स्तौतिण्योरिति नियमाविषयोयं एवञ्च सामर्थ्याभावात् ण्यन्तस्य नियमाभावात् सिषाणयिषतीत्यादौ षत्वं भवत्येव सामर्थ्यात्पूर्वपदाभावे ऽपि नियमप्रवृत्तिरिति तद्भावः सर्वञ्चेदं भाष्ये स्पष्टम् सङ्क्षेपः ॥ छन्दसीति वर्तते च कारोनुक्तसमुच्चयार्थं

इत्याशयेनाह चादिति । ऋतिशब्दस्य संहितायां नहिवृतीति दीर्घः षत्वं च । उभयत्र संहिताधिकारात् अवग्रहे ऋतिसाहमित्येव छन्दसिसह इति णिवः ऋतिशब्दस्यान्येषामपीति दीर्घ इति मनोरमा ॥ निव्यवि ॥ एभ्यः परस्य सुनोत्यादेः सस्याड्व्यवाये षत्वं वाप्रकरणप्राप्तस्य षत्वमात्रस्य विकल्पः अभ्यष्टौदिति उतोवृद्धिर्लुकीति वृद्धिः ॥ छन्दस्यृदव ॥ पूर्वपदादिति वर्तते अवग्रहविषये ऋकारान्तपूर्वपदादुत्तरस्य नस्य णः अवग्रहविषयत्वञ्च अवग्रहयोग्यत्वं संहिताकाले णत्वं पदकाले चावग्रहात् अत एव पदपाठे णत्वं न प्रयुज्जते ॥ नश्चधा ॥ धातुस्थान्निमित्तादुरुशब्दात्सुशब्दाच्च परस्य नस्शब्दस्य नस्य णो भवति धातौ तिष्ठतीति धातुस्थं षु इति कृतषत्वस्य सुञो ऽनुकरणत्तेन ग्रहेषु न इत्यत्र न । नसिति नासिकादेशस्यास्मदादेशस्य च सामान्येन ग्रहणं तत्र । प्रकृतसूत्रे ऽस्मदादेश एव कार्यी तस्यैव धातुस्थात्परत्वसम्भवात् । उपसर्गाद्बहुलमित्युत्तरसूत्रे तूभयोः कार्यित्वमिति हरदत्तः । उत्तरसूत्रे नस्ग्रहणानुवृत्तेर्न फलं भाष्ये ओत्परइत्यस्य स्थाने बहुलग्रहणस्य कृतत्वेन तेनैव सर्वानिष्टवारणादित्यन्ये । रक्षाण इति । रक्षेति लोण्मध्यमपुरुषैकवचनं द्व्यचोऽतस्तिङ इति दीर्घः एवं दानकर्मणः शिक्षतेः शिक्षाण इति । उरु अधिकम् । अभीषुण इति । इकः सुञीति दीर्घ इति शिवम् ॥ इत्यष्टमः ॥

इतिश्री शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते सिद्धान्तकौमुदीव्याख्याने लघुशब्देन्दुशेखरे वैदिकी प्रक्रिया समाप्ता ॥



॥ श्रीगणेशाय नमः ॥

साधारणप्रकृतिप्रत्ययसमासतिङन्तविषयकतया प्रस्वभिः प्रकरणोदात्तादिस्वरान् व्युत्पिपादयिषुः साधारणस्वरांस्तावदाह अनुदात्तमिति। एकवर्जमिति। द्वितीयायाञ्चेति णमुल्। ननु तत्र त्वरायामित्यर्थकपरीप्सायामित्यनुवर्त्तन इति चेत् इहाप्यस्ति परीप्सा तथा हि यत्रान्तोदात्तादिर्विधीयते तत्र तत्समकालमेवशिष्टमनुदात्तं न तु विलम्बितञ्चमित्यर्थात्। एतच्च णमुल्विधायके पदमञ्जर्यां स्पष्टं, यद्वा परीप्सायामिति प्रायिकम्। एतच्च तत्रैव पदमञ्जर्यां स्पष्टम्। परिभाषेयमिति॥ नाधिकारः अस्वरितत्वात् एकवर्जमित्यस्य वैयर्थ्यापत्तेश्च तत्तत्सूत्रविधेयानां वचनसामर्थ्यादेवनिघाताप्रवृत्तेः किंचाऽनुदात्तश्च समानोद्देशयित ओचोदात्त इत्यसङ्ग्रहापत्तेः नापि विधिः तथासति कएकोवर्जनीय इति न ज्ञायेत एवञ्च विनिगमनाविरहाच्छास्त्रविहितोदात्तस्वरितकानां सर्वेषामेव वर्जनापत्तौ आमलकीज इत्यादावुदात्तचतुष्टयं श्रूयेत तत्र हि ङीप्प्रत्ययस्वरेणोदात्तः गतिकारकेति कृत्स्वरः दीर्घकाशतुषभ्राष्ट्रवटञ्जे इति पूर्वपदान्तोदात्तत्वं अन्त्यात्पूर्वं बह्वच इति लकाराकारस्योदात्तत्वमिति विरोधाभावात् युगपदुदात्तचतुष्टयं स्यात् अस्य तु भकाराकारोऽवकाशः स्यादिति भावः परिभाषायां लिङ्गमाह स्वरविधीति। सूत्रे ऽनुदात्तशब्दो ऽर्श आद्यजन्तः पदपदसामानाधिकरण्यात् अनुदात्तस्य विधीयमानत्वात्तद्भिन्नउदात्तः स्वरितो वा वर्ज्यत इति तद्विधावेवास्योपस्थानमित्याह यस्मिन् पदे इति। अत्र पदत्वे भाविन्यन्तरङ्गत्वात्पूर्वमेवस्वरप्रवृत्तिः पदग्रहणन्तु परिमाणार्थम्। अत एव धातोरित्यादौ न दोषः तद्भावत्यन्तु पदसमुदायः यस्य पदत्वं भावि तस्यैवैकवर्जमनुदात्तमित्यर्थात् स्पष्टञ्चेदं विकाराधिकारे ऽनुदात्तादेश्चेति सूत्रे भाष्यकैयटयोः। तमेकमिति। एकग्रहणं विधीयमानोपलक्षणं एवञ्च तवैचान्त इत्यादौ द्व्यादीनां वर्जनसिद्धिः इन्द्राबृहस्पती इत्यत्र देवताद्वन्द्वेचेति पदद्वयस्यापि प्रकृतिस्वरे विधेये त्रयाणां वर्जनं बृहस्पतिशब्दो हि वनस्पत्यादित्वाद् द्व्युदात्त इति बोद्ध्यम्। अत्र यस्मिन् पदे यस्यामवस्थायां यस्याच उदात्तादिर्विधीयते तत्र पदे तस्यामवस्थायां सन्निहितमजन्तरं निहन्यत इति बोद्ध्यं स्पष्टञ्चदमाद्युदात्तश्चेति सूत्रे पदमञ्जर्याम् नचैवं चिनुत इत्यत्र श्नोर्निघातो न सिद्ध्यति तस्योदात्तत्वप्रवृत्तिकाले ऽसन्निहितत्वादिति वाच्यं, युगपद्ग्रहणेनानुदात्तातिरिक्तस्वरयोरसमावेशज्ञापनात् तत्सिद्धेः वस्तु तस्तु आद्युदात्तश्च द्वित्रिभ्यां पाद्दन् पुंसो ऽसु

ङिति सूत्रभाष्यप्रामाण्येन यावत्पदत्वं भावि तावत्संनिहितात्जन्तरस्य निघातप्रवृत्तिरित्यर्थाङ्गीकारेणादोषात् चिनु इति तु अन्तरङ्गापीति न्यायेन साध्यं एवंचागमा अनुदात्ता इति नापूर्वमितीति दिक् ॥ यत्तु इयं यथोद्देशैव न कार्यकालेति त्रिपाद्यां न प्रवर्तते अत एव तव्यतस्तित्वं चरितार्थन्तद्धि तित्स्वरितमित्यन्तस्वरितार्थं तत्र ह्यन्त इति वर्तते त्रिपाद्यां परिभाषाप्रवृत्तौ प्रत्ययस्वरेणाद्युदात्तत्वे शेषनिघातेनानुदात्तस्यान्तस्योदात्तादनुदात्तस्येति स्वरितेशेषनिघातेन सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । एवं यतोनाव इत्यपि ज्ञापकम् । अन्यथा यतोनाव इत्याद्युदात्ते कृते शेषनिघाते उदात्तादनुदात्तस्येति स्वरिते शेषनिघाते तित्वप्रयुक्तान्तस्वरितादविशेषेण तद्वैयर्थ्यं स्पष्टमेवेति प्राञ्चः तन्न सन्निपातपरिभाषयोदात्तादनुदात्तस्यैतिविषये शेषनिघाताप्रवृत्त्या तयोश्चारितार्थ्येन भवदुक्तार्थे दृढतरमानाभावात् किंच कर्तव्यं कर्तव्यङ्कित्यादौ कण्ठः क्ककण्ठस्तत्रेत्यादौ नोदात्तस्वरितोदयमित्युदात्तादनुदात्तस्यं त्यस्य निषेधविषये तव्यतस्तित्वं यतोनाव इति च चरितार्थमिति ज्ञापकं दुरुपपादं तस्माल्लक्ष्यानुसारेणानुदात्तं पदमित्यस्याधिकार्यार्थात्स्वरितत्वप्रतिज्ञानादसिद्धे प्रवृत्तिः यथोद्देशत्वन्त्वस्यानयुक्तं अत्रैत्रसूत्रे कार्यकालं सञ्ज्ञापरिभाषमिति भाष्यविरोधात् आमलकीज इत्यादौ दीर्घकाशेत्यपेक्षया ऽन्त्यात्पूर्वं बहुच इति परत्वादित्युपपद्यते अन्यथोभयोः सम्भवेनासम्भवाभावाद्विप्रतिषेधानुपपत्तिः कार्यकालत्वेतूभाभ्यामप्यस्यैकवाक्यतया तेन वर्ज्यमानता ऽनेन वेत्युपपद्यते विरोधः अनुदात्तं पदमित्यस्याधिकारत्वे पाष्ठ एकः सङ्गृहीतः ये ऽन्ये सप्ताध्याय्यां स्वरास्तैन सङ्गृहीताः स्युरिति पाष्ठभाष्योक्तं सङ्गच्छते अन्यत्वे पाष्ठस्य प्रतियोगित्वेन पाष्ठस्यापि सप्ताध्याय्यन्तर्गतत्वप्रतीतेः अष्टमे प्रथमे पादे ऽनुदात्तस्यैवविधानं त्रिपाद्यान्तूक्तरीत्या ऽप्रवृत्तिरेवेति तद्भावः अत एव देवदत्तेत्यादौ प्लुतासिद्धत्वात्पूर्वं पाष्ठाद्युदात्तत्वे ततः प्लुते तदेकवाक्यतापन्न शेषनिघाताभावेनोदात्तद्वयसमावेशः न च पाष्ठे प्रवृत्त ऽसिद्धेनानेन सिद्धस्य तस्य कथं निवृत्तिरिति वाच्य बाधकाभावात् ध्वनितं चेदं गुरोरनृत इत्यत्र भाष्ये अत एव कन्यानूपे इत्यत्र न शेषनिघातः कन्याशब्दो हि कन्याराजमनुष्याणामन्त इत्यन्तस्वरितः अनूपश्चानोरप्राधानकनीयसीत्यन्तोदात्तः तयोः स्वरितानुदात्तयोः सवर्णदीर्घ आन्तर्यतः स्वरितः तदेकवाक्यतापन्नशेषनिघातेन येकारस्यानुदात्तत्वं स्यात् दृश्यते तूदात्तस्वरितयोः समावेशः मम तु एकादेशस्य बहिरङ्गतया ऽसिद्धत्वेन तत्स्वरस्यापि तत्वेन नानेनैकवाक्यतेति न दोषः स्पष्टञ्चेदं स्वरितो-

वानुदात्ते पदादाविति सूत्रे भाष्ये इत्याहुः । गोपायतमिति । गुपिर्धातोरित्यन्तोदात्तः ततः प्रत्ययस्वरेणाद्युदात्ते आये गोपायेत्यायान्तस्य धातुस्वरे यकाराकारउदात्तः तस्य शबकारेण पित्त्वादनुदात्तेनैकादेशउदात्तः तमित्यस्य लसार्वधातुकस्वरेणानुदात्तस्योदात्तादनुदात्तस्येति स्वरितः नचानुदात्तातिरिक्तस्वरयोरसत्तावेशस्य ज्ञापनात्कथमत्रोदात्तस्वरितयोः समावेशः न च सन्निपातपरिभाषया तस्या अनित्यत्वेन स्वरविधावप्रवृत्तेः अन्यथान्तोदात्तादुत्तरपदादन्यतरस्यां ह्रस्वनुड्भ्यां मतुबित्यादिभिरपि स्वरे कृते शेषनिघातो न स्यात् किंचाग्ने भद्रं करिष्यसीत्यादौ ककारनिष्ठस्वरितत्वमादाय स्यप्रत्ययादीनां निघातः स्यात् नहि तत्र परिभाषाया उक्तिसम्भवोस्तीति वाच्यं अस्य स्वरितस्यासिद्धत्वेनादोषादिति दिक् । ननु गोपायतमित्यादौ गुपेरपि धातुत्वात्तन्निमित्तकौकारोदात्तत्वस्य प्रत्ययस्वरनिमित्तकपाकारोदात्तत्वस्य च श्रवणापत्तिरत आह सतिशिष्टेति । तस्मिन्सति विहितेत्यर्थः सतीत्यस्य उत्पन्ने इत्यर्थः । असभुवीति स्मरणात् यागात्स्वर्गोभवतीत्यादौ भवतेरुत्पत्त्यर्थकत्वात् एतच्च न्यायसिद्धं यदायदायोय उदात्तस्वरितविधिः प्रवर्त्तते तदातदा तेन सहानुदात्तं पदमित्येकवाक्यतयाप्रवर्तते ततश्चोत्सर्गस्यापवादस्य वा यस्यैवचरमाप्राप्तिस्तदेकवाक्यतापन्नया लक्ष्यं व्यवस्थाप्यते अत एवौपगव त्वमित्यत्राणप्रत्यये त्वप्रत्यये आवृत्त्या आद्युदात्तश्चेति प्रवर्त्तमानं स्वस्यैवप्रथमप्रवृत्तिबाधेन द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयति आद्युदात्तश्च धातोरित्यादीनां निमित्तभेदेन भिन्नत्वात् एवञ्च यदा प्रत्ययाद्युदात्तत्वं तदा गुपेः निहतत्वं ततो धातुत्वे पुनर्धातुस्वरप्रवृत्तौ पाशब्दोप्यनुदात्त इत्यादि बोध्यम् । अन्यत्रेति । अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्य निघातविधानम् । अन्यथा परनिमित्तकत्वाभावेन तिबादीनामन्तरङ्गत्वेन तिबादिषु क्रियमाणस्य तासिस्वरस्य सतिशिष्टत्वाच्छेषनिघातेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव यदि तु स्यतासीत्यत्रार्द्धधातुक इत्यनुवर्त्य लावस्थायामेव स्यादयस्तदेदं वाचनिकमिति बोद्धुं अस्य च विशेषापेक्षत्वात् सार्वधातुकस्वरापेक्षयैवविकरणस्वरस्य दुर्बलत्वं धात्वादिस्वरापेक्षया तु प्राबल्यमेव अत एव शृणातीत्यादौ श्न उदात्तत्वेन धातोर्निघातसिद्धिः इदमपि सार्वधातुकस्य श्रूयमाणत्वे एव तन चिनु इत्यादौ न दोषः । वृणीत इति । अन्तोदात्त पदं अत्र लसार्वधातुकनिघातो नास्ति अदुपदेशेति तपरकरणात् आ इत्यस्यादन्तत्वाभावात् तिङ्ङतिङ इति तु न सहोता यस्य रोदसी इति पूर्वचरणे यद्वृत्तस्य सत्वेन यद्वृत्तान्नित्यमिति निषेधात् तस्य च व्यवहितेऽपि प्रवर्तनादिति बोद्धुम् । अनुदात्तस्य च यत्र ॥ अत्र कर्षात्वत इत्यतोत इति नानु-

वर्त्तते ऽयोग्यत्वात् तथा हि यच्चेत्यनेनात्रानुदात्तवर्णपरामर्शः उदात्तत्वानुदात्तत्वयोर्वर्णधर्मत्वात् अनुवृत्तौ वा व्यपदेशिवद्भावेनैवतत्वं बोध्यं एवञ्च सप्तमीनिर्द्देशेनानुदात्तवर्णस्य बुध्या लोपात्परस्यैवग्रहणात् युष्मभ्यमित्यादावादेरुदात्तत्वसिद्धिः नचैवमपि युष्मभ्यमित्यत्र सुप उदात्तलोपनिमित्तत्वे ऽपि नावयवस्य तत्वमिति कथं यत्र ग्रहणेन वर्णग्रहणमिति वाच्यम्। उदात्तयोरुदात्तस्वरितयोर्वैकत्र पदे ऽभावेन तयोः परयोरुदात्तलोपाभावेन व्यर्थमनुदात्तस्येति अनुदात्तमात्रग्रहणार्थं अतोनिमित्तभूतसमुदायप्रविष्टस्यापि ग्रहणमिति न दोषः तद्भावभावितामात्रेणापि निमित्तत्वव्यवहारात्। ननु माहिधुक्षातामित्यादौ एतत्प्रवृत्तिरिति भाष्यात्स्पष्टं तदसङ्गतं अत्र हि आतां प्रत्ययस्वरेणोदात्तः क्सोपि विकरणत्वादनुदात्तः ततः अदुपदेशादिति स्वरं बाधित्वा परत्वात्क्सस्याचीति लोपे अनुदात्ते परे उदात्तलोपाभाव इति चेन्न, अन्तरङ्गत्वाल्लावस्थायामेवोदात्ते क्सेजातस्यातामोन्तरङ्गत्वाल्लसार्वधातुकानुदात्तत्वे ततो लोपेनादोषात् पक्षान्तरे ऽपि एतद्भाष्यप्रामाण्येन ज्ञापकसिद्धस्यासार्वत्रिकतया क्वचिदन्यत्रविकरणेभ्य इत्यंशाप्रवृत्तेरदोषात् अत्रानुदात्तपदेनाविद्यमानोदात्तस्यैवग्रहणमिति स्पष्टं डारौरस इत्यत्र भाष्ये। देवीमिति। पचादौ देवट् इति पाठेन टित्वान्ङीप्। चौ॥ उदात्तनिवृत्तीति। देवद्रीचीमित्यादौ कृदुत्तरप्रकृतिस्वरेणोदात्तस्य अञ्च इत्यकारस्याच इति लोपे ङीपः अनुदात्तस्यचेति सूत्रेण प्राप्तस्येत्यर्थः। न च पराच इत्यादौ कृत्स्वरं बाधित्वा निगन्ते ऽञ्चताविति पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वे ऽच इत्यकारलोपे इदञ्च रितार्थं नह्यत्रोदात्तलोपोस्तीति वाच्यं, अनिगन्तेञ्चताविति विषये चुस्वराप्रवृत्तेर्वक्ष्यमाणत्वादित्याहुः। ननु दाधीच इत्यादौ उदात्ते ऽणि अच इति लोपे इदं चरितार्थमिति कथं तदपवादत्वमत आह अतद्धित इति। वस्तु तो नगोश्वचिति सूत्रं यत्किंचिल्लक्षणप्राप्तविभक्तिस्वरस्य निषेधकमित्यत्र सूत्रे ऽसिद्धवत्सूत्रेविप्रतिषेधसूत्रे च भाष्ये उक्तत्वेन दधीच इत्यादावुदात्तनिवृत्तिस्वराप्राप्तिविषये ऽस्य चारितार्थ्याच्चास्य तदपवादत्वं परत्वेन तूक्तोदाहरणे तद्बाधकन्दाधीचा इत्यादौ तु सतिशिष्टत्वेनैतत्प्राप्तावतद्धित इत्यावश्यकमिति भाष्यारूढः पन्थाः। आमन्त्रितस्यादिरिति। आमन्त्रितविभक्त्यन्तस्येति पाठस्तु लेखकप्रमादात् एकपदस्वरे लुकिप्रतिषिद्धमपि प्रत्ययलक्षणं सर्वामन्त्रितसिज्लुक्स्वरवर्जमिति वचनादिहेष्यत एव प्रियवारि। इमंमे इति। अत्र गङ्गेप्रभृतीनामविद्यमानवत्वे ऽपि मेशब्दमेवाश्रित्य सर्वेषामचां निघातः स च पदपाठे स्पष्ट एव संहितायान्तु स्वरितात्संहितायामित्येकश्रुतिः प्रचयापरपर्यायाप्रवर्तते। अग्नेत्रातरिति। अग्निरिह विशेष्यं त्राणकर्तेति

विशेषणं अग्नेर्भ्रातः सहस्कृतेति मन्त्रे छान्दसत्वात् भ्रातरित्यस्यानिघातः एवं तत उत्तरेषामिति बोद्धुम् । देवीः षडिति । अत्र देवीरित्यामन्त्रितं वा विद्यमानवत् तेन षडित्यस्य निघातो वैकल्पिकः । षष्ठ्यन्तमिति । अत्र षष्ठीशब्देन तदर्थाविभक्तिरुच्यते तेन गोपुस्वामिनित्यत्रापि पराङ्गत्वं सिद्धमित्याहुः । आमन्त्रितं प्रतीति । आमन्त्रितार्थैकदेशक्रियां प्रतीत्यर्थः मद्राणां राजन् सूच्यसीव्यन्नित्युदाहरणे अत्र विशिष्टस्यामन्त्रिताद्युदात्तत्वम् । अत्रेदं बोद्धुं, षष्ठ्यन्तस्य कारकस्य च समानाधिकरणं यद्विशेषणं तस्यापि पराङ्गवत्त्वमिष्यते तेन ऋद्धस्य राज्ञः पुरुषतीक्ष्णमा सूच्यासीव्यन्नित्यादौ पदत्रयस्यैकमाद्युदात्तत्वं भवति । समर्थानुवृत्त्यावेति । सामर्थ्यस्यात्र व्यपेक्षैव शब्दाधिकारात् सा च वस्त्रं राज्ञः पुरुषागच्छेत्यादौ पराङ्गवत्त्ववारणाय तत्राप्यावश्यकीति भावः । वस्तु तस्तन्निमित्तग्रहणं आमन्त्रितार्थं प्रति यन्निमित्तं तत्प्रतिपादकं यत्तदेवपराङ्गवदित्यर्थः अत एव गोपुस्वामिन्नित्यादेः पराङ्गवद्भावसिद्धिः समर्थग्रहणानुवृत्तिस्तु भाष्यासम्मतेति निरूपितं मञ्जूषायां समासवादे स्वर इत्युक्तेः कूपेसिञ्चन्नित्यादौ षत्वादिकं । न च पूर्वस्य पराङ्गवत्त्वेन पूर्वस्मिन् परप्रयुक्तकार्यप्रवृत्तिः स्वनिष्ठस्वाश्रयनिवृत्तिश्चास्तु परस्मिंस्तु पूर्वनिष्ठकार्यप्रवृत्तौ तन्निष्ठस्वाश्रयनिवृत्तौ च मानाभावात्पदादित्वेन न षत्वप्राप्तिः तथा चर्मनमन्नित्यादावखण्डपदत्वाभावेन णत्वप्राप्तिश्चनेति स्वरग्रहणं व्यर्थमिति वाच्यं भाष्ये प्रत्याख्यातत्वेनेष्टापत्तेः अङ्गग्रहणमुभयोराद्युदात्तत्वाभावाय । पूर्वाङ्गवदिति । सुबन्तमामन्त्रिते पूर्वस्मिन् पूर्वाङ्गवदित्यर्थः छन्दोविषयमेतत् । उदात्तस्थाने इति । इदमत्रैवाकरे स्पष्टम् । अभ्यभीति । अभिरुपसर्गाश्चाभिवर्जमित्यन्तोदात्तः नित्यवीप्सयोरिति द्वित्वं अनुदात्तं चेति परो ऽनुदात्तः पूर्वस्य यणि उदात्तयणः परत्वात्स्वरितः खलपूशब्दः कृदुत्तरप्रकृतिस्वरेणान्तोदात्तः ततः सप्तम्येकवचनस्योदात्तयणोहल्पूर्वादिति प्राप्तोदात्तस्य नोङ्धात्वोरिति निषेधेन न स्वरितस्तस्य यणि ततः पराशाशब्दाद्याकारस्यानेन स्वरितः आशाशब्द आशाया अदिगाख्याचेदिति फिट्सूत्रेणान्तोदात्तः अस्येति अशाशब्द प्रथमाकारे जातस्येत्यर्थः शेषेति शाशब्दाकारस्य निघातोनेत्यर्थः नन्विकारस्थानिकयणं प्रति स्वरितस्यासिद्धत्वात्स्थानिन्येवयण् प्रवृत्त इति नास्य स्वारितयणः परत्वं न च प्रगृह्यसञ्ज्ञासूत्रस्थभाष्यकैयटरीत्याजढदित्यादौ अन्तरङ्गत्वाड्ढत्वादिषु हतशब्दबुद्ध्या ढशब्दे द्वित्वं प्रतीयते तथा ऽत्र स्वरितबुद्ध्यभावे ऽपि वस्तुतः स्वरितस्यानिकयणः सत्त्वाददोष इति वाच्यं । वाक्यसस्कारपक्षे स्वरितयणोरेककालप्रवृत्तिकत्वे न तथा वक्तुमशक्यत्वात् न च स्वरितयण इत्याश्रयात्सिद्धत्वं अतिप्रसङ्गात् उदात्तादनुदात्तस्येति विहितस्यापि

सिद्धत्वापत्तेः तथा च प्रत्यग्निरित्यादावपि एतत्प्रवृत्त्यापत्तिः न च नोदात्तस्वरितोदयमिति निषेधः अनन्तरस्येति न्यायेनोदात्तादनुदात्तस्येति स्वरितस्यैव तेन निषेधात् अन्यथा खलप्वाशान्यग्निमित्यादावप्यस्य निषेधापत्तिः अत एव तित्स्वरितं स्वरितोवानुदात्ते इत्यादीनां न निषेध इति चेन्न योगविभागेन भाष्ये एव समाधानात् उदात्तयणः उक्तोऽर्थः ततः स्वरितयणः इह पूर्वसूत्रमनुवर्त्तते उदात्तयण इत्येवं निर्वृत्तस्वरितस्थानिकयणः परस्येत्यर्थः । एवञ्चास्यैवाश्रयात्सिद्धत्वं नान्यस्येति न दोषः यद्वा इह स्वरितग्रहणं न करिष्यते खलप्वाशा इत्यादावप्युदात्तयणः परत्वादेवसिद्धं न च स्वरितयणाव्यवधानं स्वरविधौ व्यञ्जनस्याविद्यमानवत्वात् नचैवं सन्त्यग्ने इत्यादौ वेदे यकाराकारे पठ्यमानस्वरितासङ्गतिः तत्र हि सन्तीति इकारस्योदात्तादनुदात्तस्येति स्वरितत्वं तत्र सन्तीति प्रत्ययस्वरेणाद्युदात्तन्तेः शेषनिघातः अग्ने इत्यामन्त्रितानुदात्तमिति वाच्यम् सशब्दाकारमाश्रित्योदात्तादनुदात्तस्येत्येवाग्निशब्दाकारस्य स्वरितसिद्धे न च स्थानिवद्भावादचाव्यवधानं पूर्वत्रासिद्धीये तन्निषेधात् एतेन द्वितीयपक्षोयुक्तः स्थानिवद्भावेनाचाव्यवधानात् व्यञ्जनस्य ह्यविद्यमानवत्त्वं नत्वच इति वृत्त्युक्तमपास्तं स्वरे कर्त्तव्ये लोपाजादेशएव न स्थानिवदिति नियमस्तु स्वरविधौनेति प्रतिपदोक्तस्यैवनिषेधस्य न तु पूर्वत्रासिद्धीयत्वप्रयुक्तस्येत्यन्यत्र विस्तरः ॥ एकादेश उ ॥ उदात्तयोरेवस्थानित्वे आन्तरतम्यादेवसिद्धं अन्यतरस्यानुदात्तत्वे स्वरितत्वे वा सिद्धत्त्वभयान्तर्योदिति न्यायेनान्तरतम्यात्स्वरिते प्राप्तेविधिरयं तद्ध्वनयन्नुदाहरणद्वयमाह वोश्वा इति वहत्यनुदात्तं अश्वशब्दः क्वनन्तत्वादाद्युदात्तः सस्य रुः तस्य उः सः आस्वरकः स्रंसनधर्महल्स्थानिकत्वादनुदात्तोवोभयथापि तदेकाशो ऽनुदात्तः प्राप्तः क्वेतिस्वरितं अवरशब्दः स्वाङ्गशिटामित्याद्युदात्तः एवञ्च यद्वृत्तौ पूर्वसूत्रादनुदात्तस्येत्यत्रानुवर्त्य उदात्तानुदात्तयोरेकादेश इति व्याख्यातं तच्चिन्त्यं क्वावरमित्यसिद्ध्यापत्तेः तत्र हि बह्वृचानामुदात्तपाठो निर्विवाद इत्याहुः । वस्तु तस्तु तस्मादिति इति सूत्रस्थभाष्यादितोऽप्यनुवृत्तिरेवलभ्यते इति सैवयुक्ता तत्र हि सुब्रह्मण्याशब्देन स्वरितान्तेनोमित्युदात्तस्यैकादेशः स्वरितस्तस्य नसुब्रह्मण्यायामित्यनेनोदात्त इत्युक्तं क्वावरमिति तु छान्दसत्वाद्बोध्यं तथा च बह्वृचप्रातिशाख्यं उदात्तवत्येकीभावे उदात्तसन्ध्यक्षरं अनुदात्तोदये पुनः स्वरितं स्वरितोस्वरितोपधे इति यस्मिन्नेकीभावे पूर्वमुत्तरं वोदात्तं भवति इतरस्तूदात्तानुदात्तस्वरितप्रचितानामन्यतमस्तस्मिन्नेकोसन्ध्यक्षरमुदात्तं ज्ञातव्यं स्वरितोपधेनुदात्तोदये सन्ध्य-

तरं स्वरितत्वमापद्यते नीरं सर्पिर्मधूदकमित्युदाहरणं शौनकीयप्रातिशाख्ये ऽपि स्वराष्टकमुपक्रम्य एकादिष्टएकादिष्टमुदात्तेन तन्त्वमेवन येत्स्वरमिति उदात्तेनैकादिष्टन्तमष्टकान्यतमं स्वरन्तमेवोदात्तमेवनयेत् उदात्तत्वमेव प्रापयेत् इति तदर्थं इति तद्भाष्ययोः स्पष्टं लोके तु क्वारमित्यादौ न भवत्येवोदात्त इति युक्तमाभाति अयमेकादेशस्वरोन्तरङ्गत्वेपादिकोपि सिद्धोवाच्य इति स्वरितोवेति सूत्रे भाष्ये स्पष्टं अन्तरङ्गइत्युक्तेः प्रपचतीतीत्यादौ एकादेशस्य पूर्वान्तत्वात्तिङि्चोदात्तवतीति न प्रवर्तते सोमसुत्पचतीति इत्यादौ तिङ्ङतिङ इति निघातेन । सिद्धत्वफलन्तु वृत्रयिदं वृत्तावञ्चेत्यत्रायावावुदात्तोभवतः एतद्विषये शेषनिघातश्च फलान्तराण्यपि भाष्ये स्पष्टानि वीदर्मित विनिंघातत्वादाद्युदात्तः इदम्शब्दः फिट्स्वरेणान्तोदात्तः दिवीयत इति दिवीति विभक्तिरुडिदं पदादीत्युदात्त ईङोदिवादेरीयत इति तिङ्ङतिङ इति निहतं इकारयोरिति ह्रस्वेकारयोरित्यर्थः किंचेति इदं वेद एव अत एव गाङ्गेऽनूपे इत्यत्रायमेकादेशः स्वरितोवेति भाष्ये उक्तन्ते इति तच्छब्दस्य बहुवचनं इकारयोश्च प्रश्लेषे इति ह्रस्वयोरिकारयोः प्रश्लेषे क्षैप्रसन्धिषुचाभिनिहितसन्धिषु चाविशेषेण उदात्तपूर्वरूपेषु अनुदात्तोत्तररूपेषु शाकल्यस्यमते स्वरितकार्यः उदात्तपूर्वरूपेपेशाकल्यस्यैवमाचरेदिति तद्वाक्यशेषात् एवमिति स्वरितनिर्देशः स्रुवीवघृतं योजान्विन्द्रतेहरी तेवर्द्धन्तस्वतवस इति क्रमेणोदाहरणानीति तद्भाष्यकृतः सन्धिविशेषस्य क्षैप्रेति सञ्ज्ञातद्विशेषस्याभिनिहितेति प्रातिशाख्ये द्वितीयपटले स्पष्टं तत्र हि एङः पदान्तादित्यादिरभिनिहितसन्धिः ह्रस्वद्वयस्यानिकसवर्णदीर्घगुणवृद्ध्यादिः प्रश्लिष्टसन्धिः दीर्घद्वयस्यानिकसवर्णदीर्घयणादिः क्षैप्रसन्धिरित्युक्तं वस्तु तस्तु वेदे आपाद्यमानरूपाभावात् व्यवस्थितविभाषाश्रयणे फलं चिन्त्यं उदात्तादनुदात्तस्य अत्र तयोर्य्वावचीत्यतः संहितायामित्यनुवर्त्तते तेन पदकाले न नोदात्तस्वरितोदयः॥ उदयः परवाचीशास्त्रान्तेमङ्गलार्थं प्रयुक्तः यद्यपि नञ्द्वयन्त्यक्त्वा गार्ग्यादीनामेवेतिनियमो व्याख्यातुं शक्यते तथापि गार्ग्यादीनामुदात्तपरमेवेति विपरीतनियमशङ्कां वारयितुं नञ्द्वयोपादानं प्रयत्नाहरिति येत्युदात्तं आर्हरिति ऋधातोर्लिट्यसिरूपं अन्तोदात्तं वोश्वाः क्वाभीषव इति अश्वशब्द आद्युदात्तः क्वेति स्वरितम्॥ एकश्रुति॥ संबुद्धिग्रहणं संबोधनोपलक्षणम् । अन्यथा गच्छतभोमाणवका इत्यादौ न स्यात् तदाह दूरात्संबोधने इति स्वराणामविभागेनावस्थानमेकश्रुतिः यद्वोदात्तादिभ्योभिन्नः स्वरएकश्रुतिःआद्ये उच्चनीचं समुदितं स्थानं परं तु भेदेनानुपलब्धिरिति स्वरिताद्वेदः अन्त्ये तु तयोर्मध्यमेकश्रुतेः स्थानं आगच्छेति आङुपसर्गत्वादाद्युदात्तः गच्छेति निहतं भोः

शब्दो निघात आद्युदात्तमाणवकेत्यस्यामन्त्रितनिघातः अत्रान्त्यस्य पक्षे प्लुतोदात्तत्वमपि भवति वचनसामर्थ्यात् तदाचोभयोः समुच्चितयोर्दूरात्संबोधनं द्योत्यम् ॥ यज्ञकर्मण्यजप ॥ रूढश्च जपशब्दोकरणमन्त्रे करणमन्त्रेषु यत्रजपतीति कल्पसूत्रकृतां व्यवहारः न्यूङ्खा। नाम षोडशोकाराः सामप्रसिद्धं गीतिषुसामाख्येति यज्ञकर्मचयज्ञति नोदनानोदितं कर्म जपादिपर्युदासामन्त्रेष्वेवैषाश्रुतिर्नोहितादिषु तेषाममन्त्रत्वात् तत्र संपूर्णाय अहितस्तस्यैवातत्त्वं यत्किंचिदूहितपदघटिते तु मन्त्रत्वमेव तन्मध्यपतितन्यायात् तदाह। मन्त्रे इति। ममाग्ने इति। यद्यप्ययं मन्त्रोहविरभिमर्शने विनियुक्तस्तत्र चैकश्रुत्येनैवपठ्यते तथापि अभिश्रित उद्धीयमानेवाममाग्ने वर्चोविहवेष्वस्त्विति चतस्रोजपित्वेत्यग्निहोत्रप्रकरणे आपस्तम्बसूत्रे उक्तत्वेन न दोषः एषु यथाविहितं त्रैस्वर्यंभवति। नचैतेषु नित्यैकश्रुतेर्निषेधेपि विभाषाछन्दसीति विकल्पापत्तिरिति वाच्यम्। यज्ञकर्मणि, जपन्यङ्खसामसु-वा, उच्चैस्तरांवावषट्कारः, विभाषाछन्दसीत्येव सिद्धे नञुच्चारणवैयर्थ्यापत्तेः। यत्तु हरदत्तः अजपेत्यादिप्रसज्यप्रतिषेधः नचोहितानामच्छन्दस्त्वात्तत्र सावकाशस्य पूर्वसूत्रस्य मन्त्रेषु परत्वाद्विभाषा छन्दसीत्यनेन बाधः स्यादिति वाच्यं यज्ञकर्मणीति कर्मग्रहणसामर्थ्यादूहितानूहितेषु सर्वेषु पूर्वस्यैवप्रवृत्तिरिति तन्न पर्युदासस्य लघुत्वात् अत एवेन्द्रशत्रुर्वर्धस्वेत्यत्र समासान्तोदात्तत्वे कर्त्तव्ये पूर्वपदप्रकृतिस्वरत्वं प्रयुक्तमिति शतपथब्राह्मणतद्भाष्याद्युक्तं सङ्गच्छते एवं हि तद्ब्राह्मणमथयदब्रवीदिन्द्रशत्रुर्वर्धस्वेति तस्मादुहैनमिन्द्र एवजघान अथ यद्शश्वदवक्ष्यत् इन्द्रस्य शत्रुर्वर्धस्वेति शश्वदुह स एवेन्द्रमहनिष्यदिति आद्ये ऽनुकरणं पूर्वपदप्रकृति स्वरविशिष्टस्यान्त्येत्वे तदर्थेकमन्तोदात्तं यद्यवक्ष्यदित्यर्थ इति तद्भाष्यम्। अत एव महाभाष्ये मन्त्रोहीन इति पठिते ऽपि श्लोकोदुष्टः शब्द इति पठितः एवञ्चेषेत्वेत्यादियजुर्मन्त्रेषु शाखाच्छेदनादिकरणेषु एकश्रुतिरेवभवति एतेन पर्युदासे ऽपि यज्ञाङ्गशब्दत्वेन सादृश्यं एवञ्चोहविषये चरितार्थस्य मन्त्रेषु परत्वाद्विभाषाछन्दसीत्यनेन बाधः सा च व्यवस्थितविभाषा ऽतोनाति प्रसङ्गः अत एव बह्वृचानां संहितायान्त्रैस्वर्यं ब्राह्मणे ऐकश्रुत्यन्तैतिरीयाणामुभयत्रापि त्रैस्वर्यमिति व्यवस्था सङ्गच्छते एवञ्च हौत्रमन्त्रेष्वेकश्रुतिरेव इषेत्वेत्यादौ यजुषि त्रैस्वर्यमेव अत एव सकलदेशीयशिष्टाचारविरोधोपि नेति परास्तं ऊहेषु चरितार्थस्य मन्त्रेषु बाध उत मन्त्रेषु चरितार्थस्याछन्दसिविभाषेत्यनेनोहेषु बाध इत्यत्र विनिगमनाविरहेणास्य विभाषाछन्दसीत्येतदपवादकताया एव

युक्तत्वाच्च अत एव कात्यायनेन मन्त्रे स्वरक्रिया यथाम्नातमविशेषात् इति पूर्वपक्षे तानोवानित्यत्वात् स्मर्यते चैवं एकश्रुतिदूरात्संबुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जमित्युक्तं अत्र वाशब्दः पक्षव्यावृत्तौ तान एवेत्यर्थः तान एकश्रुतिरिति तद्भाष्यकृतः येतु सूत्रस्थवाशब्दं विकल्पार्थकमाहुः तेषां नित्यत्वादिति वाक्यशेषविरोधस्तस्माद्यजुष्ष्येकश्रुतिरेव अत्र सूत्रे जपादिग्रहणं याजमानमन्त्राणामप्युपलक्षणं कात्यायनसूत्रस्वरसात् वस्तुनः कात्यायनप्रातिशाख्ये तानलक्षणमेकं स्वरमाहुर्यज्ञकर्मणि सामजपन्यूङ्खवर्जं प्रावचनोवायजुषीत्युक्तेर्यजुषि त्रैस्वर्यमपि तत्र प्रवचनशब्देन पाठ उच्यते तत्र भवोवा स्वरो यजुषि यज्ञकर्मणि त्रैस्वर्यलक्षण इति तद्भाष्यकृतः यद्यपि तत्समाख्याबलात्तच्छाखीयानामेव तथापि अविरुद्धत्वात्सर्वशाखं प्रत्येकं कर्मेति न्यायाच्चान्येषामपि त्रैस्वर्यं परन्तु प्रागुक्तकल्पसूत्रपाणिनिसूत्रतद्भाष्यादिपर्यालोचनया एकश्रुतौ धर्माधिक्यं बोध्य, वैकल्पिकेष्वादितो ऽवधारणमिति न्यायात्संकल्पकाले एतदन्यतरोल्लेख आवश्यकः यज्ञशब्देन यजति चोदनाचोदितानामेव ग्रहणमिति स्मार्तेषु स्थालीपाकोपाकर्मादिप्रयोगेषु नैका श्रुत्यमित्यन्यत्र विस्तरः ॥ उच्चैस्तरां वा ॥ अधिकरणशक्तिप्रधानोच्चैः शब्दात्तद्विशिष्टभवनक्रियाकर्तरिवर्त्तमानाक्रियाप्रकर्षप्रत्ययः तेनोदात्तत इत्यर्थः वषट्शब्देन वौषट् शब्दोलक्ष्यते व्याख्यानात् तत्रौकारस्य ब्रूहि प्रेष्येत्यनेन प्लुतोदात्तत्वविधानात् प्रकारस्यानेन तदपेक्षयोदात्ततरोविधीयत इत्येके, अन्ये तु द्वयोरप्युदात्ततरत्वं याज्यावाक्यीयैकश्रुत्यपेक्षया प्रकर्ष इत्याहुः, इदमेवयुक्तं भाष्यसम्मतञ्चेति बहवः । अस्योदात्तस्येत उत्कृष्य शास्त्रान्ते कर्तव्यत्वेनोक्तत्वादसिद्धत्वात् प्लुतोदात्तत्वस्याप्यसिद्धत्वाच्च शेषनिघातोनेति बोद्ध्यं पक्षे एकश्रुतिः ॥ विभाषा छन्दसि । ननु विभाषाग्रहणं व्यर्थं वाग्रहणानुवृत्त्यैवसिद्धेः न च यज्ञकर्मणीत्यस्य निवृत्त्यर्थं इष्टानुरोधेन व्याख्यानत एव तन्निवृत्तेः सम्भवादिति चेदुच्यते आवृत्त्या विभाषाछन्दसीति पदच्छेदार्थं तेन भाषायामपि पाक्षिकैकश्रुतिः अत एव श्वेतोधावति अलम्बुसानां यातेति द्व्यर्थवाक्यमिति पस्पशान्ते भाष्यं सङ्गच्छते तत्र श्वेति अन्तोदात्त इत इत्यूडिदमित्यनेन श्वेत इति घृतादित्वादन्तोदात्तं अलमिति निपातत्वादाद्युदात्तं बुसशब्दान्तोदात्तः एवमलम्बु सशब्दो ऽपि एकश्रुत्यभावे हि स्वरभेदे कथमेकं वाक्यं द्व्यर्थं स्यादिति बोद्ध्य अत एव दाण्डिनायनेति सूत्रे भाष्ये उक्तं एकश्रुतिः सर्वनामेति अत एवाभियुक्तानां विरुद्धस्वरकतत्पुरुषबहुव्रीह्याश्रयणेन श्लिष्टकाव्यादिनिर्माणं सङ्गच्छते अत एव काव्यप्रकाश-

श्रुता वेदइव लोके स्वरो न विशेषहेतुरित्युक्तम् । एकश्रुत्या व्यवहारादिति तदाशयः किमर्थं तर्हि श्रुत्युपोत्तममिति प्रक्रम्य विभाषाभाषायामिति सूत्रितमिति चेत् त्रैस्वर्येण प्रक्रमे पाक्षिकानुदात्तलाभायेति गृहाण एतेन भाषायां स्वरोनास्त्येवेति भ्राम्यन्तः परास्ताः स्वरविधौ छन्दोधिकाराभावाच्चेति दिक् । परे तु मन्त्रे त्रैस्वर्यं ब्राह्मणे एकश्रुतिर्बह्वृचानान्तैत्तिरीयाणामुभयत्रापि त्रैस्वर्यमिति व्यवस्थितविभाषात्वमस्य छन्दसि स्वीकृतं कैश्चित्तन्न युक्तं शाक्त्रेरिति सूत्रे भाष्ये परिगणितव्यवस्थितविभाषास्वपाठात् तत्र हि "देवत्राता गला ग्राह इति योगे च स द्विधिः । मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रत" इत्युक्तं अत एव केषु चिद्देशेषु स्वाध्यायकाले सर्ववेदानामेकश्रुत्येन पाठो दृश्यते न चैवं छन्दोग्रहणवैयर्थ्यं छन्दसि त्रैस्वर्यं धर्माधिक्यं लोके तु समतेत्येतदर्थन्तत्सत्वात् त्वयापि छन्दोग्रहणसामर्थ्यात् भाषापेक्षया वैलक्षण्यं कल्प्यं व्यवस्थितविभाषात्वेन मयात्वेवमिति विशेषाभावात् न हि छन्दसीत्यनेन त्वदुक्तार्थोपि वाच्यवृत्यालभ्यते एकश्रुतिः स्वरसर्वनामेति भाष्येणाप्येवं बोधनाच्च यथा सर्वनामशब्दास्तदादयः सर्वपदस्थाने प्रयुज्यन्ते एवं सर्वस्वरस्थाने एकश्रुतिः प्रयोक्तव्येति तदर्थः अनेन स्पष्टमेव त्रैस्वर्यैकश्रुत्योरैच्छिकविकल्पविषयतोक्ता वृत्तिकारोपि छन्दसि ऐच्छिकमेवैकश्रुत्य माह इदानीं केषाञ्चिद्धर्माधिक्याय त्रैस्वर्येण पाठः परंपरासम्प्रदायेन अन्येषामेकश्रुत्येनेति संप्रदायश्रद्धा जडेन तु ते ते नान्यथा पठन्ति नैतावता विकल्पस्यैच्छिकत्व भङ्गः नचेन्द्रशत्रुर्वर्धस्वेत्यूहे यज्ञकर्मणीत्यस्याप्रवृत्तौ अछन्दसीति च्छेदेन नैकश्रुत्यापत्तिः धर्माधिक्याय त्रैस्वर्येण ऋत्विग्भिः पाठेनादोषादित्याहुः ॥ न सुब्रह्म ॥ ननु विभाषेत्यस्य व्यवस्थितविभाषात्वात्स्वरितस्य तूदात्त इति ज्ञापकाच्च सुब्रह्मण्यायान्तद्भावसिद्धौ नेति व्यर्थमिति चेन्न व्याहृतयज्ञकर्मणीत्यस्यापि निषेधार्थं तत्सत्वात् स्पष्टं च्वेदं कात्यायनसूत्रे तदाह यज्ञेत्यादि एवञ्चेदं सूत्रं यज्ञकर्मणि स्वाध्यायकाले च प्रवर्त्तते इत्याहुः, केचित्तु यज्ञकर्मण्येवास्य प्रवृत्तिर्नेति तु स्पष्टार्थमेव तेन स्वाध्यायकाले स्वरित एव विभाषाछन्दसीति तु व्यवस्थितविभाषात्वान्न ततः परेषामनुदात्तानामेकश्रुतिश्चेति वदन्ति । सुब्रह्मण्यामिति । सुब्रह्मणा साधुरिति यत् तित्स्वरितगटापासहैकादेशोन्तरतमत्वात्स्वरितः । ओमिति । निपातत्वादाद्युदात्तन्तेनैकादेशोप्यान्तरतम्यात्स्वरितः एकादेश उदात्तेनेति तु न वर्त्तते अनुदात्तस्येत्यस्यानुवृत्तेः तत्स्थानेनोदात्तः स्पष्टञ्चेदं भाष्ये इन्द्रागच्छेत्यत्र इन्द्रेत्यामन्त्रिताद्युदात्त द्वितीयवर्णो ऽनुदात्तः सचोदात्तादनुदात्तस्येति स्वरितः तत्स्थानेनोदात्तः

नचात्र कर्त्तव्ये स्वरितो ऽसिद्धः । एतत्काण्डमुत्कृष्यत इत्युक्तेः अत एवास्मिन्नुदात्तशेषनिघातो न एवमग्रेप्यूह्यम् । असावितीति असाविति प्रथमान्तोपलक्षणं एवममुष्येत्यपि षष्ठ्यन्तस्य एतानि वार्तिकानि । गार्ग्य इति नन्वनेनान्त्स्योदात्तत्वे ऽपि अस्यासिद्धत्वाच्छेषनिघाताभावेङ्काकारो ऽनुदात्त न स्यादिति चेच इष्टापत्तेः स्वरितोदात्तयोः समावेशवत्तयोरपि समावेशात् स्यात्तस्येति अत्रस्येति विवक्षितं पूर्ववार्तिकारम्भात् ॥ देवब्रह्मणोः सुब्रह्मण्यानिगदान्तर्गतयोरित्यर्थः देवाब्रह्माण इति इदं वैकल्पिकं देवब्रह्मणोरनुदात्तत्वमेके इति भाष्यात् पक्षेत्वेकश्रुतिदूरात्संबोधनसत्वात् अत एवैकश्रुतिदूरादिति सूत्रे इदमेकश्रुतेरुदाहरणं भाष्ये उक्तम् । स्वरितात्संहितायाम् ॥ अत्रानुदात्तानामिति बहुत्वमविवक्षितं तेनाग्निमीडे इत्यादिसिद्धः बहुवचनोच्चारणान्त्वनेकत्वे सर्वेषां यथा स्यात् अन्यथा तस्मादिति परिभाषयाद्यस्यैव स्यात् यदि तु स्वरविधौसङ्घातः कार्यीत्युच्यते तदा स्पष्टार्थं संहितायामित्येतज्ज्ञापयति अन्यत्र पञ्चमीनिर्द्दिशे कालो न व्यवधायक इति तेन तिङ्तिङ इति निघातः पदपाठे ऽपि सिध्यति इमंमे इति मेशब्दो ऽनुदात्तः तस्योदात्तात्परत्वेन स्वरितः नचास्य स्वरितस्य प्रकृतसूत्रदृष्ट्या असिद्धत्वं न च स्वरितादित्याश्रयात्सिद्धत्वं क्वः सुम्नेयादौ चारितार्थ्यादिति वाच्यम् तस्यादिति इत्यादि नवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भगवतानिवेशितत्वात् अत एव देवब्रह्मणोरिति सूत्रं सार्थकमित्याहुः ॥ उदात्तस्वरितप ॥ सन्नो ऽनुदात्तः तस्यानुदात्तस्येति एकश्रुतिदूरादिति सूत्रस्यभाष्ये उदात्तादनुदात्तानुरागवद्यदेकश्रुतिरुदात्ता ऽनुदात्तावेति सन्दिह्यनोदात्ता उच्चैस्तरांवावषट्कार इति ज्ञापकात् अतन्त्रन्तरनिर्द्दिशः नानुदात्ता उदात्तस्वरितपरस्येत्यत्र सन्नतर इति ज्ञापकादतन्त्रांतरनिर्द्दिशः अपर आह एकश्रुतिरुदात्ताउच्चैस्तरामिति ज्ञापकात् तन्त्रांतरनिर्द्दिशः उच्चैर्दृष्ट्वा उच्चैस्तरामित्येतद्भवति अनुदात्ता च सन्नतर इति ज्ञापकात् तन्त्रांतरनिर्द्दिशः सन्नंदृष्ट्वा सन्नतर इति भवतीत्युक्तं तत्राद्ये ज्ञापकमेवं कैयटेनोक्तं यद्येकश्रुतिरुदात्तातदावषट्शब्दस्यापि यज्ञकर्मणीत्येकश्रुतेः सिद्धत्वादुच्चैस्तरामिति सूत्रं नाकरिष्यत् तेन हि पक्षे उदात्तपक्षे एकश्रुतिर्विधीयते एवमनुदात्तत्वे एकश्रुत्यनुवृत्त्यैवसिद्धे सन्नतरग्रहणमनर्थकं तस्मादुदात्तानुदात्तयोर्भेदतिरोधानमेकश्रुतिरिति अन्त्यमते उच्चैर्दृष्टेति प्रतीकमुपादाय सोमस्याग्नेवीही वौषडिति मन्त्रे यज्ञकर्मणीत्येकश्रुतौ प्राप्तायान्तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते सति चैकश्रुतेरुदात्तानुरागेतदपेक्षः प्रकर्षो युज्यते यथा मलिनेवस्त्रे शौक्ल्यानुरागे तदपेक्षोवस्त्रान्तरे शुक्लतरव्यपदेशः । सन्नं दृष्ट्वेति एकश्रुतिगतमित्यर्थः एवञ्चपक्षद्वये ऽपि

स्वाभाविकोदात्तानुदात्तापेक्षयोदात्ततरानुदात्ततरयोर्न कश्चित् श्रुतौ विशेषः नाप्युच्चारणे यत्नविशेष इति लभ्यते सप्तस्वरगणनायामपि भाष्ये उदात्ततरानुदात्ततरौ श्रुतिगतोदात्ताद्यपेक्षयैवातिशयविशिष्टौ बोध्यौ अनुदात्तस्य तद्विधानन्त्वेकश्रुतिबाधनार्थं यत्त्वेकश्रुतेः स्थाने सन्नतरविधानमिति तन्न मानाभावात् किंचैकश्रुतिपदस्य पञ्चम्यन्तत्वकल्पने न मानं अपिचैकश्रुतिशब्दस्य स्त्रीलिङ्गत्वेन स्वरितपरस्येति लिङ्गविरोधः एवञ्चैकश्रुतिविषये एवास्य विधानमित्यग्निंकन्येत्यादावपि सन्नतरापत्तिरित्यपास्तं अनुदात्तानामित्युपक्रमात्सर्वेषां माभूदन्त्यस्यैव यथास्यादित्यर्थं पदग्रहणं नन्वेवं सति नवसूत्र्याः शास्त्रान्ते उत्कर्षणात्स्यासिद्धत्वात् गङ्गे इत्यादिवत्सरस्वतीकारस्यापि पूर्वेणैकश्रुतिः प्राप्नोति मम तु न दोषः तस्या एव स्थाने सन्नतरविधानादिति चेन्न अत्र पाठेन परस्परं प्रति नवसूत्र्या असिद्धत्वाभावबोधनात् अन्यं प्रतित्वसिद्धत्वमस्त्येव एतेनायं सन्नतर एकश्रुतेरिवोदात्तादनुदात्तस्येति स्वरितस्यापि परत्वाद्बाधकः स्यादिति नोदात्तस्वरितोदयमिति परास्तमित्याहुः शुतुद्रीति आमन्त्रितत्वे ऽपि पादादित्वान्न निहतम् ॥ इति साधारणस्वराः ॥

प्रकृतिर्द्विधा धातुः प्रातिपदिकञ्च तत्रादौ सर्व् लत्वाद्धातुस्वरानाह ॥

धातोः कर्षात्वत इत्यतोन्त इति वर्त्तते गोपायतमिति गुपेरन्तोदात्तादायः तदन्तमप्यन्तोदात्तं एकाच्स्वपि व्यपदेशिवद्भावादस्य प्रवृत्तेः ये ऽपि उपदेशे ऽनुदात्ताः पचादयस्तेष्वप्ययं विधिः अनुदात्तोपदेशस्येड्निषेधविधौ चारितार्थ्यात् पिबाद्यादेशानामाद्युदात्तत्वनिपातनसामर्थ्यात्तेषु नायं विधिः ॥ स्वपादि ॥ अदादिषु आगणान्तात्स्वपादयः लसार्वधातुकमित्यस्य सप्तम्या विपरिणामः अच्यनिटीति सप्तमीदर्शनात् अनिटीतिकिं स्वप्यात् लेति किं चानशिस्वपानः सार्वधातुकेकिं सुषुपतुः क्ङित्येवेति नैतद्भाष्ये दृष्टम् । अभ्यस्तानामादिः आदिरित्यनुवर्तमाने पुनरादिग्रहणं नित्यार्थं अचीतिकिं दद्यात् अनिटीति किं जक्षिथ इदं सूत्रं जक्षतीत्यत्र ञ्निमित्तनिघाते प्राप्ते आद्युदात्तार्थं अनुदात्तेच अच्यनिटीति निवृत्तं अनुदात्त इति बहुव्रीहिरित्याह अविद्यमानेति अत एव मास्मदधादित्यादौ नित्यत्वादिकारलोपे कृते प्ययस्वरः प्रवर्तते एव अभ्यस्तानामिति किं ऊर्णोति चकास्तीत्यादावाद्युदात्तार्थमिदं ददातीत्यत्रान्तरङ्गत्वात्पूर्वं धातुस्वरे ऽन्तोदात्ते ततो द्वित्वे शेषनिघातेनोभयोरन्तोदात्तत्वाभावे ऽपि पर्यायेणोभयोस्तत्वप्राप्ताविदं स्पष्टाचेयं रीतिः परस्मैपदानामिति सूत्रे भाष्ये न च धातोरित्यस्याद्युदात्तप्रकरणपाठेनाद्युदात्तविधायकत्वे ऽनुदात्तेचेति न कर्तव्यमिति भातोरिति सूत्रस्थभाष्यमसङ्गतं त्वद्रीत्या तस्याद्युदात्तविधायकत्वेप्यस्यावश्यकत्वादिति वाच्यं

स्थाने द्विर्वचनमाश्रित्य पूर्वपक्षिणा तयोक्तावपि पक्षद्वये ऽपि कर्तव्यत्वाभिप्रायेण क्रियते न्यास एवेति सिद्धान्त्युक्त्या दोषाभावात् । अस्य धातोरित्यन्तग्रहणानुवृत्तिज्ञापकता पर कैयटस्तु चिन्त्य एवेत्यन्यत्र विस्तरः भीह्री अत्र लसार्वधातुकमिति मण्डूकप्लुत्या संबध्यते मर्मात्विति मदीहर्ष इत्यस्य श्यन्विकरणत्वे ऽपि छान्दसः शपः श्लुः भ्यामादीनां किं ददाति अनुदात्तेचेति तु मिमीत इत्यादौ सावकाशं तत्र हि माङोङित्त्वाल्लसार्वधातुकानुदात्तत्वम् । अभ्यस्तानां किं माद्यति पितिकिं जाग्रतं लसार्वधातुक इति स्पष्टार्थं ननु प्रत्ययादिति किमर्थं भ्यादिभ्यः परस्य पितः प्रत्ययस्यैवसम्भवादिति चेन्न प्रत्ययात्पूर्वएवोदात्तो यथास्यात् सङ्घात उदात्तःमाभूदिति नचोदात्तत्वादीनामज्धर्मत्वेन पितीति सप्तम्या निर्द्दिष्टपरिभाषाप्रवृत्त्या अलोन्त्यपरिभाषयाचान्त्यस्यैव भविष्यतीति वाच्यं स्वरविधौ सङ्घातः कार्योति अर्थस्यापि ज्ञापनात् एवञ्चालोन्त्यस्येत्यादीनामप्रवृत्तिः अत एव कर्षात्वत इति सूत्रे ऽन्तग्रहणं चरितार्थं यद्यप्यनेकोदात्तानां न यौगपद्यं युगपद्ग्रहणात् तथापि पर्यायेण सर्वेषां स्यात् तदभावार्थं प्रत्ययादिति चरितार्थन्तेनासीन इत्यादौ चित्स्वरात्तास्यादिभ्योनुदात्तत्वं विप्रतिषेधेनेति सिद्धं अन्यथा चित्वेनान्तोदात्तत्वं अनुदात्तत्वञ्चादेरित्यसम्भवाभावाद्विप्रतिषेधो ऽसङ्गतः स्यादिति दिक् नन्वेवमपि प्रत्ययेपितीत्येवोच्यतां किं पूर्वग्रहणेन नचाभ्यस्तानां लसार्वधातुके इत्यनुवृत्त्या पितोऽप्रत्ययस्यासम्भवेन प्रत्यय इति व्यर्थमिति वाच्यम् पूर्वोक्तार्थज्ञापनार्थमावश्यकत्वात् प्रत्यय इत्युक्तौ तु सामर्थ्यान्निर्द्दिष्टपरिभाषायाः पुनः प्रवृत्त्या व्यवहितस्यैवग्रहणमिति न दोष इति चेन्न सैवयंः सुप्रम्यस्तदन्तसप्तम्य इति ज्ञापनार्थत्वात् प्रत्ययादिति पञ्चम्योक्तसङ्घविकलपरिभाषाप्रवृत्त्या ऽव्यवहितपूर्वस्य कार्यिण एव पूर्वशब्देन ग्रहणान्न दोषः इदञ्च ज्ञापकस्य विशेषापेक्षत्वान्निर्द्दिष्टपरिभाषाविषये एव प्रवर्तते अत एव रिक्ते विभाषेत्यासौ न दोषः तत्र हि पूर्वोत्तरसाहचर्यान्न परिभाषाविषयः वस्तुतः षष्ठ्यर्थे सप्तमीत्येवज्ञाप्यते तदन्तविधिस्तु येनविधिरिति परिभाषयान्यार्थसिद्धः चतुरः सशीत्यत्र च यथा नास्याः प्रवृत्तिस्तथा वक्ष्यते अत्र बहव इदं सामान्यापेक्षन्तेन ञ्नित्यादिरित्यादावपि प्रवृत्तिः नचैवं गर्गा इत्यादौ यञञोश्चेति लुकि आद्युदात्तत्वप्रसङ्गः इत्यदघटिते ऽनुबन्धनिमित्ते स्वरे कर्त्तव्ये आङ्गत्वाभावेऽपि प्रत्यये परतः पूर्वकार्यत्वाभावेऽपि लुमतालुप्ते प्रत्ययलक्षणं नास्तीत्यर्थस्य सञ्ज्ञायामुपमानमित्यनेन ज्ञापनान्न दोषः तद्धिचञ्चेत्यादावाद्युदात्तत्वाय अन्यथा कनोलुपि प्रत्ययलक्षणेन ञ्नित्यादिरित्येवसिद्धे तद्वैयर्थ्यं स्पष्टमेव अत एव अत्रय इत्यत्र ठकोलुकि न

दोषः वस्तुनो ऽत्रय इत्यादौ न दोषः कार्यिणोऽभावेन प्रत्ययलक्षणाप्रवृत्तेः प्रत्ययलक्षणेन हि तन्निमित्तमन्यस्य कार्यमतिदिश्यते न तु तस्यैवस्थानिवत्त्वं प्रतिपाद्यते असतः प्रसङ्गाभावेन स्थानिवत्त्वबाधात् अत एव नखभित्र इत्यादावैसादिकं न आहिदातामित्यादावादिः सिच इत्यस्य प्रवृत्तये इत्पदघटितेति पथिप्रियो मथिप्रिय इत्यत्र च पथिमथोः सर्वनामस्थाने इत्येतत्स्वरनिवृत्त्यर्थं नलुमताङ्गस्येति सूत्रभाष्यपठितमत्र लुमतालुप्ते प्रत्ययलक्षणं नेष्यते इति वचनमेव शरणं यदि प्रागुक्तं ज्ञापकं क्वचित्स्वरे कर्त्तव्ये प्रत्ययलक्षणं नेत्येव क्वचिदित्युक्त्या चामन्त्रितस्य च सर्वस्य सुपीत्यादौ न दोष इत्युच्यते तदा न काचिद्दोष शङ्केति वदन्ति केचित्तु विशेषापेक्षमेतत् यत्र तदन्तग्रहणसत्त्वासत्त्वाभ्यां स्वराश्रयकार्यिभेदस्तत्रैव तत्प्रवृत्तिरिति भीह्रीत्यत्र हि पूर्वग्रहणाभावे तदन्तस्य कार्यित्वे प्रत्ययान्तानां भ्यादीनामलोन्त्यस्य भवत्युदात्तः प्रत्ययान्त्यस्य स्यात् सप्तम्यर्थपुरस्कारे तु पितमपहायभ्यादीनामेवोदात्तः स्यादिति स्पष्टस्तद्भेदः ॥ उपोत्तमं रिति ॥ चङ्यन्यतरस्यामित्यत्रापि दरिद्राधातुविषये फलभेदः ञ्नित्यादिरित्यादौ न तद्भेदः उभयथापि प्रकृतेरादेरेवोदात्तत्वात् अतस्तत्र परसप्तम्येव एवञ्च गर्गा इत्यादौ नलुमतेति निषेधादेव न दोष इति पथिमथ्यर्थमपि वचनं नावश्यकं ननु सूत्रद्वयेरितश्चङ इति षष्ठी निर्देश एवास्तु किं परिभाषयेति चेन्न लाघवार्थत्वात् ननु चतुरः शसीत्यत्र फलभेदस्य स्पष्टत्वेन पक्षद्वये ऽपि एतत्परिभाषाप्रवृत्तिर्दुर्वारा तथा च शस एवोदात्तत्वं स्यादिति चेन्न चतुरः शस इत्येव वक्तव्ये मध्ये विजातीयसप्तम्यन्तपाठेन तदप्रवृत्तेरित्याहुः इदं चिन्त्य उपमानं सञ्ज्ञायामिति सूत्रस्थभाष्यविरोधात् किंच सर्वस्य सुपीत्यत्राप्येवसति तदन्तसप्तमी न स्यात् तथा च नलुमतेति निषेधापत्तौ सर्वस्तोमादिसिद्धिः चतुरःशसीत्यस्यापि लाघवार्थताया वक्तुं शक्यत्वाच्च नलुमतेति सूत्रस्थभाष्यन्तु लुमतिप्रतिषेधे एकपदस्वरस्योपसंख्यानं सर्वामन्त्रितसिज्लुक्स्वरवर्जं प्रयोजनं ञिनिकिल्लुक्स्वराः पथिमथोः सर्वनामस्थानेलुकीति वार्तिकव्याख्यानपरं उपमानमिति सूत्रस्थन्तु तत्प्रत्याख्यानपरमिति न तयोर्विरोधः इमानि च वार्तिकानि नलुमताङ्गस्येत्यत्राङ्गाधिकारः प्रतिनिर्द्दिश्यत इति पक्ष इव प्रत्यये परतः पूर्वस्य कार्यमात्रे प्रतिषेध इति पक्षे ऽपि आवश्यकानि सौवरीणां सप्तमीनान्तदन्तसप्तमीत्वात् उत्तरपदत्वेचापदादिविधाविति वत् ञिनि कित्स्वरस्यानाङ्गत्वात् प्रतिषेधाप्राप्तिरिति कैयटस्तूपलक्षणं इह किं चिदङ्गाधिकारे लुमतालुप्तेप्रत्ययलक्षणं न भवति किंचिच्चान्यत्र न भवतीति सूत्रशेषस्थभाष्ये किंचिच्चेति शब्देनाहुर्ददातीत्य-

चासुपीति प्रतिषेधोयाद्य इति न कश्चिद्भाष्यविरोधः किंचिच्चेति प्रतीकेति-चित्कित्स्वरा इति कैयट उपलक्षणतया व्याख्येय इति सुधियो विभावयन्तु । लिति ॥ अत्राभ्यस्तानामिति न सम्बध्यते छलो लित्करणात् चिकीर्षक इति अत्र परत्वादल्लोपः न च स्वरोनित्यः शब्दान्तरस्य प्राप्त्या तस्यानित्यत्वात् लोपोप्यनित्यः स्वरभिन्नस्य प्राप्तेः स्वरदीर्घयलोपेषु लोपाजादेशस्य स्थानिवत्त्वनिषेधादीकारउदात्तः । आदिर्णं ॥ अभ्यस्तानामिति णमुलीत्यस्य सौवर्य इति न्यायेन तदन्तसप्तमीत्वे एतत्पञ्चम्याविपरिणम्यते अभ्यस्तात्परो यो णमुल् तदन्ते आदिरुदात्त इत्यर्थः तेन जागरं जागरं लोलूयं लोलूयमित्यादेः सिद्धिः लोलूयिषं लोलूयिषमित्यादौ च नातिप्रसङ्गः लोलूयमित्यादावल्लोपस्य स्थानिवत्त्वन्तु न स्वरेतन्निषेधात् एवञ्च विशेषाभावमभिप्रेत्य परसप्तम्येव मूले उक्ता अभ्यस्तानामिति किं कण्डूयं कण्डूयं एतेनामेवेति सूत्रे उच्चैःकारमित्युदाहरणे ऽस्योपन्यासे हरदत्त कृतश्चिन्त्यः अभ्यस्तानामित्यनुवृत्ति-परवृत्तिविरोधात् यदि तु व्यवस्थितविभाषाश्रयणे नातिप्रसङ्ग निरासमङ्गीकृत्य तदनुवृत्तिरनावश्यकीति तदाशयस्तदा शाच्छोरिति सूत्रस्थेन व्यवस्थितविभाषापरिगणनपरेण भाष्येण विरोधः लोलूयं लोलूयमिति आभीक्ष्ण्ये द्वित्वं परो लोलूयशब्दो ऽनुदात्तः लोलू इत्युभयमप्युदात्तं न च तत्र कर्तव्ये ऽल्लोपस्य स्थानिवत्त्वं स्वरविधौ तन्निषेधात् शेषनिघातः ॥ अचः कर्तृयकि ॥ अत्रापि तदन्तसप्तमीत्वेन फले विशेषः उपदेशे ऽजन्तप्रकृतिककर्तृयगन्तस्यादिरुदात्त इत्यर्थात् लूयते केदार इति पक्षे यक्स्वरेण मध्योदात्तं उपदेशेकिं कीर्यते इत्यादावित्वे रपरत्वे चायं स्वरो यथास्यादिति इदञ्च तास्यनुदात्तेदिति सूत्रात्समासैकदेशस्याप्युपदेशपदस्यानुवृत्त्या सप्तम्याविपरिणामेन च लब्धं नचैवं जनेरन्तर्भावितण्यर्थात्कर्मकर्तरिजायते स्वयमेवेत्यत्र न स्यात् उपदेशेऽजन्तत्वाभावादिति वाच्यम् य इति विषयसप्तमीमाश्रित्यप्रत्ययोत्पत्तेः प्रागेवात्वप्रवृत्तेरुपदेशे इत्यस्य च यगुपदेशे इत्यर्थ इति दिक् लूयत इत्यादि मध्योपर्यायेणोदात्तौ ॥ चङ्यन्य ॥ उपोत्तमं रितीत्यत उपोत्तमग्रहणमनुवर्त्तते चङुदात्त इति तिङ् तु अदुपदेशात्परत्वेन तास्यनुदात्तेदित्यनुदात्तः उपोत्तमं किं माहिदधत् अत्र चङ एवस्वरः ॥ इति धातुस्वराः ॥

अथ प्रातिपदिकस्वराः ॥ तेच प्रायेण कृत्तद्धितप्रत्ययबलेनैव ज्ञेयाः उणादिषु उणादिप्रत्ययैः अव्युत्पत्तिपक्षे फिट्सूत्रैः क्वचिद्विशिष्यविधानादित्यादूह्यम् । अत एव पुत्रीयतेः क्विपि पुत्रीरित्यादौ सर्वानुदात्तत्वमेव अत एव ॥ कर्मण्यणिति सूत्रे मांसशब्दस्य नब्विषयस्येति फिट्स्वरमाशङ्क्य मनेर्दीर्घश्चेति औणादिकसप्रत्ययान्तत्वादन्तोदात्तता कैयटेनोक्ता मांसमेकः पिश-

न्तीत्यादि लक्ष्यमपि तथैव । आज्यशब्दे तु आङ्पूर्वात् अञ्जेः क्यबिति पक्षे आद्युदात्तत्वं स्पष्टमेव । ण्यत्पक्षे तु नब्विषयस्येत्याद्युदात्तत्वं बोध्यम् । कर्षात्वतः ॥ कर्षतेराकारवतश्च परो यो घञ् तदन्तस्येत्यर्थः । ञ्नित्यादिरित्यस्यापवादोऽयम् । वत्किम् । आदन्तादित्यर्थे युक्ते आदन्तभक्तत्वाद्दाय इत्यत्रैव स्यात् न तु पाक इत्यादौ घञाक्षिप्तधातुविशेषणत्वात्तदन्तविधिः । स्वरविधौ व्यञ्जनमविद्यमानवदिति तु नास्ति स्वरोद्देश्यकविधेरभावात् । युक्तो निर्दिश्यमानपरिभाषया आकारावयवत्त्वे ऽपि आकारान्ताद्धातोर्विहित इत्यर्थः स्यात् इति बोद्धुम् । यद्यपि निर्दिश्यमानपरिभाषया घञ एवोदात्तत्वं तथाप्यन्तग्रहणं स्वरविधौ सङ्घातः कार्यीति ज्ञापितत्वादादेरन्तस्य च पर्यायेण मा भूदित्यर्थमेवञ्च स्वरविधौ निर्दिश्यमानपरिभाषाया अप्रवृत्तिरित्याहुः । उञ्छादीनाञ्च ॥ उञ्छम्लेच्छजञ्जजल्पा घञन्ताः जपव्यवधाववन्तौ वध इति पाठस्तु चिन्त्यः । उदात्तनिवृत्तिस्वरेण सिद्धेः । गरो विषे ऽबन्तोन्तोदात्तः । अन्यत्राद्युदात्तः । वेदवेगवेष्टबन्धाः करणेघञन्ताः भावे आद्युदात्ता एव । स्तुयुद्रुवश्छन्दसि समासार्थमिदं परिष्टुत् सुयुत् परिद्रुत् । वर्त्तनिस्तोत्रे । स्तोत्रेसामनि वर्तमानो वर्त्तनिशब्द उञ्छादिः । अन्यत्र मध्योदात्तः । श्वभ्रे दरः अन्यत्रावन्तत्वादाद्युदात्तः साम्बतापौ भावगर्हायाम् । अन्यत्राद्युदात्तौ । मन्यभोगदेहा घञन्ताः । उञ्छादिराकृतिगण इति बहवः । घञन्त इति णिजभावे । णिचि तु एरचैव सिद्धेः । एरजण्यन्तानामिति तु नास्ति ॥ चतुरः शसि ॥ अत्र सौवर्यः सप्तम्य इति न प्रवर्त्तते अन्यथा चतुरः शसित्येव वदेत् । नेहेति । तकाराकारस्थनेत्यर्थः स्वरे नेति निषेधस्तु लोपरूपाजादेशस्यैव स्वविधौ स्थानिवत्त्वाभावात्तस्यापि न तस्मादाद्युदात्तत्वैवेति भावः । केचित्तु चतसादेशे आद्युदात्तनिपातनसामर्थ्याच्चतुरः शसीति न प्रवर्त्तते न च चतसृणामित्यत्र षट्त्रीति विभक्तिस्वरस्यापि बाधापत्तिः हलादिग्रहणसामर्थ्येन तदबाधात् । तथा हि षट्त्रिचतुरां बहुवचनावयवत्वाद्द्विवचनैकवचने न स्तः । उपसमस्ते सम्भवे ऽपि विहितविशेषणान्न दोषः । तत्र षड्भ्यो जश्शसोर्लुगेवान्या हलादयः । त्रिशब्दे जसि नेदमसर्वनामस्थानइत्यधिकारात् । शसि एकादेश उदात्तेनेत्यनेन सिद्धम् । अन्या हलादयः । तिसर्षपि तिसृभ्योजस इत्यनेन भाव्यन्तिसः पश्येत्यत्रोदात्तयण इत्यनेन भाव्यं चतुःशब्दे जसि असर्वनामस्थानइत्यनुवृत्त्या न दोषः । तस्माच्चतसः पश्येत्येव व्यावर्त्यम् । यदि निपातनस्वरो ऽस्य विभक्तिस्वरस्य बाधकः स्यात् हलादिग्रहणमनर्थकं स्यात् । न च चतुरः पश्येति तद्व्यावर्त्यम् । चतुरः शसीत्यारम्भसामर्थ्येन तस्य बाधात् । न च गौणे चरितार्थम् । वार्तिकप्रामाण्येन तत्राप्रवृत्तेरित्याहुः । तत्तु तिसृभ्यो जस इति सूत्रस्थेन उपसमस्तार्थमेके

इति भाष्येण जस्ग्रहणवत् हलादिग्रहणस्यापि तदर्थकत्वसूचनात् वार्तिक-व्याख्यानभाष्ये स्थितमपि भगवता दूषितमेव । तस्मादिति परिभाषणेन विहितविशेषणासम्भव इति तदाशयः । एवं हलादिग्रहणसार्थक्यं मनसि निधाय ज्ञापकासम्भवं मत्वानैव वा पुनश्चतसः पश्येत्यत्र स्वरः प्राप्नोतीत्यादिग्रन्थेन मूलोक्तयुक्त्यैव साधितं तस्माद्भाष्ये षट्त्रीत्यादेश्चतुरः शसीत्यादेश्च प्रवृत्तिरस्त्येव सत्यभिधाने इति भाष्यसम्मतमिति ध्येयम् ॥ झल्युपोत्तमम् ॥ तदन्ते पदे इति । सौवरीणां सप्तमीनां तदन्तसप्तमीत्वादिति भावः । षट्त्रीत्यस्यापवादः । आषट्भिरिति आ इति भिन्नं पदम् ॥ विभाषा भाषायाम् ॥ पक्षे षट्त्रीत्यन्तोदात्तत्वम् ॥ सर्वस्य सुपि ॥ सर्वशब्दश्च गणे ऽन्तोदात्तो निपातित उञ्छादिपाठाद्वान्तोदात्त एवञ्च सुपिकिं सर्वतर इति वृत्त्युक्तं चिन्त्यं प्रत्ययलक्षणेन तत्रापि सुबन्तत्वात् । अत्यन्तस्वार्थिकस्तरबादिस्तु न भाष्यारूढः । अत्र सुपीत्युक्तेः । तत्फलन्तु सर्वस्य विकारः सार्वं इत्यत्रानुदात्तादिप्रकृतिकसुबन्तलक्षणाऽसिद्धिः । अवर्णमाद्युदात्तस्यैव । प्रत्ययलक्षणेनापि सर्वस्वरस्येष्यमाणत्वात् । सप्तमीनिर्देशस्तु लाघवार्थः । सौवरीणां सप्तमीनान्तदन्तसप्तमीत्वात् । सर्वस्वरो ऽनच्कस्येति वक्तव्यम् । सर्वके अत्रान्तोदात्त एव ञ्नित्यादि सौवर्यं इत्यस्य सामान्यतः प्रवृत्तिमभिप्रेत्याह ञिदन्तस्येति । ननु जुगुप्सेत्यादौ सञ्ज्ञायाः परत्वान्नित्स्वरे कृते सन्नन्तस्य धातुत्वे सतिशिष्टत्वाद्धातुस्वरः प्राप्नोतीति चेन्न । सनो नित्त्वसामर्थ्येन सतिशिष्टस्यापि बाधेनाद्युदात्तत्वसिद्धेः । न च सन्यङोरित्यादौ विशेषणार्थः सः । अन्यथा वत्स इत्यत्रापि स्यादिति वाच्यम् । धातोरित्यनुवर्त्य सशब्दान्तधातोर्द्वित्वविधानेनादोषात् ॥ पथिमथोः सर्वे ॥ पथिमथिशब्दावन्तोदात्तौ । अत्र सौवरीणान्तदन्तसप्तमीपरत्वे ऽपि लुमतालुप्ते प्रत्ययलक्षणं नेष्यते इति भाष्यन्तेन पथि प्रियः पूर्वपदप्रकृति स्वरेणान्तोदात्त एवं सुपन्था इत्यादावपि प्रत्ययलक्षणं नास्त्येव । समासाद्या विभक्तिः सा तु न पथिमथोर्विहितेति न तत्राप्यस्य प्रवृत्तिः ॥ चियोनिवासे ॥ क्षियन्ति निवसन्त्यस्मिन्नित्यधिकरणे पुंसि सञ्ज्ञायामिति घः । निवासेकिद्भयश्चोराणामित्यादावेरजन्तत्वादन्तोदत्तत्वमेव । जयोश्च इति तेनैवकरणेघः । अन्यत्रेरच्यन्तोदात्तत्वम् ॥ वृषादीनाञ्च ॥ वृषुसेचने इगुपधलक्षणः कः । आकृतिगण इति । फिट्सूत्रेषु ग्रामादीनाञ्चेति सूत्रितं सोप्याकृतिगणः । एवञ्चाविहिताद्युदात्तस्य वृषादित्वं ग्रामादित्वं वा बोध्यम् । अन्तोदात्तस्य तु उञ्छादित्वं घृतादित्वं वा बोध्यम् । एवञ्च द्वाभ्यामेवं सूत्राभ्यां सर्वेष्टसिद्धौ इतरसूत्रद्वयप्रणयनं कर्तृभेदाच्च दोषायेति दिक् । एतदेवेति । एत-

त्वोपपादितम् ॥ निष्ठाचद्व्यजनात् ॥ आकारभिन्न आदित्यर्थः । निष्ठेत्यादिषष्ठ्यर्थे प्रथमा । अद्धात्त इत्यादावेकादेशस्य बहिरङ्गासिद्धत्वादनादिति प्रतिषेधो न ॥ आशितः क ॥ सकर्मकादप्यंशे कर्त्तरि क्त उपधादीर्घश्चात्रैव निपात्यते आङ्पूर्वत्वे क्तमात्रं आङ्पूर्वादविवक्षितकर्मत्वेनाकर्मकत्वात्कर्तरि क्त इति वृत्तिः । विवक्षाविवक्षयोश्च प्रयोगाधीनत्वान्नानिष्टापादनमिति तदाशयः ॥ आङ्पूर्वत्वे थाथघञित्यस्याप्यपवादोयम् ॥ अन्ये तु ण्यन्तात्कर्मण्येवायङ्क् इति कर्तत्यवेन चाणौ कर्ता णौ कर्मीभूत एव विवक्षित इत्याहुः । तदुभयमपि भाष्यासम्मतम् ॥ रिक्ते विभाषा ॥ पूर्वोत्तरसाहचर्यात् रिक्तशब्दे विद्यमान आदिरित्यर्थः । न तु तत्र परे इत्यर्थः । रिक्त इति पक्षे प्रत्ययस्वरेणान्तोदात्तः ॥ जुष्टार्पिते ॥ वास्त इति । पक्षे भाषायाञ्च प्रत्ययस्वरेणान्तोदात्तौ । जुषी प्रीतीत्यतः श्वीदितो निष्ठायामितीट्प्रतिषेधः । अर्तेर्णिच् अर्तिह्रीति पुक् ॥ नित्यं मन्त्रे ॥ न केवलं गतार्थतामात्रं किन्त्वारभ्यमाणे सूत्रे दोषोप्यस्तीत्याह अर्पिताः षष्टिरित्यादिना । सूत्रविरोधात्स पाठः प्रमादिकः । इदमेव ध्वनयितुं सूत्रमित्यन्ये ॥ युष्मदस्मदो ॥ ङयि चेति योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । एकादेश उदात्तेनेति विभक्तेरुदात्ते प्राप्ते वचनम् ॥ यतोना ॥ निष्ठा च द्व्याजित्यतो द्व्यज्ग्रहणमनुवर्त्तते नौभिवाद्विहितो यो यत् तदन्तस्येत्यर्थः । अनाव इति प्रतिषेधो ज्ञापयति हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति । हलादावादेरचो ऽसम्भवात् तद्विधायकशास्त्रसामर्थ्येन हलोः स्थाने उदात्तादिगुणकः कश्चित् स्यादित्यर्थोऽभिप्रायेण हलः स्वरप्राप्तिः स्पष्टं चेदं भाष्ये । तित्स्वरितापवादोयम् ॥ ईड-वन्द ॥ ण्यतो द्व्यनुबन्धकत्वात्पूर्वेणासिद्धिरिति भावः । अयमपि तित्स्वरापवादः । अत्र वृङ एव ग्रहणमिति एतिस्तुशासिति सूत्रे निरूपितम् ॥ विभाषा ॥ वेणुशब्दे नित्त्वादाद्युदात्तः प्राप्तः । स्योर्णुरित्यनुवर्त्तमाने अजिवृरीभ्यो निच्चेति व्युत्पादितत्वादिन्धाने यदि चानश् तदान्तोदात्तत्वं प्राप्तं यदि शानच् तदाप्यन्तोदात्तत्वमेव प्राप्तम् । यत्तु श्नमो ऽकारस्योदात्तस्य लोपात् लसार्वधातुकानुदात्तत्वे उदात्तनिवृत्तिस्वरेण शानजन्तो मध्योदात्त इति । तन्न । विदीन्धिखिदिभ्यो लसार्वधातुकानुदात्तत्वप्रतिषेधात् । केचित्त्वस्य वचनस्य तिङन्ते एव प्रवृत्तिः । भाष्ये प्रथमतो लिङीत्युक्त्वा ऽथ ऽविशेषेणेत्युक्तेर्लिङ्भिन्ने लिङ्सदृशे ऽङ्कादेशिन्येव प्रवृत्तिप्रतीतेरित्याहुः । यदा वेणुरिव वेणुरिति कनो लुम्मनुष्यइति लुप् तदा सञ्ज्ञायामुपमानमिति नित्यमाद्युदात्तत्वमिष्यते ॥ त्यागराग ॥ आद्यास्त्वय इति । तत्र कर्पात्वत इति पक्षे ऽन्तोदात्तत्वं बोद्धम् । अन्त्येषु त्रिष प्रत्ययस्वरेणान्तो-

दात्तत्वं तत्र कुहश्वठौ चुरादावदन्तौ ॥ मतोः पूर्वं ॥ पूर्वमिति शब्दस्वरूपापेक्षया नपुंसकस्यादित्यस्य विशेषणम् । केचित्तु सूत्रे पूर्वशब्दं पुल्लिङ्गं पठन्ति स्त्रियां सञ्ज्ञायामित्यस्य स्त्रियां वर्तमाना या सञ्ज्ञा तस्यां विद्यमान आदित्यर्थस्तदाह स्त्रीनाम्नीति । मत्वन्तं चेत् स्त्रीनाम भवतीत्यर्थः । आत्किम् । इक्षुमती अत्र ह्रस्वनुड्भ्यां मतुबित्येव सञ्ज्ञायां किं खट्वावती स्त्रियां किम् । उदुम्बरावान् उदाहरणे ऽत्र च बहुचोनजिरादीनां शरादीनां चेति दीर्घः चातुरर्थिकः ॥ नद्यां मतुप् ॥ मतोः किङ्वादनीतदभावे पूर्वग्रहणस्याप्यभावात्सञ्ज्ञाशब्दसंबन्धिन आकारमात्रस्य स्यादिति पूर्वग्रहणाद्वेह सानुमती अन्यथा स्त्रीनाम्नो मत्वन्तस्येत्यर्थः स्यात् ॥ अन्तोवत्याः ॥ वत्या अन्त इति तु नोक्तम् राजवतीत्यत्र माभूत इति स्वरविधौ नलोपस्यासिद्धत्वान्नावतीशब्दः किन्त्वन्वतीशब्दः चत्वं त्वाश्रयात्सिद्धम् । अहीवतीति सञ्ज्ञायामिति वत्वम् । शरादीनाञ्चेति दीर्घः । योगविभागश्चिन्त्यप्रयोजनः ॥ अथ फिट्सूत्राणि ॥ अपाणिनीयान्यप्येतानि आद्युदात्तश्च उपसर्गाश्चेति अवङ्स्फोटायनस्येत्यादिसूत्रेषु भाष्यादौ व्यवहृतत्वादविरुद्धत्वाच्च साधुत्वव्यवस्थापकानि भवन्ति । यत्तु पाणिनीयान्येवैतानीति तन्न । वृषादीनाञ्च उञ्छादीनाञ्चेत्याभ्यामाकृतिगणाभ्यां क्रमेणाद्युदात्तत्वान्तोदात्तत्वयोः सिद्धयोः ग्रामादीनाञ्च घृतादीनाञ्चेत्यनयोर्वैयर्थ्यापत्तेः । मम तु भिन्नकर्तृकत्वान्न दोषः ॥ फिषोन्तः ॥ फिडिति प्रातिपदिकस्य पूर्वाचार्यसञ्ज्ञा उच्चैश्च इति । नन्वत्रादिचेडसिः व्रश्चेः सः क्विदिति व्युत्पादनात्प्रत्ययस्वरेणैवान्तोदात्तत्वसिद्धिरिति चेन्न । अव्युत्पत्तिपक्षे आवश्यकत्वात् ॥ पाटलापालङ्काबा ॥ पाटलापालङ्कौ औषधिविशेषस्य वाचकौ लघावन्तइति प्राप्ते इति । पूर्वपरान्वयीदम् । इदमुपलक्षणं क्व चिद्बह्वस्वान्तस्येत्यादीनामपि दुर्वारत्वादित्याहुः । सागर इत्यादि अत्रापि लघावन्त इति प्राप्तम् । आद्युदात्तोयमिति । नन्वनेनान्तोदात्तत्वाभावे ऽपि नियमत आद्युदात्तत्वं केन स्यात् विधायकाभावात् अतो ऽनियम इति वक्तुं युक्तमित्यत आह इहैवेति । एषां सूत्राणामाद्यसूत्रबाधकबाधनार्थत्वात् अस्त्रियामित्येतदभावे स्त्रियामप्यनेन बाधकं बाध्येत बाधकं चानेनैवानुमीयते तच्च मध्योदात्तत्वस्यात्रासम्भवात्सर्वानुदात्तविधायकस्य फिट्सूत्रेष्वदर्शनादाद्युदात्तविधायकमेवेति भावः । स्त्रीविषयेति । आद्युदात्तत्वमित्यन्ये । गुदमिति नब्विषयस्येति स्वाङ्गशिटामिति वा प्राप्ते । ननु गुदाशब्दस्यादन्तत्वभावात्कथं स्वङ्गेत्यस्य प्राप्तिरत आह अन्तरङ्गमिति । स्त्रीविषयवर्णेति स्त्रीविषयवर्णाच्च पूर्वाणामित्यर्थः। स्त्री विषयवर्णनाम्नामिति केषां चित्पाठः । लघावन्तइत्येवात्रपरत्वात् अस्य तु वृरित्युदाहरण-

मित्यन्ये । इभ्ये दण्डादित्वात् । यान्तस्यान्त्यादिति । इदमुपलक्षणं तत्राद्य इति प्रत्ययस्वरेणापि नन्वव्युत्पन्नेष्वेव सूत्रप्रवृत्तेरिभ्येतिप्रत्युदाहरणमयुक्तमिति चेन्न अस्मादेव स्त्रीविषयग्रहणाज्ज्ञापकात् व्युत्पत्तिमार्गप्राप्तस्वरस्यापि फिट्स्वरो बाधक इति वदन्ति। ध्वानितश्चेदमेतिस्तुशास्विति सूत्रे कैयटे। स्वान्तस्याश्मादेरिति शकारमकारादिभिन्नस्य खशब्दस्यान्त उदात्त इत्यर्थः । शीङः खो निदिति । इदन्दशपाद्यामुक्तं पञ्चपाद्यान्तु शीङ् खो ह्रस्वश्चेति पठितं तत्राप्याह अन्तरङ्गत्वादिति । स्वरस्य स्वाङ्गत्वापेक्षत्वादन्तरङ्गत्वं चिन्त्यं स्वाङ्गशिटामिति सूत्रे ऽन्तग्रहणात्सर्वनामप्रातिपदिकसञ्ज्ञाकालिकादन्तत्वमादाय यत्प्रवृत्तिरिति बोध्यम् । एवं पूर्वत्र गुदाशब्दे ऽपि बोध्यम् । अस्थ्यादिस्वाङ्गवाचकशङ्कशब्दे स्वाङ्गशिटामित्याद्युदात्तत्वप्राप्त्या सोप्यत्र प्रत्युदाहरणम् । ग्रीवायां बद्धोपि कत्ते आसनीत्यादौ ग्रीवाशब्दस्यान्तोदात्तत्वन्तु छान्दसत्वान्निर्वाह्यम् । द्विष्टवत्सरइत्याहुरिति । अत्रारुचिबीजन्तु सपूर्वाच्चेदिति सरप्रत्ययस्य चित्वात्सिद्धम् । परिवत्सरस्तूदाहार्य इति अनेनैव सिद्धे तद्व्यर्थमित्याशय इति तत्त्वम् । अत्र सूत्रे शत्साहचर्यात्तिशब्दः पङ्क्त्यादिसूत्रविहित एव गृह्यते दक्षिणस्य साधाविति प्रवीण इत्यर्थः । वीणायां सामसु वा दक्षिण इत्युदाहरणं प्रवीण इत्यर्थः । स्वाङ्गाख्यायामादिति स्वाङ्गे किं दक्षिणो देशः । अत्र सर्वनामत्वादाद्युदात्तत्वं न च परत्वादेव तेनाद्युदात्तत्वमत्र भविष्यतीति वाच्यम् । अस्य प्रकरणस्य बाधकबाधनार्थत्वात् ॥ कृष्णस्या ॥ अत्र छन्दसीति वर्तत इत्याहुः । अन्तोदात्त इत्येव आख्येति किं कृष्णो मृगः । वानाम ॥ अन्तोदात्तत्वं वा पक्षे आद्युदात्तत्वं शुक्लगौरयोः नामधेयस्येति वर्त्तते तेनानामधेययोरन्तोदात्तत्वमेव । ऋज्रेन्द्रेति उणादिसूत्रनिपातितान्तोदात्तकत्वस्य शुक्रशब्दस्य लत्वे शुक्लशब्दव्युत्पन्नेरिति बोध्यम् ॥ अङ्गुष्ठोदक ॥ अन्त इतित्वादिग्रहणानुवृत्तिशङ्कानिरासार्थम् । उदकस्य कर्दमादित्वादाद्यद्वितीययोः पर्यायेण प्राप्ते बकस्य प्राणिनाञ्च कुपूर्वाणामित्याद्युदात्तत्वे प्राप्ते तेन लोके इति नियमकरणसामर्थ्यादिति भावः । वशाशब्दश्च वशेः पचाद्यचि टापीति तात्पर्यम् । पृष्ठस्य च मृष्टस्येति पाठान्तरम् । वा भाषायामिति पक्षे स्वाङ्गशिटामित्याद्युदात्तत्वम् । मृष्टे च । निष्ठाचद्व्यजनादिति तत् ॥ अर्यस्यस्वाम्या ॥ वैश्ये त्वाद्युदात्त एव । अत एव ज्ञापकादिति स्त्रीविषयवर्णेति द्वितीयपादस्यसूत्रेणेत्यन्ये । नक्षत्राणामाब्विषयाणां नित्याबन्तानामित्यर्थः । नक्षत्राणां किं खट्वा । आबित्यादिकिम् । अश्विनी अविष्ठेत्यादि अवतीधनवतीशब्दाभ्यामिष्ठनि विन्मतोरिति लुक् विषयग्रहणं

चिन्त्यम् । आबन्तानावन्तनक्षत्रवाचकस्यासत्वात् । नकुप ॥ कवर्गपूर्वस्याब्विषयस्य नक्षत्रस्यान्त उदात्तानेत्यर्थः । कुपूर्वस्येतिकिं बहुला आख्येतिकिं कृत्तिका सु जाता मागविका इत्यत्रापीति अपिना कृत्तिका आर्यिका बहुलोक्ति कृत्तिका पर्यायो अत्र पक्षे कृत्तिकेत्यादेः प्रयोजनं मघाविशाखेत्यादि आह्नतीति वराह इन्द्र एमुपमित्यादावन्तोदात्तदर्शनात् वराहशब्दोप्यत्र बोध्यः । ज्येष्ठकनिष्ठयोः वृद्धयुवशब्दयोर्ज्यकनादेशौ प्रशस्याल्पशब्दयोस्तावादेशौ यदा तदा प्रत्युदाहरणं पक्षे उदात्त इति उदात्तग्रहणानुवृत्तेरिति भावः ॥ इति प्रथमपादः ॥

ह्रस्वान्तस्य स्त्रीविषयस्य ॥ नित्यस्त्रीलिङ्गस्येत्यर्थः । वलिरिति । वलिशब्दोपि जरया श्लथचर्मणि तनुश्च शरीरे नित्यस्त्रीलिङ्गः । ह्रस्वेतिकिम् । नदीस्त्रीति किं मरुद्वायुः । विषयेतिकिं लघुः बहुः । नब्विषयस्य स्त्रियाविषयस्य नपेनित्यं तस्येति पाठेन विषयपदानुवृत्त्यैवसिद्धे पुनर्विषयपदं लिङ्गव्यत्ययप्रत्ययलोपान्यतरेण लिङ्गान्तरोपसङ्क्रान्तस्य वा विषयतामात्रेणेतत्प्रवृत्त्यर्थं यथा मधोस्तृप्ता इवासत इत्यादौ यथा वा मध्वस्मिन्नस्ति मधुर्मासः मधोर्ञ्चेति यतोलुक् । वार्तिकेन ध्वनितञ्चेदमौ च द्विवचने इति सूत्रे भाष्ये । नबितिकिं मूर्तः सर्पिरिति इसिनन्तज्योतिःशब्दादौ तु नित्त्वादाद्युदात्तत्वमेव तिला इति यत्तु तिलोमाशब्दौ घृतादिपाठादन्तोदात्ताविति संप्रदश्चेति सूत्रे कैयटः तच्चिन्त्यम् । तिलाश्च मे इत्यादावाद्युदात्तस्यैव पठमानत्वात् उमाशब्दे ऽपि मकरवरूठेत्यनेन विशिष्यपर्यायेणान्तोदात्तविधानात् शालिव्रीहिघृतादित्वादन्तोदात्तो तृणेत्यादिकिम् । आम्रः । गोधूमा इति । अत्र परत्वादेव लघावन्ते इति मध्योदात्तत्वसिद्धेः पर्यायेणाद्युदात्तत्वसिद्धेश्चेदं चिन्त्यं चणका इत्युचितम् । नः संपञ्चेत्यादौ नलोपे कृते पाणिनीये ऽनुदात्तादेरञित्यादौ एषामिव एतेषु पाणिनीयशास्त्रप्रवृत्तौ बाधकाभावान्नलोपस्यासिद्धत्वेनैतत्प्रवृत्तिः सप्ताष्टशब्दे घृतादित्वादन्तोदात्तो । रस्योदाहरणं चतुष्कपालः । इगन्तकालकपालेति । पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं चत्वार इत्यत्रामस्वरेणशसि चतुरः शसीति भिसादौ झल्युपोत्तमं षट्त्रीत्यनेन भाव्यमिति समास उदाहृतः । नः किं गणः संख्यायाः किं अन्तः । स्वाङ्ग इदञ्च सर्वनामसञ्ज्ञाप्रवृत्तिकाले यददन्तं तत्रैव प्रवर्तते तेनेमं स्तोममर्हत इत्यादौ न दोषः । सर्वाभास्यशब्दागणे ऽन्तोदात्तानिपात्यन्ते तयोरन्यः पिप्पलमित्यादौ तथा दर्शनात् परोभात्रयेत्यादौ व्यत्ययेनान्तोदात्तत्वं परं मृत्यो इत्यादावाद्युदात्तस्यापि दर्शनात् । स्वाङ्गेत्यादिकिं घटः । अदन्तानां किं बाहूराजन्यः प्राणिनाङ्कुपूर्वमिति । तस्य समूह इति सूत्रे न्यासहर-

दत्तयोः कुपूर्वाणामिति पाठो दृश्यते कवर्गाद्येपूर्वे तन्मध्ये आदिरित्यर्थः । सर्वनामकार्यन्तु सौत्रत्वान्न कावित्येव सिद्धे पूर्वग्रहणं व्यवहितस्यापि ग्रहणार्थन्तेन कुपूर्वमिति पाठे ऽपि चटकादावाद्युदात्तत्वं भवत्येव । उदकमिति कर्द्दमादिरयं क्वित्यादिकिं हरिणम् । अन्ये तूत्तरसूत्रवदत्रापि आदिरिति न संबध्यते नपुंसकस्वरसात् तेन चटकादावनेन मध्योदात्तत्वं हरदत्तोक्तपाठस्तु चिन्त्य एवेत्याहुः ॥ खय्युवर्णे ॥ कृत्रिमित्यादिकिं बन्धुकः ॥ उनर्वन्तानाम् ॥ पिता माता भ्रातर एव माहुरित्यादौ पितृशब्दे छान्दसत्वादन्तोदात्तत्वं मातुस्त्वम्बार्थत्वात्सिद्धमित्याहुः । वर्णानान्तणतिनितन्तानां तान्तानामिति पाठेत्वकारो व्यर्थ इति चिन्त्यम् । एत इति । श्वेतशब्दो घृतादित्वादन्तोदात्तो बोद्धः । ह्रस्वान्तस्य ह्रस्वह्रस्वान्तस्य वधूः ह्रस्वं किं ग्रामम् । अनृत्किं तृणकन्ताच्छील्येकिम् । जडः बधिरः । कुशलशब्दो ऽनेनाद्युदात्त इत्येके अन्तोदात्त इत्युज्ज्वलदत्तः सरल इति वृक्षविशेषसञ्ज्ञात्वेन ताच्छील्यानवगमान्नेह ह्रस्वान्तस्येत्यस्य प्राप्तिः । ग्रामादौ ॥ ग्रामादिराकृतिगणः । लुबन्तस्योपमेयः ॥ सञ्ज्ञायामुपमानमित्यनेन समानार्थमेतत् । लुबितिकिम् । अग्निर्माणवकः । उपमेयेतिकिं वरणाः । अदूरभवश्चेत्यणो वरणादिभ्यश्चेति लुप् नामेत्यादिकिं शुनक इवायं वृक्षः । देवपथादेराकृतिगणत्वात्कनो लुपि शुनक उपमेये वर्त्तते न तु तस्येयं सञ्ज्ञा ॥ न वृक्षपर्वत ॥ यद्यपि फिट्सूत्रवृत्तौ न व्याघ्रमहिषसिंहवृक्षपर्वतानामिति पठ्यते तथापि वृक्षपर्वतांशे विशेषाणामेव ग्रहणमिष्टमिति तद्घटितमेव सूत्रं पठितं सर्वत्र विशेषपदान्वयाभावबोधनाय व्युत्क्रमः कृतः राजविशेषस्य अत्रापि लुबन्तस्योपमेयेति सूत्रमनुवर्तते एवञ्च तेनैव सिद्धे वृद्धस्यैवेति नियमार्थन्तदाह अङ्गाः । प्रत्युदाहरणमिति । वृत्तौ तु वृद्धस्य चेद्राजविशेषस्यैवेति नियम उक्तस्तच्चिन्त्यं पूर्वसूत्रे व्याघ्रग्रहणवैयर्थ्यापत्तेः । यमन्वाशब्दः कृतादिवृद्धोरूढः । न च व्याघ्रशब्दस्तथेति न वैयर्थ्यमित्यल्ये अत्राङ्ग इत्युदाहरणं चिन्त्यं तस्य जनपदशब्दादित्यञन्तत्वेनाद्युदात्तसिद्धेः । कालिङ्ग इत्युदाहार्यं तत्र हि द्व्यञ्मगधेत्यण् । अन्ये तु लुबन्तस्येत्याद्यननुवर्त्यास्य विधित्वमेवेच्छन्ति ॥ लघावन्ते ॥ अत्रादिशब्दो न संबध्यते तेनानादेरपि गुरोरुदात्तः । अत एव वृषाकपिशब्दो ऽनेन मध्योदात्त इति वृषाकपीति सूत्रे वृत्तावुक्तं खण्डिकादिषु उलूकशब्दो ऽनेन मध्योदात्त इति कैयटेन चोक्तं वराहशब्दस्तु घृतादिरित्युक्तमेव न च गुरूणां मध्ये य आदिरित्यर्थो ऽस्त्विति वाच्यम् । वृषाकप्यादावप्रवृत्त्या वृत्त्यादिविरोधात् अन्यतोऽङीषिति सूत्रे सारङ्गकल्माषौ लघावन्त इत्यनेन मध्योदात्ताविति हरदत्तविरोधाच्च । लघावित्यादिकिम् ।

वा तप्तमीः समासञ्जननं कपालीनान्तत्वाच्च लघुरन्तो ऽत्र बह्वचः किम् । देवः गुरुः । किं किसलयं कल्याण इति पर्यायेणादिमध्यावुदात्तौ । स्त्रीविषयवर्णानुपू ॥ क्वचित्फिड्वृत्तौ स्त्रीविषयवर्णनाम्नामक्षित्यादिपाठः । सोपि मूलेष्वपूर्वस्येति सूत्रे दर्शितः । मल्लिकेति । अस्य प्राप्तिमात्रेणेदमुदाहरणं प्राप्तस्यास्य परत्वान्मादीनाञ्चेत्यनेन बाधाल्ललनेत्युदाहार्यम् । नचानेनैव सिद्धे ह्रस्वान्तस्य स्त्रीविषयस्येति वर्णानान्तखेति च सूत्रं व्यर्थमिति वाच्यम् । अत्र बह्वच इत्यनुवृत्तेर्न दोषः । अत एव श्येनीत्युदाहरणं दत्वाहरिण इत्युदाहरणान्तरं दत्तम् । धवलादीन्यप्युदाहरणानि नीलादयस्त्वन्तोदात्ता एवेति बोध्य । पिशङ्गसारङ्गकल्माषालघावन्त इति मध्योदात्ता इति कैया टादिदर्शनात् । इदं बाधित्वा पूर्वविप्रतिषेधेन पूर्वमेवप्रवर्तते इत्याहुः । अत्तुशब्दात्पूर्व इति अत्वादेरिति वक्तव्ये अत्तुपूर्वाणामित्युक्तेः समानाधिकरणे बहुव्रीहिर्नेति भावः । अत्तुपूर्वेत्यत्र पञ्चमीतत्पुरुषसमासस्तु न अत्वादित्येव सिद्धे पूर्वग्रहणवैयर्थ्यापत्तेः । अनुवर्त्तमानफिष इत्यनेन अन्वयानापत्तेश्च ॥ शकुनीनाञ्च पूर्वमिति अन्त्यात्पूर्वमित्यर्थः । लघुपूर्वमित्यसमस्तं पदद्वयम् । अत्राप्यादिरिति न संबध्यते पूर्वग्रहणात् । तेन कुक्कुटतित्तिरी मध्योदात्तौ कुक्कुटस्य वेदे ऽन्तोदात्तपाठस्तु छान्दसः तित्तिरिर्यजुःशाखायां मध्योदात्तः पठ्यते । एतेन तित्तिरिशब्दो ऽन्तोदात्त इति प्राणिरजतादिसूत्रस्थहरदत्तः परास्तः । लघुपूर्वमिति बहुव्रीहिस्तु न लघोरिति पञ्चमीनिर्द्देशेनैव सिद्धे पूर्वग्रहणवैयर्थ्यापत्तेः । लघोः पूर्वमिति तत्पुरुषो ऽपि न सप्तमीनिर्द्देशेनैवसिद्धेः । नर्तुप्रा ॥ ऋतुवाचिनां प्राणिवाचिनाञ्चेत्यर्थः । वसन्त इत्यादि । अनयोर्लघावन्त इति निषिद्धे ऽन्तोदात्तत्वम् । एवञ्च कपोतमयूरशब्दौ लघावन्ते इति मध्योदात्तावितिं प्राणिरजतादिसूत्रस्थहरदत्तश्चिन्त्यः । खण्डिकादिसूत्रे मध्योदात्त इति कैयटश्च । धान्यानाम् ॥ वृद्धासञ्ज्ञकधान्यवाचिककारयकारान्तानामित्यर्थः श्यामाक इति उशीरदासेरकपालपलाशश्यामाकेति सूत्रे श्यामाकग्रहणान्त्वधान्यवाचकश्यामाकग्रहणार्थम् । अत एव श्यामाकायतीत्यर्थे ऽपि श्यामाकशब्द आद्युदात्त इत्याहुः । माषा इत्यस्य तृणधान्यानाञ्चेत्यचोदाहृतत्वात् वालाचा इत्युदाहरणमुचितम् । हलन्तानामसंभवेनाकारविशिष्टस्य ग्रहणम् । धान्येति किम् । आलोकः । वृद्धेति किं चणकाः । वेति किङ्गोधूमाः । जनपदश ॥ अषित्यचः सञ्ज्ञा । केकय इति । यत्तु यान्तस्यान्त्यात्पूर्वमित्यनेन परत्वादत्र भाव्यमिति तन्न बाध्यसामान्यचिन्तामाश्रित्य तस्याप्यनेन बाधादित्याहुः । अङ्गा वङ्गा इत्यप्युदाहरणम् । जेत्यादि किम् । आम्रः । अङ्गो राजा । अजन्तानां किन्दरत् । हयादीनाम् ॥

अत्र केचिज्जनपदशब्दानामित्यनुवर्तयन्ति कुरुगार्हेति सूत्रस्थहरदत्तस्वरसोप्येवं तन्मते पञ्चालाः कोसला इत्युदाहार्यम् ॥ इगन्तानाञ्चद्व्य ॥ अत्र वेत्यनुवर्त्तयन्ति तेषां न कश्चिद्दोषः। कुरवश्चेदय इति चोदाहार्यम्। द्व्यचां किम्। वसातयः। इगिति किम्। अङ्गाः ॥ इति द्वितीयः पादः ॥

ललाटमिति ॥ लघावन्तइत्येतद्बाधित्वा परत्वादिदमेवोचितमित्यभिमानः। कपोल इति। यद्यप्यत्र लघावन्त इति मध्योदात्तत्वमेवेष्टं तथाप्युदाहरणदिक् बोध्यामादीनां मलयो मकर इति मलयेपान्तस्यान्त्यात्पूर्वमित्यस्यास्य वा प्रवृत्तौ फले न विशेष इत्युदाहृतम्। मकरः सञ्ज्ञाभूत उदाहरणम्। मकरवरूडेत्यत्र तु अभिव्यक्तपदार्था ये इति न्यायेन सञ्ज्ञा भूतस्य न ग्रहणं क्वचित्तु माकर इति पाठः। तत्र स्वार्थेऽण् शौवीनाञ्च शाकानां संग्रीदश्चेति सूत्रे कैयटे तु दन्त्यादिपाठः इदञ्चाद्युदात्तत्वविधायकम्। अनेन सर्षपशब्दे आद्युदात्तत्वे प्राप्ते यान्तानाञ्च गुर्वादीनामिति मध्योदात्तत्वमित्युक्तत्वेन द्वितीयपादान्ते इदं सूत्रमिति ध्वनितम् फिट्वृत्तौ तु तालव्यादिसूत्रमत्रपादे पठितं शतपुष्पेति क्वाचित्कोऽपपाठः। त्र्यच्त्वाभावात् कैयटरीत्या आद्युदात्तविधायकत्वे तु तत्रापि प्रवृत्तिरिति ध्वनयितुं त्र्यजपि उदाहृतं इत्याहुः। केचित्तु त्र्यच्दस्यैकाच्द्व्यच्कमेव व्यावर्त्यं वदन्ति। पान्तानाङ्गु ॥ पान्तानां किङ्गर्दभः। लघावन्त इति मध्योदात्तोयं नगर्दभं पुरः इत्यन्तोदात्तं तु छान्दसङ्गर्वादी नाङ्गणयः क्वणेः संप्रसारणञ्चेति कपन्। अयुतमिति। अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते इदन्द्वितीयोवेति द्वितीयमित्यधिकारादिति भावः। काशीनानामितिवक्तव्ये नुडभाव आर्षः। वरूड इतीति पारेवतः वितस्ता इक्षुः आर्जिः द्राक्षाकलाउमा काष्ठा पेष्वाकाशीनम्। के चित्तु मकरवरूकुठपारेवतेति काष्ठायैश्चा इति पठन्ति कर्दमादिराकृतिगणः। अत्र य इति। केचित्तु सुगन्धितेजनस्य चेति सूत्रं पठन्ति आदिर्द्वितीयोवेति अनुवर्तयन्ति अयं क्लीबोपि नयः फलान्तानां नपुंसकस्य फलशब्दान्तस्यादिर्द्वितीयंवेत्यर्थः। केचित्तु लेफो नप इति अस्य स्थाने पठन्ति नविनिनपुंसकं लशब्दे परे क्लीबस्य फशब्द उदात्तः फलं सफलमित्युदाहरन्ति। अन्ये तु फाशब्दस्येति व्याख्याय सफलमित्युदाहरन्ति। कुलाय इति लघावन्त इत्यस्य प्रवृत्तावपि न कश्चिद्विशेषः। गवयमलयावुदाहार्यौ कुवलयार्थमान्त्यात्पूर्वग्रहणं आन्तस्य ना आकारान्तस्येत्यर्थः नाना नासादिवासुधेत्युदाहरणं क्वचित्तु थान्तस्येत्यपि पाठः थाशब्दान्तस्येत्यर्थः। केचित्तु तन्त्रेण थशब्दोपि गृह्यते तेन सनाथो देवदत्त इति सिद्धमित्याहुः। शिंशुमारोदुम्बर। शिशुमारेति पाठान्तरं उष्ट्रार उष्टारेति रेफवर्जितमपि

पाठान्तरं चकारेणान्त्यात्पूर्वमिति द्वितीयमिति च संबध्यते सांकाश्यकाम्पिल्य ॥ अत्र सूत्रे मण्डूकप्लुत्या ऽऽदिर्वेति वर्तते तदाह । द्वितीयमुदात्तं वेति अत एव पद्भ्यश्चेति सूत्रे राजन्यसांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानामादिर्वान्तोवेति कैयटेनोक्तम् । अत्रान्तशब्देनादेरपेक्षयान्तो द्वितीय एव अतो न विरोधः एवं सप्तमी सिद्धेति सूत्रे एषामन्तः पूर्वं वेति काशिकायामपि पूर्वशब्देनादिस्तदपेक्षयान्तश्चान्तशब्देन गृह्यते इति बोद्ध्यम् । अन्त्यात्पूर्वमिति तु नानुवर्त्तते सांकाश्यादीनान्त्रयाणाङ्ग्रहणस्य वैयर्थ्यापत्तेः ॥ यान्तस्यान्त्यादित्येव सिद्धेः । उत्तरसूत्रे आदिर्वेति तु स्पष्टार्थम् । ईवान्तस्य ॥ हयेति हलन्तसञ्ज्ञापक्षे ऽधिकाराद्वितीयम् । ईषान्तस्य किं मञ्जूषा । हलादेः किम् । आम्बरीषम् । उशीरदासेर ॥ अत्र हृदयग्रहणं स्वाङ्गानामकुर्वादीनामिति द्वितीयोदात्तत्वं बाधितुं देवरग्रहणं लघावन्ते इत्यस्यानित्यत्वज्ञापनार्थम् । केचित्तु घृतादिषु देवरशब्दः पठ्यते एवञ्च पक्षे अन्तोदात्तार्थङ्ग्रहणमित्याहुः । अत्र वेति नानुवर्त्तत इति केचित् । महिष्यषा ॥ मेत्यादि किं सिंही । आप्लिजेत्यादि किं महिषी । अषाढा नक्षत्रम् ॥ इति तृतीयः पादः ॥

शकटिशक अत्रोभे वनस्पत्यादिषु युगपदित्यादिसूत्रस्ययुगपद्ग्रहणबोधितानेकोदात्तानां युगपत् समावेश इत्यर्थानुवादकम् । पर्यायेणेति । तत्फलन्तु अनुदात्तं पदमेकवर्जमित्यादेरेतद्विषये ऽपि प्रवृत्तिः । लिङ्गविशिष्टपरिभाषालभ्यार्थानुवादकम् । शकटी इति ॥ गोष्ठजस्य । ब्राह्मणवाचकस्य गोष्ठजशब्दस्येत्यर्थः । पारावत इति । अत चशब्दोनोदात्तः कपिकेशह भाषायां बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः तत्र हरिशब्द इनन्तत्वादाद्युदात्तः । कपिरन्तोदात्तः । केचित्तु निरुदकादेराकृतिगणत्वादनयोरन्तोदात्तत्वमाहुः । न्यङ्स्व ॥ न्यधीत्रेति पूर्वपदस्वरे कृते यणि उदात्तस्वरितयोरिति सिद्धे न्यङ्ग्रहणं तदनुवादकं तिल्यशिल्य ॥ केचिदत्र मर्त्यशब्दे पठन्ति तदयुक्तं तंत्वाहवन्तमर्त्या इत्यादावाद्युदात्तदर्शनात् तद्युक्तात्कर्मणा इति सूत्रस्यवार्तिकेन यति यतोनाव इत्याद्युदात्तत्वम् । यत्तु धान्यस्थाने धन्यं पठन्ति तत्र पत्यावैश्वर्य इति सूत्रे धान्यमन्तस्वरितमिति वृत्तिमुपादायास्यैव सूत्रस्य हरदत्तेनोपन्यासात् प्रयुज्यते च धान्यमसिधिनुहीति बिल्वभक्ष्य भाषायां भक्ष्यवीर्यौ आद्युदात्तौ वीरेषु साधुरिति यत् भक्षयतेर्ण्यन्ताद्चोयत् बिल्वः स्वरितान्तोन्तोदात्तो वा । केचित्तु बिल्ववस्त्वेति पठन्ति । अनुच्चानीति । सर्वानुदात्तानीत्यर्थः । अत्र सूत्रे छन्दसीति नानुवर्त्तते आद्युदात्तश्चेति सूत्रस्यभाष्यप्रामाण्यात् । निपाताश्चा ॥ शुक्लीकरोतीत्यादौ च्व्यन्तानां निपातत्वे ऽपि च्वेश्चित्स्वादन्तोदात्तत्वं उपसर्गाश्चा

भिवर्जमिति आद्युदात्ता इत्यर्थः । अभिवर्जं किम् । अभ्यभिहि अभिराममस्यात् इदं सूत्रं व्यर्थम् । उपसर्गाणां निपातत्वेनैव सिद्धेः । न च कर्मप्रवचनीयानान्त-दभावज्ञापनायेदन्तेषामप्याद्युदात्तस्येष्टत्वात् । अभिश्चैवमादिषु पाठ्य इति बहवः । अत एव मानोअस्तो अभिद्रुहन्निति मन्त्रे एवमादीनामत इति वेदभा-ष्यकृद्भिरुक्तं स्पष्टञ्चेदं उपसर्गसञ्ज्ञासूत्रे भाष्ये । केचित्तु उपसर्गस्यैवाभेराद्युदा-त्तत्वनिषेधो यथा स्यात् कर्मप्रवचनीयस्य तु निपातत्वाद्भवत्येवेत्येतदर्थमिदं सूत्र-मित्याहुः । एवादीनामन्तः । अहशश्वच्छब्दौ गणे आद्युदात्तौ निपात्यौ आदह-स्वधामनुक्ताहमित्रावरुणाशश्वदिन्द्रः योपुप्रद्भिरिति प्रयोगदर्शनात् । तच्चि-न्त्यमिति चिन्ताबीजन्तु चिन्त्यम् । सहशब्दस्यापि निपातत्वादाद्युदात्तत्वमिति सहस्य स इति सूत्रे आकरात् प्रयुज्यते च सहवैदेवानामिति तेपुत्रसूरिभिः सहेत्यत्र तुछान्दसमन्तोदात्तत्वमिति केचित् । वावादीनामुभाविति सूत्रे उदा-त्तावित्यनुवृत्तिप्रदर्शनम् । इह त्रिसूच्यामादिशब्दः प्रकारे इत्याहुः । चादयोनु ॥ निपाता इति वर्त्तते नेह पशुर्नेति आद्युदात्तत्वापवादोयं यथेति या अनुदा-त्त इति वर्त्तते शाकिनं वचोयथेत्यादौ तु छान्दसत्वात् नानुदात्तः । प्रकारा-दिति । प्रकारे गुणवचनस्येत्यादि द्वित्वे इत्यर्थः । सिद्धान्तोदात्तत्वानुवादकं शेषमिति प्रकारादिद्विरुक्तादन्यद् द्विरुक्तमित्यर्थ इत्येके । अनुदात्तं चेत्यस्यानु-वादकमेतत् । अनुदात्तं पदमेकवर्जमित्यस्यानुवादकमित्यन्ये ॥ इति शान्तन-वेति । इदं मात्रोपज्ञमिति सूत्रे हरदत्तग्रन्थे स्पष्टम् । शन्तनुराचार्यः प्रणेतेति द्वारादीञ्चेति सूत्रे हरदत्तः ॥ इति फिट्सूत्राणि समाप्तानि ॥

अथ प्रत्ययस्वराः ॥ कर्त्तव्यमिति । तव्योयं तव्यत्तु तित्वात्स्वरितः । यद्यपि तव्यस्यापि आद्युदात्ते शेषनिघाते कृते उदात्तादनुदात्तस्येति स्वरितो भवत्येव तथापि तस्यासिद्धत्वात्तन्निमित्तकशेषनिघाताप्रवृत्त्या तित्वनिमि-त्तके तत्प्रवृत्त्या महान् फले विशेषः । युच्छतीति । युच्छप्रमादे प्रचय एक-श्रुतिः । चितः सप्रकृतेरिति । अत्रार्थे ऽकचश्चित्त्वं ज्ञापकम् । अन्यथा तस्यैका-च्त्वात् प्रत्ययाद्युदात्तत्वेनैव सिद्धे तद्व्यर्थं स्यात् हस्तः प्रमाणस्य हस्तः प्रमाणेल इति लुक् । अत्र चित्स्वरेण अन्तरङ्गेनपीति न्यायात् प्रत्ययलक्षणन्तु न प्रत्ययस्यासाधारणरूपाश्रयणाभावात् । कुण्डिनचप्रत्ययस्यापि चित्त्वात् अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाभावस्य पूर्वमुक्तेश्च । हस्तशब्दश्च स्वाङ्गशि-टामित्याद्युदात्तः । चतुः करोतीत्यादौ रात्सस्येत्यस्यासिद्धत्वात्सुजस्त्येव । अन्यके इति । अकच् ततः पर उदात्तः एवं यकेतकदित्यत्रापि बोद्धम् । तद्धितस्य कित इति । एकं सूत्रङ्कृत्वे कुञ्जादिभ्य इति सूत्रे भाष्ये योगवि-भागः कर्त्तव्य इत्युक्तस्तदनुसारेण व्याचष्टे चितस्तद्धितस्येति । जित्स्वरबाध-

नेति । च्फञश्चित्त्वन्तु व्रातच्फञोरित्यादौ विशेषणार्थं सावकाशमन्यथा ऽश्वायनादपि ञ्यः स्यादिति भावः । ञित्त्वमवृद्ध्यर्थं सावकाशं ततश्चित्स्वरं बाधित्वा परत्वात् ञित्स्वरः प्राप्तो ऽनेन बाध्यत इति तात्पर्यम् । कौञ्जायना इति कुञ्जात् च्फञि तदन्तात् व्रातच्फञोरिति ञ्यः । ञ्यादीनान्तद्राजत्वाद्बहुषु लुक् । कितः तद्धितस्येतिकिं चक्रतुः । कित्त्वातिदेशादन्तोदात्तत्वं माभूत् । यत्तु प्रत्युदाहरन्ति इत्यः क्यपृपित्त्वस्य तुकि कित्वस्य गुणनिषेधे सावकाशत्वात् पित्स्वरं बाधित्वा परत्वादयं स्यादिति । तन्न क्यप्चेदन्तोदात्तस्तदा व्रजयजोर्भावे क्यबेवेति नियमेन वारयितुं शक्यत्वादित्याहुः । कितः किम् । अविदूसम् । तिसृभ्यो जसः ॥ बहुवचनं प्रयोगभेदेन शब्दबाहुल्यात् क्वचेभ्य इति वत् । यत्तु वार्तिककृतोक्तं तिसृभ्योजस्ग्रहणानर्थक्यमन्यत्रास्याप्राप्तेः बहुवचनविषयत्वाद्स्यैकवचनद्विचनयोरभाव एव शसि उदात्तयण इति सिद्धम् । अन्याहलादयस्तत्र षट्त्रीति झल्युपोत्तममिति च सिद्धमिति तन्न । अतितिसावित्यादिव्यावृत्तेः फलस्य सत्वात् । तदुक्तं भाष्यकृता उपसमस्तार्थमेके जसोग्रहणमिच्छन्ति अतितिसाविति स्यादिति परिभाषालत्वाद्विहितविशेषणासम्भव इत्याशयः । अनेन पूर्ववार्त्तिककृतं प्रत्याख्यानमसङ्गतमिति सूचितमति तिसृशब्दे तरकृत्पद इत्यत्र गतेर्धातुलोपे वाच्यमित्युक्तेरन्तोदात्तः । तस्य यणुदात्तस्वरितयोरित्यनेनौकारः स्वरितः । तिस इति अन्तोदात्तत्रिशब्दस्यादेशास्ति सा पि तथा तस्याचिर इति कृते उदात्तस्वरितयोर्यण इति जसः स्वरितत्वं प्राप्तमनेन बाध्यते ॥ सावेकाचः ॥ सौ परे यदेकाज्रूपं ततः परेत्यर्थः । सौ य एकाच् तस्मात्परेत्यर्थे निष्पन्ने ऽर्थवत्परिभाषया प्रकृते ऽर्थवत एव सम्भवाच्च सौ दयर्थविशिष्टमेकाज्रूपं तदर्थविशिष्टात्तदेकाज्रूपात्परा विभक्तिरिति फलितं राज्ञेति राजन् शब्दः कनितन्तत्वादाद्युदात्तः । न च एकाचोविहितया विभक्तिरित्यर्थोच दोषः विहितविशेषणे प्रामाणाभावात् । एकाज्ग्रहणव्यावर्त्यमप्येतदेव । तदभावे हि सौवर्त्तमानाच्छब्दात्परेत्यर्थः स्यात् सावित्यस्यद्वाभ्यामित्यादिव्यावर्त्यं स्यात् । सप्तमीबहुवचनमितिकिं यातायाभ्यां प्रथमैकवचनग्रहणे तु तत्र यानितिरूपं संयोगान्तलोपस्यासिद्धत्वेन यान्त इति वा । न हि तस्मात्र शस्विभक्तिः । विकृतिग्रहणेन प्रकृतेर्ग्रहणात् आगमसहितग्रहणेन केवलस्याग्रहणाच्च तन्मध्यपतितन्यायो ऽपि केवलेन विशिष्टग्रहणं बोधयति न त्वेतावता प्रकृते इष्टसिद्धिः । न च रूपविवक्षमकृत्वा सौ य एकाच् ततः परेत्यर्थं एवास्त्विति वाच्यं दोःशब्दः सौ एकाच् तस्य दोषन्नादेशे ततः परा विभक्तिरुदात्ता स्यात् इष्यते तु मध्योदात्तं दोषभ्यामिति । अयं सप्तमीबहुवचनपक्षे विरूपविवक्षाभावे दोषः । अस्ति च दोष इत्यत्र य एकाच्

तस्मात्परा विभक्तिरिति । नन्वेवमपि दोःशब्दादेशत्वेन स्थानिवद्भावात्प्रवृत्ति- र्दुर्वारा नचेष्टापत्तिः तैत्तिरीयैर्दोर्भ्यां स्वाहेति मध्योदात्तस्यैव पाठात् । अत एव नगोश्वन्निति सूत्रे शुनः शुनेत्युदाहरणं सङ्गच्छते । अन्यथा सप्तमीबहु- वचने नलोपस्यासिद्धत्वे ऽपि श्वन्शब्दात् तृतीयादिविभक्तेरभावादसङ्गतिः स्पष्टैव मम तु नदोष इति चेन्न । लक्ष्यानुरोधेनावृत्त्या यदेकाज्रूपं तत एकाच एव परेत्यर्थेन वारणात् त्वयेत्यादौ तु प्रथमैकवचनग्रहणे ऽपि न दोषः प्रथमैकवचनप्रकृतेः स्थाने तृतीयादिप्रकृतेरविधानात् । स्पष्टञ्चेदं नगोश्व- न्निति सूत्रे प्रकृतसूत्रे च भाष्ये । किंच काभ्यां कुलाभ्यामित्यादौ एतदप्रवृत्ती रूपविवक्षाफलं रूपग्रहणे प्रमाणन्तु सप्तमीबहुवचनग्रहणे नगोश्वन्निति नि- षेधो ज्ञापक इति भाष्यमेव । स्यादेतत् स्त्रियामाभ्यामित्यादौ एभिरेषामि- त्यादौ चान्वादेशे सर्वानुदात्तत्वं न लभ्येत साविकाच इत्यस्य प्रकृतः आसु एषु इति हि सौ रूपं न च प्रकृतसूत्रस्यकैयटरीत्या तत्रान्तोदात्तत्वमेवेष्ट- मिति वाच्यम् । एभिरग्ने पिबसित्वमेषामित्यादिवैदिकप्रयोगविरोधात् । अन्ये त्वित्युक्त्या तेनापि तत्राक्षचिबोधनाच्च । न च विभक्तेरुदात्तत्वे शेषनिघातेन प्रकृतेरनुदात्तत्वे सिद्धे अशादेशस्यानुदात्तत्वविधानसामर्थ्यादन्वादेशे विभक्ति- स्वरोनेति वाच्यम् । अस्त्रिशामाभ्यामित्यादौ चारितार्थ्यात् न ह्यत्र साविकाच इति प्राप्नोति तत्र हि सप्तमीबहुवचने एषु इति तत्र ए इति न च तादृगि- हास्ति नापि तस्य विकारः । न च स्त्रियामासु इति रूपस्य सत्त्वेन वृत्तिर्दु- र्वारा अर्थभेदात् न च नगोश्वन्निति निषेधात् एभिरित्यादौ न दोष इति वाच्यं प्रथमैकवचने ऽवर्णान्तत्वाभावात् । नचोडिदमित्यस्य दुर्वारत्वेन सर्वा- नुदात्तत्वं नेष्टमिति वाच्यं तत्रान्तोदात्तादित्यनुवृत्त्या तदप्राप्तेः । अत्रैकाचः परेत्यस्यैकाच एव परेत्यर्थः कार्यः । तेन चित्सु अग्निचितेत्यत्र न ॥ अन्तोदा- त्ताद् ॥ नित्यशब्दस्य स्वरितत्वेनाधिकारगत्या नित्याधिकारविहितसमास एव गृह्यतइत्यत आह नित्येत्यादि इदञ्च वृत्तिपदमञ्जर्योः स्पष्टम् । परम वाचेति । पत्ते वाशब्द उदात्तः अन्तोदात्तात्किम् । अवाचा तत्पुरुषः अव्यय पूर्वपदप्रकृतिस्वरो न उत्तरपदग्रहणमेकाचत्वेनान्तोदात्तत्वेनचोत्तरपदं विशे- षयितुम् । अन्यथा समासो विशेष्येत तथासति शुनऊर्जे श्वोर्जेत्यादावेव स्यात् एकाचक्किं राजदृषदा षष्ठीसमासः । अनित्येत्यादिकिम् । अग्निचिता । उपपदस- मासः कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः । यस्तुसमासघटकपदमात्र- घटितविग्रहाभावेनैव नित्यसमासस्तत्र भवत्येवायं विकल्पः । यथा ऽवाचा ब्राह्मणेन अविद्यमाना वागस्येति विग्रहः बहुव्रीहौ नञ्सुभ्यामित्यन्तोदा- त्तत्वम् । इदञ्च वृत्त्याद्यनुरोधेन व्याख्यातम् । उपपदमतिङिति सूत्रे भाष्ये तु

विग्रहाभावेन यो नित्यसमासस्ततो ऽन्यत्रायं विकल्पः अन्यथोपस्वेनेत्यादाव-व्ययीभावेप्ययं स्यादित्युक्तम् । एवञ्च बहुव्रीहावव्ययाः ब्राह्मणेनेत्यत्रापि विकल्पो न भवत्येवेति प्रतीयते इति दिक् ॥ अञ्चेश्छन्दस्य ॥ शसादिरिति नोक्तं नपुंसके शसि माभूत् सुटि च यथास्यादिति अञ्चेरित्यत्राकः किन्तु ऽपि नलोपाकरणं सौत्रत्वात् यत्तु नकारो विवक्षितः छन्दसि विधिर्भाषायां नगो ऽश्वाविति निषेधः आङिति निर्देशेन तस्यापि नलोपाभावे एव प्रवृत्तेरिति व्यवस्थेति तन्न । प्रतीचोबाहूनित्यादिलक्ष्यविरोधात् । अनिगन्ते ऽञ्चताविति सूत्रस्याकरविरोधाच्च अत्रोत्तरपदादिति वर्तते तेनोत्तरपदभूताञ्चत्यन्तात्परा विभक्तिरित्यर्थः । तेन केवलाञ्चतेः क्विपि अग्भ्यामित्यादौ नस्य प्रवृत्तिरित्याहुः । दधीच इति । दध्यञ्चति दध्यङ् ऋत्विगादिनाक्विन् । चावितीति । तथा च तदपवादोयमिति भावः । लुप्ताकारनकारे ऽञ्चतावित्यर्थेन तस्यादिविभक्त्युत्पत्त्युत्तरकालमेव प्रवृत्तेरित्याशयेन च पूजायां दध्यञ्चेन्यादाविदं सावकाशं तत्र न गोश्वन्विति निषेधेनास्याप्रवृत्तेः । नचैवमपि दध्यग्भ्यामित्यादौ अस्य सावकाशत्वेन दधीच इत्यादौ परत्वात् चुस्वरो दुर्वार इति वाच्यं शस्परिग्रहार्थो सर्वनामस्थानग्रहणसामर्थ्यात्तत्रापि प्रवृत्तेः । न च पराच इत्यादौ सावकाशमिदम् । अनिगन्तपूर्वपदेचावित्यस्याप्रवृत्तेर्वक्ष्यमाणत्वात् तत्रानिगन्तेऽञ्चतावित्यस्यैवेष्टत्वादिति वाच्यम् । अनिगन्तेऽञ्चताविति पूर्वपदप्रकृतिस्वरस्य सतिशिष्टचुस्वरबाधकत्ववदेतस्यापि बाधकत्वेन तत्रैतदप्रवृत्तेरित्याहुः । केचित्त्वत्रान्तोदात्तादित्यपि वर्त्तते अग्रेऽनुवृत्तिदर्शनेनात्रापि तत्संबन्धात् एवञ्चान्तोदात्तोत्तरपदभूताञ्चेः परेत्यर्थः । अत एव पराचेत्यादावप्रवृत्तिः । अनिगन्तेऽञ्चताविति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वात् अञ्चेरन्तोदात्तत्वसामर्थ्याद्विभक्त्युत्पत्तिकालावच्छिन्नं ग्राह्यमित्याहुः ॥ ऊडिदम् ॥ अत्रैकाच इति अन्तोदात्तादिति वर्त्तते तत्रैकाज्ग्रहणमूठो न विशेषणमव्यभिचारात् । तद्घटितसमुदायस्य विशेषणत्वे ऽपि न क्षतिः । अस्ति हि प्रष्ठौहशब्दे तद्घटितोऽर्थवान् समुदाय ऊहिति एवं पदाद्यंशे ऽपि उपात्तानामेवविशेषणं न विभक्त्याक्षिप्तप्रकृतेः । अत एव ब्रह्मणपदेत्यादावन्तोदात्तत्वसिद्धिः इदमेवध्वनयितुं वृत्त्यादिपूत्तरेत्यनुदाहृत्य प्रष्ठौह इत्युदाहृतम् । न च सावेकाच इत्यनेन सिद्धत्वात्तन्नोदाहृतं शसि तद्प्राप्तेः । एकाच इतिकिम् । अन्यैरेनाक्कन्यानामभिरित्यादौ एनानित्यस्य सर्वानुदात्तत्वं यथास्यात् यद्यपि प्राग्दिश इति सूत्रस्थभाष्यादत्र तृतीयादिग्रहणमनुवर्त्तत इति प्रतीयते यथापि तदेकदेश्युक्तिः तत्रैव भाष्ये इत इत्यनेतत्प्रवृत्त्युक्तेः अपोयाचमि पुंसः पुत्रानुतरायोदेवी इतः पिशङ्गयच्छसे इत्यादि-

लक्ष्यविसंवादाच्च । अन्तोदात्तात्किम् । अन्वादेशे आभ्यामित्यादौ एतन्मा-भूत् सावेकाच इति तु नात्र सार्वेष्विति रूपात् प्रष्ठोह इति प्रष्ठवाट्शब्द उपपदसमासेनान्तोदात्तः । ऊडुपधेति । उपधाभूतस्यैवोंठोग्रहणमित्यर्थः । पञ्चमीनिर्द्देशादन्त्यस्यैवग्रहणे प्राप्ते वचनम् । स्वरविधौ व्यञ्जनमविद्यमान-वदिति परिभाषा तु अन्तोदात्तानुदात्तादिव्यवहारे एव प्रवर्तते अत एव कर्णात्वत इति मतुप्निर्द्देशश्चरितार्थ इति प्रागेवनिरूपितम् । अत्तद्युवेति-अत्र क्विपि विवक्षिते ऊडनुदात्तोनिपात्यते ततो यणि उपपदसमासे कृत्स्वरे-णान्तोदात्तोयं क्विपि परत ऊठि तु अनुनासिकादौ प्रत्यये ऊठ्स्वरः सति-शिष्टः स्यात् तथा च स्योनशब्दे ऽन्तोदात्तो न स्यात् उदात्तनिपातनेचेदमेव भाष्यं प्रमाणम् । अत एव प्रयोगे ऊठ उदात्तत्वश्रुतिः अन्यथा स्वरितः स्यादित्याहुः । प्रतिबध्रूइति मा आभ्यामिति च्छेदः बभ्रूशब्देनोक्तयोरिदमा-परामर्शादन्वादेशो ऽस्ति कथितानुकथनस्यैवतत्त्वात् । षट्पदादय इति । सूत्रेपाताः पडित्यर्थः । तेन वार्तिकस्यानाङ्ग्रहणे ऽपि न दोषः । एकाच इत्यनुवृत्त्यैतदर्थलाभः तेनासनि उदनीत्यादिमध्योदात्तमेव पदाद्यादेशा अन्तोदात्ता निपत्यन्ते । इदं सूत्रं लितीत्यस्य पूर्वविप्रतिषेधेनानुवृत्त्या वा बाधकं तेन इत इत्यत्र विभक्त्युदात्तत्वमेवेति प्राग्दिश इति सूत्रे भाष्यकैय-टयोः स्थितम् । इदमोर्हिलि लित्त्वसामर्थ्याल्लित्स्वर एवेत्याहुः ॥ अष्टनो ॥ अष्टन्शब्दो घृतादित्वादन्तोदात्त इति षट्सञ्ज्ञासूत्रे भाष्ये ध्वनितं तेनो-त्तरार्थतया ऽनुवर्त्तमानस्यापि अन्तोदात्तादित्यस्य न बाधः । अत एवाष्टा-वित्यत्रैकादेश उदात्तेनेत्यन्तोदात्तत्वसिद्धिः । झल्युपोत्तममित्यस्यापवादोय-मिति स्पष्टम् । दीर्घात्किम् । अष्टभिः । झल्युपोत्तममिति स्वरः ॥ शतुर-नुमो ॥ अनुम इति बहुव्रीहिः शतुर्लसार्वधातुकेति नचान्तरङ्गत्वादेकादेशे कृते ऽत्यपवर्गः अन्तरङ्गपरिभाषाया अनित्यत्वात् नचैकादेशस्वरो ऽस्मिन्-स्वरे सिद्धः । अनुम इति प्रतिषेधेनासिद्धत्वाभावज्ञापनात् । नह्येकादेश-स्वरेण विनासनुकमन्तोदात्तं भवति अनुम इति च श्रुतत्वाच्छतुरेव विशेष-णत्वेन मुञ्चसेत्यादौ स्वरप्रवृत्तिः । अन्तोदात्तादिति तु तदन्तस्यैव विशेषणम् । अन्यथा तुदती इत्यत्र न स्यात् अत एव नुम्प्रतिषेधः सार्थकः । अत्रवार्तिकं बृहन्महतोरुपसंख्यानमिति बृहती महती यद्यपि शतृवद्भावेनेदं सिद्धं तथापि बृहन्महतोरेवेति नियमार्थमिदं तेन पृषता पृषतीत्यादीनां न । ननु प्रिय-महतात्यादौ सूत्रेणासिद्धेर्विधानार्थमेवस्यादिति चेन्न वार्त्तिकेप्यन्तोदात्तादि-त्यस्य संबन्धेनात्र तस्याप्यप्रवृत्तेः । अतिमहतीत्यत्र अतेरकृत्पदे इत्यन्तोदा-त्तत्वाद्भाव्यमेव विदुषीविदुष इत्यादौ वसोः स्थानिवत्त्वेन शतृत्वात्ततः परयोर्न

दीविभक्त्योरुदात्तः प्राप्तः स्वरे च स्वादेशे स्थानिवत्त्वप्रतिषेधाच्च भवति । उदात्तयणो ॥ उदात्तस्वरितयोरित्यस्यापवादः । हल्पूर्वोक्ति बहुतितवान्नास्त्यणयाबहोर्नञ्स्वदिति बहुव्रीहिरन्तोदात्तः । अत्रोदात्तस्वरितयोरिति विभक्तिः स्वरिता अत्र उदात्तस्यानिकनकाराच्चेति वक्तव्यं वाक्पत्नी तत्पुरुषः पत्यावैश्वर्य इति प्राप्तस्य पूर्वपदप्रकृतिस्वरस्य न भूवाक्चिद्दिधिष्विति निषेधे समासस्येत्यन्तोदात्तः ॥ नोङ्धा ॥ शसादय इति असर्वनामस्थानोपलक्षणं नदीग्रहणमसम्भवान्नानुवर्तितं सुभ्वे इति कृदुत्तरपदप्रकृतिस्वरेण सुभूरुदात्तः ॥ ह्रस्वनुड्भ्याम् ॥ अत्र मतुप्ग्रहणे ड्मतुपोग्रहणं नेति चाविति सूत्रे भाष्ये स्पष्टम् । अब्दिमां इति आपोदीयन्ते ऽस्मिन्नित्यधिकरणे किः । उर्दानिरव्युत्पन्नो घृतादित्वादन्तोदात्तः । मतुपउदात्तत्वे पूर्वस्य शेषनिघातः । न च सन्निपातपरिभाषया दोषः स्वरे तदप्रवृत्तेः क्नमेजन्तसूत्रभाष्ये उक्तत्वात् । अक्षण्वन्त इति । छन्दस्यपि दृश्यत इत्यनङुदात्तः मतुपो अनोनुट्पूर्वस्य लोपः नुटो ऽसिद्धत्वान्मादुपधायानुदात्तत्व यत्तु तृतीयादिविभक्तेरुदात्तत्वं नेत्येतत्सूत्रं विवृण्वन्ति तच्च लक्ष्यविरोधात् एतेन क्रिंचित्स्वराणामपि बाधः स्यात् तथा च क्नित इति सूत्रे आह्निक इत्युदाहरणप्रवृत्तिविरोध इत्यपास्तम् । अनुदात्तं पदमित्यस्य तु परिभाषात्वाद्विभक्त्यादिस्वरत्वाभावाच्च न बाधः ऊडिदमित्यस्य न निषेधः पदादेरैशब्दस्य च ग्रहणवैयर्थ्यापत्तेः गवांशतेति सावेकाच इति प्राप्तिः नन्वत्र सप्तमीबहुवचने सावेकाज्रूपङ्गेः इति न ततः परेयं विभक्तिः न च स्थानिवद्भावः गोः पूर्वत्वणित्वात्वस्वरेषु इति वार्तिकेन स्वरे कर्तव्ये निषेद्धव्ये वा गोशब्दादेशस्य स्थानिवत्त्वनिषेधेन विधिनिषेधयोरुभयोरप्यप्राप्तेः अत एव सुगुपाल इत्यत्र गोतन्तियवं पाल इति स्वरो न एतेन सुगुनाबहुगुनेति वृत्तिकारोक्तमपि परास्तम् । एवञ्च सुगुनेत्यादौ निषेधाभावे अन्तोदात्तादुत्तरपदादिति भवत्येवेत्यरुचेरुदाहरणान्तरमाह गोभ्य इति । शुनश्चिच्छेयमिति अचाचिदिति संहितापाठे बाहुलकाच्छुनः शेफशब्दस्य मध्ये प्रक्षिप्यते पदकाले तु शुनः शेफञ्चिदिति पठ्यते शेफपुच्छलाङ्गूलेष्वित्यलुक् वनस्पत्यादित्वादुभयपदप्रकृतस्वरः सौ नलोपस्यासिद्धत्वात् श्वनिति रूपं एकदेशविकृतन्यायेन ततः पराविभक्तिरिति सावेकाच इति प्राप्तिः प्रथमैकवचने इति । न तु सावेकाच इति घत्सुपोग्रहणं यत्तदोः स्त्रियामवर्णान्तत्वे ऽपि लिङ्गान्तरे दकारान्तत्वात् व्याख्यानाच्चेति भावः । तच्च सावित्यवर्णान्तविशेषणं सौ यदवर्णान्तं दृष्टं तस्मादित्यर्थः सावेकाच इति वत् रूपविवक्षात्वत्र न व्याख्यानात् एतेन तेभ्य इत्यत्र सौ यदवर्णान्तं रूपं ततः परत्वाभावत्कियमत्र निषेधप्राप्तिरिति परास्तं सौ यदवर्णांतं दृष्टं ततो न

वर्णान्तादपि सिद्धेः । नन्वेवमपि श्वन्ग्रहणं व्यर्थं श्वा इति प्रथमैकवचने ऽव- र्णान्तत्वात् इति चेन्न । नलोपस्यासिद्धत्वेनादोषत्वात् । अत एव ज्ञापकात्स्वर- निषेधे ऽपि नलोपासिद्धत्वप्रवृत्तिः । अत एव पितृमानित्यादौ मतुप उदा- त्तत्वं भवत्येव । नचैवं नपुंसकप्रथमैकवचने तदित्यादौ त्यदाद्यत्वाभावेन तेभ्यः कुलेभ्य इत्यादौ निषेधो न स्यात्, नचेष्टापत्तिः । यत्तदोश्चग्रहणं कर्त- व्यमिति भाष्यमते तत्प्राप्तेरिति वाच्यम् । सौ यस्य शब्दस्य क्वापि अवर्णान्तत्वं दृष्टं ततः परविभक्तेः सर्वत्र निषेध इत्यर्थात् । वस्तुतस्तु अत्रापि रूपविवक्षा- ऽस्त्येव परन्तु तादृशरूपात्परत्वं विभक्त्यादीनान्तदुत्पत्तिकालावच्छिन्नं ग्राह्यम् । अत एव चाविति सूत्रस्थभाष्यविरोधो न । तत्र हि वेतस्वानित्यत्रास्य प्राप्तिः शङ्किता अत एव कुमारीत्याद्युदात्तनिवृत्तिस्वरनिषेधशङ्कापरवि- प्रतिषेधसूत्रासिद्धवत्सूत्रस्थभाष्यविरोधोपि न । वीरवत्तमं वीराणामित्याद्युदा- हरणं यत्तदर्थं भाष्यकृता वचनमेवारब्धम् । अत एव केभ्यः काभ्यं इत्यादौ न निषेध इति भाष्योक्तमेव रमणीयम् । राट् राजा परमराजा । अञ्चित्यञ्चतिः क्विन्तो ऽलुप्तनकारो गृह्यते यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथास्यादि- त्यर्थं प्राञ्चा प्रत्यञ्चा आद्ये सावेकाच इति प्राप्तिः । अञ्चुशब्दश्चानिगन्ते ऽञ्चताविति पूर्वपदप्रकृतिस्वरेणाऽनुदात्तस्तदेकादेशोऽनुदात्त एव । यदि तु अनिगन्ते ऽञ्चताविति सतिशिष्टविभक्तिस्वरस्यापि बाधकं तदान्त्यमेवो- दाहरणं गतौ तु लुप्तनकारत्वाद्विभक्त्युदात्तः स्यादेव । वस्तुतश्चाविति सूत्र- स्थभाष्यप्रामाण्यादत्र लुप्तनकारस्यापि ग्रहणं प्रतीचोबाहूनित्यादि तु छा- न्दसं ऋत्विगिन्नन्त एव कृदिति करोतिः कृन्ततिर्वा क्विवन्तः । दिवोझल् ॥ झलि- रिति ऊडिदमिति प्राप्तस्य निषेधः । ननु दिवशब्द फिट्स्वरेणान्तोदात्तः वकारस्थानिक उकारः हल्स्थानिकत्वात् अनुदात्तः अस्वरको वा सर्वथा- प्यन्तोदात्तत्वाभावात्कथमत्र प्राप्तिरिति चेन्न । दिव उदित्यत्रोदात्त उकारो निपात्यत इत्यदोषात् । नचोदात्तनिपातनसामर्थ्याद्विभक्तिस्वराप्रवृत्तौ दिवो- झलिति व्यर्थमिति वाच्यम् । अहर्विमलद्यु इत्यादौ अन्तरङ्गप्रकृतिस्वरस्य सति- शिष्टतया बाधेन चारितार्थ्यात् । दिवेदिव इति । अत्रोऽडिदमित्येव भवति ॥ नृचान्य ॥ सावेकाच इत्यस्यापवादोयम् । अत्र झलीत्यनुवर्त्तितं तत्फलन्तु त्रात्रे । नरि । अत्र सुपि यद्रूपं नृ इति स्थानिवद्भावेन ततः परत्वात्सावेकाच इत्यस्य प्राप्तिः । इदञ्च नामन्यतरस्यामिति सूत्रे भाष्ये स्पष्टं वेदे क्वचिन्नरीत्याद्यु- दात्तं पठ्यमानन्तु छान्दसत्वात्साध्यम् । एतेन झलीति नानुवर्त्तते य एव द्व- यंपां स्त्रीत्यत्र नरीत्याद्युदात्तस्य दर्शनादित्यपास्तम् । लोके नरीत्यन्तोदात्त- स्यैवेष्टत्वात् । न च योगविभागसामर्थ्येन विकल्पे लब्धे ऽन्यतरस्याङ्ग्रहणेन

व्यवस्थितविभाषात्वबोधनात् इष्टसिद्धिरिति वाच्यम् । क्लीत्यस्यासंज्ञत्वे योगविभागस्य शसि नित्योदात्तत्वविधायकत्वशङ्कावारणार्थत्वेनान्यपरस्याङ्ग्रहणस्य चरितार्थत्वात् भाष्यानुक्तव्यवस्थितविभाषाया अप्रामाणिकत्वाच्च ॥ तित्स्वरितम् ॥ कर्षात्वत इत्यतो ऽन्त इति वर्त्तते तित्प्रत्ययान्तः स्वरितः स्यादित्यर्थः । क्व नूनं, तित्किं कर्त्तव्यं, अतः किं तव्यत: पर्यायेणाद्यन्तौ स्वरितौ माभूतां ऋत उत् उदोष्ठ्य दिव उत् इदुङ्गां औदित्यादौ तितिप्रत्ययग्रहणेन न दोषः, तास्यनुदात्तेत् ॥ तास्यादीनां समाहारद्वन्द्वः अत्रोपदेशग्रहणं सम्भवव्यभिचाराभ्यां ङिदङ्गामेवसंबध्यते नतु तास्यनुदात्तेङ्गांउपदिश्यत इत्युपदेशः ङिदिति कर्मधारयः इत्सञ्ज्ञक ङकारेणाकारेण चोपदिश्यमानस्य विशेषणात्तदन्तविधिः तेन ङिदन्ताकारान्तोपदिश्यमानादित्यर्थः अदुपदेशादित्यस्य यथाश्रुतत्वे हि हतोहय इत्यत्रापि स्यात् कर्तेति लुट् आत्मनेपदप्रथमस्य डारौरसः तासिः एकवचने उदात्तनिवृत्तिस्वरे ऽपि इतरयोः फले विशेषः । ङित इति । अस्याप्युपदेशविशेषत्वान्नेह शृणुतं जरितुर्हवं अत्र श्नुरतिदेशेन ङित् नन्वनुबन्धानामनेकान्तत्वात्कथं चक्षिङोपि ङिदन्तत्वमिति चेन्न अनुबन्धेष्वेकान्तपक्षस्यैवन्याय्यत्वात् किंच विशेषणसामर्थ्याद्भविष्यति । चनस्यतिर्मिति । चनोऽवन्तदात्मन इच्छन्तामित्यर्थे क्यच् लोट् थसस्तं शप् स च पित्वशित्ववैशिष्ट्येनाकारोपदेश एव तात्पर्यात् अकारान्तोपदिश्यमानो भवत्येव । चित्स्वरोपीति । परत्वादिति भावः । वर्धमानमिति । मुक् तु अकारभक्तत्वाद्यदागमा इति न्यायेन न तस्य व्यवधायक इति न दोषः न च वर्णग्रहणे तदप्रवृत्तिः अकारान्तोपदिश्यमानादित्यर्थेनेह वर्णग्रहणाभावात् यक्ष्यमाण इत्यादावपि अवयवावयस्य समुदायावयवत्वात् न मुक् स्य स्य व्यवधायक इति बोद्धं ननु पच् भि इति स्थिते आयत्नादिष्टपदेशिवद्भावादन्तो शपि लसार्वधातुकानुदात्तत्वं बाधित्वा नित्यत्वादन्तरङ्गत्वाद्वा ऽतो गुण इति कृते व्यपवर्गाभावादेतत्स्वराप्राप्तिः अन्तवद्भावस्तूभयतआश्रयणे निषिद्धः तत्प्रवृत्तावपि व्यपवर्गस्य तेनानतिदेशाच्च पचत इत्यादौ सावकाशत्वाद्भूतपूर्वगतिर्न युज्यत इति चेन्नेष्टापत्तेः पचन्ति ते वृषभानित्यादौ आद्युदात्तत्वन्तु छान्दसत्वादित्याहुः । स्वरभिन्नस्य प्राप्त्या न नित्यत्वमुभयोरपि पूर्वपरोभयापेक्षत्वेन नान्तरङ्गत्वं पञ्चमीसमासे ऽचः परस्मिन्निति स्थानिवद्भावेन व्यपवर्गस्य सुलभत्वाच्चेत्यन्ये । पचाव इत्यादौ दीर्घकृते ऽपि उपदेशग्रहणादिदं प्रवर्तते पचेदित्यादावपि शपः परस्य यासुट् सहितस्य सार्वधातुकस्यानुदात्तत्वं भवत्येव यासुट उदात्तत्वन्तु

आशीर्लिङि चिनुयादित्यादौ च सावकाशम् । अदुपदेशादिति । तपरकरणात् क्षीणातीत्यादौ लसार्वधातुकानुदात्तत्वं न प्रत्ययाप्रत्यययोरिति परिभाषया नेह जहि शत्रुमन्ति के एतत्परिभाषा प्रवृत्तये एवाकारान्तोपदिश्यमानादिति व्याख्यातम् । अन्यथा वर्णग्रहणे सा न प्रवर्तेत छान्दसो वा व्यत्ययस्तत्र । नन्वास्ते इत्यादौ लुप्तं शपं गृहीत्वा ऽदुपदेशादिति लसार्वधातुकानुदात्तत्वं सिद्धमिति व्यर्थमनुदात्तेङिद्ग्रहणमिति चेन्न लुप्तं विकरणमादायास्य प्रवृत्तिज्ञापनार्थन्तत्सत्वात् तेनात इत्यादि अन्तोदात्तं सिद्धम् । प्रसङ्गात्किंचिदुच्यते रुणद्धीत्यादौ श्नमिकृते तन्मध्यपतितन्यायेन विशिष्टस्य धातुत्वाद्धातुस्वरेणान्तोदात्तत्वमिति येनविधिरिति सूत्रभाष्ये स्पष्टं श्नमोमित्त्वेन परश्चेति परत्वस्य चाप्रवृत्तौ तत्सन्नियोगशिष्टाद्युदात्तत्वस्यापि तत्राप्रवृत्तिरिति शेषनिघातेन तस्यानुदात्तत्वे प्राप्ते सतिशिष्टो धातुस्वरस्तत्रेष्टव्य इति तदाशयः । नचैवं रुद्ध इत्यत्र पूर्वोक्तरीत्या श्नम उदात्तत्वे वर्ज्यमानस्वरेण तसोऽनुदात्तत्वं स्यादिति वाच्यं सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधत इत्युक्तेर्दोषात् तत इति अनुदात्तोपदेशेति नलोपे कृते हन्तिरदन्तो नतूपदेशे । निघ्नाना इति । निघ्नशब्दान्नामधातोश्चानश् मुगभावश्छान्दसत्वादेतेन तास्यादिभ्यः परत्वाभावादिदं चिन्त्यमित्यपास्तं दीव्यमान इत्यपि प्रत्युदाहरणं न च सतिशिष्टश्यन् स्वरेण चानश् स्वरस्य बाधापत्तिः विकरणस्वरो लसार्वधातुकस्वरमेव न बाधते इतरसार्वधातुकस्वरन्तु बाधतेवेति वाच्यं आत्ममानेखश्चेति सूत्रे सार्वधातुकस्वरमात्राबाधकत्वस्यैवभाष्ये व्यवस्थापितत्वादिति दिक् । विदीन्धि ॥ एभ्योलिङस्तङो ऽनुदात्तत्वे प्रतिषिद्धे इन्धीतेत्यादौ प्रत्ययाद्युदात्तत्वेन व्यवस्था ननु तास्यनुदात्तेदिति सूत्रभाष्ये विदीन्धिखिदिभ्यः परस्यानुदात्तत्वं भवतीत्यर्थो लभ्यते तत्कथं निषेध आरभ्यत इत्यत आह एतच्चेति । एवञ्च तद्भाष्यविरोधात्प्रकृतसूत्रस्थं भाष्यं प्रौढिवाद इति भावः ॥ आदिः सिचो ॥ प्रत्ययस्वरापवादोयं परत्वाच्चित इत्येतं बाधते वाशिष्ठमिति पक्षे चित इति मध्योदात्तं एवं माहिकार्ष्टामित्यादौ एतदभावे प्रत्ययस्वरेणान्तोदात्तत्वं सिचश्चित्वेनानुदात्तं पदमिति परिभाषालब्धागमानुदात्तत्वबाधे ऽपि सार्वधातुकप्रत्ययाद्युदात्तत्वस्य बाधे मानाभावात् विकरणस्वरस्य सार्वधातुकस्वराबाधकत्वाच्चेत्याहुः । अनिटः परस्य पितउपसंख्यानं माहिकार्षं पक्षे आद्युदात्तं न च माहिकार्षीदित्यत्रापि ईटः पिद्वत्तस्यायं स्वरः प्राप्नोति ईटः पूर्वमन्तरङ्गत्वात्स्वरे कृते तत ईटि लक्ष्येलक्षणस्येति न्यायेन पुनरप्रवृत्तेः । अत एवात्र भाष्ये माहिकार्षमित्येवोदाहृतं भाष्योदाहरणस्योपलक्षत्वाल्लक्ष्यभेदेन

न्यायाप्रवृत्तेश्च शेषनिघातविषयाभावाच्च भवत्येव तत्रापि स्वर इत्यन्ये ॥ थलि च सेटीडं ॥ अत्राच इति वर्त्तते इति भाष्ये स्पष्टम् । अजन्तेभ्यो विहितो यस्थल् सेट्तदन्तेपदे इट अन्त आदिश्च उदात्तावास्युरित्यर्थः पक्षेलित्स्वरः आदिर्णमुलीत्यतोन्यतरस्यामित्यनुवर्तमाने वाग्रहणं कार्यविकल्पार्थं सदादेरपि कार्यं प्रापयतीत्याह आदिर्वेति । अन्यतरस्यामित्यनुवृत्तेः फलमाह पदेति पर्यायेणेति न तु युगपत् । अन्तश्चेतवै इत्यादौ युगपद्ग्रहणाल्लिङ्गात् थलिकिं लुलुवतुः । सेटीतिकिं ययाथ । इट्ग्रहणात्तु यदेडागमस्तदा तस्योदात्तार्थं स्यात् ततश्च यथालुलविथेत्यादौ चतुर्णां पपिथेत्यादौ त्रयाणामिव मिडभावे ऽपि स्यात् सेड्ग्रहणात्तु सेट्येव भवति एवञ्च पप.थेत्यत्र लित्स्वर एव अजन्तेभ्यः किं बिभेदिथ पपिथेत्यादौ परत्वादातोलोपे ऽजन्तात्परो नास्तीति विहित इत्युक्तम् ॥ उपोत्तमंरिति ॥ प्रत्ययस्वरापवादोयं आहवनीये बाहुलकाधिकरणे ऽनीयः प्रीणनार्थात्कर्मणि वा ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः ॥ इति प्रत्ययस्वराः ॥ समासस्य ॥ यज्ञश्रियमिति । षष्ठीतत्पुरुषः श्रीशब्दे कारस्योदात्तत्वे आन्तरतम्यादियङ प्युदात्तः हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानवद्भावात् राजदृषदित्यादौ षकाराकारउदात्तः पर्यायेण नानापदानां स्वरे प्राप्तेऽयमारम्भः । उदात्तस्वरितयोगीति । उदात्तस्वरितग्रहणमनुवर्त्तमानं तद्वति वर्त्तते पूर्वपदसामानाधिकरण्यात् एवञ्च पूर्वपदस्य प्रकृतिभावस्तत्स्थयोरुदात्तस्वरितयोः प्रकृतिभावद्वारेणेति भावः यद्वा पूर्वपदशब्दो वर्त्तते इदङ्गतीत्यत्र कैयटे स्पष्टम् । चित्रश्रव इति । श्रूयत इति श्रवः कीर्तिः चित्रं श्रवोयस्येति चित्रश्रवास्ततस्तमप् । बहुव्रीहावितिकिं राजपुरुषः । पूर्वसूत्रन्तु समपाद इत्यत्र उदात्तस्वरितायुक्तपूर्वपदके सावकाशं समपाद इति समशब्दस्त्वत्वसमसिमेत्यनुच्चानीत्यनुदात्तः हरदत्तस्तु सूत्रेऽडर्मवित्याह पादशब्दो वृषादित्वादाद्युदात्तः नन्वत्रास्मिन्स्वरे सत्यपि समासान्तोदात्तत्वं भविष्यति प्रियविश्व इत्यादौ तु न एकपदे द्वयोरुदात्तयोरसंभवेशस्योक्तत्वेनासम्भवादिति चेन्न सत्यपि सम्भवे बाधनं भवतीत्यङ्गीकाराददोषः अन्यथोदात्तस्वरितयोः समावेशाभावे ज्ञापकाभावान्मनुष्यनाथ इत्यत्रोभयोः समावेशः स्यादित्याहुः ॥ तत्पुरुषे ॥ तुल्यश्वेत इति । तुल्यशब्दो यदन्त आद्युदात्तः । मन्दयत्सखमिति मन्देर्ण्यन्ताल्लः शत्रादेशः तस्य छान्दसत्वादार्धधातुकत्वेन शबभावाददुपदेशादिति निघाताभावे प्रत्ययाद्युदात्तत्वमेव णिलोपस्तु न तं प्रति सार्वधातुकत्वाश्रयणात् छन्दसि दृष्टानुविधानाच्च वेतीत्यं शङ्क्यम् । इत्थं मदयच्छब्दोऽन्तोदात्तः ततस्तत्पुरुषे टच्यपि

छान्दसत्वादेवात्र चित्स्वराभावः ननु परमं कारकं पश्य परमेण कारकेण परमे कारके इत्यर्थे समासे ऽतिप्रसङ्गः द्वितीयातृतीयासप्तम्यन्तपूर्वपदत्वात् न हि विशेषणसमासः प्रथमान्तानामेवेति नियमोस्तीति चेन्न लक्षणप्रतिपदोक्तपरिभाषया द्वितीयादिशब्दोच्चारणेन विहितसमासस्यैवग्रहणात् शास्त्रीति गौरादिङीषन्तः । अव्यये नञ्कु ॥ निपातत्वादेवसिद्धे नञ्ग्रहणमकरणिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थम् । अव्ययीत्यत्र सतिशिष्टप्रत्ययस्वरबाधनार्थमित्येके भाष्येत्वेतदर्थं वचनान्येवाख्यानि अनुदात्तं पदमिति सूत्रे कुग्रणञ्चादिषु पाठाभावात् केचित्तु चादिष्वेव कुः पाठः इह तु न पाठः एवञ्चाव्ययत्वमपि तस्य सिद्धति इत्याहुः । स्नात्वेति । अत्र समासान्तोदात्तत्वमेव न च मयूरव्यंसकादिष्वेवास्यन्तोदात्तत्वं निपात्यतां किमनेनेति वाच्यं सामिकृतं स्वयन्धौतमित्यादिवारणाय परिगणनस्यावश्यकत्वादिति कैयटादयः भाष्यकृतात्वन्तोदात्तनिपातनमाश्रित्य परिगणनं प्रत्याख्यातं तस्यायं भावः सामिकृतं स्वयन्धौतमित्यादौ परिगणनवादिनापि दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वमिष्यतएवेति । मुहूर्तसुखमिति । कालाध्वनोरिति द्वितीया कष्टश्रितादौ अहीनेद्वितीयेति भाष्यं वनातीत इत्यादौ थाथादिस्वरः ग्रामगमीत्यादौ णिनिस्वरः खट्वाक्षेपे वृद्धादीनाञ्चेति तस्मान्मुहूर्तसुखादीन्येवोदाहरणानीति भावः । भोज्योष्णमिति । कृत्यतुल्येति समासः कृत्यांशे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्त्तते इति कश्चित् । कृष्णसारङ्ग इति । कृष्णलोहितौ वर्णानान्तस्येत्याद्युदात्तौ वेदे तु कृष्णस्यामृगाख्याचेदिति कृष्णोन्तोदात्तः । अत्र सूत्रे एकं वर्णग्रहणं व्यर्थं वर्णोवर्णेनेति प्रतिपदोक्तसमासग्रहणादित्याहुः । अरित्रगाधमिति । अरित्रं नौकाष्ठन्तस्य गाधन्तेन स्पृश्यमानतलमित्यर्थः षष्ठीसमासा एते न पुनरायाम एवेति स च तिर्यगूर्ध्वाधरोवेत्यन्यत् दायाद्यम् ॥ दीयते सदायोंशः तमादत्ते दायादः तस्य भावोदायाद्यं दायादानन्तसंबन्धो वाप्रकृते तु लक्षणया दायाद्यशब्द आदीयमाने दाये एव वर्तते यद्वादायादमर्हतीत्यर्थे दण्डादित्वाद्यत् सचोपस्थितत्वात् पूर्वपदार्थभूतोदाय एवेतिबोद्धव्यम् । धनस्य दायाद इति स्वामीश्वरेति संबन्धसामान्यषष्ठ्यन्तेन समासः । परमदाया इति । अत्र समासान्तोदात्तत्वमेव । गमनचिरमिति । विशेषणसमासः ल्युडन्तस्य भाववाचित्वात् चिरकृच्छ्रयोः कालकष्टवाचित्वे ऽपिप्रकृते चिरकालभाविनि कृच्छ्रयोगिनि चार्थे चिरकृच्छ्रयोर्वर्तनात्सामानाधिकरण्यं एवञ्च चिरकृच्छ्रयोः पूर्वनिपातः प्राप्नोतीत्यतो मयूरव्यंसकादिसमासोत्रेत्याहुः । षष्ठीसमास इत्यन्ये । प्रतिबन्धि जायत इति । कार्यसिद्धेः प्रतिबन्धकं जायत इत्यर्थः प्रतिबन्धिशब्दआवश्यकेणिनिः । मूत्रकृच्छ्रमिति । षष्ठीसमासोयम् । मूत्र-

पदेनेति । मूत्रमिषेणेत्यर्थः उच्चारः पुरीषक्रिया । घजन्त इति । मूत्रशब्दः सिचि मुष्टोष्टेरूचेकि ष्ट्रन् प्रत्ययान्त इत्यन्ये । निवाते इति । वाता भावो निवातं निरुद्धो वातो यस्मिन्निति वा । कूटीनिवातमिति । आद्ये कुट्यादिहेतुके ऽर्थे वर्तमानाः कुट्यादयो निवातशब्देन सामानाधिकरण्याः अन्त्येतु स्पष्टमेतत् । राजनिवात इति । राजपार्श्वे इत्यर्थः षष्ठीसमासो ऽयम् । रज्जुशारदमिति । कर्मधारयः रज्जुशब्दो रज्जुबद्धपात्रोद्धृते वर्तते इदानीमेव कूपादुद्धृतं नवज्जलमित्यर्थः । आद्युदात्त इति । सृजेरसुम् सलोपश्चेत्यत्र उर्निदित्यधिकारात् । उत्तमशारदमिति । शरदि भवमित्यर्थः । कठाध्वर्युरिति । कर्मधारयोयस्वरणविशेषे रूढः । दौवारिककषायमिति । रूढिशब्दोयं कपायोर्द्धर्चादिः । सादृश्ये इति । सादृश्यवाचिनि तत्पुरुषे इत्यर्थः पितृशब्दो ऽन्तोदात्तः तृतीयान्तत्वात् तृतीयासमासे तत्पुरुषे तुल्यार्थेत्यनेनैवसिद्ध इदं दास्याः सदृश इत्यलुक्समासार्थं पितृसदृश इत्यादौ षष्ठीसमासस्तु अनभिधानान्नेत्यपि वक्तुं शक्य एवञ्च दासीशब्दस्यान्तोदात्ततयोदात्तयण इति विभक्तिरुदात्ता इत्यादि पूर्वसदृशेत्यत्रनिरूपितं । न सादृश्यमिति । यत्र हि प्रतियोगिविशेषसमर्पणार्थं पूर्वं पदं तत्रैवेदमिति सादृश्यग्रहणासामर्थ्याद्गम्यत इति भावः । परमसप्तसममिति । समाहारेद्विगुः उपसर्जनत्वाद्ध्रस्वः पात्रादित्वात्स्त्रीत्वाभावः परमसप्तसम इति त्वपपाठः । वाणिज इति । वणिगेववाणिजः प्रज्ञादित्वादण् । सप्तमीसमास इति । इदं मद्रवाणिज इत्यत्र मद्रेषु गत्वा व्यवहरतीत्यर्थः नचैवं सप्तमीपूर्वपदप्रकृतिस्वरेणैवसिद्धे गन्तव्यग्रहणमत्र व्यर्थमिति वाच्यं सुप्सुपेति लब्धस्य समासस्य प्रतिपदोक्तत्वाभावादिति भावात् षष्ठीसमासार्थमावश्यकस्य परत्वात्तत्रापि प्रवृत्तिरित्याशय इत्यन्ये ॥ मात्रोपज्ञा ॥ नपुंसके इति । नपुंसकवाचिनि तत्पुरुषे इत्यर्थः । तुल्यप्रमाणमिति । मात्रशब्दो वृत्तिविषये तुल्यप्रमाणे वर्तते इति भावः अस्वपदविग्रहः षष्ठीतत्पुरुषः ॥ सुखप्रिययोर्हिते ॥ यदापत्यांप्रीति करं तद्धितङ्गमनसुखमित्यादिकर्मधारयः गमनस्य विशेषणत्वात्पूर्वनिपातः मयूरव्यंसकादित्वाद्वा ॥ प्रीतौ च ॥ सुखप्रिययोः प्रीत्यव्यभिचारादितिशब्दे उत्तरपदे पूर्वपदं तथेत्यर्थः । गृहपतिरिति । गेहेक इति कप्रत्ययान्तो गृहशब्दो ऽन्तोदात्तः । दमे इति । गृहे इत्यर्थः ऐश्वर्येकिं वृषलीपतिर्विप्रः तद्वर्तेत्यर्थः ॥ न भूवा ॥ सूत्रे समाहारद्वन्द्वः भूपतिरित्यादयः षष्ठीतत्पुरुषाः अन्तोदात्ताः त्रयः क्विबन्ताः अन्त्य अप्रत्ययान्तः ॥ वाभुवनम् ॥ पत्यावैश्वर्य इति प्राप्ते विकल्पोयम् । अस्तित्वाध्यवसाय इति तद्विपयोत्कटकोटिज्ञानमित्यर्थः गमनमाङ्क्षत इति संभाव्यते इत्यनेनान्वेति विशेषणसमासाः सर्वेनित्स्वरः ॥ पूर्वभूतपूर्वे ॥ भूतपूर्वार्थे पूर्वशब्दे उत्तरपदे इत्यर्थः आढ्यपूर्वः आङ्पूर्वाद्ध्यायतेः

पृषोदरादित्वात् ढः आढ्यशब्दस्यादिस्वरेणान्तोदात्तः विशेषणसमासः ॥ सविधसनी ॥ सामीप्यार्थेष्वितिपूत्तरपदेष्वित्यर्थः सविधादयः समीपेरूढाः मद्रारगन्तोन्तोदात्तः गान्धारिः कर्दमादीनाञ्चेत्याद्युदात्तो मध्योदात्तो वा कश्मीरो लघावन्त इति मध्योदात्तः सविधादिषुक्तिं मद्रसमीपम् ॥ विस्पष्टादीनि ॥ गुणवचनेषु परेषु विस्पष्टादीनि प्रकृत्येत्यर्थः । अत्र विस्पष्टादीनि प्रवृत्तिनिमित्तस्य विशेषणानि न द्रव्यस्य कटुकादिशब्दैर्गुणवद्द्रव्यमभिधीयत इति सामानाधिकरण्याभावात्कर्मधारयाभावे ऽपि मयूरव्यंसकादित्वात्समासः तत्र विस्पष्टे गतिस्वरः विचित्रे ऽव्ययस्वरः विचित्ते बहुव्रीहिस्वरोव्यक्तो गतिस्वरेणाद्युदात्तः संपन्नो ऽन्तोदात्तः पटुर्नित्त्वादाद्युदात्तः पण्डितकुशलावन्तोदात्तौ चपलनिपुणावप्येवं ॥ अज्यावम ॥ अत्र अज्यकनामुत्तरपदत्वासम्भवात्सामर्थ्यात्तद्गुतोग्रहणं वदति तु पापेनैवसंबध्यते एवञ्च अज्यकन इत्यादेशवति अवमशब्दे पापशब्दवतिचोत्तरपदे इति पाठः पाठान्तरन्तु ग्रामादिकंगमनश्रेष्ठमित्यादौ मयूरव्यंसकादित्वाद्विशेषणस्य परनिपातोराजदन्तादित्वाद्वागमनपापिष्ठमिति पापवच्छब्दाविष्ठन् विन्मतोर्लुक् अन्यथा पापशब्दस्य गुणोपसर्जनद्रव्यवाचित्वाभावात्ततः स न स्यादिति बोध्यं ॥ कुमारश्च । कुमारशब्दः पूर्वपदं तथा कर्मधारये इत्यर्थः अत्र कुमारः श्रमणादिभिरिति समासस्यैवग्रहणं प्रातिपदोक्तत्वादिति केचित् अन्ये तु सर्वकर्मधारयग्रहणं एवञ्च कुमारब्राह्मण इत्यादावपि प्रवर्त्तत इत्याहुः तत्वमीश्वरो वेद ॥ आदिःप्रत्येन ॥ आदिरिति षष्ठ्यर्थे प्रथमा कुमारशब्दः प्रकृतिस्वरेण यत्स्वरकः प्राप्तः सस्वरः आदेरिति सूत्रार्थः फलितमाह कुमारस्यादिरिति एतेनोदात्ताधिकाराभावादिदमसङ्गतमित्यपास्तं ॥ पूगेष्व ॥ पूगोगणस्तद्वाचिन्युत्तरपदे कर्मधारये कुमारस्यादिरुदात्तोवेत्यर्थः कुमारश्चेत्येवेति प्रतिपदोक्तग्रहणपक्षे समासान्तोदात्तत्वं बोद्धुं पञ्चारत्निरिति तद्धितार्थे द्विगुः प्रमाणेलो द्विगोर्नित्यमिति मात्रचोलोपः पञ्चारत्नय इत्यादौ अन्तरङ्गत्वात्पूर्वं स्वरः पश्चाद्विभक्तिनिमित्तकार्यम् । अकृतव्यूहपरिभाषा तु नास्ति अनित्यावेत्य सकृदावेदितं किंच स्थानिवत्त्वेन निमित्तविनाशाभावात्तत्सत्वे ऽपि न दोषः न च स्वरे निषेधः लोपाजादेशस्यैव तेन निषेधात् कालग्रहणेन कालवाचकानाङ्ग्रहणं तदाह । दशमास्य इत्यादि । पञ्चकपाल इत्यादि । पञ्चसु कपालेषु भगालेषु संस्कृत इत्यर्थे द्विगोर्लुगनपत्य इति लुक् पञ्चसु शरावेषूद्धृत इति तत्रोद्धृतमित्यणोलुक् पञ्चाश्व इति । पञ्चभिरश्वैः क्रीत इत्यध्यर्द्धेति ठको लुक् ॥ बहुन्य ॥ इगन्तेति प्राप्ते विभाषेयम् । स्वरितयोरिति । भवतीति पक्षे ऽन्तोदात्तत्वं बोध्यम् ।

पञ्चवितस्तिरिति । मात्रचोलुक् द्वयसचो वा अकालादितिपञ्चमीप्रथमार्थे-ण्यन्त इति तेनान्तोदात्तइत्यर्थः । कृत्स्वरेणेति । कृन्निमित्तकेनेत्यर्थः । तथाच-थाथादिसूत्रेणबाधित इति फलितं त्रयाणांक्तान्तत्वात् बन्धस्य घञन्त-त्वात् ॥ परिप्रत्युपा ॥ इत आरभ्य पञ्चसूत्राणि द्वन्द्वाव्ययीभावविषयाणि । परित्रिगर्तमिति । अत्र पर्यपयोरपपरीवर्जने इति कर्मप्रवचनीयत्वात् तद्योगे पञ्चमी अपपरिरित्यव्ययीभावः । प्रतिपूर्वाह्णमिति । लक्षणेनाभिप्रतीति समासः । उपपूर्वेति । अव्ययं विभक्तीति समासः । वर्ज्यमाना एव । तयोरिति । अतो न पृथगुदाह्रियन्त इति भावः । अग्निं प्रतीति । इति विग्रहे प्रत्यग्निशलभाः पत-न्तीत्यादौ मा भूदित्यर्थः क्वचित्तु तथैवपाठः लक्षणया शिनित्वारोपेण राज-न्यग्रहणमिति अन्धकवृष्णीनां राजन्यत्वाव्यभिचारादित्यर्थः ॥ संख्या ॥ अत्र पूर्वसूत्राद्द्वन्द्व इति वर्त्तते त्रयसादेश आद्युदात्त इति त्रयोदशचमे इत्यादा-वाद्युदात्तपाठादिति भावः क्वचिद्वृत्तिपुस्तके मूलपुस्तकेचान्तोदात्त इति पाठो दृश्यते तदात्रयोदशचमे इत्यादौ छान्दसत्वं बोध्यम् ॥ आचार्योप ॥ सूत्रे षष्ठीबहुवचनस्थाने प्रथमैकवचने पाणिनीयरौढीया इति पाणिनेरौढे-श्चछात्रा इत्यर्थः तत्प्रोक्तमधीयत इत्यर्थो वा पाणिनेर्गोत्रे अन्तत्वाभावा-द्रौढौ न त्र्यच इति निषेधाच्चेञश्चेत्यण् न तेन वृद्धाच्छः आचार्योपसर्जन-ग्रहणं आचार्योपसर्जनान्तेवासिग्रहणं द्वन्द्वविशेषणमिति न तु पूर्वपदविशे-षणं व्याख्यानादिति भावः तत्फलमाह, सकल इति । छान्दसेति । छन्दअ-धीयत इत्याद्यर्थः । द्वन्द्वे किम् । आपिशलप्रियः पाणिनीय आपि शलपाणिनीयः ॥ कार्तकौ ॥ अत्र गणे विभक्त्यन्तपाठो वचनविवक्षार्थः कुर्भूमिः तत्र जाताः कुजाः तान् पाति कुजपः कृतस्य कुजपस्य वा ऽपत्यमित्यर्थे ऋष्यणन्ता-वेतौ कार्तकौजपौ सावर्णिमाण्डूकेयौ अवन्त्यश्मकाः पैलश्यामकर्णेयाः अत्र बहुवचनमविवक्षितमिति वृत्तिकृत् कपिश्यामकर्णेयाः केचित्तु पैलस्यापर्णेयाः कपिस्यापर्णेया इति पठन्ति शैतिकाक्षपाञ्चालेयाः अत्रापि बहुत्वमविवक्षितं कटुकवार्चलेयाः वार्धलेया इत्यन्ये पठन्ति शाकलशुनकाः शाकलशणकाः शाणक-बाभ्रवाः आर्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तसुराष्ट्राः तण्डवतण्डाः अवि-मत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालीयाः कठ-कौथुमाः कौथुमलौकाक्षाः स्त्रीकुमारंमैदपिप्पलादाः अस्य द्विः पाठः पक्षे समासान्तोदात्तत्वाय वत्सजरन्तः सौश्रुतपार्थिवाः जरामृत्युयाज्यानुवाक्ये-वृत् । कुल्लकश्च ॥ वृत्तावेषु तत्पुरुष इति नानुवर्त्तितं एवञ्चाव्ययीभावा-द्यसम्भवे ऽपि द्वन्द्वतत्पुरुषसाधारणानीमानि युक्तं चैतत् अन्यथा तत्पु-रुषप्रकरणमध्ये परि प्रत्युपापेति पञ्चसूत्री न कृता स्यात् परं तु बहुधा

तत्पुरुषा एवेमूदाहरणमिति बोध्यं तुल्लक्ष्मेत्यादौ कर्मधारयो उग्रसादौ कर्मधारयः षष्ठीसमासो वा। गोसाद इति। सदे र्घजन्ते न ण्यन्तादणन्ते न वा समासः तस्मादेव लिङ्गे गोसादौ गोषु सीदतीति गाः सादयतीति वा विग्रहः। इगन्तजादिभ्यः॥ इगन्तः सादिरत्र गृह्यत इत्यन्ये । कुरुगार्हे ॥ एषां सप्तानामिति। पञ्चानामिति क्वाचित्को ऽपपाठः मनोरमाविरोधात् सप्तापि भिन्नानि पदानि आद्ययोः षष्ठ्याः सौत्रोलुक् इतरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैकवचनं। दासीभाराणामिति। बहुवचनादाद्यर्थावगतिरिति भावः। उप्रत्ययान्त इति । तथाचान्तोदात्त इति भावः केचित्तु तत्र निदित्यनुवर्त्तयन्ति तत्र इगन्तानाञ्च ऋूपामित्यनेन कुरौ पर्यायेणोभयोरप्युदात्तत्वस्वीकारेण फलाभावादित्याहुः वृत्तिरप्येवं मूले तु प्रत्ययस्वरमात्रमुक्तं रिक्तगुर्वादयः कर्मधारयाः अमूतौ नञ्समास आद्युदात्तः अश्लीलेत्यादि अश्लीलाचासौ दृढरूपा च लावण्यरहितापि दृढरूपा कुब्जत्वादिरहितत्वात् संस्थानमात्रेण शोभनेत्यर्थः। निपातनादिति । पारेबडवेवेत्यर्थः पारेमध्ये इत्यव्ययीभावस्तु न सूत्रे दीर्घनिर्देशात् बडवायाः पारासम्भवात् चतितिर्तिलन इति तिलाः सन्त्यस्य तितिलीपृषोदरादित्वात्तिशब्दस्य द्वित्वं अहत्येनस्तद्धित इति टिलोपः छात्रार्थं सब्रह्मचारित्यादिवचनेन टिलोपः पण्यकम्बलः कर्मधारयः बहुलग्रहणात्समास इत्युक्तं समासप्रकरणे पुण्यशब्दो यदन्तत्वादाद्युदात्तः केचित्तु ननु द्वितीयाकृत्याइत्येवसिद्धमिति चेन्न प्रतिपदोक्तकृत्यनुव्याख्या इति समासे एव तत्प्रवृत्तेः इह तु विशेषणसमासः नन्वजात्येनि प्रतिषेधसामर्थ्याद्दुर्लभेसाविति चेन्न अजात्येति न जातिप्रतिषेधार्थः किंतु न्यायसिद्धार्थानुवादकं तत्फलन्तु गुणक्रियावाचिनामनियमेन पूर्वनिपाते प्राप्ते तन्नियमार्थं सूत्रमिति व्युत्पादनं स्पष्टञ्चेदं वृत्त्यादावित्याहुस्तन्न स्वरविधायके कृत्यतुल्याख्या इत्येववक्तव्ये कृत्यतुल्यार्थयोर्वियोगपाठेनार्थपदघटितपाठेन च तदंशे परिभाषाया अप्रवृत्तेरत एव प्रकृतसूत्रे कृत्यप्रत्ययान्तत्वात्पूर्वपदप्रकृतिस्वरे सिद्धे पण्यकम्बलः सञ्ज्ञायामेव पण्यकम्बल एवेति वा नियमार्थमिदं विशेषणसमास इति भाष्यकैयटयोरुक्तम्। सञ्ज्ञायामिति। नियमार्थमिदन्तदाह अन्यत्रेति प्रतिपदोक्त इत्यादि तु वृत्त्यनुरोधेन तेन सोपि न भवतीति तद्भावः दास्याभारो दासीभारः। यस्य तत्पुरुषस्येति । केचित्तु यस्य समासस्येत्येववदन्ति । यूपदार्विति । यूप आद्युदात्तः कुयुभ्याञ्चेत्यत्र निदित्यनुवृत्तेः प्रकृतिविकृतिभाव एवायं स्वर इष्यते अयं क्तेचेत्यनयोरारम्भात् तेन कुबेरबलिरित्यत्र न तदर्थकिं गोसुखं देवार्थमिति देवायेदमिति विग्रहः तादर्थ्येचतुर्थी। क्ते च ॥ प्रतिपदोक्तत्वाद्धितरक्षिताभ्यां समासस्यवात्र ग्रहणं गोहितमित्यत्र

हितयोगेचेति चतुर्थी एवञ्चोरहितमित्यत्र तादर्थ्ये चतुर्थी अन्ये तु हितशब्दे-नास्य प्रवृत्तिः अत्रापि तदर्थ इत्यनुवृत्तेः अत एवास्य सूत्रस्य प्रकृतिविकृति-भाव एव चतुर्थी तदर्थ इत्यस्य प्रवृत्तौ ज्ञापकता चतुर्थीतदर्थार्थेति सूत्रभा-ष्योक्तासङ्गच्छते नह्यत्र तस्य प्रवृत्तिर्हितयोगे तादर्थ्याभावात् न च हितेचेति वक्तव्ये क्तेचेति सामान्यसूत्रं रचितामपि सञ्ज्ञापकमिति भाष्याशयः गुरुत्वा-दुत्तरार्थन्तस्यावश्यकत्वाच्चेत्याहुः ॥ कर्मधारये निष्ठा ॥ अत्र प्रतिपदोक्तश्रेण्या-दिसमासस्यैव ग्रहणात्तेन वैदिकपण्डित इत्यत्र नेदञ्च महान्व्रीहीति सूत्रे भाष्ये स्पष्टं । कृताकृतमिति । आकृतमिति च्छेदः कृतापकृतादीनाञ्चोपसं-ख्यानमिति प्रतिपदोक्तः समासः अकृतमितिच्छेदस्तु न युक्तः तस्य क्तान्तोत्त-रपदत्वाभावेनाप्राप्तेः अहीनवाचिनीति अविभागवाचनीत्यर्थः थाथादिस्व-रापवादोयं । अनुपसर्ग इत्तीति । अनेनैवातीतादिव्यावृत्तिसिद्धावहीन इति व्यर्थमित्याहुः ॥ तृतीयाक्त ॥ अयमपि थाथादिस्वरापवादः । त्वोतास इति । त्वया ऊताः रक्षिताः त्वोतासः प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः अवतेः क्तः ज्वरत्वरेत्यूठ् एत्येधतीति वृद्धिरिडागमस्य चा-भावश्छान्दसः । पूर्वपदप्रकृतिस्वरे कृते एकादेश उदात्तेनोदात्तः ततः स्वरितः । रथयात इति । गत्यर्थात्कर्तरिक्तः ॥ गतिरनन्तरः ॥ गतिः क्तिजन्तः पुल्लिङ्गा-नन्तरपदसामानाधिकरण्यात् निपातनादनुनासिकलोप इति हरदत्तः गति-शब्दस्य तत्सञ्ज्ञकशब्दपरत्वान्नसामानाधिकरण्यानुपपत्तिरिति कश्चित् । पुरो-हितमिति । पुरः शब्दोऽसिप्रत्ययस्वरेणान्तोदात्तः थाथादिस्वरापवादोयम् । अभ्युद्धृत इति । इह हृतशब्देन समासे पुरोहितमित्यत्रेवगतिस्वरेणाद्युदात्त उद्धृतशब्दः तस्य पुनरभिशब्देनसमासः अयमेव समासक्रमोभाष्यादिसम्मत इति प्रागेवनिरूपितं तत्र कृद्ग्रहणपरिभाषया उद्धृतस्य क्तान्तोत्तरपदत्वात् ॥ अपवादक्रमेण समासान्तोदात्तत्वे तद्बाधकाव्ययपूर्वपदप्रकृतिस्वरत्वे तद्बा-धककृत्स्वरे तद्बाधकथाथादिस्वरे प्राप्ते तमपोद्यायं प्राप्तः नन्वनन्तरग्रहणेप्यसौ दुर्वारः कृद्ग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वे ऽभेस्तदानन्तर्यस्य सत्वादिति चेन्न अनन्तरग्रहणसामर्थ्याद्धिधातोरनन्तरोगतिराश्रीयते ऽभिश्चनतथेति न दोषः नन्वभेः स्वराभावे ऽपि अभ्युद्धृतशब्दस्य थाथादिस्वरेणान्तोदात्तत्वापत्तिः इष्यते तूच्छब्दस्य स्वरः संसृष्टन्त्यनमुभयं समाहृतमित्यादिमन्त्रे समाहृतशब्दे आङः स्वरदर्शनात् नचासौ प्रकृतसूत्रेण सिद्ध्यति प्रथमसमासे तत्प्राप्ता-वपि द्वितीयसमासे थाथादिस्वरप्रवृत्तेरुक्तत्वात् न च तम्बाधित्वा गति-स्वरः प्रवर्तते अभ्युद्धृतशब्दे उदः पूर्वपदत्वाभावादिति चेन्न धातोरनन्तर इति व्याख्यानादेवयोगविभागेनानन्तरोगतिरपूर्वपदमपि प्रकृत्येति व्याख्या:

नादेव वा पूर्वपदत्वं विनाप्यस्य प्रवृत्तिस्वीकारात् अन्यथा धातुं प्रति गतित्वेन तंप्रति पूर्वपदत्वासम्भवेन सूत्रार्थासङ्गतेः एवञ्चाभ्युद्धृतमित्यत्राद्य एव स्वरः इदमेवानन्तरग्रहणं कृद्ग्रहणपरिभाषाया ज्ञापकमित्यन्यत्र प्रपञ्चितं नन्वेवमपि व्यवहितवारणेन धातोरनन्तर इति व्याख्यानस्य चारितार्थ्येन कथं सतिशिष्ट थाथादिस्वरबाधकत्वमिति चेच्च अहीनेद्वितीयेति सूत्रादनुपसर्गग्रहणमत्रानुवर्त्तते तेनैव अभ्युद्धृतमित्यादौ अभ्यादेर्व्यावृत्तिसिद्धौ अनन्तरग्रहणात्कात्वान्तरप्राप्त थाथादिस्वरबाधः एवञ्चात्र तत्सामर्थ्यात्पूर्वपदमित्यपि न संबध्यते इत्याहुः । कारकपूर्वस्यत्विति । अयं भावः कारकाद्धत्तेति सूत्रे कारकादिति योगो विभज्यते क्तग्रहणं गतिग्रहञ्चानुवर्त्तते कारकात्परं क्तान्तं स गतिकमुत्तरपदमन्तोदात्तं स्यादित्यर्थः एवञ्च दूरादूत इत्यादौ थाथादिस्वरेण कृत्स्वरेण वा सिद्धेरिदन्दूरादागत अभ्युद्धृतन्यायेन प्राप्तगतिरनन्तर इत्यस्य बाधनार्थमितिनोक्तरीत्या दूरादागत इत्यादौ कारकपूर्वेपि गतिस्वरः स्यात् इष्यते तु थाथादिस्वर इत्यपास्तमिति दिक् ॥ तादौ च निति ॥ कृत्स्वरापवादोयन्तकारादौर्नित् प्रत्ययस्याकृतो ऽभावात् गतिग्रहणेन धातोराक्षेपेण तत्प्रकृतिकप्रत्ययस्यैवग्रहणाच्च कृल्लाभे कृद्ग्रहणं कृत्सञ्ज्ञाप्रवृत्तिकाले यस्तद्ग्रहणार्थन्तेन प्रलपितेत्यादि सिद्ध्यति स्वरप्रवृत्तिवेलायान्तादित्वाभावे ऽपि पूर्वन्तत्सत्वात् यस्मिन्विधिरित्येवसिद्धे आदिग्रहणञ्चिन्त्यप्रयोजनम् । अनन्तर इति । अत्रापि पूर्वसूत्रवदेवव्यवस्थाबोध्या । आगन्तुरिति । नन्वताविति पर्युदासः क्तिन एवोचितः वृष्णेचोदस्वसुष्टुतिमित्यादौ गतिस्वरादर्शनादिति चेन्न तत्रोपायान्तरस्यैवानुसर्त्तव्यत्वात् नह्यताविति पर्युदासेन तन्निर्वाहः कृदुत्तरप्रकृतिस्वरेण धातोरुदात्तत्वापत्तेः अन्तोदात्ततायाश्च तत्रेष्टत्वात् किंचाताविति क्तिनः पर्युदासे प्रभूतौ सङ्गतिमित्यादौ गतिस्वरो न सिद्ध्येत् तस्मात्तुन एवायं पर्युदासः यत्तु मनिन्क्तिन्व्याख्यानेत्यादिना सुष्टुत्यादावन्तोदात्तत्वमिति तन्न प्रभूतावित्यादिसिद्धये कारकानुवृत्तेर्न्याय्यत्वात् वृत्तिकृतादर्शितत्वाच्च वृष्णेचोदस्वसुष्टुतिमित्यादौ तु स्तोत्रकरणीभूतायाऋचः साध्वसिरित्यादिवत्कर्तृत्वविवक्षायाङ्क्तिजन्तत्वान्न दोषः ॥ तवयान्तः ॥ कृत्स्वरापवादः । अन्त उदात्त इति । यद्यप्युदात्तग्रहणं दुर्लभं तथापि गतिः प्रकृत्या भवतीत्युक्ते उदात्तो बुद्धिमारोहतीति स एवान्तस्य भवतीति भावः । अनन्तर इति । अत्रापि पूर्ववदेव व्यवस्था । अन्वेतवा इति । अनुरुपसर्गत्वादाद्युदात्तः । प्रत्यञ्च इति । ननु अनिगन्त इत्युक्तावपि प्रत्यञ्चमित्यादौ यणि अनिगन्तत्वादेतत्प्रवृत्तिर्दुर्वारा न च स्थानिवत्त्वं पूर्व-

पदस्य कार्यित्वेनापूर्वविधित्वात् अनिगन्त इति तु प्रतीच इत्येतद्व्यावृत्त्या चरितार्थमिति चेन्न इगन्तस्य यणादेशे कृते ऽपि प्रतिषेध इति वचनेनैवनिर्वाहात् एवञ्च प्रत्यञ्च इत्यादौ कृदुत्तरपदप्रकृतिस्वर एव । परत्वादिति । चुस्वरावकाशः साकद्रीची अस्यावकाशः येपराञ्चः उभयप्रसङ्गे परत्वादयमित्यर्थः वस्तु तस्तु इष्टत्वादित्यर्थः एतेनास्मिन् समासस्वरे कृते विभक्तावच इति लोपे कृते सतिशिष्टत्वाच्चुस्वर एव प्राप्नोतीत्यपास्तं भाष्यकारैस्त्रैवपरिहारात् अत्र चुस्वरादिति सतिशिष्टस्वरमात्रोपलक्षणमिति केचित् । उदात्तस्वरितयोरिति । स्वरसन्धेः पूर्वं पूर्वोत्तरपदनिमित्तकार्यप्रवृत्तेः पूर्वमेतस्मिन्स्वरे पश्चाद्यणि अस्य प्रवृत्तिः अध्यङित्यत्रोदात्तादनुदात्तस्येतिस्वरितः एवमधीचेत्यत्राप्ययमेवस्वर श्चुस्वरात् क्तस्वरात् कृत्स्वरापवादाविमौ योगौ ॥ ईषद ॥ ईषदिति पूर्वपदम्बाप्रकृत्येत्यर्थः पक्षे समासान्तोदात्तः कृत्स्वर एवेति । इषद्गुणवचनेनेति प्रतिपदोक्तसमासस्यैव ग्रहणादिति भावः अत एव बहुव्रीहावपीदं न केचित्तु परत्वात्कुस्वर एवेत्यर्थं इत्याहुः । बहुव्रीहावपीति । तत्पुरुषाधिकाराभावादिति भावः ॥ प्रथमोचिरो ॥ अचिरोपसंपत्तिः अभिनवत्वं प्रथमोवैयाकरण इति वैयाकरणानामाद्यामुख्य इत्यर्थः । केसमासे । अयन्तोदात्त एव कतरकतमौ उत्तरउत्तमयोश्चित्वादन्तोदात्तौ । प्रतिपदोक्तत्वादिति । कतरतकतमौजातीति प्रतिदोक्तस्यैवग्रहणादित्यर्थः कर्मधारय इत्येवेति तेनार्यस्य ब्राह्मण इत्यर्थं न दोषः ॥ राजब्राह्मण इति । आद्युदात्तो राजन्शब्दः पक्षे ऽन्तोदात्तत्वं राजशब्दो ब्राह्मणे ताद्धर्म्याद्वर्तेत इति समानाधिकरण्यं षष्ठीसमासे ऽन्तोदात्तत्वमेवयोगविभागो यथासंख्यनिवृत्यर्थ उत्तरार्थश्च अत्र लिङ्गविशिष्टपरिभाषानेति ङ्याप्सूत्रे भाष्ये स्पष्टं एवं समासरूपसमुदायग्रहणे ऽपि सा न तेन बहोर्नञ्वदिति सूत्रं बहुगोमतीत्यत्र न अन्यत्र वेति कर्मधारय इत्यर्थः ॥ क्ते नित्या ॥ नित्यमाभीक्ष्ण्यम् । काला इति । अत्यन्तसंयोगेचेत्यस्याप्युपलक्षणमेतत् द्वितीयासमास इति द्वितीयाऽत्यन्तसंयोगे द्वितीयापूर्वपदप्रकृतिस्वरापवाद थाथादिस्वरस्य पाक्षिको ऽपवादोयम् । ग्रामः शिल्पिनि ॥ शिल्पिवाचिन्युत्तरपदे इत्यर्थः । ग्रामनापित इति । षष्ठीसमासः । राजनापित इति ॥ कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थप्रशंसासमासे राजयोग्यतया । अधिकारोयमिति । अन्तइत्यतः प्रागादिरिति प्रकृत्याभगालमित्यतः प्रागुदात्त इति चाधिक्रियत इत्यर्थः । धर्म्यमिति । धर्मोनामग्रामजनपदकुलेषु परंपरायातः सदाचारः तस्मादनपेतन्तेन प्राप्यं वाधर्म्यं आचारवशादवश्यं कार्यमित्यर्थः । देयमिति । प्रकृते व्याख्यानलभ्यं हारिण्युदाहरति । याज्ञिकाश्व इति । षष्ठीसमासाविमौ हारीत्यावश्यकेणिनिः कृञो

ऽत्र ग्रहणमर्थः । वाडवहरणमिति । हरणशब्दः कर्मसाधनः कृत्स्वरो हारिस्वरेणेति कृत्स्वरापवादानोभावकर्मवचन इति स्वरबाधे कृत्स्वरबाधस्यापि फलितत्वादिति भावः चित्स्वराद्धारिस्वरः परत्वात् मातुलगवः टचश्चित्त्वन्तु अतिगव इत्यादौ चरितार्थम् । युक्ते च ॥ युक्तः समाहितः युजसमाधावित्यस्य रूपं गोवल्लव इति तत्परतया गवांपालक इत्यर्थः कृत्स्वरयाथादिस्वराच्च पूर्वविप्रतिषेधेन युक्तेचेति स्वरएवेष्यते गोविट् गोसङ्ख्यः समिख्य इति कः । विभाषाध्यक्षे ॥ अध्यक्षशब्दो युक्तवाच्येवेति प्राप्तविभाषेयम् । प्रापञ्चाशिल्पि ॥ शिल्पिवाचकेपर इत्यर्थः । गोत्रान्ते ॥ आद्ययोरर्थग्रहणं अन्त्ययोः शब्दग्रहणं अपत्याधिकारादन्यत्र लौकिकगोत्र ग्रहणादाह सुश्रुतोऽपत्यस्येति । माणवब्राह्मणयोर्गोत्रत्वेन प्रसिध्यभावाद्ग्रहणं ओदनपाणिनीया इति ओदनकामत्वेन तेषाक्षेपः । अङ्गानि मैरेये ॥ सुरव्यतिरिक्तं मद्यं मैरेयन्तद्वाचके उत्तरपदे तदर्थारम्भकवाचीनि पूर्वपदान्याद्युदात्तानीत्यर्थः आसवो मद्यम् । भक्ताख्यास्त ॥ भक्तशब्दो ऽत्र अदनीयवस्तु मात्रपरः भित्ताकं सादयः षष्ठीसमासाः बहुवचनात्स्वरूपविधिनिरासे सिद्धे आख्योक्तिराद्यविशेषस्य भिक्षादेर्ग्रहणार्थेत्याहुः । क्रियामात्रमिति । न द्रव्यमित्यर्थः । बहुव्रीहिरिति । षष्ठीसमासे त्वन्तोदात्तत्वम् ॥ गोबिडाल ॥ उपमानार्थेष्वेपूत्तरपदेषु पूर्वपदमाद्युदात्तमित्यर्थः । गवाकृत्येति । एवं यत्र यथोपमानभावः संभवति तत्र तथायोज्यमिति बोद्धम् । अकेजी ॥ जीविकार्थे समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्तमित्यर्थः कृत्स्वरापवादः दन्तलेखनादिजीविकायाः समासे प्रवृत्तिनिमित्तत्वात्समासस्य जीविकार्थत्वमित्याह यस्येति । प्रतिपदोक्तत्वान्नित्यं क्रीडेति विहितसमास एवेदं अकग्रहणन्तु स्पष्टार्थम् । प्राचामिति । प्राग्देशवर्तिषु लाक्षणिकमित्याह प्राग्देशवर्तिनामिति । अजीविकार्थमिदं उद्दालकेत्यादौ नित्यंक्रीडेतिसमासः । तवपुष्येति । षष्ठीसमासः । नियुक्त इति । अधिकृत इत्यर्थः स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति युक्ते इत्यनेन न सिद्ध्यति ॥ शिल्पिनि चा ॥ युक्तेचेत्येव सिद्धे कृञः प्रतिषेधार्थं वचनं सञ्ज्ञायां चत्राखीति शिल्पिनिचाकृञ इति वर्तते अयुक्तार्थमनियुक्तार्थं कृञः प्रतिषेधार्थञ्च वचनङ्गोतन्ति । पालशब्दे परे एते आद्युदात्ता इत्यर्थः वत्सानां बन्धनरज्जुस्तन्तिः ॥ णिनि ॥ णिन्यन्ते उत्तरपदे पूर्वमाद्युदात्तमित्यर्थः अत्र सञ्ज्ञाग्रहणमनुववर्त्तते इति वृत्ते इति सूत्रे भाष्यादौ तेनाश्राद्धभोजीत्यादौ न अत्र कृत्स्वर एव उत्तरसूत्रस्यभाष्यात्तु नानुवर्तते इति प्रतीयते तत्वं चरणयोविंद्धुः वस्तुत उत्तरसूत्रे ऽपि संज्ञायामित्यस्य संबन्धेन कश्चिद्दोषः । उपमानम् ॥ शब्दार्थकधातुप्रकृतिके एव णिन्यन्ते परे इत्यर्थः ।

उष्ट्रक्रोशीति । उष्ट्र इव क्रोशतीत्याद्यर्थे कर्तर्युपमान इति णिनिः एवेतिकिम् । उपमानमेवेत्येवं नियमोमाभूत् तथा च साध्वध्यायीत्यादौ पूर्वेणाद्युदात्तता न स्यात् वृकवञ्चीत्यत्र च स्यादिति बोध्यं । युक्तारो ॥ एतेसमासा एव गणे पठ्यन्ते । युक्तारोहीति । एषु णिनीत्येव सिद्धे युक्तादीन्येव पूर्वपदानि आरोह्यादीन्येवोत्तरपदानीत्येवं पूर्वपदोत्तरपदनियमार्थमिदमिति केचित् असञ्ज्ञार्थमित्यन्ये । क्षीरहोतेति । अत्र समासस्वरापवादे क्तस्वरे प्राप्ते तद पवादे मन्क्तिनिति प्राप्ते तदपवादोयं एकशितिपाच्छब्दोत्र पठ्यते तत्रैक शितिः पादोस्येति त्रिपदे बहुव्रीहौ अवान्तरतत्पुरुषः नन्ववान्तरतत्पुरुषे समासान्तोदात्तत्वं बाधित्वेगन्तेति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं सिद्धं एकशब्दस्य कन्नन्तत्वादितिचेन्न उत्तरपदेशित्यन्तस्य द्विगुस्वराभाव ज्ञापनार्थत्वात् तेन द्विशितिपादिति शब्द एवोदात्तः नन्वेवमपि समासान्तोदात्तत्वं बधित्वा बहुव्रीहिर्निमित्तपूर्वपदप्रकृतिस्वरत्वं भविष्यतीति व्यर्थ एव पाठ इति चेन्न निमित्तिस्वरबलीयस्त्वस्यापि ज्ञापनात् फलंतूक्तमेवेति केचित् । परे तु समर्थसूत्रे एतच्छब्दपाठेन नेहार्थः इगन्ते द्विगावित्यस्य बाधकत्वान्न स्वरे दोष इत्युक्तत्तेन द्विशितिपादित्यत्रापि द्विशब्दस्वर एवेति लभ्यते अत एव निमित्तिस्वरबलीयस्त्वं वाचनिकमिति कैयटेनोक्तं सतिशिष्टन्यायसिद्धमितित्वन्यदित्याहुः पात्रेसमितादयोप्यत्र बोध्याः अधिकशतवर्षशब्दोप्यत्र पठनीय इति समर्थसूत्रे भाष्यं अयमाकृतिगणः ॥ दीर्घकाश ॥ दीर्घान्तं काशादीनि च जेपरे आद्युदात्तनीत्यर्थः दीर्घादिति किं बुद्विजः जेकिं शमीवृक्षः क्तस्वरापवादोयम् ॥ अन्त्यात्पूर्वम् ॥ आमलकीज इत्यत्र दीर्घकाशेति बाधित्वा परत्वादयमेवस्वरः तच्चेदिति पूर्वपदञ्चेदित्यर्थः निवसत् निवासकर्तृसूत्रे व्यत्ययेन बहुवचनं केचित्वधिकरणे औणादिकऋचन्तसमासविशेषणमित्याहुः मल्लग्रामादौ षष्ठीसमासः दाक्षिग्रामः दाक्षयोनिवसन्त्यस्मिन्स एवमुच्यते ॥ घोषादि ॥ एषु पूर्वपदमाद्युदात्तमित्यर्थः । घोष । कठ । पल्वल । हृद । बदरी । पिङ्गल । पिशङ्ग । माला । रक्षा । अश्वत्थ । शिल्पी । तृण । शाल्मली । मुनि । कूट । दाक्षि । अत्रानिसन्त इत्यनुवर्त्तत इत्येके नानुवर्त्तत इत्यन्ये छात्र्यादयः । छात्रि । ऐलि । भाण्डि । व्याडि । आपिशलि । आखण्ड । गौरिप । अयमेवस्वर इति स्पष्टञ्चेदं वृत्तौ । भाष्ये तु नैतद्दृश्यते । प्रस्थ । मालादीनाञ्चेति सूत्रारम्भात्कर्क्यादिपर्युदासाच्चाह अवृद्धमिति । प्रत्युदाहरणे ऽन्तोदात्तत्वं कर्कीमघीमकरीकर्कन्धू । शमीकरीरकटुककवलवदरशोणेति । शोणेति पाठे एङ्प्राचान्देशे इति वृद्धत्वम् । माला । शाला । शोण । शोणेतिवा । द्राक्षा । लाक्षा । काञ्ची । एकाकामाक्षामानवार्मेमिति नवशब्दः

प्रत्ययवाची अकारान्तः महाश्ममित्यात्रात्वे कृते प्राप्तिः । नभू ॥ मद्राश्मस्या-नोऽश्माय इति टजन्तत्वादवर्णान्तत्वम् । सङ्ख्यातेति ॥ स्वरविधौ नलोपस्या-सिद्धत्वेनाश्मनोऽवर्णान्तत्वाभावादप्राप्तेर्भाष्ये ऽनुक्तत्वाच्च वृत्युक्तमिदं चिन्त्यं वृत्तिप्रामाण्यादश्मशब्दोऽकारान्तोऽप्यस्तीत्यन्ये । दिवोदासायेति । दिवश्चदास इति षष्ठ्या अलुक् सर्वश्वेत इति श्वेतादिगुणेन सर्वावयवानां व्याप्तिरिति गुणकार्त्स्न्यवृत्तिरत्र सर्वशब्दः यत्र हि गुणान्तराभावस्तत्र गुण-कार्त्स्न्यं भवति सर्वमहानित्यत्र सर्वशब्दस्य पूज्यमानार्थत्वाभावात् पूर्वकालैके-त्येवसमासः । आश्रयव्याप्त्येति । नतूज्ज्वलत्वेनेत्यर्थः । सर्वसौवर्ण इति । विका-रकार्त्स्न्यमत्र सर्वेषामिति गुणकार्त्स्न्यवृत्तिः सर्वशब्दोऽत्र गुणत्तरेणेति समासः सर्वेषां पटानां मध्ये श्वेतगुणवद्द्रव्यान्तरापेक्षया सातिशयश्वेतगुणवानयमि-त्यर्थः द्रव्यान्तराधेयश्वेतापेक्षया सर्वेषां पटानामयंश्वेतो गुणः सातिशय इत्यर्थः इत्यन्ये । अञ्जनागिरिरिति । वनगिर्योरिति दीर्घःगिरीत्यादिकिं शरवणं दूर्वावणं । कुमार्यां वयसि । वयसिवर्त्तमानं पूर्वपदमित्यर्थः वृद्धकुमारीति । विशेषणसमासः पुंवत्कर्मधारयेति पुंवत् । असंप्रयोगमात्रेति । तन्मात्रेण कुमार-त्वरूपं प्रवृत्तिनिमित्तमुपादायारोप्यप्रयुक्त इत्यर्थः अत एव कुमारीत्यत्र ङीप्-सिद्धिः तच्च वय इति वृद्धत्वमित्यर्थः नकुमारत्वमेवेति यत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं न तदेववयो गृह्यते इत्यर्थः एवञ्च वयसीति पूर्वपदविशेषण-मिति सूचितं । स्वरे कृते इति । नेन्द्रस्येति निषेधेन पूर्वोत्तरपदनिमित्तकार्यात्पू-र्वमेकादेशभावज्ञापनादिति भावः । गर्गत्रिरात्रमिति । संख्यापूर्वं रात्रं क्लीबमिति क्लीबतापुल्लिङ्गपाठस्तु क्वाचित्कः प्रामादिक एव विल्वसप्तरात्रमित्येवपाठः । प्रतिपदोक्तेति । सभाराजेति विहितेत्यर्थः प्रत्युदाहरणे बहुव्रीहिः ब्राह्मणकुलं विशेष्यम् । पुरेप्राचाम् । स्वतन्त्राकारान्तपुरशब्दस्य ऋक्पूरित्यप्रत्ययान्तस्य च ग्रहणमविशेषात् अप्रत्ययान्तस्यापि परत्वरम्भवात् नक्षत्रोत्तरपदाधिकारो ऽस्तीत्याहुः । इहापीति । अरिष्टगौडावित्येवसिद्धे पूर्वं ग्रहणं तदादिसनाम-ग्रहणार्थमिति भावः अप्रागर्थञ्चेदं सूत्रं हास्तिनपुरमिति एषु समासान्तो-दात्तत्वमेव । ढगिति । ढेलोप इत्युलोपः । कुसुलकूप ॥ प्रत्युदाहरणेषु समासा-न्तोदात्तत्वं ॥ दिक्शब्दाग्राम ॥ चानराटे स्वरूपग्रहणम् अन्यत्रार्थग्रहणं पूर्वोष्वेति एकादेशाः स्वरितउदात्तो वा । पूर्वं पञ्चाला इति । पञ्चालैकदेशे पञ्चालशब्दस्य वृत्त्या पूर्वादिनासामानाधिकरण्यं पूर्वापरेति विशेषणसमासः । यायातमिति ॥ ययातिमधिकृतमाख्यानमित्यर्थः पूर्वयायातमित्यादौ पूर्वशब्द-स्य दिक्शब्दत्वाभावात् कथं प्राप्तिरित्यत आह शब्दग्रहणमिति । यदा कदा-चिद्दिशिदृष्ट इत्यर्थलाभादिति भावः आचार्योपसर्जनश्चाङ्गसप्तम्यर्थे प्रथमा

अन्तेवासिविशेषणञ्चैतत् उत्तरपदस्येत्यधीति । स्पष्टञ्चेदं वृद्धिरादैच्सूत्रे भाष्ये वृद्धिमात्रस्योत्तरपदस्याभावेन सामर्थ्याद्वृद्धिमदुत्तरपदे लब्धे उत्तरपदग्रहणात्तस्य स्वरितत्वाद्वा तदधिकारलाभः अस्य वृद्धिशब्देन विहितवृद्धिग्रहणेनापि वारयितुं शक्यत्वादाह । सर्वकारक इति । बहुव्रीहौ विश्वं सञ्ज्ञायामिति बहुव्रीहेर्विशेषणं कर्मधारये विश्वदेवा इत्यन्तोदात्तं विश्वेदेव इत्यसञ्ज्ञायां पूर्वपदप्रकृतिस्वरः विश्वमित्रविश्वाजिनयोः सञ्ज्ञायां मित्राजिनयोरित्येतद्वृप्रतिषेधेन ऋषौ विश्वामित्रे अयमेवस्वरो भवति ऋषिप्रतिषेधोमित्रे इति वचनात् । हयश्व इति । नेन्द्रस्य परस्येति ज्ञापकात्पूर्वं पूर्वोत्तरपदनिमित्तकार्यमिति स्वरोत्तरं यणादि तेनोदात्तस्वरितयोरित्यादिप्रवृत्तिः अत्रापि सञ्ज्ञायामित्यनुवर्तत इत्याहुः । क्षेपे ॥ अक्षेपे सञ्ज्ञात्वाभावे पूर्वपदप्रकृतिस्वर एव । घटोदर इति । घटशब्दो वृषादि त्वादाद्युदात्तः कटुकशब्दस्तु कवन्तत्वात्तथा चला चलस्याजन्तत्वाच्चलाचलेपुरित्युदाहरणं चिन्त्यं एवं मेहेषुरित्यपि । अनुदर इत्यत्रेति । क्षेपे सञ्ज्ञाचेदं अक्षेपे ऽपि पूर्वपदप्रकृतिस्वरापवादत्वात्तदेवसूदर इत्यत्र ततोपि परत्वादुपसर्गात्स्वाङ्गमिति बोध्यम् । ब्रह्मशब्द इति तु क्वाचित्को ऽपपाठः गौरीशब्दस्य ङीषन्ततयान्तोदात्तत्वेना विशेषाभावात् प्रधौतशब्दो गतिस्वरेणाद्युदात्तः प्रत्येकशब्दः कृदुत्तरप्रकृतिस्वरेण लित्वान्मध्योदात्तः शुष्कशब्दः शुष्कधृष्टावित्याद्युदात्तः ॥ उत्तरपदादिः ॥ उत्तरपदेति लुप्तषष्ठीकं पृथक्पदम् ॥ कर्णो वर्ण । कर्ण इति षष्ठ्यर्थे प्रथमा उत्तरपदस्य कर्णस्यादिरुदात्त इति वाक्योऽर्थः फलितमाह परः कर्णेति । एवमग्रे ऽपि बोद्धं अत्र लक्षणशब्देन पशूनां विभागज्ञापनार्थं दात्र शङ्कुप्रतिरूपकं यत्कर्णादिषु चिन्हं क्रियते तदुच्यते पृथग्वर्णग्रहणात् तेन स्थूलकर्ण इत्यत्र न स्थूलशब्दो ऽन्तोदात्तः । शङ्कुकर्ण इति । कर्णे लक्षणस्येति दीर्घत्वं श्वेतः पचाद्यजन्तः शोभनो युजन्तः प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः तत्पुरुषेत्वन्तोदात्तत्वम् ॥ कण्ठपृष्ठ ॥ उत्तरपदान्येतान्याद्युदात्तानीत्यर्थः सुग्रीव इति । यद्यपि परत्वान्नञ्सुभ्यामुपसर्गात्स्वाङ्गमित्युचितं तथापि नीलग्रीव इत्युदाहरणं बोद्धं चेन पुनर्विधानात् अयं परस्यापि बाधक इति हरदत्तः विशेषा ऽवस्थेति गम्यते इति शेषः औपम्ये गोशङ्कु इत्युदाहरणम् ॥ नञो जर ॥ नञ्सुभ्यामित्यस्यापवादः जरणंजरः । ऋदोरप्, मरणंमरः अत एव निपातनादप् मिदस्त्रः मित्रम् । सूते नपुंमिति भावेक्तः सूत्रे तु शब्दपरत्वात्पुंस्त्वम् । अमित्रेति । अयं बहुव्रीहावनेन मध्योदात्तः नञ्तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः अमेरित्रचि अन्तोदात्तोपि मित्रयोपि पुल्लिङ्ग भृत्रांम

चवृत्तमेष्ट्राः पुंसीत्युक्तेः न च तत्पुरुषे परवल्लिङ्गतापत्तिरिति वाच्यं लिङ्गानुशासनसूत्रे एकशेषेणास्यापि निर्द्देशान्न दोष इत्याहुः । हरदत्तस्तु तत्पुरुषेण नपुंसकमेव आद्युदात्तश्चेत्याह एवञ्चाश्नोतेराशुकर्मणि इत्युणादिसूत्रोक्तमनेोरमादिरीत्या ईश्वरीशब्दवदमित्रशब्दोऽपि त्रिप्रकारः । सौमनसी ॥ अपवाद इति । एवमुत्तरसूत्रत्रयमपि तदपवाद एव मन्त्वास्च मनसी । सुकर्माण इति । यद्यप्याद्युदात्तं द्व्यच्छन्दसीत्यनेनैव सिद्धमिदन्तथापि अनिनस्मन् ग्रहणानीति न्यायेन सुप्रथिमेत्यादि बहुजर्थमच्छन्दोर्थञ्चेदम् । स्वदित्यत्रापि स्वरेकर्त्तव्ये बहिरङ्गत्वात्पूर्वत्रासिद्धत्वाद्वादत्वस्यासिद्धत्वेनासन्तत्वादयं स्वरोभवत्येव यत्तु वस्वादिषु दत्वं सिद्धमिति तत्तु सौदीर्घत्वे इति वाक्यशेषात् दीर्घविधावेव सुलोमेत्यादौ नञ्सुभ्यामिति भवति ॥ क्रत्वादयश्च ॥ क्रतुदृशीक । प्रतीक । प्रतूर्ति । हव्य । भव्य । भग । इति क्रत्वादयः ॥ आद्युदात्तं द्व्यच् ॥ बहुव्रीहावाद्युदात्तमिति । आद्युदात्तमेवेत्यर्थः । सोः किं अरथः । सुबाहुरिति । कुप्रत्ययान्तोबाहुशब्दोऽन्तोदात्तः । हिरण्यशब्द इति । कन्यनन्तोयम् । वीरवीर्यो ॥ वीरोरक्प्रत्ययान्तः । आद्युदात्तत्वंनेति । छन्दसिनेति ज्ञाप्यते इत्यर्थः तेन भाषायां वभत्येव तथा च छन्दसि वीर्यशब्दस्तित्स्वरेणान्तस्वरित इति भावः बिल्वभक्ष्यवीर्याणि छन्दसीति फिट्सूत्रन्त्वस्यैवानुवादकमिति बोद्धम् ॥ कूलतीर ॥ कूलादीन्युत्तरपदान्याद्युदात्तानिस्युः । सुषममिति । अधिसममित्यत्र तु न प्रतिपदोक्तातिष्ठद्गुसमासघटकस्यैव ग्रहणात् इति कश्चित् ॥ कंसमन्थ ॥ एतान्युत्तरपदानि द्विगावाद्युदात्तानीत्यर्थः द्विकंसादौ क्रमेण टिठन् ठक् अञ् ठञामध्यर्द्धेति लुक् । पाय्यं परिमाणविशेषः । द्विकाण्डमिति । अत्र प्रमाणेलोद्विगोरिति मात्रचोलुक् । कंसादीनि किं पञ्चपूली ॥ तत्पुरुषे शाला ॥ छात्रिशालमित्यादौ छात्र्यादयः शालायामित्यतः परत्वादयमेवस्वरो भवति । दृढशालमिति । विभाषासेनेति प्रतिपदोक्तनपुंसकत्वग्रहणमुत्तरार्थमिति हरदत्तः । सैाशमिकन्थमिति । सञ्ज्ञायां कन्थेति क्लीवत्वाच्चिहणकन्थमिति चिहणस्य कन्थेति तत्पुरुषः चिहण । मदुरमडुरकेतुल । पटत्कवैडालिकर्णी । कुक्कुट । चिक्कण । चित्कण । पुत्रचेलमिति चेलवत्तुच्छ इत्यर्थः खेटं तृणं कटुकमस्वादुकाण्डंशरः ॥ पललसूप ॥ मिश्रेसमासार्थे इत्यर्थः दाण्डायनस्थलमिति लिङ्गविशिष्टपरिभाषया दाण्डायनस्थलीत्यत्रापि राज्यशब्दोयगन्तोऽन्तोदात्तः । अव्ययस्वर इति । अव्ययपूर्वपदप्रकृतिस्वर इत्यर्थः । वर्णादिरिति । त एव तत्प्रत्ययान्ता इह वर्ण्यादयः वर्ण्यादिपाठाभावात् ॥ पुत्रः पुंभ्यः ॥ निषेधकोत्तरसूत्रादेवपुल्लिङ्गशब्दलाभेसिद्धे बहुवचनं स्पष्टार्थं । तद्विशेषाणाञ्चेति । चात्स्व

रूपस्यापि संबन्धिन इति स्त्रीसंबन्धिनः शालादय इत्यर्थः । भ्रातुः पुत्र इति । ऋतो विद्यायोनीति षष्ठ्या अलुक् भ्रातृपुत्र इति तु क्वाचित्कोऽपपाठः एवं होतुः पुत्रेऽपि एषु पुत्रस्वरप्रतिषेधे समासान्तोदात्तत्वम् ॥ चूर्णादीन्य ॥ चूर्ण । करिष करिप । शाकिन । शाकटाद्राक्षा । तूस्त । कप्टुम । दलप । चमसी । चक्कण । चक्कन । चौल इति चूर्णादिः ॥ षट्चकां ॥ काण्डस्यागर्हार्थञ्चीरस्यानुपमानार्थं पललसूपशाकानामभिश्रार्थं कूलस्यासञ्ज्ञार्थञ्चेलखेटेति सूत्रस्यकाण्डशब्दमादाय कूल सूदेति सूत्रस्यकूलपर्यन्ताः षट्काण्डादयः कुण्डशब्दो ऽत्रेति सादृश्येन वने वर्तते इत्यर्थः भाजनविशेषवाचिनः कुण्डशब्दस्य विना सादृश्येन वने वृत्त्यसम्भवादित्याशयः वनशब्दश्च समूहवाची प्रसिद्धत्वाचोदकवाची अन्ये तु समूहरूपवने ऽपि मुख्या एव कुण्डशब्दः पूर्वमते सादृश्यस्य दुरुपपादत्वात् वनविशेषणेन च भाजनवाचिनो दुर्गाकुण्डमित्यादौ विशिष्टाधारजलवाचिनश्च प्रसिद्धस्य निवृत्तिरित्याहुः उक्तञ्च कुण्डाद्युदात्तत्वे तत्समुदायग्रहणमिति अत्र भाष्ये तच्छब्देन पूर्वपदार्थः अपरे तु तत्समुदायेत्यस्य वनसमुदायेत्यर्थः तेन दर्भवनसमुदायो दर्भकुण्डशब्देनोच्यत इत्याहुः । मृत्कुण्डमिति । मृद्भाजनविशेष इत्यर्थः भगालवाचीति अत्र च व्याख्यानमेवशरणं । मध्योदात्ता इति लघावन्त इत्यनेनेति भावः ॥ शितेर्नित्या ॥ शितेः परं भसच्छब्दभिन्नं यन्नित्यमबहूच् उत्तरपदन्तद्बहुव्रीहौ प्रकृतिस्वरमित्यर्थः । दर्शनीयपाद इति । दर्शनीयशब्दो रितीत्युपोत्तमोदात्तः ॥ नित्या ॥ बहूच्किं शितिललाटः नित्येतिकिं शितिककुत् ककुदस्यावस्थायां लोपः अन्यत्र शितिककुद इत्येवेति नायं नित्याबहूच्कः ॥ गतिकारकोप ॥ इह शितेर्नित्याबहूच्बहुव्रीहावभसदिति पूर्वसूत्रस्थं बहुव्रीहिग्रहणं नानुवर्त्तते ऽस्वरितत्वात् किंतु व्यवहितमपि तत्पुरुषेशालायां नपुंसकमिति सूत्रस्थन्तत्पुरुषग्रहणमनुवर्त्तते तदाह तत्पुरुषे इति । प्रकारक इति । कुगतीति समासः लित्स्वरेणोत्तरपदमाद्युदात्तं । नृवाहसेति । नृन्वहत इति विग्रहः वहिधा इत्यादिना असुन् वसेर्णिदिति सूत्रात् णिदित्यनुवृत्तेरसुनो णित्त्वादुपधावृद्धिर्नित्स्वरेणोत्तरपदमाद्युदात्तं । इध्मप्रव्रश्चन इति । करणेल्युट् कर्मषष्ठ्यासमासः प्रव्रश्चने गतिप्रयुक्ते कृत्स्वरे कृते इध्मशब्देन समासे कारकप्रयुक्तः कृत्स्वरः प्रश्चनो लित्स्वरेणाद्युदात्तः उच्चैः कारमिति णमुल्विधावुच्चैरित्युपपद । ईषत्कर इति । ईषद्दुःसुष्विति खल् शेषेषष्ठीति तदन्तेन समासः कार्य इत्यर्थः इदङ्गत्यंशे अव्ययपूर्वपदप्रकृतिस्वरस्य बाधकं कृद्ग्रहणप्रत्याख्याने अन्वविन्दतेत्यादौ परत्वात्तिङ्ङिचेति निघाते कृते यद्यपीदं सावकाशं तथा ऽपि परत्वाद्बाधकं बोध्यं कारकोपपदांशे तु समासान्तोदात्तत्वापवादः कृद्ग्रहणं

स्पष्टार्थमिति क्रियायोगे गतिसञ्ज्ञाविधानात् क्रियानिरूपितस्यैवकारकत्वाच्च धात्वधिकारे सप्तमीनिर्दिष्टस्यैवोपपदत्वाच्च केवलधातोः प्रयोगाभावाच्च कृदन्तक्रियापदाक्षेपे सिद्धे इत्यर्थः तथा च वार्तिकं गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावादिति न च यत्क्रियायुक्ताः प्रादय इत्यत्र यस्य क्रियेति षष्ठीसमासे यस्य धातोर्वाच्याक्रियेत्यर्थात्तंप्रतीति वाक्यशेषेपि तच्छब्देन धातोरेवग्रहणे प्रत्यासत्त्या तस्यैवोत्तरपदत्वे प्रणीरित्यादावेवस्वरः स्यात् न तु प्रणायक इत्यादाविति कृन्मात्रसङ्ग्रहाय तदिति वाच्यं यत्क्रियेत्यत्र कर्मधारयस्यैवस्वीकारेण तं प्रतीत्यत्र वाक्यशेषे निरूपितरीत्या तस्या एव परामर्शेन क्रियारूपमर्थं प्रत्येवगतित्वात् तत्र गतिकारकोपपदेषु सर्वत्र विशेष्यभूतक्रियावाचकमुत्तरपदं न सम्भवतीति सामर्थ्यात्साधनादिविशेषणक्रियावाचकमुत्तरपदं गृह्यते इति सर्वत्रेष्टसिद्धिः । न च प्रभवनमित्यादौ केवलक्रियावाच्युत्तरपदसत्त्वेन सामर्थ्यं दुरुपपादं लिङ्गाद्यनन्वयि साध्यरूपार्थस्यैवक्रियाशब्देन ग्रहणात् पदमत्र शक्तमेव न परिभाषितं तेन कृता सुबुत्पत्तेः प्राक् समासे ऽपि न क्षतिः एवञ्च प्रशब्दस्य पचतितरामित्याद्यन्तेनसमासेऽयं स्वरोभवत्येवेति भाष्ये स्पष्टम् सूक्ष्मधियाम् । एके इति । अत्रार्थचबीजन्तु तथासति प्रपचतितरशब्दस्य घान्तत्वाभावात् तत आमभावे एकदेशादामितदन्तत्वेन पचतितरामित्यस्यैव प्रातिपदिकत्वे तत एव सुपि तदन्तस्यैकपदत्वाभावात्प्रशब्दस्वरः पृथक्श्रूयेत किंचाप्रपचतितरां देवदत्तेत्यत्रामएकान्तरमामन्त्रितमिति निषेधो न स्यात् तस्मादामन्तेनैवसमासः तत्र भाष्यप्रामाण्यादयं स्वरो भवत्येव एवं प्रपचतिदेश्यादावपि अत्र च नोपपदसमासो ऽतिङित्युक्तेः किंतूदात्तवतेति वार्तिकेन तत्र तिङेत्यस्य तिङ्घटितेनेत्यर्थः तदुदाहरणानाञ्च भाष्ये सहेति योगविभागेनापि साधनात् तत्पुरुषत्वतदभावौ वैकल्पिकत्वञ्च लक्ष्यानुसारेणेति न तिङिचोदात्तवतीति सूत्रस्यभाष्यविरोध, अन्ये इति । अत्रापि भाष्यविरोध एवार्थचबीजन्तिङन्तसमासेष्वयं स्वरोभवत्येव यथायोजातः पर्यभूषदित्यादौ नित्यंक्रीडेत्यत्र नित्यमिति योगं विभज्य लक्ष्यानुरोधेन क्वचित्तत्पुरुषत्वाङ्गीकारात् अत एवोदात्तवतेत्यस्य भाष्ये द्विःपाठः अत्र यच्छब्दयोगात्तिङन्तस्यानिघातः उदात्तवता गतिमताचेति तिङन्तस्य गतिसमासः अव्ययपूर्वप्रकृतिस्वरं बाधित्वोत्तरपदप्रकृतिस्वरेणाट्स्वरः शिष्यते यत्र तु तिङन्तोत्तरपदके ऽन्तोदात्तत्वमिष्यते यथा यत्रानरोदेवयन्तो युगानिवितन्वते इत्यादौ तत्र चिवकादित्वात्कल्प्यः अत्यायाहीत्यादौ यच्छब्दयोगाभावात्तिङ्ङतिङ इति निघाते आङ्। सहेति योगविभागात्सः उत्तर-

पदस्यादात्तशून्यत्वात् गतिशून्यत्वाच्च गतिप्रयुक्तसमासाभावात् तत्पुरुषत्वाभावेनायंस्वरः उदात्तस्वरितयोगिन एव प्रकृतिभावविधानादस्य तच्छून्यतयापि नायं स्वरः एवञ्चाव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः ततो ऽतिशब्देन गतिसमासे अनेनोत्तरपदप्रकृतिस्वरे आद्युदात्त एव शिष्यत इति दिक् । परे तु कृद्ग्रहणाभावे प्रभवनमित्यादौ क्रियायाविशेष्यत्वात्तत्रैव स्यात् न तु प्रणीरित्यादाविति कृद्ग्रहणं कर्त्तव्यं तदुक्तं भाष्ये अधिकार्थे कृद्ग्रहणं कर्त्तव्यमिति प्रपचतितरामित्यादौ त्वव्ययपूर्वपदप्रकृतिस्वरात्परत्वेन तिङ्ङ्चोदात्तवतीत्यस्य प्रवृत्तावेतत्प्रवृत्तौ न फलं एतत्प्रवृत्त्यापि तत्रान्तोदात्तमेव लभ्यते तिङ्ङ्चोदात्तवतीति सूत्रे एतदर्थमेवभाष्ये तिङ्ग्रहणं प्रत्याख्यातं अतिप्रसङ्गस्तु प्राग्वदेवपरिहार्यः अत एवात्र सूत्रे तस्मात्कृद्ग्रहणं न कर्तव्यमिति नोक्तमित्याहुः । वनस्पतिमिति । वनशब्दो नब्विषयत्वादाद्युदात्तः पतिशब्दश्च प्रत्ययस्वरेण तथा निपात्यत इति अन्यथा अतिप्रत्ययान्तत्वादन्तोदात्तः स्यादिति भावः एवमूप्रत्ययान्ततनूशब्दोप्याद्युदात्तोनिपात्यते नपाच्छब्दोपि नभ्राडिति सूत्रे आद्युदात्तो निपात्यते वनस्पत्यादयः षष्ठीतत्पुरुषाः तनूनपादित्यत्र तन्वानपादिति विग्रहः । नराशंसमिति । नराशंसशब्दावप्घञन्तत्वादाद्युदात्तौ नरा एवंशंसन्ति स नराशंसः । निपातनादिति । अन्येषामपीति दीर्घ इत्यन्ये । शुनः शेप इति । श्वन्शेपशब्दौ प्रातिपदिकस्वरनिपातस्वरान्यतरं स्वाङ्गस्वराभ्यामन्तोदात्ताद्युदात्तौ शण्डामर्कौ घञन्तत्वादाद्युदात्तौ द्वन्द्वः अन्येषामपीति दीर्घः । तृष्णावरूत्री तृष्णाशब्दो निष्ठा चङ्क्रजित्याद्युदात्तः यसितस्कभितेत्यत्र वरूत्रीशब्द आद्युदात्तो निपात्यते पञ्चाविश्ववयसौ अन्तोदात्तौ । मर्मृत्युः । अन्तोदात्तो वृत् । इन्द्रावरुणाविति । इन्द्रोऽरनन्तआद्युदात्तः वरुणोप्युनन्तत्वात्तथैव नोत्तरपदे इन्द्राग्निभ्यामिति अग्निशब्दो ऽन्तोदत्तः । सोमारुद्राविति । सोम आद्युदात्तः मन्नन्तत्वाद्रुद्रोऽरगन्तत्वादन्तोदात्तः । रुद्रसोमाविति क्वचित्कोपपाठः शुक्रामन्थिनाविति । शुक्रोरगन्तत्वान्मन्थिन्मत्वर्थीये निनान्तोदात्तामाभूदिति तथासति सूर्याचन्द्रमसावित्यादाविदं न स्यात् सूर्यशब्दो यदन्तत्वादाद्युदात्तः चन्द्रमस्शब्दो दासीभारादित्वान्मध्योदात्तः । विषयविभागार्थमिति । न च पृथिव्यादयो विधेर्विषयो ऽन्यत्र प्रतिषेध इति विषयविभागः सिद्ध इति वाच्यं पूर्वसूत्रे पृथिव्यादिग्रहणेन सिद्धे एतत्सूत्रवैयर्थ्यापत्तेः अयमेवपृथिव्यादिपर्युदासो ज्ञापयति स्वरोद्देश्यकेविधौ व्यञ्जनमविद्यमानवदिति तेन अग्निमीड इत्यादौ उदात्तादनुदात्तस्येति स्वरितः सिद्ध्यति ॥ थाथघञ् ॥ कृत्स्वरापवादोयं प्रभृथेष्वन् । आवसथ इति । उपसर्गवसेरित्यथः उपपदोदाहरणमेतत्

प्रभेदेघञ् । पुरुष्विति । तृतीयातत्पुरुषे तु तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वर-एव स्तुतो निष्ठाचद्व्यजनादित्याद्युदात्तः त्तयः त्तयोनिवासे इत्याद्युदात्तः निश्चय इत्यत्रायं स्वरो नेष्यते किंतु कृत्स्वरएवेति ग्रहवृद्द इति सूत्रे भाष्यम् । सुस्तुतमिति । अव्ययपूर्वपदप्रकृतिस्वरोत्र कृष्टपच्या इत्यत्राप्ययं स्वर इष्यत इति । राजसूयेति सूत्रे भाष्ये स्थितं अत्रोपपदग्रहणानुवृत्तिः समासनिर्द्देशा-त्कृतानात्यन्तं फलवती गतिकारकाभ्यांसिद्धत्वात् ॥ सूपमानात्क्तः ॥ गति-स्वरापवादोयं अत्रापि गतिकारकोपपादादित्येव नेह सुस्तुतं शशप्लुत इति शश इव प्लुत इत्यर्थः ॥ सञ्ज्ञायामना ॥ अयमपि गतिस्वरापवादः कुद्दा-लखातमित्यादो तृतीयाकर्मणीति प्राप्तं आचितं आस्थापितं परिगृहीतं निरुक्तं प्रतिपन्नं उपस्थितं उपश्लिष्टं अगविसंहितावृत् । गोरन्यस्य सञ्ज्ञायां संहिताशब्दोन्तोदात्तः ॥ कारकाद्दत्त ॥ सञ्ज्ञायामनाचितादीनामित्यस्य नियमोयम् । देवदत्त इति । देवाएनं देयासुरित्यर्थः विष्णुश्रुतः कारकात्किं सम्भूत इति कारकादित्यस्याभावे त्तितयाधिकारात् गतेरपि नियमः स्यात् सम्भूयादिति सम्भूत इति भावः संश्रुतोरामायण इति पाठस्तु अयुक्तः आशिषो ऽप्रतीतेः । माभूदिति । तेन संश्रुतो विश्रुत इत्यत्र भवत्येवान्तोदा-त्तत्वं आशिषिकिं अनाशिषिनियमोमाभूत् ततश्चेहनस्यात् देवैःखाता देव-खाता । इत्येवमन्त्रेति । इत्येवमप्यत्रेत्यर्थः अत्र कारकादिति योगं विभज्य दूरादागत इत्यत्रान्तोदात्तत्वं विधेयं गतिरनन्तर इति बाधनार्थमित्युक्तं कृतं भवतीति भावे यदा प्रलपितादयस्तदा थाथादिस्वरेणैवसिद्धम् ॥ अनो भाव ॥ कृत्स्वरापवादोयं । पयःपानमिति । कर्मणिच येनेति कर्मण्युपपदे भावे-ल्युट् राजभोजना इति । बाहुलकात्कर्मणिल्युट् । कृत्स्वरापवाद इति । क्कीते तु तृतीयाकर्मणीत्यस्येत्याहुः । व्याख्यानादिषु करणेल्युट् याजकादयो याजका-दिभिश्चेति सूत्रगणपठिताः । अध्ययनपुण्यमिति । सुप्सुपेति समासः पुण्यश ब्दस्याव्युत्पन्नत्वे आह तत्पुरुषेतुल्येति । नव्विषयस्येत्याद्युदात्तः पुण्यशब्दः व्युत्पन्नत्वे तु यतोनाव इत्याद्युदात्तः तदा कृत्स्वरापवादोयं उक्तसमास-स्याःप्रतिपदोक्तत्वादेतदपवादत्वमेवयुक्तं सप्तमीति योगविभागस्तु भाष्या-नारूढः तत्पुरुषे इत्यस्यात्रासंबन्ध एव सामर्थ्यात् वेदेन पुण्यं वेदपुण्यमिति व्युत्पत्तो कृत्स्वरः अव्युत्पत्तो पूर्वपदप्रकृतिस्वरः वेदशब्दो ऽत्र वृषादित्वा-दाद्युदात्तः ॥ ऊनार्थकलहम् ॥ तृतीयान्तात्पदान्येतान्यन्तोदात्तानीत्यर्थः तदर्थानामिति स्पष्टार्थमिति भावः न च धान्यायायन्धान्यार्थइत्येतद्व्यावर्त्यम् । अर्थं इति । पूर्वपदप्रकृतिस्वरस्य बाधकस्य सत्वात् इदं तृतीयासमासे सावकाशं न च समस्य सर्वानुदात्तत्वात्प्रकृतिस्वराभावे समार्थमित्येतद्व्यावर्त्यन्तद-

भावे समासस्वरेणान्तोदात्तस्येष्यमाणत्वादित्याहुः परेत्वञो नशब्देन तदर्थग्रहणेन भाष्यानुग्रहः मापविकल इत्यस्यान्तोदात्तत्वे च न दृढं मानं अत्र तृतीयाया इत्यनेन प्रतिपदोक्तपरिभाषाप्रवृत्त्यभावो ज्ञाप्यते तेन वाचाकृतः कलह इत्याद्यर्थके वाक्कलहादावन्तोदात्तत्वं भवत्येव अर्थेतित्वत्र स्वरूपग्रहणमेवेत्याहुः । ऊनेत्यादिकिं मासंपूर्वः ॥ मिश्रञ्च ॥ तृतीयान्तादुत्तरपदं अनुपसर्गमिश्रमन्तोदात्तमित्यर्थः । पणबन्धेनेति । यद्भिवन्त इदंमेकार्यं कुयुस्तदाऽहमपि भवतामुपकारं करिष्यामीत्येवं रूपेणेत्यर्थः । मिश्रग्रहणे इति । अन्यथा प्रतिपदोक्तपरिभाषया मिश्रश्लक्ष्णैरिति समासस्यैवग्रहणे तद्वैयर्थ्यं स्पष्टमेव । अकार्णवेष्टकिकमिति । क्रमेणसम्पादिनीति ठञ् च्छेदादिभ्योनित्यमिति ठक् तस्मैहितमिति छः तस्मैप्रभवतीति ठक् । विगार्द्दभेति । तदर्हतीति ठक् । गार्द्दभरथिकादय इति । नचास्य गर्द्दभरथार्हणकर्तृभिन्न इत्यर्थः तत्रार्थेत अर्हत्वाभावस्यापि बोधनादस्त्येवगुणप्रतिषेधः यथाघटभिन्न इत्युक्ते घटत्वाभाववानिति प्रतीयत इति वाच्यं नगर्द्दभरथमर्हतीति गर्द्दभरथस्य नञर्थाभ्यां युगपदेकार्थीभावविवक्षायां परत्वात्तद्धिते एकदेशद्वारकसामर्थ्यमाश्रित्य तद्धितान्तेन समासे आरोपितगर्द्दभरथमर्हतीत्यर्थके ऽतिप्रसङ्गवारणार्थत्वात् न च प्रत्ययार्थोपसर्जनगर्द्दभरथस्य नञर्थापेक्षत्वेनासामर्थ्यात्तस्तद्धितोदुर्लभः अस्मादेव गुणप्रतिषेधात् ज्ञापकान्नञर्थसापेक्षादपि तद्धितोत्पत्तिस्वीकारात् स्पष्टञ्चेदं ननञ्पूर्वात्तत्पुरुषादिति सूत्रे भाष्ये यत्तु कैयटेन एतदन्तोदात्तत्वविधानमेवैतदर्थज्ञापकमित्युक्तं तन्न वत्सेभ्योनहित इत्यर्थे प्रधानस्य नञर्थापेक्षत्वेप्युपसर्जनवत्सानां तदर्थानपेक्षत्वेन तद्धितोत्पत्तिसाम्राज्ये सूत्रसार्थक्यात् किंचेदृशेऽर्थेपि हितस्य धर्मिण एव प्रत्ययार्थतया तत्र नञर्थान्वये ऽत्यन्ताभावार्थकत्वे हिताभाव एव प्रतीयते न तु हितत्वरूपगुणप्रतिषेधः भेदार्थकत्वे तु अस्मद्रीत्यैवगुणप्रतिषेधार्थत्वमुपपाद्यम् । एवञ्च नञर्थानपेक्ष्यवत्सशब्दात्पूर्वं प्रत्यये पश्चान्नञ्समासेपि तदुदाहरणं सुलभं किंच त्वदुक्तरीत्या प्रत्ययार्थस्य सापेक्षत्वेपि प्रकृत्यर्थस्य तत्वाभावात्सापेक्षादपीति भाष्योक्तज्ञाप्यासिद्धिः वत्से युगपदुभयान्वयविवक्षेति न वक्तुं युक्तं तथाहि सति वत्सभिन्नाहित इत्येवप्रतीत्या गुणप्रतिषेधानवगमादित्याहुः अगर्द्दभरथशब्दात्प्रत्यये तु नञ्पूर्वपदकतद्धितान्तोत्तरपदकसमासाभावात्स्वरस्याप्राप्तिरेवेति न तद्व्यावृत्तये तत् । अवोढेति । अर्हेक्तत्यतृच इति तृच् अत्र नञ्स्वर एव । ययतोश्चा ॥ ययतोः किम् । अपाणिनीयम् । नञः किं विपाश्या । तद्धिते किमिति अत्र तद्धिते इति नानुवर्तते इति मतान्तरं अत्वसन्तस्येति सूत्रे आकरे ध्वनितं तत्र हि पठति तद-

नुबन्धकपरिभाषया ऽस्याप्रवृत्तिरित्युक्तं । दन्त्यादन्यद्विति । उक्तरीत्या आरोपित दन्तभवमित्यर्थो ऽस्य बोध्यः उदाहरणेतु दन्तभवभिन्नमिति दन्तभवत्वाभाववदिति यावत् । अच्का ॥ नञापरिमिति गुणप्रतिषेधार्थाच्चञ इत्यर्थः । दीक्षित इति । अस्य हि शास्त्रनिषिद्धः पाको न तु तत्राशक्तोयं अन्यायं पचादित्यस्यारोपितपाककर्तेत्यर्थः पूर्ववत् उत्तरकृत्योकादिसाहचर्याद्त्राच्कौकृतावेव कृद्ग्रहणादेव गतिकारकपूर्वत्वे ऽपि भवति अप्रपच इति नञः परावित्ति गुणप्रतिषेधार्थाद्दित्येवपक्ष नेति केचित्तु पक्तुं समर्थोपि नपचतीत्येवमाक्रुश्यत इत्याहुः अत्राच्कावित्ति वृत्त्यनुरोधादनुवर्तितं नवेति सूत्रभाष्ये तु अत्राच्काविति नानुवर्तते त्रिभाषातृन्नन्नेत्यपेक्षया आक्रोशे इदमेव पूर्वविप्रतिषेधेन भवतीति स्थितं सञ्ज्ञायामित्युत्तरसूत्रे गुणप्रतिषेध इति नानुवर्तते इति नात्र पक्षे तद्वैयर्थ्यं । अदेवदत्त इति । देवदत्तः सन्यस्तत्कार्यं न करोति स एव माक्रुश्यते ॥ कृत्योकेष्णु ॥ अत्र गुणप्रतिषेध इति संबध्यते । इकारादेरिति । इदं खिष्णुज्विधावाकरेस्पष्टं चारुसाधुयौधिक अनङ्गमेजयवदान्य अनकस्मात् वर्तमानवर्द्धमानत्वरमाणप्रियमाणरोचमानाः सञ्ज्ञायां प्रीयमाणक्रीयमाणशोभमाना अपि क्वचित्पठ्यन्ते विकारसदृशेव्यस्तसमासे गृहपतिकराजान्योरिति गणसूत्रं छन्दस्येवैतौ चावादीत्यर्थः । विभाषातृन्नन्नतीक्ष्णशु ॥ नञः पराण्येतान्यन्तोदात्तानीत्यर्थः गुणप्रतिषेध इत्येव पक्षेव्ययेति एतत्सूत्रं यावत् तत्पुरुषेशालायामिति सूत्रस्यतत्पुरुषपदानुवृत्तेरिति भावः वृत्तौचेदं स्पष्टम् ॥ बहुव्रीहाविदमे ॥ अनयोरिति क्रियागणनवृत्त्योः प्रथमशब्दपूरणप्रत्ययान्तयोरुत्तरपदयोरित्यर्थः इदं प्रथममस्येति गमनमागमनं वेति शेषः । तृतीयेतीति । एवञ्च तृतीयापूर्वपदप्रकृतिस्वरोत्रेति भावः इदं पदमञ्जर्यां स्पष्टं केचित्तु तृतीयेत्यत्र योगविभागस्य भाष्ये ऽनुक्तत्वात् सुप्सुपेति समासे ऽन्तोदात्तत्वमेव अयमिवप्रथम इदं प्रथमः स इत्युदाहर्तुमुचितं प्राथम्यमेवसाधारणोधर्म इत्याहुः अयं प्रथम इति देवदत्तादिः अयं प्रथम एषामिति अयं पाकादिः प्रधानं येषामित्यर्थः उत्तरपदस्य कार्यित्वादिति समासान्तस्तु समासावयव एवेति भावः । द्विस्तनाचतुस्तनेति । द्विस्तनीत्यादौ तु ङीषि सतिशिष्टत्वादन्तोदात्तत्वं सिद्धमिति तन्नादाहृतमित्याहुः ॥ विभाषाछन्दसि । पूर्वसूत्रोक्तस्य विभाषा पक्षे पूर्वपदप्रकृतिस्वरः । सञ्ज्ञामिति । एतयोरुत्तरपदयोरन्त उदात्तो बहुव्रीहौ सञ्ज्ञायां । विश्वामित्र इति । मित्रेचर्षाविति दीर्घः अत्र बहुव्रीहौ विश्वंसञ्ज्ञायामित्येवभवति अनृषौ तु विश्वमित्रे इदमेवपरत्वादित्युक्तं ॥ व्यवायिनोन्तर ॥ उदाहरणप्रत्युदाहरणयोरन्तरशब्दस्य परनिपातो ऽस्मादेवज्ञापकात्

आत्मान्तर इति आत्मास्वभावो ऽन्यीयस्येत्यर्थः अन्यस्वभाव इत्यर्थ इति युक्तः पाठः अन्तरंकिं वस्त्व्यवधायकः ॥ सुखंस्वाङ्गः ॥ बहुव्रीहावुत्तरपदभूतमद्रवमित्यादिलक्षणलक्षितस्वाङ्गवाचिमुखमन्तोदात्तमित्यर्थः पूर्वपदेति उच्चैरादीनि पूर्वपदान्यन्तोदात्तान्यत्र उपमानलक्षण इति निष्ठोपमानादिन्युक्तसूत्रविहितः । बाध्यत इति । पूर्वविप्रतिषेधादिति भावः वृत्तौ स्पष्टमेतत् अत्राव्ययशब्देनाव्ययीभावस्यापि ग्रहणमिति अव्ययीभावश्चेति सूत्रस्यभाष्यस्वरसः । प्रक्षालितेति । कृद्ग्रहणपरिभाषया ऽन्य निष्ठान्तत्वं तस्यापि वैकल्पिकत्वात्तदभावे आह । पूर्वपदप्रकृतिस्वरत्वेनेति । सिंहमुखे पक्षे पूर्वपदप्रकृतिस्वरः । जातिकाल ॥ जात्यादिभ्यः परङ्क्तान्तं बहुव्रीहावन्तोदात्तं कृतादीन्वर्जयित्वा नचेद्वस्त्रार्थात्परं क्तान्तभवति । मासजात इति । मासोजातोतस्येति विग्रहः । कालाः परिमाणिनेति तत्पुरुषेतु सिद्धमेवान्तोदात्तत्वम् । पुत्रजात इति पुत्रशब्दोन्तोदात्तः । वस्त्रशब्दस्त्रन्प्रत्ययान्तत्वादाद्युदात्तः । नञ्विषयत्वात्कुण्डमाद्युदात्तम् ॥ वाजाते । पक्षे पूर्वपदप्रकृतिस्वरः दन्तशब्दः स्वाङ्गत्वादाद्युदात्तः । मासोग्रामादित्वात्तथा सुख । दुःख । कृच्छ्र । अस्र । अलीक । प्रतीप । करुणा । कृपण । तृप्र । सोढ एते सुखादय इति हरदत्तः । सुखदुःखगहनकृच्छ्रास्तृप्रालीकप्रतीपकरुणाः कृपणसोढ इमे सुखादयोदशगणे पठिता इति श्लोकगणकारः गणरत्ने तु अस्य शब्दो पीह पठ्यत इत्युक्तं पूर्वसूत्रे जातातिरिक्तान्तमुदाहर्तुमुचितम् । नञ्सुभ्याम् ॥ उत्तरपदमिति । समासान्तानां समासावयवत्वे ऽपि कपूर्वमित्यस्मादेवज्ञापकादुत्तरपदाधिकारेप्यत्र सूत्रे समासस्यैवकार्यित्वं अन्यत्रोत्तरपदस्यैवकार्यित्वं समासान्तरहितस्येति स्पष्टञ्चेदमन्त इति सूत्रे भाष्ये । कपिपूर्वं । नञ्सुभ्यां परं यदुत्तरपदं तस्य कपिपरे पूर्वमुदात्तमित्यर्थः । तदन्तस्य समासस्येत्यर्थो वा पूर्वसूत्रापवादः । ह्रस्वान्ते ॥ नञ्सुभ्यां कपि इति वर्त्तते । कपिपूर्वमित्यस्यापवादः । ह्रस्वान्तोत्तरपदसमासे नञ्सुभ्यां परस्य कपिपूर्वस्योत्तरपदस्यान्त्यात्पूर्व उदात्त इति सूत्रार्थः । पूर्वग्रहणमिति । पूर्वग्रहणे ऽनुवर्त्तमाने पुनस्तद्ग्रहणमित्यर्थः एतदर्थमेव पूर्वसूत्रे पूर्वग्रहणं अन्यथा कपीत्येववदेदिति भावः । अज्ञक इति । अन्त्यात्पूर्व उदात्तभावीनास्तीति एतदभावे कपिपूर्वमिति प्राप्तमनेन नियमेन व्यावर्त्यतेतेन नञ्सुभ्यामिति कप एवोदात्तत्वमिति भावः । बहोर्नञ्वत् ॥ ननु लाघवाद्बहुः सुवदित्येवास्तु इत्यत आह बहुमित्र इति । नञोजरमित्रेत्यस्य अतिदेशेन प्रवृत्त्ययं तथोक्तमिति भावः । बहुमाने पूर्वपदप्रकृतिस्वरः बहुः फिट्स्वरेणान्तोदात्तः । नगुणादयो । अत्रयववाचिनोगुणादयो बहोः परा इत्यर्थः । बहोर्नञ्वदिति प्राप्तिः गुण

आमन्त्रणेचुरादेः पचाद्यच् नान्तोदात्ता इति नञ्वद्भावप्राप्तस्वरोपलक्षणमेतत् तेन बहुगुणकाइत्यादौ कपिपूर्वं ह्रस्वान्तेत्यात्पूर्वमिति बोद्धम् । उपसर्गात्स्वाङ्गन्ध्र । प्रादेरुत्तरस्वाङ्गवाचिपर्शुशब्दभिन्नोत्तरपदकसमासध्रुवार्थबोधके यदुत्तरपदन्तदन्तोदात्तं स्याद्बहुव्रीहावित्यर्थः । यद्वा ध्रुवार्थबोधकसमासघटकमित्यर्थकं स्वाङ्गविशेषणमेव उद्वाहुररिति न हि बाहोर्नित्यमूर्ध्वदिगवस्थानमिति भावः । तत्पुरुषेत्वव्ययपूर्वपदप्रकृतिस्वर एव पर्शुः पार्श्वं प्रवण इति । बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरः प्राप्रः प्रनिरन्त इति णत्वं परिवने परिप्रत्युपापेति प्राप्नम् । उपसर्गात्किं शरवणेदेशः बहुव्रीहावित्यस्य निवृत्त्यर्थं समासग्रहणम् । अन्तः अन्तर्वणमित्यव्ययीभावेप्येतदेव । ननिविभ्याम् ॥ निविभ्यामुत्तरोन्तशब्दो नान्तोदात्त इत्यर्थः । परेरभितोभाविम ॥ अभित उभयतो भवत्यवश्यमिति सुप्यजाताविति णिनिः नद्यादौ कूलादुभयतो भवति । परिकूलमिति । बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा अत्र परिप्रत्युपेति कूलतीरेति वा प्राप्नम् । प्राद्स्वाङ्गस ॥ प्रादुत्तरपदं अस्वाङ्गवाचिसञ्ज्ञायामन्तोदात्तं समासमात्रे इत्यर्थः । प्रपहादयः प्रपहादयो वा प्रादिसमासाबहुव्रीहयो वा । निरुदकादिराकृतिगणः अभिमुखाशालेति । प्रादिसमासः बहुव्रीहिर्वा । अपाच्च ॥ मुखमिति वर्त्तते । अपमुखमिति । अव्ययीभावे ऽपि परिप्रत्युपापेति प्राप्तम् । एतदेवचेति । अन्यथा चश्चित्वादेवसिद्धं स्यात् इति भावः सीरनामेति नामग्रहणं सीरेणैवसंबध्यते नस्फिगादिभिः । स्फिगपूतकुक्षीणां पृथग्ग्रहणात् हरदत्तप्रमाण्या द्वेपां पर्यायत्वमवगम्यते । व्याख्यानादेवास्य सीरग्रहणेन संबन्ध इति तत्वम् । स्फिगपूतकुक्षिग्रहणमिति । वीणाग्रहणसहितः पाठो ऽपपाठः । प्रादिसमास इति । अव्ययीभावे तु समासान्तोदात्तत्वे नापि सिद्धम् । पुरुषश्चान्वा । अन्वादिष्टोऽप्रधानशिष्टः यथाभिक्षामटेत्यादौ ॥ यद्वा कस्मिंश्चित्कथिते योन्यः पश्चात्कथ्यते सोन्वादिष्टः । अतेर । अकृदन्तम् । पदशब्दश्चेति । अयञ्चार्थोवृत्तौ भाष्यात्तु अतेरुत्तरपदमन्तोदात्तं कृदन्तं पदशब्दञ्च वर्जयित्वेत्यर्थः प्रतीयते । नेरनि ॥ निशब्दादुत्तरपदमन्तोदात्त स्यादनिधानेर्थे । निर्मूलमिति । निर्गतं मूलमस्येति निर्गतं मूलमिति वार्थः । अव्ययीभावे तु समासान्तोदात्तत्वेनैवसिद्धम् । निदण्ड इति निशब्दोत्र निधानार्थं ब्रवीति । प्रादयो हि वृत्तिविषये सक्रियं साधनमाहुः । अनित्यत्वादिति । अश्वादिषु राजन्शब्दपाठ एवात्र ज्ञापकोवाध्यः अंशुराजन् उष्ट्रखेटक अजिर आर्द्रा ॥ श्रवणः कृत्तिका । अर्घ । पुरवृत् उपाद्ध । गौर । तैष । लेटलोट । जिह्वाकृष्णकन्यागुधः कल्प । पाद । वृत् उपगौर इति ॥ अव्यय-

पूर्वपदस्वरः बहुव्रीहावप्येवम् । सोरव । सोरुत्तरपदमन्तोदात्तं निन्दायां तत्पुरुषे इत्यर्थः । पूजायामेवेति । एवञ्च कर्मप्रवचनीयत्वेन गतित्वाभावात्थाथादिस्वरोऽत्र नास्ति निन्देति । अनर्थे उपस्थितेयः सुखायमानश्चास्ते तं प्रतीदं वाक्यमसूयया प्रयुज्यते । कुब्राह्मण इति । नञ्कुनिपातानामितीपदर्थं चरितार्थम् । विभाषोत्पु । तत्पुरुषे उत्पुच्छशब्दे यदुत्तरपदन्तदन्तोदात्तं वेत्यर्थः । उत्क्रान्तः पुच्छादिति । अत्र अव्ययपूर्वपदप्रकृतिस्वरः प्राप्तः यदाचिति । केचित्तु अस्य लाक्षणिकत्वादत्र न ग्रहणम् । किंचायामुत्पुच्छो न तत्पुरुषः किंतु तदवयवकः नापि तत्घटकः पुच्छशब्द उत्तरपदमित्याहुः । मूर्धन्वित्यकृतेति । केचित्तु अत एव बहुव्रीहिग्रहणं चरितार्थं अन्यथा मूर्द्धस्वित्येववदेत् बहुव्रीहिभिन्नञ्च समासान्तविरहादेववारयिष्यते । न च द्विदन्त इति बहुव्रीहौ वयोवाचकत्वाभावाद्दत्रादेशाभावे शसादौ पद्वितिददादेशे प्रवृत्त्यर्थं बहुव्रीहिग्रहणस्यावश्यकत्वेन समासान्तनिर्देशे गौरवम् । किं च समासान्तनिर्देशेऽत्र प्रवृत्तिर्न सुलभा । कृतसमासान्तसाहचर्येण दत्रादेशस्यैवग्रहणापत्तेः । अत एव द्वयोर्दन्ता इति विगृह्यद्विदतः पश्येत्यादौ षष्ठीतत्पुरुषेन प्रवृत्तिरिति वाच्यम् । यथान्यासे ऽहि पूर्वोत्तरसाहचर्येण विभक्त्यनिमित्तददादेशस्यैवग्रहणात् । शसादिनिमित्तकस्य बहिरङ्गत्वेनासिद्धत्वाच्च भाष्योक्तप्रकृत्यन्तरत्वपक्षेऽत्र तदप्राप्तेश्च एवञ्च बहुव्रीहिग्रहणमपि समासान्तानित्यत्वे ज्ञापकमित्याहुः । बहुव्रीहिकार्यत्वादिति । अस्य स्वरस्येति शेषः । तदेकदेशत्वाच्चेति । समासान्तस्येति शेषः समासान्तोदात्तत्वम् । एतत्सूत्रविहितम् । पक्षे भवत्येवेति । अत्र च सूत्रे समासस्यैवकार्यित्वमिति सिद्धान्तः सक्थ्यञ्चा । बहुव्रीहौ सक्थीति षजन्तः सक्थ्यशब्दोऽन्तोदात्तो वास्यात् कशब्दन्तात्परश्चेन्नभवतीत्यर्थः । चित्वान्नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोयम् । नञ्दुःसुभ्य इत्यजन्तस्तु न गृह्यते व्याख्यानात् इत्याहुः । पक्षे पूर्वपदप्रकृतिस्वरः शुक्लगौरयोराद्दिरिति गौरः पर्यायेणाद्यन्तोदात्तः । परादिश्छन्दसि । इदञ्च समासमात्रे । परादिश्चेत्यस्योदाहरणम् । उरुक्षया इति । उरूणां बहूनाङ्क्षयान्वित्यर्थः । क्षयशब्दः क्षयोनिवास इत्याद्युदात्तः समासस्येत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तत्थाथादिस्वरेण बाधितमतो बाहुलकेनोत्तरपदाद्युदात्तत्वं इति वेदभाष्ये स्थितम् । इदञ्च क्षिनिवासगत्योरित्यतो बाहुलकादधिकरणे एरजन्तः क्षयशब्द इत्यभिप्रायेण यदि तु घान्तः क्षयशब्दस्तदाथाथादिस्वराप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैवेदं सिद्धं अस्योदाहरणन्तु चोदयित्रीसूनृतानामिति सुपूर्वात् ऊनयतेः क्विप् सुतरामूनयस्य प्रियमिति सून् प्रियन्तच्च

तद्वृत्तस्चेति सूत्रं अयस्मयादीति भत्वान्नलोपेन। परान्तोदाहरणं मुष्टिहत्ययेति। मुष्ट्याहननं मुष्टिहत्या। हनस्तचेति क्यप्। कृदुत्तरपदप्रकृतिस्वरोत्र प्राप्तः त्रिचक्रे बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे प्राप्ते परान्तोदात्तः पूर्वान्तत्वे विश्वायुरिति विश्वमायुर्यस्मिन्यने इति बहुव्रीहिरयम्। विश्वशब्दः क्वनन्तत्वादाद्युदात्तस्तस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं प्राप्तं व्यत्ययो बहुलमिति अनेनैवसिद्धे परादिरिति सूत्रन्त्रिचक्रादीनाञ्छदस्यन्तोदात्तत्वमिति वार्तिकं च न कार्यमित्यर्थः। यद्वा वाग्रहणे नुवर्त्तमाने। बहुलग्रहणमेतदर्थलाभार्थं कृतमित्यर्थः। यतोव्यत्ययो बहुलपदार्थ इति भावः बहुलग्रहणादेवपुरः सो अस्तु इत्यादौ शिष्टस्वराप्रवृत्तिः। अस्यन्वन्तं यदनस्या विभर्त्ति इत्यत्र भी ह्रि इत्यस्य च स्वरस्याप्रवृत्तिरित्याद्यूह्यम्॥ इति समासस्वराः॥

पचति गोत्रमिति। गोत्रं स्वकुलं पीडयतीत्यर्थः। एवं हि कुत्साभवति पचतिपचति गोत्रमिति। अनेकार्थत्वात्कारोत्यर्थे पचिः विवाहादौ गोत्रं पुनःपुनः सुखाकरोतीत्यर्थः। पाठविशेषणमिति। योगविभागः कार्यः। कुत्सनाभीक्ष्ण्ययोरिति गोत्रादिनीति परिभाषेयं यानि कुत्सानाभीक्ष्ण्यविषयाणि तान्येवात्र शास्त्रेगोत्रादीनित्यर्थः यत्र गोत्रादिपदघटितवाक्येन कस्यचित्कुत्सावोध्यते क्रियागतमाभीक्ष्ण्यं वातानीति यावत् अन्यत्रापीति च न चिदित्यादौ गोत्रब्रुवप्रवचनप्रयजनप्रहसनप्रकथनप्रत्यायनविचक्षणप्रचक्षणस्वध्याय अवरक्षणयवनप्रजनभूयिष्ठवानाकनामेत्येतद्वा निहन्यते इत्यर्थोस्य वृत्। तिङः किं कुत्सितङ्गोत्रम्। खनतीति गोत्रं समेत्य कूपङ्खनतीत्यर्थः तिङ्तिङः पदस्य पदात् अनुदात्तं सर्वमपादादावित्यधिकारात्। अत्र प्रकरणे निहन्यते सर्वानुदात्तं क्रियते इत्यर्थः। यथात्र सर्वस्यानुदात्तता तथा निरूपितं युष्मद्प्रकरणे। उदात्तस्वरितगुणविशिष्टमेवनिहन्यते नान्यदिति स्वरितोवानुदात्त इति सूत्रस्यभाष्यस्वरसः अतिङ्इति किं पचति भवति पाके भवतीत्यर्थः। वस्तुतो ऽतिङ्ग्रहणं व्यर्थं समानवाक्याधिकारस्य वार्त्तिकोक्तस्य वश्यकत्वात्। एकतिङ्हि तत्र वाक्यमिति भाष्ये स्पष्टम्। अपादादौकिम्। तन्त्वावाजेषु वाजिनं वाजयामः शतक्रतो। निपातैर्यद्यदि। यदादियत्रान्तानां द्वन्द्वे तृतीयायाः सौत्रोलुक् न तु युक्त शब्देन समासः। निपातैरिति विशेषणस्यानन्वयापतेः। यदादयो निपातत्वादाद्युदात्ताः सर्वनाम्नोयच्छब्दस्य तु न ग्रहणम्। यत्र यद्योः पृथग्ग्रहणात्। यद्यदार्थे च हेतौ च विचार्यदिचेच्चणः। हन्तहर्षे नुकम्पायां वाक्यारम्भविषादयोः। कच्चित्प्रश्ने निषेधे च प्रशंसायां क्वचित्स्मृतः नेन्निषेधे। अत्रेत्याधारे हन्तकरोति। हन्ताहं पृथिवीमिमां निधानीहवेहवेत्यादेर्निघातश्छान्दसः।

एतेन हन्तोनुक्ति मासस इत्यादिव्याख्यातम् । हन्तो इत्यखण्डो वा निपातो बोध्यः । तथैवपदकारैः पाठात् नेदेवमायुनजचत्र देवाः युनजन्निति युजेर्लेटि रूपम् । अन्यश्चेन्माभिगच्छति अत्र त्वन्वाविच्छिन्ने च्छन्दस्य पदकाले पाठात् निपातसमुदायाविमोचण् । इति चेदर्थेणित् । अन्यत्रत्वणित् । इन्द्रश्च मृगयातिनः इन्द्रश्चेदस्मान्सुखयेदित्यर्थः । कच्चिदिति । निपातसमुदायः प्रश्ने । चक्रमाकच्चिदिति । यद्यप्यत्र एतैरेवपरभूतैर्योगे नियमोनान्यैरित्यर्थकयद्वितु परमिति नियमान्निषेधो न प्राप्नोति तथापि छान्दसत्वेनात्र नियमाप्रवृत्तिरित्याहुः निपातैः किम् । यत्कूजति शकटं इणः शतरि इणोयणि रूपं ननु प्रतिपदोक्तत्वात् यथादिभिर्निपातैः साहचर्याच्च निपात एव ग्रहीष्यते सत्यं अत्र प्रकरणे क्वचित्न्याया प्रवृत्तिज्ञापनार्थत्वात् तेन यावद्यथाभ्यां इति सूत्रे वत्वन्तस्याव्ययस्य च यावत्शब्दस्य ग्रहणमिति स्पष्टमाकरे । युक्तग्रहणंकिम् । अन्यत्र साक्षादन्वितैरेतैः परम्परासंबद्धेमाभूदिति यत्र क्वचते मनोदत्तदधस उत्तरम् । यत्रेत्यस्योत्तरमित्यनेन तत् संबन्धः दधधारणे अनुदात्तेत् । नहप्र ॥ नहेति निपातसमुदायो निषेधे वर्तते । प्रतिषेध युक्त इति । पूर्वं भुङ्क्ष्वेत्युक्ते कर्तव्यतयोपन्यस्तस्य भोजनादेरवज्ञाने ऽवज्ञातुरुपालप्सयापुनः क्रोधेनोपहासेन वा यत्र प्रतिषेधयुक्तं पृच्छ्यते स प्रत्यारम्भ इत्यर्थः । भोक्ष्यसे इति । स्यस्वरेणमध्योदात्तं अदुपदेशात्परत्वात्से इत्यस्य निघातः । सत्यम्भोक्ष्यसे इति सत्यशब्दः सत्यादशपथे इत्यन्तोदात्तोनिपात्यत इत्याहुः । अङ्गाप्रा ॥ अङ्गेति लुप्ततृतीयाकं अप्रातिलोम्यमानुकूल्यं अङ्गेति आमन्त्रितत्वादाद्युदात्तम् । अन्तोदात्तमिदमव्ययं इंद्रा अङ्गेत्यादौ तथादर्शनादित्यन्ये । अङ्कूजतीति । अत्राङ्गेत्यमर्षे कूजतीत्याद्युदात्तम् । हि च ॥ आनुकूल्यइत्येव । नेह हि कूजवृषलअत्रामर्षे हिशब्दः उदाहरणे ऽवधारणे । स्मशब्दो निपातत्वादाद्युदात्तः छान्दसे दीर्घपत्वे । छन्दस्यनेकमपि । अपिना एकमपि । अनृतवदनदोषेण नयुज्यत इत्यर्थः युञ्चन्धन इत्यस्य रूपं युनातीति । अग्निर्हिंपूर्वमुदजयत्तमिन्द्रोनुदजयत् । अत्रैकमाद्युदात्तमपरं निहतं अत्र हेतुहेतुमद्भावद्योतको हिरिति अनेकमपितिङन्तं हि युक्तम् । तत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते क्वचिदेकस्य क्वचिदनेकस्येत्येतदर्थमिदम् । छन्दसिदृष्टानुविधानात् यथा प्रयोगं व्यवस्था । यावद्य । यावदिति निपातानिपातयोरुभयोरपि ग्रहणमित्युक्तम् । आद्यः साकल्ये द्वितीयः परिमाणोपाधिको वतुबन्तः यथा योग्यतादिषु भ्यामि त्रितीया ॥ तुपश्य ॥ पूजायामिति वर्तमाने पुनः पूजाग्रहणं अनन्तरग्रहणस्य अनिघातनिषेधस्य चानुवृत्तिनिवृत्यर्थं निषेधानुवृत्तौ निपातैर्यद्यदीत्यस्य प्रतिषेधः सम्भाव्येत । पूजायांकिं पश्यमृगोधा

वति तत्त्वकथनमेतत् अहेत्यस्योदाहरणमाह आदहेति त्वादीनान्तु माणव कोभुङ्क्ते शोभनमित्यूह्यम्। अहो च॥ पृथग्योगकरणमुत्तरार्थं अहोदेवः करोति शोभनमत्रापि पूजायामित्येव। शेषे विभाषा॥ पूर्वपूजायामित्युक्तशेषः अहो कटमिति पक्षस्य प्रत्ययस्वर अनाश्चर्यभूतमेवकस्तु असूयता आश्चर्यवत्प्रतिपाद्य तेन पूजाशेषग्रहणं स्पष्टार्थम्। पूर्वत्र चानुकृष्टत्वादेव पूजायामित्यस्य निवृत्तिः योगविभागसामर्थ्याच्च तेन पूजायां नित्यं तदभावे विकल्प इति व्यवस्थोपपत्तेः॥ पुरा च॥ परीप्सा त्वरा। निकटेति। विद्योतनादावध्ययनं प्रतिषिद्धमतस्तदुपन्यासेन त्वरितमधीष्वेति गम्यते पक्षे द्योतत इत्युदात्तं पुराशब्दोऽत्र निपात एव पूर्वोत्तरसाहचर्यात् परीप्सेत्यस्य प्रत्युदाहरणमाह न तेन स्मेति लट्स्मे इति भूतेलट् भूतस्याध्ययनस्य चिरकालप्रवृत्तत्वं गम्यते नत्वरा॥ नन्वित्यनुज्ञै॥ किंचित्कर्त्तुमुद्यत इत्यस्यैवं क्रियतामित्यभ्युपगमोनुज्ञा तस्याः प्रार्थनानुज्ञैषणा ननु गच्छामि भोरित्युदाहरणे वर्त्तमानसामीप्येलट् गमनं प्रति मामाज्ञापयेति गम्यते पृष्टप्रतिवचनाभावाच्चनौपृष्ठप्रतिवचनेत्यस्य न प्राप्तिः नन्वित्यस्यैकनिपातत्वं ज्ञापयितुमिति शब्दः सूत्रे। किंक्रियाप्रश्नेनुप॥ किमिति लुप्ततृतीयान्तं क्रियाप्रश्न इति किमोविशेषणम् अनुपसर्गमित्यादि तिङोविशेषणं अप्रतिषिद्धमित्यप्रतिषिद्धार्थकतिङन्तविशेषणं किंदेवदत्तः पचति आहोस्वित्पठतीत्यादौ उभयोः संशयविषयत्वात् उभयोरपि किमायुक्तत्वेन निघातनिषेधक इति केचित्, हरदत्तस्तु उभयोः संशयविषयत्वे ऽपि किंशब्देन स्वसन्निहितक्रियाविषय एव प्रश्नोद्योत्यते क्रियान्तरविषयस्त्वाहोस्विदित्यनेन तस्मात्तस्यैवनिघातप्रतिषेध इत्याह। क्रियाप्रश्नेकिम्। कारकप्रश्नेमाभूत् किंभक्तं पचति आहोस्विदपूपानिति। प्रश्नेकिं किंपठतीति पाठः। किमधीत इत्यपपाठः उपसृष्टत्वात् किंद्विज इति द्विजस्यापठनं हि प्रतिषिद्धं इदन्तु युक्तमुदाहरणं किंसन्यासीपचति केचित्तु प्रतिषिद्धप्रतिषेधस्तदप्रतियोग्यर्थकं तिङन्तमित्यर्थस्तदा मूलोक्तमेव उदाहरणमित्याहुः॥ लोपेवि॥ किमर्थयोगे ऽपि किमोप्रयोगे इत्यर्थः पक्षे निघातः पक्षे आद्युदात्तं पचतीत्यादि किंशब्दाप्रयोगादप्राप्तविभाषेयं केचित्तु तदर्थयोगस्य सत्वात्प्राप्तविभाषे वेत्याहुः क्रियाप्रश्ने इत्यादि सर्वं इहाप्यनुवर्तते॥ एहिमन्येप्रहासे॥ उदाहरणे प्रहासेचमन्योपपदे इति पुरुषव्यत्ययः एहिमन्यसे इति सूत्रे एहि मन्ये इति प्रहासेचेति सूत्रविहितलडनुवाद एव धातुमात्रं विवक्षितमिति भावः, इदञ्च वृत्तौ स्पष्टं, भाष्यात्तु उत्तमोपि विवक्षित एहि मन्ये रथेन यास्यसीति प्रत्युदाहरणम्। एहित्वं रथेनयास्यसीत्यहं मन्ये इत्यर्थे

इति प्रतीयते गत्यर्थेति एहीत्यस्य गत्यर्थत्वादिति भावः ॥ जात्वपूर्वं ॥ तृतीयास्थाने व्यत्ययेनप्रथमोभयत्राविद्यमानपूर्वमिति जातुविशेषणं नतिङन्तस्य आहोउताहोसूत्रेनन्तरग्रहणादिति वक्ष्यते ॥ किंवृत्तञ्चचि ॥ विदुत्तरमिति बहुव्रीहिः किंवृत्तविशेषणं प्रथमापूर्ववत् पूर्वसूत्रादपूर्वमिति वर्त्तते तेन देवदत्तः किंचित्पचतीत्यादौ न विभक्त्यन्तमित्यादिव्याख्यानमेवशरणम् । किमावृत्तं निष्पन्नमित्यर्थः चिच्छब्दश्चादिगणे नुवृत्तो निपात्यते ॥ आहो उत ॥ वक्ष्यतीति सान्तरं हि तत्र शेषः तथा च तत्र शेषप्रकृप्त्यर्थमनन्तरग्रहणमिति भावः न च पूर्वमित्यनुवर्तनात्तस्य च तिङन्तविशेषणत्वात्सपूर्वन्तिङन्त शेषोभविष्यति किमनन्तरग्रहणेनेति चेत्र इदमेवज्ञापयति अपूर्वमिति न तिङन्तविशेषणमिति स्पष्टं भाष्ये ॥ शेषेविभाषा ॥ अपूर्वमित्येव तेनायमाहोदेवोवर्षति इत्यत्र निहतमेव । गत्यर्थलोटा ॥ अत्र सर्वेति लुप्तविभक्तिकङ्कारविशेषणं कारकपदेन प्रत्यासत्त्या लकारवाच्यं कर्तृकर्मरूपमेवकारकं गृह्यते स्पष्टञ्चेदं भाष्ये तदाह । पचन्वेति । अस्य फलमाह ऊह्यन्तां देवदत्तेनेति अत्र यद्यपि कर्तृभेदोऽस्ति तथापि लवाच्यकर्मभेदोनास्तीति भवत्येवप्रतिषेधः एवमागच्छदेवग्रामं रामं द्रक्ष्यसि इत्यादौ कर्मभेदे ऽपि लवाच्यकर्त्रैतद्भवत्येव । पचौदनमिति । अत्र लृङन्तं निहतमेवपि तातेओदनमिति आगमने देवः कर्ता ग्रामः कर्म भोजने तात्पिता कर्ता ओदनः कर्म कारकभेदः । त्वञ्चाहञ्चेति लोड्वाच्यकारकापेक्षया यत्र लृड्वाच्यकारकं किंचिदधिकं भवति तत्राप्ययं प्रतिषेधोयथास्यादित्यर्थं सर्वग्रहणं क्रते एकस्यान्यत्वे ऽपि सर्वं नान्यदिति भावः एवं लोड्वाच्यकारकापेक्षया लृड्वाच्यं कारकं यदा न्यूनं भवति लोड्वाच्यमधिकं भवति आगच्छतं देवदत्त यज्ञदत्तौ देवदत्त ओदनं भोक्ष्यते इति अत्रापि प्रतिषेधो भवत्येव शब्दस्वारस्येन लृट्सर्वकारके एव लोट्संबन्धि तदपेक्षया अन्यत्वाभावस्य निमित्तत्वप्रतीतेरित्याहुः । लोट्च ॥ नचेत्कारकमिति गत्यर्थलट्वाच्ये कारकपेक्षया उदाहरणभू लोट् वाच्य कारके सर्वञ्चेदन्यत्रभवति इत्यर्थः॥ विभाषितं सोपसर्गमनु ॥ अनुत्तममित्यस्योत्तमपुरुषभिन्नमित्यर्थः नचेत्कारकं सर्वान्यदित्येवपक्षे निहतं पक्षे ञेस्वयं प्रत्युदाहरणे पूर्वणानित्यं निघातप्रतिषेधः । हन्तच ॥ विभाषितमिति सम्पूर्णसूत्रं लोडिति चवर्त्तते गत्यर्थलोटेत्यादिनिवृत्तं अस्य.पि विकल्पेन निषेधविधायकत्वाविपातैर्यद्यदीति निषेधप्राप्तेः प्राप्तविभाषेयं हन्तप्रविशेति पक्षेन्तोदात्तं पक्षे निहतं प्रभुनजावहै इति भुञ्जानवन इत्यात्मनेपदम् अत्रापि निपातैर्यदीति नित्यनिघातप्रतिषेधः ॥ आमएकान्तर ॥ अनन्तिकशब्देनासंनिहितमदूरञ्चोच्यते अत एवोदाहरणे प्लुतिकश्रुती न आमन्त्रितत्वादाद्युदात्तं पदं आम्भोदेवदत्तेत्यत्र

नामन्त्रिते इत्यविद्यमानत्वे त्वनिषेधादेकान्तरत्वं बोध्यं आम्प्रपचसीति अत्रनिघातो भवत्येव । आमःकिम् शाकं पचसि देवदत्त आम्पचसि देवदत्तेति अत्रान्तिकत्वाच्चैकश्रुतिः किंतु निघात एवभाष्ये नन्तिकन्दूरमिति पक्षान्तरमप्युक्तं तत्र सामर्थ्यादेकश्रुतेर्बाधः अन्यथा निघातस्यैकश्रुत्या बाधितत्वात् इदं व्यर्थमेव स्यात् अत एवैकश्रुतेरसिद्धत्वाभावेपि बोध्यः प्रकरणाच्च निघातस्यापि बाधः । अन्यथैकश्रुतिप्रकरण एव नाम एकान्तरमिति ब्रूयात् प्लुतोदात्तत्वस्य तुनायं प्रतिषेधः आमएकान्तरे एकश्रुत्यप्रतिषेध इति वार्तिकात् मूलेपि अनन्तिकं दूरं तत्र विहितमैकश्रुत्यं न निघातनिषेधप्रकरणे पाठात् वचनसामर्थ्यान्निघातोनेत्येवपाठः प्लुतश्चनेत्यपपाठ अस्य वार्तिकोक्तपक्षस्य नैव वा पुनरत्रैकश्रुतिः प्राप्नोतीत्यादिना भाष्यकृता प्रत्याख्यानात् अत्र सूत्रे आद्यः पक्ष एवञ्चैतदुदाहरणविषये प्लुतोनैवेति भाष्यप्रदीपोद्योते निरूपितम् । यद्धितु परम् । इदं बहुव्रीहिणातिङोविशेषणं नान्यैरिति यदिहन्तेत्यादिभिरित्यर्थः निघातो भवतीति न तु लोट्चेति प्राप्तो निषेधोभवतीत्यर्थः अत्र सूत्रे हहेर्गत्यर्थत्वस्य भाष्ये उक्तत्वेन तद्योगादेहीत्यस्य प्राप्तो निघातनिषेधो विभाषितंसोपसर्गमित्युक्तेः नभवतीत्याहुः भाष्ये तु छान्दसत्वेन समाहितम् । चनचि ॥ अत्र गतिग्रहणे न उपसर्गग्रहणम् तेन शुक्लीकरोति च नेत्यत्र करोतिशब्दोऽनिहत एवेति स्पष्टं भाष्ये कुत्सनाभीक्ष्ण्ययोरेव गोत्रादीनि नेह सुखीकरोति गोत्रम् अत्र निघात एव । चादिषु च ॥ न च वाहेति सूत्रनिर्दिष्टाश्चादय एव गृह्यन्ते सन्निकृष्टत्वादाह चवेत्यादि । उदाहरणे खादतीत्यस्य न निघातप्रसङ्गः नानावाक्यत्वात् समुच्चयविकल्पयोरनेकधर्मत्वात्परन्त्वद्युक्तिः । चवायोगे इति । चवायोगे प्रथमेत्युत्तरसूत्रेत्यर्थः इदञ्च वृत्तौ स्पष्टम् चानुकृष्टत्वादत्रागतेरिति नानुवर्तते इति तदाशयः । चनचिदिवेत्यत्र कैयटस्तु चवायोगे इति अत्राप्यनुवर्त्तते इत्याह ॥ चवायो ॥ प्रथमोच्चारितेत्यर्थः योगग्रहणं पूर्वाभ्यामपि योगे निघातप्रतिषेधार्थन्तद्धनयन्नुदाहरति गाश्चारयतीति । नियमोप्रथमैवनान्येति इतोवायातिमिति अस्य दिवोवापार्थिवादधि इन्द्रं वामहोरज स इत्युत्तरवाक्ये इन्द्रं प्रतिसातिं धनदानं अधि आधिक्येन ईमहे वैदिकनिघण्टौ याञ्चाकर्मसु ईमह इति पाठात् कस्माल्लोकादित्याकाङ्क्षायां आह इतो ऽस्मात लोकात्पार्थिवाद्वादिवोवा महोमहतः प्रोढात् रजसः रञ्जकात् अन्तरिक्षलोकाद्वेति मन्त्रार्थः । ननु श्रुतस्यैवतिङन्तस्योत्तरत्रानुषङ्गात्कथं प्रथमेतदिति चेत् अनुषक्तस्यापि औपाधिकभेदं पुरस्कृत्य प्राथम्याश्रयणेन निघातनिषेधस्य छन्दसि बहुशोदृष्टत्वात् एतच्च वेदभाष्ये

स्पष्टम् । हेतिचि ॥ धर्माल्लङ्नङ्घियोदाहरणे द्वितीयस्य निघाताभावत्येव हयोगा भावादिति बोद्धम् ॥ अहेतिविनि ॥ अनेकस्मिन् प्रयोजने प्रेषणं विनियोग; अस्योदाहरणे पूर्ववन्निघातप्रतिषेधः प्लुतश्च बोद्धः ॥ चाहलोपे ॥ लोपो ऽप्रयोग एव शास्त्रेण लोपविधानाभावात् अर्थप्रकरणादिना गम्यमानत्वाच्चाप्रयोगः चः समुच्चये अहशब्दः केवलार्थः समानकर्तृके चशब्दस्य न लोपः नानाकर्तृकेत्वहशब्दस्य एवेत्यादेरवधारणार्थकेत्रशब्दप्रयोगे सतीत्यर्थः । अनवक्लृप्ताविति । असम्भावनायामित्यर्थः नकिंचिदद्वोत्यसे नकिंचिदध्येषसे इत्यर्थः ॥ द्वन्द्ववाजेष्विति । अवेति । तिङन्तस्येहनिघाताभावस्य तूदाहरणान्तरम् बोद्धम् । शुक्लाव्रीहय इति । समानकर्तृके च लोप इति नियमोवधारणार्थेवशब्दप्रयोगे न तु सर्वत्रेत्यास्ति चलोपः पक्षे निहतं पक्षे आद्युदात्तम् ॥ वैवावेति ॥ वैस्फुटार्थेऽत्तमायाञ्च वावेति प्रसिद्धिः स्फुटार्थे च ॥ एकान्या ॥ समथ्याभ्यां समानार्थाभ्यामित्यर्थः । अजमेकामिति । अन्यामित्यर्थः जिविप्रीणनार्थः अत्र प्रकरणे क्वचित्साहचर्यानाश्रयणज्ञापनार्थं समर्थग्रहणम् ॥ यद्वृत्ता ॥ तद्यद्वृत्तमिति न तु डतरडतमविभक्त्यन्तमेवेत्याग्रहः इदञ्च भाष्ये ध्वनितम् । अत्रव्यवहिते इति । तेन योजात एव पर्यभूषदित्यादौ निघातप्रतिषेधः सिद्धति अत्र मानन्तु पूजनात्पूजितमिति सूत्रे पूजितग्रहणं तद्धिकाष्ठाध्यापक इत्यादौ अनुदात्तताविधानाय तत्र काष्ठादिभ्य इति वार्तिकम् । तत्र पूजनादित्येव प्रत्यासत्त्या ससंबन्धिकतया च पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरप्रतिपत्त्यर्थं सदिहप्रकरणे पञ्चमीनिर्द्देशेष्वानन्तर्यं नाश्रीयत इति ज्ञापयतीत्याहुः । यथेच्छप्रवृत्तौ वेति वाच्यम् । यत्र क्वचनयजते, अत्र पक्षे निहतं पक्षे आद्युदात्तम् ॥ पूजनात्पू ॥ अत्र वृत्तिकृत्काष्ठादिभ्य इति सूत्रे पपाठतद्भ्रमात् काष्ठादिगणपाठेन सूत्रकारेणापि ज्ञापितमेतत् । काष्ठादयोद्भुतपर्यायाः पूजनवचनाभवन्ति उत्तरसूत्रे तिङ्ग्रहणादिदं सुबन्तविषयम् । अत्र वृत्तिन्यासादयः समासविषयमेतत् काष्ठादारुणादीनां प्रवृत्तिनिमित्तभूताध्ययनाभिरूप्यादिविशेषणत्वेनासामानाधिकरण्यात्समासाप्राप्तौ मयूरव्यंसकादित्वात्समासः । तन्निमित्तविभक्तेर्लुकि काष्ठाध्यापकादिसिद्धिरित्याहुः । भाष्यकारास्तु असमासे एव क्रियाविशेषणीभूतानां दारुणमित्यादीनां मलोपो निपात्यते । युक्तञ्चैतत्समासाधिकाराभावात् मयूरव्यंसकादित्वे प्रमाणाभावाच्च । अत एव मलोपो वक्तव्य इति वार्तिककृता आरब्धम् । एवञ्च दारुणमित्यादयः प्रयोगा असाधव एव भाष्यविरुद्धत्वादिति ध्येयम् । पूजनात्किम् । दारुणाध्यापकः दारुणसञ्ज्ञक इत्यर्थः । काष्ठादिभ्यः किं शोभनाध्यापकः ॥

सगतिरपि ॥ अपिना ऽगतिस्तद्वाह । तिङन्तमिति । न लुडित्यादिनिषेधापवादः । सगतिरिति तुल्ययोगे सहशब्दः तेन गतेरपि निघात इत्याहुः । तिङ्ग्रहणं पूर्वसूत्रस्यातिङ्विषयत्वलाभार्थम् । अत्रापि ग्रहणेनोपसर्गस्यैव ग्रहणमिति चनोदति सूत्रे भाष्ये स्पष्टम् । तेन यत्काष्ठाशुक्लीकरोतीत्यादौ निपातैर्यद्यीति प्रतिषेध एव । यत्काष्ठापचतीति । यत्काष्ठं पचतीत्यपपाठः । भाष्यविरोधात् । काष्ठा इत्याकारान्तस्यैव गणे पाठाच्च । काष्ठेति ह्रस्वं पठतां तु भाष्यविरोध एव । काष्ठा । दारुण । परम । अति । अमातापुत्र । वेशः सुभगार्थः । अनाज्ञात । अयुतः । अद्भुत । भृश । घोर । कल्याण । सुखः । वृत् ॥ कुत्सने च सु ॥ पदादिति निवृत्तम् । कुत्सनार्थे सुबन्ते परे इत्यर्थः । अयं विधिः परत्वात्प्रतिषेधान् बाधते यत्पचतः पूतीत्यादि । पूतीति क्रियाविशेषणत्वान्नपुंसकं च ॥ पचति क्लिश्नातीति । पाकक्रियाकर्तृकक्लेश इत्यर्थः । पूञः पूयीधातो र्वा बाहुलकादौणादिके तिपि तत एव गुणाभावे आद्युदात्तत्वं पूतिशब्दस्य प्राप्नोतीत्यत आह । पूतिश्चानुबन्ध इति । चकारानुबन्ध इत्यर्थः । इदञ्च निघातसंनियोगशिष्टम् । तेन यदा निघातस्तदान्तोदात्तम्, अन्यदा त्वाद्युदात्तमेवेति बोध्यम् । वा बह्वर्थमिति । बहुवचनान्तं तिङन्तमित्यर्थः । गतिर्गतौ ॥ अयमुपसर्गा इत्याद्युदात्तत्वापवादः । गतौपरे नुपसर्गस्य गतेरनभिधानेन प्रयोगाभावात् । उपसर्गा इति वक्तव्ये गतिग्रहणं लाघवार्थमुत्तरार्थञ्च । यद्यप्ययमभौ सावकाशस्तथाप्यभिर्गताविति वक्तव्ये गतिग्रहणात्सर्वत्रापि प्रवर्त्तते एतावतैव तदपवादत्वव्यवहार इत्याहुः । अभ्युद्धरतीति । अत्राच्छब्दे यणि अभेर्निघाते ऽनिघाते वा विशेषाभावे प्रवृत्तिमात्रेणोदाहृतम् । अभिसंहरतीति मुख्यं फलम् । गतौक्रियेति । गतेः शुद्धतिङन्ते प्रयोगोगति युक्ते वा कृदन्ते वा । तत्र कृदन्तं सगतावगतौ च कृत्स्वरथाथादिस्वरगतिस्वरेषु कृतेषु शेषनिघातेन गतेर्निघातस्य भावात्तिङ्चोदात्तवतीति तिङ्युदात्तवत्येवेति नियमादनुदात्तवति तिङन्ते तदप्रसङ्गादुदात्तवति तेनैव सिद्धेश्च पारिशेष्याद्गतावेव भविष्यतीति प्रश्नः । आमन्द्रैरिति । तेप्राक्धातोरित्यस्य प्रयोगनियमार्थत्वे इदं प्रयोगनियमपक्षमभिप्रेत्यैव छन्दसिपरेपि व्यवहिताश्चेत्यारब्धम् । यदा तु भाष्यरीत्या सञ्ज्ञानियमार्थत्वमभिप्रेत्य तत्प्रत्याख्यायते तदा गताविति व्यर्थं आङो गतित्वाभावादेवाप्राप्तेः । मन्द्रशब्दस्तु रूढिशब्दत्वान्न क्रियावाची । आमन्द्रैरित्यत्र न दोषो ऽगतित्वात् । यत्क्रियायुक्तास्तं प्रति गतिसञ्ज्ञा न चात्राङो मन्द्रं प्रति क्रियायोगः किंतर्हि याहि शब्दे प्रतीति भाष्यस्यापि अयमेवार्थः । यत्क्रियाचयस्तत्क्रियाव्यव-

हितत्वाच्चगतित्वं मन्द्रस्तु न क्रियावाचीति । यत्तु कैयटादयः । ननु परनिमित्तानुपादाने यत्क्रियायुक्ता इति कथं लभ्यते उच्यते पदस्येत्यधिकारात्पदविधित्वात्समर्थपरिभाषोपस्थानाद्देतद्विशेषलाभ इति तत्तुच्छम् । अस्मदुक्तरीत्या भाष्यस्य सामञ्जस्यात् एकार्थीभावे एव परिभाषाप्रवृत्तेश्च । युष्मदस्मदादेशनिघातविधौ परिभाषा ऽप्रवृत्तेः समर्थसूत्रे भाष्ये उक्तत्वाच्च । न च मन्द्रादिकरणकेन्द्रकर्तृकं यातमाङा विशेष्यते समुदायं क्रियाविशेषवाचिनं प्रति गतित्वमस्त्येव अत एवाभ्युद्धरतीत्यादावभेर्गतित्वमिति वाच्यम् । धातूपसर्गसंबधस्यान्तरङ्गत्वे च साधनान्वयात्पूर्वमेव तदर्थात् । अत एवोपास्यते गुरुरित्यादेः सकर्मकत्वमिति भाष्यएव स्पष्टम् । तिङि चो ॥ निपाता आद्युदात्ता इत्यस्यापवादोयम् । अनुपसर्गस्यापि गतेर्धात्वव्यवहितस्य सत्त्वात् । उदाहरणे निपातैर्यद्यदीति निघातप्रतिषेधादुदात्तवत्त्वन्तिङन्तस्य । यत् शुक्लीकरोतीत्यत्र च्वेश्चित्त्वे ऽपि चित्स्वरो येन नाप्राप्तिन्यायेन निपाताद्युदात्तत्वमेव बाधते । नत्वेतमिति । अत्र शुक्लीशब्दस्य निघातः । नन्वामन्द्रैरित्यत्र रक्प्रत्ययान्ते मन्द्रशब्देपरे आङो निघातनिवृत्त्यर्थन्तदित्यत आह । यत्क्रियेति । एवञ्च तिङ्ग्रहणाभावे ऽपि गत्याक्षिप्तक्रियावाचकस्योदात्तवतीति विशेषणादपि तन्निवृत्तिः सिद्धेति भावः । तत्र दोषमाह । धातावेवेति । यस्य वाच्ययाक्रियया युक्तास्तं धातुं प्रत्येवगतित्वादिति भावः । एवञ्च यत्प्रपञ्चतीत्यादावेवस्यान्न तु यत्प्रकरोतीत्यादौ तिङ्ग्रहणे तु सतियन्धातुं प्रति गतित्वं तद्घटिते तिङन्ते परे इत्यर्थः सम्पद्यते इति न दोषः । अत्र तिङ्शब्देन क्रियाप्रधानं लक्ष्यते । तेन प्रपचतितरामित्यत्र उदात्तवत्यामन्ते गतेर्निघातः सिद्धः तिङन्तं तु तत्र नोदात्तं आमुस्वरेण शेषनिघातात् । ध्वनितञ्चेदं भाष्ये । एते निघातास्तत्प्रतिषेधाश्च पदकाले विच्छिद्य पाठे ऽपि भवन्ति संहिताधिकाराभावादित्याहुः ॥ इति तिङन्तस्वराः ॥

वस्तुतस्त्विति । इगन्तानाञ्च द्व्यषामित्यस्य फिष इत्यपवादस्य सत्त्वादिति भावः । संहितायान्त्विति । तयोर्व्वावचीति सूत्रस्यसंहिताग्रहणस्याशास्त्रसमाप्तेरधिकारात् स्वरितविधेश्च तदन्तर्भावादिति भावः । अयमेव संहिताधिकारो ज्ञापयति एतदधिकारबहिर्भूतानां कालव्यवाये ऽपि प्रवृत्तिः । अन्यथा संहितायां कालव्यवायादेव न भविष्यति किं तदधिकारपाठेन तेन पदकाले ऽपि ईडे इत्यादीनां निघातः अग्नाविष्णू इत्यादाववग्रहे आनङादयः पदविभागे च वसुनसादयः सिद्ध्यन्ति अशक्त्यादिना कालव्यवाये ऽपि नसादयः व्यवधानञ्च मात्राकालेन न तदधिकेनेत्यादिनिरूपितं संहिता-

धिकारस्थन्तु यणादिकं स्वरितप्रचयादिकञ्च नेति बोध्यम्। नन्वेवं पुरः हितमि त्यवग्रहे हिशब्दस्य स्वरितत्वं बह्वृचैः पठ्यमानं न सिद्ध्येत् संहिताधिकारस्थत्वेन कालव्यवाये प्रवृत्तेरिति चेन्न। "यथा सन्धीयमानानामनेकीभवतां स्वरः। उपदिष्टस्तथा विद्यादक्षराणामवग्रहे" इति प्रातिशाख्ये विशिष्य विधानात् अनेकीभवतां प्रश्लेषमाप्नुवतां पुनःसन्धीयमानानामेकीक्रियमाणानां यथा येन प्रकारेण स्वर उपदिष्टः शास्त्रे तं स्वरमक्षराणामवग्रहे ऽपि तथैव कुर्यादित्यर्थः। नन्वेवमुपगन्तवै अचेतसा इत्यादीनामवग्रहे उत्तरखण्डाद्यवर्णस्य प्रचयः स्यादिति चेन्न पदाद्यांस्तु ह्युदात्तानामसंहितवदुत्तरानिति विशेषवचनात्। पदाद्यं पदार्थं ह्युदात्तानां पदानां उत्तरान् पदार्धादीन्स्वरविधावसंहितवज्जानीयादित्यर्थः एवं रत्नधातमं अलला भवन्तीरित्यादीनाङ्क्रमकाले इति शब्दोत्तरभागे प्रचयो न प्रवर्त्तते परिग्रहेत्वनार्षान्तात्तेनैवैकाक्षरीकृतात् परेषां न्यासमाचारं व्यालिस्तौचेत्स्वरौ इति वचनात् परिग्रहो वेष्टक उच्यते अनार्षशब्देन तथाभूतकरणः स च द्वृतर आद्युदात्तः पदाभ्यासस्य मध्ये वर्त्तमानः पूर्वपदान्तमादिना स्पृशतिद्वितीयपदादिमन्तिमेन स्पृशति तदा तस्यायं विकारः पदं सन्धिरुक्तः स च व्यञ्जनादिः स्वरादि र्वा भवति यदि व्यञ्जनादिस्तदा प्रचये प्राप्ते ऽयमपवादः अनार्षादिति करणात्परेषां न्यासमिति तुल्यम्। तौउदात्तस्वरितौ चेत्स्वरौ परौ भवत इत्यर्थः। अनार्षान्तादित्यस्योदाहरणं रत्नधातममिति रत्नधातमन्तेनैवैकाक्षरीकृतादित्यस्योदाहरणम्। अललाभवन्तीरिति। अलला इति शब्दानुकरणमिति तद्भाष्यकृत इति सर्वेष्टसिद्धिः॥

शब्देन्दुशेखरः पुत्रो मञ्जूषा चैव कन्यका।
स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया॥ १॥
शब्देन्दुशेखरः सोयं फणिभाष्योक्तिभूषितः।
सतां हृत्कमलेष्वास्तां यावच्चन्द्रदिवाकरौ॥ २॥

इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टरचिते लघुशब्देन्दुशेखराख्ये सिद्धान्तकौमुदीव्याख्याने उत्तरार्द्धं समाप्तम्॥

समाप्तोऽयं ग्रन्थः।

विद्योदयो निराकुर्यादविद्यातिमिरं सदा।
सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः॥ १॥

